ii) वैयर्थ्यापत्तिः

Since one word can convey its meaning as connected with the meaning of the other, the use of the other word will be superfluous. Mere change of the position of the adjective and substantive cannot justify the use of the other word.

This objection is not valid. The word conveys its meaning as connected with the meaning of the other word in a general way and the other word provides the particular.

पदापेक्ष्य तत्तद्विशेषोपस्थापनेन सार्थक्यात् ।

iii) अन्योन्याश्रयापत्तिः i.e., reciprocal dependency

After the verb conveys its connection with the object. The object conveys its connection with the verb and vice-versa this results in reciprocal dependency.

क्रियापदेन आनयनरूपे क्रियाविशेषे अभिहिते घटपदेन तदन्वितघटाभिधानम् । एवं घटपदेन घटरूपे कारकविशेषे अभिहिते क्रियापदेन तदन्वितक्रियाभिधानमित्यन्योन्याश्रयः ।

This objection may apply to विशेषान्विताभिधान It does not apply to सामान्यान्विताभिधान. Tarkatāṇḍava subscribes to सामान्यान्विताभिधान theory.

विशेषान्विताभिधानमते अस्य अन्योन्याश्रयस्य सम्भवेपि सामान्यतो अन्विताभिधानमिति मन्मते पदानां प्रत्येकमेव योग्येतरसामान्यान्वितस्वार्थाभिधाने सामर्थ्येन पदान्तरनिरपेक्षतया अन्योन्याश्रयाभावात् ।

iv) विशेषान्वय प्रतिबन्दी i.e., the objection that विशेषान्वय could be managed without सामान्यान्वय.

It cannot be argued that there is no need of conveying सामान्यान्वय. The words convey their meaning. These result in विशेषान्वय by means of आकाङ्क्षा etc., since, सामान्यान्वय is comprehended while learning language and it results in विशेषान्वय without आकाङ्क्षा etc.

ननु एवं चेत् किमनया सामान्यान्वयशक्त्या स्वार्थमात्रे शक्तैः पदैराकाङ्क्षादि मत्पदान्तरसमभिव्याहारादेव विशेषान्वयसिद्धेरिति चेन्न सङ्गतिग्रहणकाले सामान्यान्विते शक्तेः गृहीतत्वेन पदान्तरसमभिव्याहाराकाङ्क्षादिनिरपेक्षेणैव गोप्रातिपदकेनोक्त्या सामान्यान्विते शक्तेः त्यागायोगात् ।

In fact to have आकाङ्क्षा for the विशेष itself सामान्यन्वय is necessary.

पदान्तरार्थे क्रियाविशेषे आकाङ्क्षार्थमेव कारकपदस्य क्रियासामान्यान्विते शक्तिः आवश्यकी ।

It cannot be objected that if there is no शक्ति in विशेषान्वय it ceases to be a verbal communication, since, the very सामान्यान्वयशक्ति also conveys विशेषान्वय when a विशेष is present.

अत एव विशेषान्वये शक्त्यभावात् तस्य शाब्दत्वं न स्यात् इति निरस्तम्, या शक्तिः पदान्तरसमभि-व्याहाराकाङ्क्षादिनिरपेक्षा सामान्यान्वयबोधिका तस्या एव अन्यसापेक्षाया विशेषान्वयबोधकत्वात् ।

This point is made clear in प्रमाणपद्धति as under

प्रत्येकं सामान्यतो योग्येतरान्वित स्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोपि अन्वितान् स्वार्थानभिदधतीति ।

Here, the expression पदान्तरसन्निधानहितशक्त्यन्तर should be understood in the sense of पदान्तरसन्निधानमेव आहितशक्त्यन्तरम् i.e., the very presence of the other word is the ground of विशेषान्वय. It should not be understood in the sense that the presence of the other word provides another śakti in addition to सामान्यान्वयशक्ति for विशेषान्वय in other words. शक्तिद्वय are not implied here.

पदान्तरसन्निधानमेव आहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थः । शक्तिद्वयाङ्गीकारे गौरवात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसानहेतुः । न पुनरविद्यमान शक्त्याधान इति सुधाविरोधात् ।

v) वाक्यभेदापत्तिः i.e., the objection there will be वाक्यभेद.

The objection that the procedure of stating as आनयनान्वितः घटः and घटान्वितमानयनम् will result in वाक्यभेद is not a valid objection. Since, these are of the nature of पदार्थान्वय and when these develop into वाक्यार्थान्व will result into one वाक्य.

ननु एवमपि आनयानान्वितः घटः घटान्वितमानयनमिति अन्वयरूपस्य विशेष्यरूपस्य च अर्थस्य भेदेन तद्भेदनिबन्धनो वाक्यभेदः स्यादिति चेन्न । पदार्थस्थानीयानामुक्तान्वयानां भेदेपि वाक्यार्थ-भूतान्वयस्य भेदेन एकवाक्यत्वम् ।

We have noticed above five objections raised against अन्विताभिधान by उदयन. The other five objections more are less repeat the same objections in different forms and duly answered by Tarkatāṇḍava.

## 7-3 अन्विताभिधाने युक्तिदशकम्

7-3-1) Six arguments in support of अन्विताभिधान are already stated. Four more arguments are presented in this sections. As a prelimianary to this discussion the

concept of कुब्जशक्ति is stated and rejected. The nature of कुब्जशक्ति is explained as under. The words have the śakti to convey जातिविशिष्टव्यक्ति. However, this śakti operates in respect of Jāti when known and by mere presence in the case of vyakti. Since it operates partly as known and partly by mere presence it is designated as कुब्जशक्ति. i.e., a limping capacity. On this model, in the present context it is argued that the power to convey the anvita padārtha is one but conveys पदार्थ while known and अन्वय by mere presence.

i) गुरुमते जातिविशिष्टव्यक्तिविषयायाः शक्तेः एकत्वेपि जात्यंशमात्रे ज्ञातोपयोगित्ववदहापि अन्वित विषयायाः शक्तेरेकत्वेपि पदार्थांशमात्रे ज्ञातोपयोगित्वस्य उपपत्तेः । अत एव कुब्जशक्तिवादः इत्युच्यते ।

Keeping the कुब्जशक्ति model in mind it is argued that there is śakti in respect अन्वय also. However, it does not operate as known. Its mere presence is accepted.

अस्त्येव अन्वये शक्तिः किन्तु सा स्वरूपसत्येव हेतुः न तु ज्ञाता । पदार्थे शक्तिज्ञानादेव अन्वय-बोधोपपत्तेः ।

This contention cannot be accepted. Mere presence of Śakti in respect of anvaya will not make it a part of verbal communication. It is the comprehension of the śakti that makes it verbal communication.

अन्वये शक्तेः सत्त्वमात्रेण तस्य शाब्दत्वं तस्याः प्रत्यासत्तित्वं च न युक्तम् । शक्तिज्ञानस्यैव शाब्दत्वे तन्त्रत्वात् । प्रत्यासत्तित्वात् ।

ii) The object of a resultant cognition has to be the object of the cognition that is its cause.

अपि च परोक्षज्ञाने फलीभूतज्ञानविषयस्य सम्बन्धस्य जनकीभूतज्ञानविषयत्वनियमेन शाब्दफलीभूत-ज्ञानविषयस्य तज्जनकशक्तिज्ञानविषयकत्वमावश्यकम् ।

iii) In case, there is no śakti in respect of अन्वय, then, there will be the contengency of अन्वयप्रतीति even in the statement घटः कर्मत्वम् आनयनं कृतिः since, all other requirements are present.

किञ्च यदि अन्वयांशे शक्तिज्ञानं न हेतुः तर्हि घटमानयतीति पदजाताविव घटः कर्मत्वम् आनयनं कृतिः इत्यादिपदजातादपि कथं नान्वयधीः । पदस्य पदार्थे शक्तेः तत्स्मृतेः तत्साध्यायाः अनन्वित-पदार्थस्मृतेः पदार्थेषु योग्यतादेश्च सत्त्वात् ।

iv) The word meaning is conveyed by reminding the object concerned. This reminding has to be through the comprehension of śakti only. The object reminded by other relation does not constitute the word meaning. For instance by the word elephant, if the elephant driver is reminded, he will not constitute the meaning of the word elephant. This cognition of Śakti not only includes the word meaning but also its अन्वय.

i) किञ्चपदार्थांशे शक्तिज्ञानमपि पदार्थस्मृतिद्वारा शक्तिधीहेतुः ।

ii) तत्र अन्वयानुभावार्थं तत्रैव शक्तिज्ञानापेक्षा ।

iii) अनुभवार्थकत्वपक्षे केवलपदार्थे तदयोगेन अन्वयसहित एव अनुभवस्य वाच्यत्वेन अन्वये शक्तिज्ञानमपेक्षितमित्युक्तं भवति । (न्या.दी.)

7-3-2) Tarkatāṇḍava summarises these four additional arguments in support of अन्विते शक्ति as under :

एवं च अन्विताभिधाने न केवलं पूर्वोक्तं षट्कं किन्तु

i) वृत्तिज्ञाने सत्येव शाब्दधीः

ii) परोक्षज्ञाने फलीभूतज्ञानविषयस्य सम्बन्धस्य जनकीभूतज्ञानविषयत्वनियमः

iii) घटः कर्मत्वमित्यादौ अन्वयाप्रतीतिः

iv) पदार्थस्मृतेरन्यथापि सिद्ध्या अन्वयानुभवार्थं तत्रैव शक्तिज्ञानापेक्षा इति युक्तिचतुष्टयमपि ।

## 7-4 व्यक्तिप्रतिबन्द्याः दुष्परिहरत्वम्

Earlier to bring home the necessity of accepting śakti in अन्वय also a प्रतिबन्दी i.e., a counter argument, was presented quoting the case of जाति and व्यक्ति. If it is argued that there need not be śakti in अन्वय, we will counter argue that there need not be śakti in व्यक्ति. The cognition of व्यक्ति could be obtained by other means.

किञ्चैवं जातावेव शक्तिः व्यक्तेस्तु आकाङ्क्षादिवशाद् धीरिति स्यात् ।

i) An attempt is made here to distinguish the cases of जाति-व्यक्ति and अन्वय.

When it is said that the word cow conveys cowness, it includes the conveying of cow also.

But this is not the case in respect of अन्वय.

The above argument does not help to distinguish the two cases. अन्वय also is necessarily comprehended along with पदार्थ just as व्यक्ति is comprehended along with जाति.

i) ननु गोत्वे गोपदं शक्तमिति ज्ञानं विशेषणीभूतगोव्यक्तिमादायैव युक्तम् । व्यक्तिं विना जातेरनुपस्थितेः । अन्वये तु नैवम् ।

ii) अन्वितविषयकव्यवहारजन्ये शक्तिग्राहके ज्ञाने नियमोपस्थितेरन्वयेपि सत्त्वात् ।

ii) It is further argued that जाति and व्यक्ति are the objects of the same cognition. the śakti in जाति is comprehended along with that of व्यक्ति. This is not the case in respect of अन्वय.

This argument also does not help. The पदार्थ and अन्वय also are the objects of the same cognition.

i) एतेन जातिव्यक्त्योः समानसंवित्संवेद्यतया व्यक्तिज्ञानत्वेन ज्ञातएव जातिज्ञाने शक्तिग्रहात् व्यक्तेरपि शक्यत्वं न तु अन्वयस्य इति निरस्तम् ।

ii) शक्तिग्राहके ज्ञाने समानसंवित्संवेद्यत्वस्य अन्वयेपि सत्त्वात् ।

Three more arguments advanced to distinguish the cases of जाति-व्यक्ति and अन्वय are also rejected on the same lines.

### 7-5 मण्याद्युक्तकुब्जशक्तिभङ्गः

The concept of Kubjaśakti stated earlier is once again examined and rejected in this section. On the basis of kubja śakti theory it is claimed that the śakti is only in respect of padartha but not anvaya. This is rejected and the necessity of śaktigrahaṇa in respect of anvaya is established.

i) अन्वितविषयकव्यवहाररूपेण शक्तिग्राहकमानेन अन्वयेपि शक्तिग्रहः ।

ii) अन्वयः पदशाक्यः वृत्त्यन्तरं विना शाब्दत्वात् पदार्थवत् ।

## 8 . भाट्टाभिमताभिहितान्वयभङ्गः

8-1-1) Bhāṭṭa mīmāmsakas hold the view that the words remind the word meanings. These word meanings convey the syntactical connection and evolve the sentence meaning. This contention is not valid. Since the objects conveyed as word

meanings belong to the past and future, these cannot generate the cognition of the connection among these. The word meanings are conveyed by the words but not merely reminded.

i) पदं पदार्थस्मृतिमात्रोपक्षीणं न अन्वितबोधकं स्मृतपदार्थ एव तद्बोधकः इति भाट्टमतमपास्तम् ।

ii) पदार्थस्य अतीतानागतादिरूपत्वेन फलभूतमन्वयानुभवं व्यापारभूतां पदार्थस्मृतिं च प्रति कारणत्वस्यैव असम्भवेन तद्विशेषस्य करणत्वस्य दूरापास्तत्वात् ।

8-1-2) In support of their claim that the word meanings convey the connection and lead to sentence meaning but not the words Bhaṭṭas quote an interesting example. viz., श्वेतो अश्वो धावति i.e., a white horse is coming running. This statement is made after observing a white object from a distance, and on hearing the hreṣā sound and the footsteps of an animal. These are not conveyed by the words. However, the cognition of a sentence has arisen merely by the cognition of the objects.

This contention is rejected by pointing out that this is not a verbal communication. It is either अर्थापत्ति or अनुमान.

न च पदं विनापि पदार्थज्ञानमात्रात् श्वेतोऽश्वो धावतीति धीदर्शनात् पदार्थज्ञानमेव कारणमिति वाच्यम् । श्वेतो धावतीति धीः तव अर्थापत्त्या ममतु अनुमानेन ।

Further, the word meanings are not reminded but conveyed by śakti. It is śakti that has to be remembered.

वस्तुतस्तु मन्मते वाक्यस्थपदज्ञानान्वयानुभयोः मध्ये पदार्थस्मृतिरेव नास्ति । कदापि स्मरामीत्यनुव्यवसायाभावात् ।

उक्तं च सुधायाम् पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात् ।

## 8.2 अन्वयस्य लक्ष्यत्वभङ्गः

The Bhāṭṭas say that the words convey their meanings only. The anvaya i.e., the sentence meaning is conveyed by lakṣaṇā. This has to be rejected.

पदार्थमात्रे शक्तस्य पदस्य पदार्थसम्बन्धिनि अन्वये लक्षणैवेति निरस्तम् ।

The lakṣaṇā is resorted only in respect of that which is related to vāchyārtha. It is also resorted when vāchyārtha is not suitable. Both these conditions are not available to resort to lakṣaṇā in the case of anvaya i.e., the sentence.

i) किञ्च वाच्यार्थसम्बन्धितया धीस्थ एव लक्षणा ।

ii) प्रतीतान्वयानुपपत्त्यैव लक्षणा इति लक्षणात: प्रागन्वये धी: स्वीकार्या ।

तत: कथं लक्षणया अन्वयधी: ।

## 9. प्रभाकरोक्तपदशक्तिभङ्ग:

9-1) Prabhākaras argue that the words cannot convey individual objects, nor they can convey all the objects denoted by the word concerned. In the former case one will be required to find a separate word for each object and in the latter case, no single action can be predicated for all objects.

i) प्रत्येकं शक्यत्वे यत्र शक्तिग्रह: तत्रैव शाब्दधी: स्यात् । अन्यत्र तदग्रहात् अपूर्वव्यक्तिधी: न स्यात् ।

ii) सर्वत्वेन शक्यत्वे गांदद्यादित्यादिशास्त्रमशक्यानुष्ठानं स्यात् ।

Therefore, to bring together all objects of a group under a single denotating word and to exclude others, it has to be envisaged that jāti i.e., the class characteristic is conveyed by the word.

तस्मात् शक्यव्यक्त्यनुगमाय अशक्यव्यक्तिव्यावृत्तये गोत्वेन अवच्छिन्ना व्यक्ति: शक्येति शक्तिग्रह: वाच्य: तथा च प्रथमोपस्थिततत्वात् लघुत्वाच्च जातिरेव शक्या ।

This raises the question, if the word does not convey the object but conveys its class-characteristic only, then, the object will not be the object of verbal cognition. This difficulty is avoided by pointing out that the class characteristic is embeded in the object. Hence the class characteristic is conveyed along with the object concerned.

ननु व्यक्तौ शक्त्यभावे कथं शब्दात् तद्धी: इति चेत् । सत्यम् । जातिभानसामग्री तु जाते: व्यक्तिघटितमूर्तित्वेन व्यक्तिमनादाय जातिबोधनाशक्ता तामादायैव जातिं बोधयन्ति ।

9-2) The above view cannot be accepted. Mere class characteristic cannot be conveyed. It is difficult to distinguish one class characteristic from another unless the object concerned is taken into account. This means that the class-characteristic has to be conveyed as associated with the object concerned.

किञ्च मुण्डिते गोत्वे न शक्तिग्रह: । यत्किञ्चित् शक्यमिति ज्ञानेन अश्वत्वादिव्यावृत्तगोत्वस्य शक्यत्वासिद्धे: । किन्तु व्यक्त्या विशेषिते गोत्वे शक्तिग्रह: ।

It cannot be contented that the class-characteristic is selfevident and hence it is conveyed as distinct from the other class-characteristics. Its distinct nature is not cognised when it is conveyed by the word.

न च गोत्वस्य स्वत एव विलक्षणत्वात् स्वतःसिद्धेन इतरव्यावृत्तत्वेन ज्ञाते गोत्वे शक्तिग्रहः इति वाक्यम् । गोत्वं शक्यमिति ज्ञानेपीतरव्यावृत्तेरनुल्लेखात् ।

It cannot be argued that the class-characteristic गोत्व is conveyed as qualified by गोत्वत्व. This distinguishes it from अश्वत्व etc., The गोत्वत्व is explained as गवेतरावृत्तित्वे सति गोवृत्तित्व. In this explanation गोव्यक्ति is referred to twice.

न च गोत्वत्त्वेन ज्ञाने गोत्वे शक्तिग्रहः । गवेतरावृत्तित्वे सति गोवृत्तित्वादन्यस्य गोत्वत्वस्य अभावेन गोत्वत्वे व्यक्तेः द्विरनुप्रवेशात् ।

9-3) Finally, if class - caracteristic is conveyed by the word, then the cognition of the object as qualified by it cannot arise. Though the object is cognised by the fact that it is cognised in the same cognition. The fact of being qualified by the class-characteristic is not reflected in the cognition.

अपि च जातिमात्रस्य पदार्थत्वे गोपदात् जातिविशिष्टव्यक्तिधीः न स्यात् । न च समानसंवित्संवेद्यतया तद्धीः । वैशिष्ट्यांशे तदभावात् । तत्रापि तथात्वे निर्विकल्पकोच्छेदः ।

Tarkatāṇḍava lists eight drawbacks in Prabhākara's concept of पदशक्ति and concludes तस्मात् जात्यंशे एव शक्तिज्ञानस्य हेतुत्वे अष्टौ दोषाः ।

## 10. भाट्टोक्तव्यक्तिलक्षणाभङ्गः

Bhāṭṭas accept Denotative power of the words in jāti i.e., class-characteristic or universal only. They state that the vyākti i.e., object is conveyed by lakṣaṇā i.e., the secondary power of denotation, or by akṣepa. If vyakti is to be conveyed by the word, then, separate word would by required for each object of the same class. This will result in ānantya i.e., assuming denotative power to unlimitted number of words. Further it is our experience that when a word is employed, not only one object but the other objects of the same class also accur to our mind. This results in the use of the word for other than what it is intended to be used. This is technically known as व्यभिचार.

भाट्टास्तु आनन्त्यव्यभिचाराभ्यां व्यक्तौ शक्तिग्रहासम्भवात् जातिरेव शक्या । जातिविशिष्टव्यक्तिस्तु लक्ष्या ।

This contention of Bhāṭṭas is rejected. The lakṣaṇā is always in something that is different from śakyārtha. In the present case vyakti has no separate form without jāti. Hence, lakṣaṇā cannot be resorted in this case.

गङ्गात्वादिरूपात् स्वार्थादन्येन तीरत्वादिना रूपेण उपस्थित एव तीरत्वादौ गङ्गादिपदस्य लक्षणा दृष्टा। न चात्र व्यक्तिः जातिं विना रूपान्तरेण स्थिता । गौरिति प्रतीत्या जातिव्यक्तयोरेव उल्लेखात् ।

Further, in the statements गां पश्य गौः तिष्ठति There is no अन्वयानुपपत्ति for जाति. But still Bhāṭṭas think of Vyakti lakṣaṇā.

In the statements, गौः नष्टा, गौः शुक्ला, गाम् आनय, गां बधान, the denotative power is clear i.e., in respect of vyakti. But still Bhāṭṭas think of Śakti for jāti and lakṣaṇā for vyakti. From this it is clear that they are confused in respect of the scope of śakti and lakṣaṇā.

i) किञ्च गां पश्य गौस्तिष्ठतीत्यादौ जातेरन्वययोग्यत्वे अनुपपत्त्यनुसन्धापनं विनैव जातिविशिष्ट-व्यक्तिप्रतीतेः न तत्र लक्षणा ।

ii) किञ्च यस्यां व्यक्तौ आनयनादिशक्तिग्रहः, एवं 'गौर्नष्टा गौः शुक्ला गौः गच्छति गामानय' इति प्रयोगप्राचुर्यं च तस्यां व्यक्तौ लक्षणा तद्विपरीतायां जातौ शक्तिरिति साध्वीयं व्यवस्था ।

Here, the remark साध्वी इयं व्यवस्था is a redicule of Bhāṭṭa approach.

## 10-2 भाट्टोक्तव्यक्त्याक्षेपभङ्गः

As an alternative to लक्षणा Bhāṭṭas, propose आक्षेप of व्यक्ति while जाति is conveyed by शक्ति. Tarkatāṇḍava points out that आक्षेप procedure also is not feasible.

i) गोत्वविशिष्टव्यक्ति cannot be envisaged by आक्षेप, since, आक्षेपक cannot be included in आक्षेप्य.

ii) There cannot be आक्षेप of mere व्यक्ति. Since it cannot be called as गौः ।

i) किञ्च गोत्वेन न तावत् गोत्वादिविशिष्टा व्यक्तिराक्षेप्या गोत्वस्य आक्षेपकत्वेन आक्षेपशरीरे प्रवेशायोगात् ।

ii) न मुण्डितमश्वादिसाधारणव्यक्तिमात्रमाक्षेप्यम् । गौरित्युल्लेखायोगात् ।

# 11. नैयायिकोक्तपदशक्तिभङ्गः

11-1) Nyāya holds the view that vyakti i.e., the object, associated with jāti and ākṛti is the meaning of the word.

However, in the instance 'गौः नित्या' जाति alone is conveyed by लक्षणा. In 'पिष्टमय्यः गावः the ākṛti similar to the ākṛti of cow is conveyed by गौणी वृत्ति. A particular arrangement of constituent parts is a ākṛti.

नैयायिकास्तु जात्याकृतिविशिष्टा व्यक्तिः पदार्थः । यत्र गौ नित्या इत्यत्र जातिमात्रपरत्वं तत्र एकदेशे लक्षणा ।

पिष्टमयी गौः इत्यादौ तु गवाकृतिसदृशाकृतौ गौणी इत्याहुः ।। आकृतिश्च अवयवसंयोग विशेषः ।

This view of Nyāya cannot be accepted. In the case of the words that convey quality, action etc., and the substance like ātman there is no ākṛti of the nature of the arrangement of avayavas. Even in the case of the words that convey prithivi, ap., etc., substances, there is no ākṛti that is continuing and common.

i) गुणकर्मादिपदेषु द्रव्यविशेषात्मादिपदेषु अवयवसंयोगविशेषरूपाकृतेरेवाभावात् ।
ii) पृथिव्यबादिपदेषु च अनुगताकृतेरभावाच्च ।

11-2) The position, taken by Nyāya viz., विशिष्टा व्यक्तिः पदार्थः will be found not feasible on close analyses. This may be analysed in three ways.

i) जात्यादित्रयमेकेन क्रोडीकृतमेकपदार्थः ।

Jāti etc., three grouped into one group on the basis of a common attribute constite the word meaning.

This is not tenable, because, there is no attribute common to these three

नाद्यः त्रिषु अनुगतस्य एकस्य क्रोडीकारकस्य अभावात् ।

ii) The vyakti i.e., the object, associated with jāti etc., is the word meaning. The fact of being one complex unit i.e., विशिष्टत्व is the ground for employing the word to convey the particular meaning.

यद्वा जात्यादिविशिष्टमेकमेव शक्यं प्रवृत्तिनिमित्तं विशिष्टत्वमिति ।

This is also not tenable. The objects associated with jāti etc., will not be one. These will be many like mere objects. The विशिष्टत्व present in them is not common like jāti. Hence, this cannot be considered as viable meaning.

द्वितीये व्यक्तिवद्विशिष्टस्यापि आनन्त्यात् ।

ii) The third alternative is the object is the meaning. The jāti and ākṛti are the grounds i.e., प्रवृत्तिनिमित्त to employ the word to convey the particular meaning.

किं वा व्यक्तिरेव शक्या जात्याकृती तु प्रवृत्तिनिमित्ते ।

b) This is also not fully satisfactory. It is sufficient if jāti alone is considered as प्रवृत्तिनिमित्त. लाघवात् गोत्वजातेरेव प्रवृत्तिनिमित्तौचित्यात् ।

11-3) An interesting question is raised whether jāti and ākṛti or प्रवृत्तिनिमित्त by one of them being विशेषण to the other, or the two are separately प्रवृत्तिनिमित्त. Pointing out the untenebility of both the positions, Tarkatāṇḍava redicules this procedure.

अपि च उभयोः निमित्तत्वे अनुगाननुगताभ्यां जात्याकृतिभ्यां कृष्यमाणा व्यक्तिः त्रिशङ्कुवन्नानुगता नाप्यननुगता इति स्यात् ।

## 12. स्वमते पदशक्ति निर्णयः

12-1) After reviewing the views of Prābhākara, Bhāṭṭa and Nyāya in respect of पदशक्ति Tarkatāṇḍava states its own view.

तस्मात् व्यक्तय एव वाच्याः जात्यादिकं तु प्रत्येकं तेषु शब्देषु प्रवृत्तिनिमित्तम् ।

उक्तं हि सुधायाम् - ते ते व्यावृत्ताकाराः एव तैस्तैः द्रव्यगुणसामान्यैः निमित्तैः तत्तच्छब्दवाच्याः ।

The words convey the Vyakti i.e., the objects. However, Jāti, guṇa, kriya etc., are प्रवृत्तिनिमित्त s in the case of respective words. The प्रवृत्तिनिमित्त is not the same in respect of all words.

12-2) Here, a clarification is necessary. Jāti etc., attributes that are प्रवृत्तिनिमित्त are also conveyed by śakti.

शक्तिं प्रति विषयतया भानं च विशेष्यरूपायां व्यक्ताविव विशेषणभूते गोत्वेप्यस्ति ।

गोत्व is शक्यतावच्छेदक. The अवच्छेदक is of two types. For instance, गन्धवत्त्व is अवच्छेदक in पृथिवी as the ground for पृथिवीत्वजाति. गोत्व is अवच्छेदक in गौ as the ground

for गोत्वजाति. There is a distinction between these two types of अवच्छेदक. In the case of the first, mere presence of गन्धवत्व is sufficient to ascertain पृथिवीत्वजाति. In the case of the second the cognition of अवच्छेदक concerned is necessary to ascertain it. Hence the second type of अवच्छेदक is conveyed by the word as शक्यतावच्छेदक.

अवच्छेदकं द्विविधं एकं सत्तया यथा पृथिवीत्वजातिनिमित्तके पृथिवीशब्दे गन्धवत्वम् । तस्य पृथिवीशब्दे समनियततया शक्यत्वेपि गन्धवत्तया अज्ञातपृथिवीशब्दशक्तिग्रहात् ।

अपरं ज्ञाततया । यथा गोत्वजातिनिमित्तके गोशब्दे गोत्वम् । गोत्ववत्तया ज्ञात एव गोशब्दशक्ति-ग्रहात् ।

आद्यं न प्रवृत्तिनिमित्तम् । किन्तु द्वितीयम् । तच्च शक्यमेव ।

## 13. सङ्केतसम्बन्धभङ्गः

Nyāya holds the view that the denotative power of a word is a kind of convention i.e., सङ्केत, of the nature of a desire on the part of men or Īśvara that this word should convey this meaning.

i) अस्मात् शब्दात् अयमर्थो बोद्धव्यः इतीच्छारूपः सङ्केत एव शक्तिः ।

ii) तादृशी ईश्वरेच्छा सङ्केतः ।

This view is not acceptable to Tarkatāṇḍava. Such a desire will be in the case of लक्ष्यार्थ also. But there is no सङ्केत for the word गङ्गा in तीर.

गङ्गापदात् तीरं प्रत्येतु इति इच्छयैव गङ्गाशब्दस्य प्रयोगेन तीरेपि शक्तिप्रसङ्गात् ।

Tarkatāṇḍava holds the view तस्मात् स्वभाविकः सम्बन्धः शक्तिः ।

## 14. अनुगतजात्यभावेपि शक्तिव्याप्त्यादि ग्रहणसमर्थनम्

14-1) In Dvaita Vedanta, अनुगतजाति a common class characteristic continuing in all members of the class is not accepted. For instance, one and the same गोत्व is not present in all cows. On this position three difficulties viz.,

i) सर्वव्यक्त्युपसंहारेण शक्तिग्रहाभावः ।
ii) सर्वधूमाग्न्युपसंहारेण व्याप्त्यभावः ।
iii) कार्यकारणभावव्यवस्थाभावः ।

i) At the time of comprehending the denotative power of the word गौः all गोव्यक्तिs will not be presented to the mind in the absence of a common and continuing characteristic गोत्व. Consequently the denotative power of the गौः will not cover all गोव्यक्तिs.

सर्वगौव्यक्तिसङ्ग्राहकस्य शक्यतावच्छेदकस्य एकस्य गोत्वस्य अभावेन शक्तिग्रहकाले सर्व गोव्यक्त्युपस्थित्यसम्भवात् । कथं गोशब्दस्य सर्वगोव्यक्त्युपसंहारेण शक्तिग्रहः ।

ii) If the common continuing characteristics, धूमत्व and अग्नित्व that bring धूम and अग्नि in respective one group as व्याप्य and व्यापक are not accepted, then, there cannot be the comprehension of व्याप्ति between these two.

सर्वधूमाग्निसङ्ग्राहकयोः व्याप्यत्वव्यापकतावच्छेदकयोः धूमत्वाग्नित्वयोः अनुगतयोः अभावे कथं सर्वोप संहारेण व्याप्तेः ग्रहः ।

iii) If दण्डत्व and घटत्व that characterise कारणत्व and कार्यत्व are not accepted as continued characteristics in the respective items, then, the comprehension of their status as कारण and कार्य is not possible.

कार्यत्वकारणत्वावच्छेदकयोः अनुगतयोः घटत्वदण्डत्वयोश्च अभावे कथं सर्वोपसंहरेण कार्यकारण-भावस्य ग्रहः । Hence, अनुगतजाति has to be accepted.

14-2) This contention is rejected by pointing out that the role played by अनुगतजाति in Nyāya is played by सादृश्य according to Dvaita. It is because of सादृश्य that the denotative power of a word is comprehended in respect of all members of the group, the व्याप्ति relation between व्याप्य and व्यापक, and कार्यकारणभाव.

त्वन्मते सामान्यप्रत्यासत्वेत्तितेन गोत्वेनेव मन्मते सादृश्येन अतीतानागतसकलशक्यव्याप्यादि-व्यक्तीनामुपस्थितिसम्भवात् ।

Here, an objection is raised. In the case of गोत्व it is actually seen in the object but in the case of सादृश्य only धर्मी of सादृश्य is seen but not its प्रतियोगिन्, hence, the presentation of all गोव्यक्ति to the mind on the basis of सादृश्य is difficult.

ननु पुरोवर्तिगोव्यक्तौ मन्मते गोत्वमिव त्वन्मते तस्याः स्वगतसादृश्यप्रतियोगित्वं नेति कथं तस्मादुपस्थितिः इति चेन्न ।

This objection cannot stand. Just as in प्रत्यभिज्ञा, the fact of the person seen in the past is brought to the mind by seeing him at present, the प्रतियोगिन् is brought to the mind on seeing धर्मिन् in the case of सादृश्य. In this connection Tarkatāṇḍava gives an interesting example of त्रिविक्रम touching the earth by one foot and the sky by the other.

तस्याः प्रत्यभिज्ञायामिदमंशस्येव इन्द्रियसंयोगादिनैवोपस्थितेः ।

अपि च त्रिविक्रमः एकेन पादेन ऊर्ध्वलोकमन्येन अधरलोकमिव सादृश्यं प्रतियोगित्वसम्बन्धेन अतीतादिकं धर्मित्वरूपसम्बन्धेन पुरोवर्तिनमपि स्पृशति । न चैवं वैरूप्यमुभयानुगतस्य निरूपकत्वस्य एकरूपत्वात् ।

14-3) In this context it has to be noted that गोत्व etc., attributes are not rejected in Dvaita but the claim of one and the same गोत्व being present in all cows is rejected. गोत्व is a kind of relation to bring all the cows to the mind at the time of शक्तिग्रह. व्याप्तिग्रह etc., However, it is one according to Nyāya and it is distinct in each cow according to Dvaita. The गोत्व directly brings all cows to the mind according to Nyāya while it brings the same through सादृश्य according to Dvaita. Keeping this in mind सादृश्य is called उपधान.

तवेव ममापि पुरोवर्तिगोत्वं ज्ञातमेव प्रत्यासत्तिः । किन्तु तव तदेकमिति स्वविशिष्टव्यक्त्युपस्थापकम्। मम तु नानेति स्वनिष्ठसादृश्यप्रतियोगिगोत्वान्तरप्रतियोगिगोत्वान्तरोपस्थापकम् ।

Anuvyākarana puts it as इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते ।

Pramāṇa paddhati puts as व्यक्तयः एव वाच्याः समयप्रतिपत्तौ तु सादृश्ययुपधानम् ।

Here, एव does not exclude गोत्व that are separately present in each cow, but it excludes the idea of a common गोत्व present in all cows.

अत्र एवकारेण व्यावृत्तजात्यादेः प्रवृत्तिनिमित्तता न निषिद्ध्यते । किन्तु अनुगतजातेः शक्यतैव ।

Tarkatāṇḍava concludes this discussion with the remark.

तस्मात् अनुगतजात्यभावेपि सादृश्येनैव शक्तिव्याप्त्यादिग्रहणम् ।

## 15. स्वर्णघटत्वादिप्रतिबन्दी

In this section certain attributes that are not अनुगत but still there is शक्तिग्रह are stated as a प्रतिबन्दी to the point that अनुगतधर्म only leads to शक्तिग्रह. For instance ज्ञेयत्वाभिधेयत्व etc., are उपाधि but not जाति. Similarly अन्त्यविशेष have no common attribute but still there is शक्तिग्रह in these cases.

## 16. अनुगतजातौ बाधकम्

16-1) In this section the concept of अनुगतजाति is rejected on the following grounds.

The cognitions the jār is produced and jār is destroyed clearly establish that the jāti i.e., ghatatva is not eternal.

It is not correct to say that the production and the destruction relate to the object jār but not to the jāti i.e., ghatatva, Since jāti is not found after the destruction of the object as in the case of the stick being separately found when the holder of it leaves it.

i) घटः उत्पन्नः घटः नष्टः इत्यनुभवात् प्रत्यक्षादेव जात्युत्पत्तिविनाशौ ।

ii) न च विशिष्टोत्पादविषया इयं धीः विशेष्यव्यक्तिमात्रोत्पत्त्यादिनापि युक्तेति वाच्यम् ।

iii) पुरुषे नष्टेपि दण्डवत् व्यक्तौ नष्टायामपि तत्रैव प्रदेशे न जातिरनुभूयते । येन उत्पत्त्यादिधीः विशेष्योत्पत्त्यादिमात्रविषया स्यात् ।

16-2) Further, the question whether jāti is व्यासज्यवृत्ति i.e., remains spreading over all members of the group or प्रत्येकं परिसमाप्त i.e., present in each seperately has to be examined. If it is spread over all, then, it cannot be cognised untill all members are cognised. If it is separately present in each, then, it is not अनुगत. This amounts to accepting our view that जाति is not अनुगत ।

i) अपिच जातेः द्वित्वादिवत् व्यासज्यवृत्तित्वे यावत् स्वाश्रयप्रतीतिं विना अप्रतीतिः स्यात् ।

ii) प्रत्येकपरिसमाप्तत्वे अस्मन्मतापत्तिः ।

Tarkatāṇḍava concludes this discussion with the remark.

तस्मात् रूपादिवत् जातिः नानैव ।

The above summary of the contents of Tarkatāṇḍava is intended to help the modern scholars to get an idea of the contribution made by Tarkatāṇḍava to Indian

epistemology. Particularly, the epistemology of Dvaita Vedanta. Tarkatāṇḍava is a critical review of Tattvachintāmaṇi of Gangeśa. Hence, this summary will be useful to the students of Nyāya also. It is hoped that this will enkindle the interest in young scholar to study the whole text of Tarkatāṇḍava with the help of traditional scholars and evaluate from modern point of view.

We give below a brief account of the life and works of the author of Tarkatāṇḍava Śrī Vyāsatīrtha and the commentator Śrī Rāghavendratīrtha,

## Śrī Vyāsatīrtha

Śrī Vyāsatīrtha the author of Tarkatāṇḍava has a high place in the field of Indian Philosophy, particularly in Dvaita Vedānta tradition. In a traditionally quoted verse of Pakṣadhara-Miśra the well-known Navyanyāya scholar of Navadvīpa the high esteem in which Vyāsatīrtha was held by his contemporary scholar is ensrined. The verse reads as :

यदधीतं तदधीतं यदनधीनं तदप्यधीतम् । पक्षधरविपक्षो नावेक्षि विना नवीनव्यासेन ॥

His high place in Dvaita Vedānta tradition is indicated by another traditionally quoted verse :

श्रीमध्वः कल्पवृक्षस्तु जयार्यः कामधुक् स्मृतः । चिन्तामणिस्तु व्यासार्यो मुनित्रयमुदाहृतम् ॥

This great scholar was born in or about 1460 A.D. in a village Bannur in the Mysore District of Karnataka. He was ordained to sannyāsa by Brahmaṇyatīrtha when he was just about sixteen years of age. He went to Kānchi a centre of learning in those days and mastered the Nyāya, Vyākaraṇa and Mīmānsā Śāstras. Then, he proceeded to Mulbagal another centre of learning, particularly, of Dvaita Vedānta, and studied Dvaita Vedānta under Lakṣmīnārāyaṇa Muni also known as Śrīpādarāja.

Saluva Narasimha the king of Candragiri near Tirupati was a disciple of Śrīpādarāja. He invited Śrī Vyāsatīrtha to his court and honoured him. Later Saluva Narasimha became the king of the famous Vijayanagar empire and invited Śrī Vyāsatīrtha to stay at Vijayanagar. Since then, Śrī Vyāsatīrtha made Vijayanagar his head quarter. Saluva Narasimha's successor Krishna Devarāya developed great admiration for him and took his blessings and guidance in the welfare of the kingdom.

In a biographical poem on Vyāsatīrtha viz. व्यासयोगिचरितम् composed by सोमनाथकवि a detailed account of Śrī Vyāsatīrtha's life and works is given. Śrī Vyāsatīrtha composed his three great works : न्यायामृतम्, तात्पर्यचन्द्रिका and तर्कताण्डवम् during his stay at Vijayanagar. His तात्पर्यचन्द्रिका is a work of अधिकरणप्रस्थान । It is written as a commentary on तत्त्वप्रकाशिका of Jayatīrtha. However, it is more a

वादग्रन्थ than a mere commentary. The bhāṣyas of Śaṅkara and Rāmānuja, their commentaries viz., Bhāmati and Śrutaprakāśikā respectively are critically examined in this work. His third great work तर्कताण्डव is a criticism of तत्त्वचिन्तामणि of गङ्गेश the source book of नव्यन्याय । It also reviews the views of Bhātta and Prābhākara Mīmānsā in respect of प्रमाण, प्रामाण्य, पदार्थ, वाक्यार्थ etc., epistemological and the linguistic issues. It is a work of a comparative study of these issues. His other works viz., भेदोज्जीवन and मन्दारमञ्जरी are also important works. The merit and the contents of all works of Śrī Vyāsatīrtha are fully dealt with in the history of Dvaita literature by Dr. B.N.K. Sharma in a masterly way, Dr. Dasagupta also has highlighted the contribution of Vyāsatīrtha to Dvaita-Advaita dialectics and the polemics of Indian Philosophy. Therefore, only a brief reference to the life and works of Śrī Vyāsatīrtha is made here.

## Śrī Rāghavendra tīrtha

Nyāyadīpa of Śrī Rāghavendra tīrtha is a detailed commentory on Tarkatāṇḍava. Śrī Rāghavendra tīrtha was a Pīthādhipati from 1623-71 A.D. He was a successor to Śrī Sudhīndra tīrtha. He was a contemporary of Raghunātha Nayaka and Vijaya Raghava Nayaka of Nayaka of Tanjor. He was a great scholar and a great saint with mystic power. He has forty works to his credit. His works on Sūtraprasthāna are most important. Particulary, his commentary Parimala on Nyāyasudha of Śrī Jayatīrtha and Prakāśika on Tātparya Chandrika are very helpful. His commentary Tarkatāṇḍava extensively quotes Tatvachintāmaṇi of Gangeśa and other Nyāya works that are reviewed in Tarkatāṇḍava and explains the points made in Tarkatāṇḍava. His commentary viz Tattvamanjari on Aṇu-bhāṣya, his other small treatises on Brahmasūtras viz Nyāyamuktāvali and Tantradīpikā give good grounding for the study of sūtraprasthāna. His upaniṣatkhadārthas give word by word meaning of principal upaniṣads. He has also written commentories on Daśaprakaraṇas and Ṛgbhāṣya. His contribution to Dvaita literature is very rich both in quantity and quantity.

I take this opportunity to record my appreciation for the assistence given to me by two young scholars Sri Venkannachārya Katti and Nagendrachārya Deshpande. Śri Venkannachārya has studied Tarkatāṇḍava under the great scholar Śrī Keśavāchārya Katti of Bagalkot. I knew him personally and admired his scholarship and highly religious nature. Sri Nagendracharya is a good scholar both in Śāstra and Itihāsa Purāṇa. He has good knowledge of computer programme also.

I thank Śri N. Narasimha Rao chairman of Dvaita Vedānta Foundation for giving me the opportunity to edit this valuable work.

**Prof. K.T. Pandurangi**

# तर्कताण्डवविषयानुक्रमणिका

## प्रथमपरिच्छेदः

Page No.

॥ श्रीः ॥

# श्री व्यासतीर्थयतिविरचितं

# तर्कताण्डवम्

अनन्तकल्याणगुणैकराशि-
मशेषदोषोज्झितमप्रमेयम्।
मुमुक्षुभिः सेव्यमनन्तसौख्य-
प्रदं रमेशं प्रणमामि नित्यम् ॥ १ ॥

श्रीशपादाम्बुजासक्तः करुणापूरशीतलः।
मध्वाख्यो मरुदंशो मे सन्तापान् हन्तु सन्ततम् ॥ २ ॥

आनन्दतीर्थोपदिष्टो निधिर्नारायणाह्वयः।
प्रदर्शितो येन सम्यग् जयतीर्थं तमाश्रये ॥ ३ ॥

श्रीमदानन्दतीर्थार्यस्वामिनः कमलापतेः।
प्रीतये क्रियते व्यासयतिना तर्कताण्डवम् ॥ ४ ॥

## श्रीराघवेन्द्रयतिविरचितः

## न्यायदीपः

विश्वोत्पत्तिस्थितिध्वंसकारणं रमणं श्रियः।
प्रणम्य पूर्णबोधादीन् व्याकुर्वे तर्कताण्डवम् ॥

गुरुपादकृताऽप्यस्ति व्याख्या साऽत्यन्तविस्तरा।
व्याख्येयं मन्दबोधाय क्रियतेऽशेषगोचरा ॥

ग्रन्थादौ विशिष्टेष्टदेवतानतिरूपं मङ्गलमाचरति ।। **अनन्तेति** ।। सत्त्वादिषु गुणत्वप्रसिद्धेः दुःखादीनां गुणत्वेन परैः परिगणनाच्च तद्व्युदासायानन्दज्ञानबलद्युतिप्रभृतिशुभधर्मलाभाय कल्याण-गुणेत्युक्तिः। तार्किकरीत्या गुणगुणिनोर्भेदभ्रमनिरासाय गुणैकराशिमित्युक्तिः। "अष्टावेवेश्वरे गुणा" इति धीनिरासायानन्तेति। "दोषैकदृक् पुरोभागी" इत्यमरे "ह्लादैकमयी" इत्यादिकाव्य-प्रकाशादौ प्रयोगदर्शनात् सङ्ख्यार्थकस्यैवैकशब्दस्य "पूर्वकालैक" इति पूर्वनिपतो न केवलार्थस्येति तत्व-निर्णयटीकाद्युक्त्या गुणैकराशिमित्यस्य साधुत्वं ध्येयम्। उक्तरूपगुणानां मुख्यराशिमिति वा भेद-शून्यराशिमिति वार्थः।

गुणवद्दोषो नाशङ्क्य इत्याह ।। **अशेषेति** ।। चिन्तासन्तापादिदोषहीनमित्यर्थः। ननु गुण-विशिष्टस्य मायाशबलत्वात्कथं दोषोज्झितत्वमित्यतो नेदं मायाशबलमिति भावेनोक्तं अप्रमेयम्, देशतोऽपरिच्छिन्नमिति। शबलं तु परिच्छिन्नमित्यभ्युपेतत्वादिति भावः। तत्र हेतुर्नित्यमिति। अनिवर्त्यम्। शबलं तु मिथ्यात्वान्निवर्त्यमित्यर्थः। एवं देशकालगुणानन्त्यरूपब्रह्मशब्दार्थस्यात्रोक्त्या रमेश एव ब्रह्मशब्दार्थ इति सूचितम्। अत एव मुमुक्षुभिः सेव्यम्, न तु मन्दोपास्यमित्यर्थः। किम्फलं? अनन्तसौख्यप्रदम्, अविनाशिसुखप्रदमित्यर्थः। स्वार्थे ष्यञ्। अत्र न्यायचिन्तापरे ग्रन्थे ब्रह्मतन्त्रा-ध्यायचतुष्टयोक्तगुणवैशिष्ट्योक्तिः,

"प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः।
मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम्"

इत्युक्त्या ब्रह्मतन्त्रोक्तप्रमेयनिर्णयोपयुक्तप्रमाणन्यायचिन्तापरत्वात्तद्विषयादिनैवास्य विषयादिमत्तेति सूचनार्था। एवं च न्यायपञ्चाध्यायानुरोधेन कुसुमाञ्जलौ पञ्चपरिच्छेदकृतिवद् ब्रह्मतन्त्रानुरोधेन परिच्छेदचतुष्टये कार्येऽपि प्रमाणत्रित्वद्योतनाय परिच्छेदत्रयकृतिरिति ।। १ ।।

देवतानतिसमनन्तरं भाष्यकर्तृनर्थयते ।। **श्रीशेति** ।। अत्राद्येन विशेषणेन सौरभ्यस्य द्वितीयेन शैत्यस्य अंश इति मान्द्यस्य वायुगुणस्योक्तिर्ज्ञेया। टीकाकर्तृन् नमति ।। **आनन्देति** ।। फलोक्तिपूर्वं चिकीर्षितं प्रतिजानीते ।। **श्रीमदिति** ।। २- ४ ।।

## तर्कताण्डवम्

**स्वतःप्रमाणैराम्नायैरादरेणादिवर्जितैः।**
**अख्यातानन्तकल्याणगुणं श्रीरमणं भजे ।।५।।**

## न्यायदीपः

आनुमानिकत्वादीश्वरात्मनो नाष्टगुणाधिकगुणवत्त्वमित्यत आद्यपद्योक्तरमेशविशेषणानि मानोक्त्या स्थिरीकुर्वंस्ताण्डवकरणस्य प्रसञ्जकं पूर्वरङ्गं निबध्नाति **॥ स्वत इति ॥** आम्नायैः सजातीयानुपूर्वीविशिष्टवेदैः। आख्यातेति नित्यसापेक्षत्वात्समासः।

"वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः।
आम्नायोऽनन्यथापाठात्"

इति तत्त्वनिर्णयोक्तेः। गुणमिति निर्दोषतादेरुपलक्षणम्। गुणपदेन वा निर्दोषत्वमुमुक्षुसेव्यत्वानन्तसौख्यप्रदत्वरूपधर्मग्रहः। आम्नायत्वे हेतुरादिवर्जितैरिति स्वतन्त्रपुरुषाप्रणीतैरित्यर्थः। नन्वपौरुषेये वेदेऽदृष्टार्थके चाप्तोक्तत्वफलसंवादादिहेतोः प्रामाण्यनिश्चायकस्याभावात् निश्चितप्रामाण्यकस्यैव प्रमाणस्यार्थसत्त्वनिर्णायकत्वस्याग्रे प्रामाण्यनिश्चयप्रवर्तकत्ववादे व्यक्तत्वात् कथं वेदे प्रामाण्यनिश्चयः। आप्तोक्तत्वगुणाभावात् प्रामाण्यं वा कथमित्यतो "न विलक्षणत्वादस्य" इत्यधिकरणसिद्धमाह **॥ स्वतःप्रमाणैरिति ॥** करणे ल्युट्। ज्ञानजननशक्तिग्राहकमात्रग्राह्यप्रमाजननशक्तिमद्भिः इत्यर्थः। तथा ज्ञानजननशक्तित एव प्रमाजनकैरित्यर्थः। ज्ञप्तावुत्पत्तौ च अन्यानपेक्षणात् ज्ञानजननशक्तिग्राहकेणैव प्रमाजननशक्तिग्रहरूपप्रामाण्यग्रहस्य, ज्ञानजननशक्त्यैव प्रमोत्पादकत्वस्य च सम्भवादपवादस्य च दोषस्य वेदापौरुषेयत्ववादे वक्ष्यमाणदिशा अपौरुषेयेऽभावनिश्चयादिति भावः।

ननु प्रमाणेनापि तात्पर्याविषयोऽर्थो न सिध्यतीत्यत उक्तं **॥ आदरेणाख्यातेति ॥** आङो मुख्यत्वमर्थः। तात्पर्यपूर्वं मुख्यवृत्त्योक्तेत्यर्थः। लक्षणयोदितत्वे गुणासिद्धेः। तादृशगुणे विष्णौ वेदानां शक्तितात्पर्ये इत्येतदन्यत्र व्यक्तम्। अत्र स्वतःप्रामाण्यज्ञप्तिवादपर्यन्तं विस्तरस्तु **गुरुपादकृतयुक्तिरत्नाकरे** द्रष्टव्यः।

## स्वमते ज्ञप्तौ स्वतस्त्वनिरुक्तिः

### तर्कताण्डवम्

**याथार्थ्यरूपस्य तत्तज्ज्ञनप्रामाण्यस्य ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानविषयत्वनैयत्यं स्वतस्त्वम्।**

तार्किकाभिमतानुव्यवसाय एवास्माकं साक्षी।

- न्यायदीपः

वेदरूपकरणप्रामाण्यस्य स्वतस्त्वं निश्चितप्रामाण्यकज्ञानेन ज्ञातव्यम्। तथा तज्जन्यज्ञान-प्रामाण्योत्पत्तिस्वतस्त्वसिद्ध्यधीनोत्पत्तिस्वतस्त्वमिति क्रमाज्ज्ञप्तावुत्पत्तौ च तदेवादौ समर्थयितुं ''ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वम्'' इति टीकाकृदुक्तं वाक्यं विवृण्वानो ज्ञप्तौ स्वतस्त्वं तावन्निर्वक्ति **॥ याथार्थ्यरूपस्येति ॥** अर्थं ज्ञेयम् अनतिक्रम्य वर्तमानं यथार्थम्। ''यथाऽसादृश्ये'' इत्यव्ययी-भावः। यथार्थभावो याथार्थ्यं, यथावस्थितज्ञेयविषयीकारित्वरूपं ज्ञेयाव्यभिचारित्वं तद्रूपस्येत्यर्थः। एतच्च परोक्षापरोक्षजन्याजन्यसर्वप्रमितिमात्रनिष्ठमित्युपेत्य ज्ञानप्रामाण्यस्येत्युक्तम्। अनुभूतित्वा-नधिगतार्थगन्तृत्वप्रमाकरणत्वसाधनाश्रययोरन्यतरत्वप्रमाव्याप्तत्वादेरव्याप्त्यसम्भवादिदुष्टत्वादिति भावः। अस्यानुप्रमाणसाधारण्येपि साक्षाज्ज्ञेयविषयीकारित्वलाभायापि ज्ञानप्रामाण्यस्येत्युक्तम्। एतच्च भिन्नं भिन्नमेवेति सर्वप्रमितिनिष्ठप्रामाण्यस्वतस्त्वद्योतनाय तत्तदिति ज्ञानविशेषणम्। तस्य तस्य ज्ञानस्य यत्तदर्थाव्यभिचारित्वरूपं प्रामाण्यं तस्येत्यर्थः। प्रमापदप्रवृत्तिनिमित्तप्रामाण्यस्येति यावत्। ''याथार्थ्यमेव मानत्वं'' इति द्वितीयाद्यपादीयानुभाष्योक्तेः। निर्धारितं चैतद्याथार्थ्यं तत्रैव सुधायाम्। प्रपञ्चितं गुरुपादैरत्रैव प्रामाण्यस्वतस्त्वानुमानवादे। ''घटत्ववति घटत्वप्रकारकत्वादिरूपं पराभिमतमेवास्माकं याथार्थ्यं'' इति वक्ष्यमाणदिशा स्वपरसाधारणमेवेदमिति ज्ञेयम्। उपाधिखण्डन-टीकाव्याख्यानमन्दारमञ्जर्यां ''अथ केयं प्रमा'' इत्यादिना प्रमात्वमाक्षिप्य

''यथार्थज्ञानमित्येव प्रमाया लक्षणस्थितिः।
स्मृतेरपि च लक्ष्यत्वादतिव्याप्तिकथा मुधा''

इति प्रतिज्ञापूर्वकं ''सादृश्यस्य यथाशब्दार्थत्वात्। सादृश्यं च ज्ञानार्थयोः सत्तया। नच भ्रमेऽति-व्याप्तिः। तत्र ज्ञानस्य सत्त्वादर्थस्य चासत्त्वात् ज्ञानार्थयोः सत्तया सादृश्याभावात्।

एवं च यथा सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणे यथार्थशब्दस्य यथार्था प्रतीतिरित्याद्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धम्'' ''यथाशब्दोऽनतिक्रमे वर्तते'' इति टीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयम्। ज्ञानार्थयोः सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्यावश्यकत्वात्'' इत्यादिग्रन्थेन बहुव्रीह्युपादानेनोक्तार्थस्य ग्रहणे तु न स्वपरसाधारण्यं प्रामाण्यस्य लभ्यते। परमते भ्रमविषयस्य सत्त्वेन लक्षणस्यातिव्याप्तेः।

यद्वा तन्मतेऽपि प्राचां रीतौ वैशिष्ट्यस्य भ्रमेऽसत्त्वान्नवीनमते च पुरतोऽसत्त्वात् तदपि तन्मतसाधारणमेवेत्याहुः। अत्र यद्यप्याम्नायजन्यज्ञानप्रामाण्यस्वतस्त्वमात्रं प्रकृतम्। तथापि तत्स्वरूपग्राहिप्रत्यक्षज्ञानस्य तदनुग्राहकन्यायजानुमितिरूपज्ञानस्य तत्प्रामाण्यज्ञानस्य च प्रामाण्यनिश्चयोपायस्याप्यावश्यकत्वाज्ज्ञानप्रामाण्यमात्रस्यापि धर्मित्वेनोपादानम्।

यद्वा प्राचीनतार्किकमत इव क्वचित् प्रामाण्यं स्वतः क्वचित् परत इति न भ्रमितव्यम्। किन्तु सर्वत्रापि। नवीनमते सर्वत्र परतस्त्वोपगमेन तद्व्युदासायेति ध्येयम्॥ **ग्राह्येति**॥ ग्राह्यप्रामाण्यस्य यद् विरोधि प्रामाण्याभावाप्रामाण्यप्रमाण्याभावव्याप्याप्रामाण्यव्याप्यरूपं तस्य या उपस्थापकसामग्री दोषशङ्कादिरूपा तदसमवहितं ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकं यत्साक्षिज्ञानं तेन गृह्यत एवेत्येवंरूपतद्विषयत्वनैयत्यमित्यर्थः। विप्रतिपत्तेरनावश्यकत्वस्य न्यायामृते व्युत्पादनात् नैयत्यमस्ति न वेत्यनुक्त्वैकैव कोटिरुक्ता। अत्र प्रामाण्यविरहरूपत्वतद्व्याप्यत्वादिरूपविरोधित्वस्य प्रामाण्याभावादिषु चतुर्ष्वेकस्याभावेपि यज्ज्ञाने सति प्रामाण्यनिश्चयः प्रतिबध्यते तज्ज्ञानविषयत्वरूपं ग्राह्यप्रमाण्यविरोधित्वं प्रामाण्याभावादौ ध्येयम्। वक्ष्यति च प्रामाण्यनिश्चयस्य प्रवर्तकत्ववादे ''अभावानां प्रामाण्यनिश्चयविरोध्यभावत्वेन'' इत्यादि।

प्रामाण्यनिश्चयप्रतिबन्धकत्वं तदनुकूलकिञ्चिद्धर्मविघटकत्वं वा तदनुत्पादव्याप्यत्वं वा। प्रामाण्यनिश्चयस्य साक्षिरूपतया नित्यज्ञानत्वेपि प्रामाण्यविषयकत्वादिकमुत्पत्तिमदेवेति तद्विशिष्टप्रामाण्यनिश्चयानुत्पादो न दुर्लभः। उपस्थापकेत्यत्र विरोध्युपस्थितितज्जनकसामग्रीभ्यामसमवहितेत्यर्थो ध्येयः। तथाच प्रामाण्यविरोध्युपस्थितिवेलायां तत्सामग्र्यभावेन तदसमवहितेनापि साक्षिणा गृह्यत एवेति नैयत्यं नेति शङ्कानवकाशः। असमवहितत्वं च तदसामानाधिकरण्ये सति तदसमानकालिकत्वम्। ''प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन'' इति प्रमाणलक्षणे, ''स्वरूपेन्द्रियं साक्षीत्युच्यते'' इति पद्धत्यादौ च साक्षिणोऽनुप्रमाणत्वोक्तेरिह पराभ्युपेतानुव्यवसायरूपत्वस्फोरणाय साक्षिज्ञानेत्युक्तम्।

''साक्षिप्रत्यक्षतो ह्येव मानानां मानतेयते''

इत्यादौ ज्ञानेऽपि प्रयोगात्। तथा युक्तिपादे ''न विलक्षणत्वात्'' इति नये-

''सुखदुःखादिविषयं शुद्धं संसारगेष्वपि''

इत्यस्य व्याख्यावसरे सुधायां ''स्वरूपभूतं चैतन्येन्द्रियं साक्षीत्युच्यते तदभिव्यक्तं ज्ञानं च'' इत्युक्तत्वाच्च।

नन्वात्मस्वरूपज्ञानत्वादिरूपसाक्षित्वस्य परमतेऽप्रसिद्धिरित्यत आह ॥ **तार्किकेति** ॥ स्वतस्त्वानुमानवादे वक्ष्यमाणदिशा व्यवसायप्रकारप्रकारकतया व्यवसायप्रकारवद्विशेष्यकतया च तद्विषयकप्रत्यक्षत्वं वा ज्ञानांशे लौकिकप्रत्यक्षत्वं वाऽनुव्यवसायत्वम्। साक्षित्वमप्येवंरूपमेवात्र स्वतस्त्वनिरुक्तौ प्रविष्टमित्यर्थः। यन्मते वैशिष्ट्यमनुव्यवसायविषयोऽपि न स्वातन्त्र्येण विषय इति तन्मतेनाद्यः कल्पः। तत्र च विषयत्वनैयत्यं स्वातन्त्र्येणेति प्रवेशनीयम्। यन्मते वैशिष्ट्यमनुव्यवसायविषय एव नेति तन्मतेनान्त्यः। तत्र तु न स्वातन्त्र्येणेति विवक्षणीयम्। लौकिकत्वं च पराभिमतसामान्यादिप्रत्यासत्तित्रयाजन्यत्वम्। ज्ञानांश इति विशेषणात् स्मृत्युपनीतेऽतीते घटज्ञाने तद्विषयकमहं घटज्ञानवानिति यज्ज्ञानमात्मांशे लौकिकप्रत्यक्षं तेन प्रामाण्याग्रहणाद्बाधवारणमिति ध्येयम्। वस्तुतस्त्वत्र अन्त्यपक्षप्रवेश एव साधुः। तथाच प्रामाण्यविरोधीत्यादिविशेषणवैयर्थ्यशङ्कावकाशलेशोऽपि नेति ज्ञेयम्।

### तर्कताण्डवम्

**अत्रच नियमोक्त्या न्यायमतेऽपि क्वचिदनुव्यवसायेन प्रामाण्यग्रहस्य वक्ष्यमाणत्वात् सिद्धसाधनमिति शङ्का, साक्षीत्युक्त्या घटज्ञानमस्तीत्यादिशब्दजन्यमप्रतिबद्धं घटज्ञानविषयकं ज्ञानं प्रति घटज्ञानप्रामण्यस्याविषयत्वाद् बाध इति शङ्का, ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकेत्युक्त्या घटज्ञानं गृह्णता साक्षिणा पटज्ञानप्रामाण्यस्य अग्रहणाद् बाध इति शङ्का, अवशिष्टेन मन्मतेऽपि दोषशङ्कादिरूपे ग्राह्यप्रामाण्यविरोधिग्राहकसामग्रीसमवधानात्मके प्रतिबन्धे सति साक्षिणा प्रामाण्यस्य अग्रहणाद् बाध इति शङ्का च निरस्ता।**

**अत्र यद्यपि विषयत्वं साक्षिज्ञानं प्रत्येवेति नियमो न युक्तः। मन्मतेऽपि प्रामाण्यस्यानुमित्याऽपि ग्राह्यत्वात्। तथाऽपि साक्षिज्ञानं प्रति विषयत्वमेवेति नियमो युक्त एव। मणिकृताऽपि हि तदप्रामाण्याग्राहकेति विशिंषता प्रामाण्यग्रहणेऽप्रामाण्योपस्थापकसामग्र्यसमवधानस्य प्रयोजकतोक्तैव॥ १ ॥**

## न्यायदीपः

विशेषणकृत्यादि स्वयमेव व्यनक्ति ॥ **अत्रेति** ॥ निरुक्तिवाक्य इत्यर्थः। नियमोक्त्या गृह्यत एवेति नैयत्योक्त्येत्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ बाधोद्धारग्रन्थादौ घटादिज्ञानानुव्यवसायजन्य-संस्कारोत्पन्नस्मृत्युपनीते घटादिज्ञाने घटदिज्ञानजन्यसंस्कारोत्पन्नस्मृत्युपनीतं घटघटत्ववद्वैशिष्ट्य-रूपप्रामाण्यम्, पञ्चमानुव्यवसायेन गृह्यत इति वक्ष्यमाणत्वादित्यर्थः। शङ्का निरस्तेत्यन्वयः। एतच्च तत्प्रकारप्रकारकतया इत्युक्तानुव्यवसायत्वरूपसाक्षित्वविवक्षया बोध्यम्। अन्त्यकल्पेतु गृहीत-प्रामाण्यकज्ञानसजातीयज्ञानान्तरानुव्यवसायमीश्वरज्ञानं वाऽऽदाय सिद्धसाधनता ध्येया। शब्दजन्य-मित्युपलक्षणम्। सामान्यप्रत्यासत्तिजन्यं ज्ञानांशेऽलौकिकं ज्ञानवानहमिति ज्ञानं च प्रतीत्यपि ध्येयम्। साक्षित्वस्य द्विरूपस्यात्राभिमतत्वात् तत्प्रकारकेत्यादिरूपेण शब्दजन्यज्ञानस्य ज्ञानांशेऽलौकिके अन्त्यपक्षरूपेण च सामान्यप्रत्यासत्तिजन्यस्य निरासात्।

॥ **अप्रतिबद्धमिति** ॥ विरोध्युपस्थितितत्सामग्र्यसमवहितमित्यर्थः। यस्तु घटज्ञानमिति ज्ञानेनापि प्रामाण्यं गृह्यत इति पक्षधरोद्घाटितः पक्षः, स त्वपदार्थत्वादवाक्यार्थत्वादिति रुचिदत्ता-दिनैव दूषितत्वादुपेक्ष्यः। अत्र विवक्षिततत्प्रकारप्रकारकतादिरूपज्ञानज्ञानत्वाभावाच्च ॥ **तत्तज्ज्ञानेति** ॥ ग्राह्यप्रामाण्याश्रयविषयकेत्युक्तावपि घटज्ञानपटज्ञानयोर्द्वयोरपि ग्राह्यप्रामाण्याश्रयत्वेनान्यतरग्राहकेण अन्यतरप्रामाण्याग्रहणेनोक्तदोषतादवस्थ्यात् तत्तज्ज्ञानविषयकेत्यप्यनुवादः।

अत एव धर्मिनिर्देशेऽपि तत्तदित्युक्तिः। ग्राह्यप्रामाण्याश्रयेत्यनुक्तावप्रामाण्याश्रयस्यापि ज्ञानस्य तत्तज्ज्ञानपदेन ग्रहणप्रसङ्गात् तद्विषयकेण साक्षिणा प्रामाण्याग्रहणाद्बाध एव। साक्षिण एकत्वेपि पटज्ञानप्रामाण्यग्रहणस्य पटज्ञानग्रहणप्रयुक्तत्वेन घटज्ञानग्रहणप्रयुक्तत्वाभावाद् बाधशङ्का युक्तैवेति भावः।

॥ **दोषशङ्केति** ॥ दुष्टकरणजन्यत्वशङ्का तन्निश्चयतज्जनकादिरूपेत्यर्थः। नैयत्यस्य साक्षिणैव गृह्यते साक्षिणा गृह्यत एवेति च द्वेधा सम्भवाद्विवक्षितमाह ॥ **अत्रेति**। निरुक्तावित्यर्थः। ॥ **अनुमित्येति** ॥ चैत्रज्ञानं प्रमा अर्थसंवादादित्यादिरूपेण मैत्रादेरनुमित्युदयादित्यर्थः।

ननु ज्ञानग्राहकसाक्षिणो विरोधिसामग्र्यभावमपेक्ष्य प्रामाण्यग्राहकत्वे निरपेक्षज्ञानग्राहक-ग्राह्यत्वरूपस्वतस्त्वायोग इत्यत आह ॥ **मणिकृताऽपीति** ॥ परतस्त्ववादिनाऽपीत्यर्थः। विरोध्युप-स्थापकसामग्र्यसमवधानस्य प्रामाण्यग्रहणकारणत्वे हि दोषः। गमनशक्तस्य गजस्य गोक्षुरकाप-सारणस्येव प्रयोजकत्वे तु न दोष इति भावेनोक्तम् ॥ **प्रयोजकतेति** ॥ १ ॥

## तर्कताण्डवम्

**यद्वा तत्तज्ज्ञानप्रामाण्यस्य ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञान-विषयकसाक्षिज्ञानविषयत्वयोग्यत्वं स्वतस्त्वं। योग्यत्वं च साक्षिनिष्ठां सहजां ग्रहणशक्तिं प्रति स्वविषयज्ञानद्वराऽवच्छे-दकत्वं। एवं च प्रतिबन्धदशायामपि करतलादौ दाहयोग्यता-वत् प्रामाण्ये ग्रहणयोग्यताऽस्त्येव। तथा च प्रामाण्यग्रहण-शक्तेः सहजत्वात् प्रामाण्यग्रहणस्यौत्सर्गिकत्वरूपस्वतस्त्व-सिद्धिः। उक्तं च टीकाकारैः- ''साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः। किन्तु प्रतिबद्धो ज्ञानमात्रं गृहीत्वा तत्प्रा-माण्यग्रहणस्य नेष्टे'' इति ॥२॥**

## न्यायदीपः

पूर्वं फलोपधानापेक्षया प्रयोजकविशेषणोक्त्या निरुक्तिः कृता अधुना तु तादृशविशेषणत्यागेन प्रकारान्तरमाह॥ **यद्वेति** ॥ सार्वत्रिकसार्वकालीनप्रामाण्यस्वतस्त्वलाभाय वाऽऽह॥ **यद्वेति** ॥ नन्वेवं स्वतस्त्वस्याप्रतिबद्धसाक्षिवेद्यत्वरूपत्वे ''ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णातीत्युत्सर्ग एव विसंवादलक्षणात्परतोऽपवादादप्रामाण्यं च गृह्णाति'' इति तत्वनिर्णयटीकाद्युक्तौत्सर्गिकत्वविरोध इत्यतस्तदनुरोधेन वा पक्षान्तरमाह॥ **यद्वेति** ॥ अत्र योग्यत्वमित्युक्त्या यथोक्तविशेषणेनापि साक्षिज्ञानेन प्रतिबन्धदशायां प्रामाण्याग्रहाद्बाध इति शङ्का, साक्षीत्युक्त्या घटज्ञानमस्तीत्यादि-शब्दजन्यं घटज्ञानविषयकज्ञानं प्रति तथा ज्ञानांशालौकिकं सामान्यप्रत्यासत्तिजन्यं ज्ञानं च प्रति प्रामाण्यस्य कदाप्यविषयतया योग्यत्वं नेति बाध इति शङ्का, ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञान-विषयकेत्युक्त्या घटज्ञानं गृह्णता साक्षिणा पटज्ञानप्रामाण्यस्य कदाप्यग्रहेण योग्यत्वं नेति बाध इति शङ्का च निरस्तेति पूर्ववद्युक्तमिति भावः। अत्रापि ज्ञानपदं पूर्ववत्स्वरूपेन्द्रियभ्रमनिरासाय। साक्षित्वमपि व्यवसायप्रकारप्रकारकतया तत्प्रकारवद्विशेष्यकतया तद्विषयकप्रत्यक्षत्वरूपं वा ज्ञानांशे लौकिकप्रत्यक्षत्वरूपं वाऽनुव्यवसायत्वमेवेति भावः। अत्रापि पूर्वत्रेव ग्राह्यप्रामाण्या-श्रयेत्यंशकृत्यं बोध्यम्।

नन्वत्र स्वाश्रयज्ञानग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वमित्युक्तं स्यात्, तच्चाप्रामाण्यस्याप्यस्ति। नच तत्र ज्ञानं साक्षिवेद्यमप्रामाण्यं त्वनुमेयमिति न दोष इति युक्तम्। प्रथमप्रामाण्यानुमित्यसम्भव-

वादे विसंवादाहितशक्तिकेन साक्षिणैवाप्रामाण्यग्रहणस्य वक्ष्यमाणत्वादित्यतो वा, साक्षिविषयत्वयोग्यत्वं यदि साक्षिजन्यव्यवहारयोगित्वादिरूपं तदैतत्फलोपधानपर्यवसन्नमिति न प्रतिबन्धकालीनप्रामाण्यस्वतस्त्वलाभ इत्यतो वाऽऽह **॥ योग्यत्वं चेति सहजामिति ॥** स्वाभाविकीं विषयीकरणशक्तिं प्रति स्वस्य साक्षिणस्तच्छक्तेर्वा यो विषयो ग्राह्यप्रामाण्याश्रयरूपं ज्ञानं तद्वाराऽवच्छेदकत्वं विषयतया व्यावर्तकत्वम्। ज्ञानग्रहणशक्तिरितिवत् प्रामाण्यग्रहणशक्तिरिति व्यवहारापादकत्वमेव प्रामाण्यस्य साक्षिविषयत्वयोग्यत्वमित्यर्थः। साक्षिशक्तिर्ज्ञानद्वारैव तन्निष्ठप्रामाण्यं गृह्णाति। न साक्षात्। यथा प्रत्यक्षं व्यक्तिद्वारैव जातिं न साक्षादिति स्वविषयज्ञानद्वारेत्युक्तम्। ज्ञानग्राहकैकशक्तिविषयत्वं प्रामाण्यस्य साक्षिविषयत्वयोग्यत्वम्। नैतदप्रामाण्येऽस्ति। भिन्नशक्तिविषयत्वादित्यग्रे व्यक्तम्।

गुरुपादास्तु ''स्वपदेन प्रामाण्यम्। बहुव्रीहिसमासः। स्वविषयकं यज्ज्ञानं साक्ष्येव। साक्षिनिष्ठशक्तिं प्रति प्रामाण्यस्य न साक्षाद्विषयत्वमित्यतः स्वविषयज्ञानद्वारेत्युक्तम्'' इत्याहुः। परमते शक्तेरप्रसिद्धावपीदं स्वमतासाधारणमिति वा परेणापि शक्तिमङ्गीकारयिष्यामीति वा ज्ञानग्रहणसामग्रीमात्रं प्रति स्वविषयज्ञानद्वारावच्छेदकत्वमिति वा ज्ञानग्राहकतावच्छेदकधर्मावच्छिन्नग्राहकताकत्वं वा तदर्थ इति भावः।

नन्वेतावतापि कथं प्रतिबन्धदशापन्नज्ञानप्रामाण्यस्य स्वतस्त्वलाभः येन सर्वप्रामाण्यानां स्वतस्त्वं स्यादित्यत आह **॥ एवं चेति ॥** योग्यतारूपे स्वतस्त्वे सतीत्यर्थः। योग्यत्वस्योक्तरूपत्वे सतीति वार्थः **॥ दाहेति ॥** दाहविषयत्वयोग्यतावदित्यर्थः। द्वितीयनिरुक्त्या अन्यदप्यनुकूलितमित्याह- **तथाचेति।** उक्तरूपयोग्यत्वगर्भनिरुक्तौ सत्यामित्यर्थः **॥ औत्सर्गिकत्वेति ॥** ''ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णतीत्युत्सर्ग एव'' इति तत्वनिर्णयटीकाद्युक्तौत्सर्गिकत्वेत्यर्थः **॥ उक्तं चेति ॥** प्रामाण्यस्य सहजशक्तिविषयत्वं प्रतिबन्धस्थले योग्यतास्तीत्येतच्चोक्तं तत्वनिर्णयटीकायामित्यर्थः। कारणान्तरोपनिपातेन मानसापराधेन प्रतिबद्ध इत्येवंरूपेण तत्र पाठेऽप्ययमेकदेशानुवाद इत्यदोषः ॥ २ ॥

## तर्कताण्डवम्

**यद्वा उभयसिद्धप्रामाण्याविषयकज्ञानभिन्नज्ञानविषयत्वनैयत्यं स्वतस्त्वं। तत्र प्रामाण्याविषयकज्ञानभिन्नेत्युक्त्या घटोऽयमित्यादिघटादिविषयकप्रत्यक्षज्ञानं प्रति ज्ञानं गुण**

**इत्यादिशब्देन घटज्ञानमित्यादिशब्देन च जन्यं ज्ञानविषयकज्ञानं प्रति प्रतिबद्धानुव्यवसायं प्रति च स्वतस्त्वपक्षेपि प्रामाण्यस्य अविषयत्वाद्विषयत्वनैयत्यसाधने बाध इति शङ्का निरस्ता।**

## न्यायदीपः

प्रौढ्या स्वतस्त्ववादिमात्रसाधारणं पक्षान्तरमाह ॥ **यद्वेति** ॥ तत्तज्ज्ञानप्रामाण्यस्य इत्यनुषङ्गः। साध्ये ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकेति ग्राह्यम्। स्वतस्त्ववादिनो ह्यनेके। ग्रन्थकर्तैकः। भट्टो गुरुर्मुरारिमिश्र इति च त्रयः। मायावाद्यादयो वेदान्तिनश्च। तत्र भट्टो ज्ञानातीन्द्रियत्ववादी। गुरुर्ज्ञानमात्रस्वप्रकाशत्ववादी। मिश्रस्तु न्यायमत इवास्वप्रकाशानुव्यवसायवादी। तत्रोभयेत्यस्य सिद्धान्तितार्किकोभयेति भट्टतार्किकोभयेति गुरुतार्किकरूपोभयेति मिश्रतार्किकोभयेति मायितार्किकोभयेत्येवंरूपेणत्यर्थः। एकादाऽनेकैः सह विवादायोगात्। उभयसिद्धं यत्प्रामाण्याविषयकं ज्ञानं प्रामाण्याविषयकत्वेन उभयसम्मतं यज्ज्ञानं अयं घट इत्यादिरूपं ज्ञानं तद्भिन्नं ग्राह्येत्यादि रूपं च यज्ज्ञानं सिद्धान्ते प्रागुक्तरूपसाक्षिज्ञानं भट्टमते ज्ञानानुमितिरूपं गुरुमते स्वप्रकाशघटादिज्ञानं मिश्रमते तदनुव्यवसायः। तेनगृह्यत एवेत्येवंरूपं तद्विषयत्वनैयत्यं तत्तन्मते स्वतस्त्वमित्यर्थः।

न च गुरुमते सर्वज्ञानयाथार्थ्यस्वप्रकाशत्वयोरुपगमेन प्रामाण्याविषयकं ज्ञानं नास्त्येवेति शङ्क्यम्। इदं ज्ञानमप्रमाणमित्याद्यप्रामाण्यारोपस्थले ज्ञानस्य प्रामाण्याविषयकत्वस्य गुरुतार्किकसम्मतेः। आरोपस्तु गुरुमते इच्छास्थस्य व्यधिकरणप्रकारकत्वरूपाप्रामाण्यस्यासंसर्गाग्रहो न्यायमते विशिष्टज्ञानमित्यन्यदेतत्। अत्र ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकेत्युक्त्या तदंश एवोक्तरूपज्ञानभिन्नत्वस्याभिमतत्वाज्ज्ञानविषयकं ज्ञानं प्रमेति ज्ञानस्याद्यज्ञाने प्रामाण्याविषयकत्वेपि ग्राह्यप्रामाण्याश्रयज्ञाने प्रामाण्याविषयकभिन्नत्वसत्त्वान्न दोषः। प्रामाण्यपदं ग्राह्यतत्तत्प्रामाण्यपरं वा। तथाच यथान्यासेनैवोक्तस्थले न दोषः। अत्र नञ्द्वयाप्रवेशेन उभयसिद्धप्रामाण्यविषयकज्ञानविषयत्वनैयत्यमित्युक्ते तादृशानुमित्यादिना सिद्धसाधनम्। अतोऽविषयकभिन्नेत्युक्तिः।

अत्राद्यज्ञानपदं यथोक्तरूपघटादिभिन्नेन घटज्ञानादिना प्रामाण्याग्रहाद् बाध इति शङ्कानिरासाय। अन्त्यं तु तादृशज्ञानभिन्नघटादिविषयत्वाभावेन बाध इति शङ्कानिरासायेति व्यक्तमिति शिष्टपदकृत्यान्याह ॥ **तत्रेति** ॥ प्रामाण्याविषयकज्ञानभिन्नेत्यनुक्त्वा उभयसिद्धज्ञानविषयत्वनैयत्यमित्येतावत्युक्ते सति प्रष्टव्यम्, उभयसिद्धज्ञानपदेन किं प्रत्यक्षज्ञानमभिमतं उत शाब्दं अथानुव्यवसायरूपम्। द्वितीयेऽपि किं ज्ञानविषयकं विषयालिङ्गितज्ञानविषयकं वेति विकल्पान् वा,

विषयग्राहिज्ञानमिति वा ज्ञानग्राहिज्ञानमिति वा उभयग्राहिज्ञानमिति वा उभयग्राह्यनुव्यवसायरूप-प्रत्यक्षं वेति विकल्पान्वा हृदि निधाय क्रमेण निराह ॥**घटोयमित्यादिना**॥ प्रत्यक्षज्ञानं प्रतीत्यादेः प्रामाण्यस्याविषयत्वादित्यन्वयः। गुरुमते घटोयमिति ज्ञानेनापि प्रामाण्यग्रहादिदं ज्ञानमप्रमाण-मित्यादिज्ञानं प्रतीति ग्राह्यम्।

## तर्कताण्डवम्

**उक्तस्य त्रिविधस्यापि ज्ञानस्य प्रामाण्याविषयकत्वेन तद्भिन्नत्वाभावात्। उभयसिद्धेत्युक्त्या न्यायमतेऽप्रतिबद्धस्य अप्यनुव्यवसायस्य प्रामाण्याविषयकत्वेन तद्भिन्नत्वाभावा-दिति सिद्धान्त्यभिप्रेतस्य अप्रतिबद्धानुव्यवसायं प्रति विषय-त्वस्यासिद्ध्याऽर्थान्तरमिति शङ्का परास्ता । अप्रतिबद्धानु-व्यवसायस्य न्यायमते प्रामाण्याविषयकत्वेऽपि मन्मते तदभावेनोभयसिद्धात् प्रामाण्याविषयकाद्भिन्नत्वसम्भवात्। नैयत्यामित्युक्त्या न्यायमते प्रामाण्यस्यैवंविधां प्रामाण्या-नुमितिं प्रति क्वचिदनुव्यवसायं प्रति च विषयत्वात् सिद्ध-साधनमिति शङ्का व्युदस्ता।**

## न्यायदीपः

शङ्कानिरासं व्यनक्ति ॥**उक्तस्य त्रिविधस्यापीति**॥ यत्तु -घटज्ञानमिति शब्दजन्यज्ञानेन घटत्ववति घटत्वप्रकारकत्वरूपं प्रामाण्यं गृह्यत इति, तत्त्वपदार्थत्वादवाक्यार्थत्वादयुक्तम्। प्रति-बद्धानुव्यवसायं प्रतीत्यत्र गुरुमते इदं ज्ञानमप्रमाणमित्यादिप्रतिबद्धज्ञानं प्रतीति भट्टमते प्रतिबद्ध-ज्ञानानुमितिं प्रतीत्यपि ध्येयम्। **उभयसिद्धेत्युक्त्येति**॥ प्रामाण्याविषयकेत्यादावुक्ते सत्यन्यतरसिद्धं प्रामाण्याविषयकं यदप्रतिबद्धानुव्यवसायरूपं ज्ञानं तद्विषयत्वमादाय प्रामाण्यस्य स्वतस्त्वं सिद्धान्ते न सिध्येत्। तस्य प्रामाण्याविषयकभिन्नत्वाभावात्। उभयसिद्धेत्युक्तौ अप्रतिबद्धानुव्यवसायस्य प्रामाण्याविषयकत्वेनोभयसिद्धत्वाभावादुभयसिद्धतादृशज्ञानभिन्नत्वमस्त्येवेति नार्थान्तरत्वदोष इत्यर्थः। अनुव्यवसायस्येत्युपलक्षणम्। अप्रतिबद्धज्ञानानुमितेः अप्रतिबद्धस्वप्रकाशज्ञानस्येत्यपि ध्येयम्। एवमग्रेपि। अप्रतिबद्धत्वं च प्रामाण्यविरोध्युपस्थितितत्सामग्र्यसमवहितत्वम्।

शङ्कानिरासप्रकारं व्यनक्ति ।। **अप्रतिबद्धेति** ।। उभयसिद्धादित्यादेः प्रामाण्याविषयकत्वेन उभयसिद्धाद्भिन्नत्वसम्भवादित्यर्थः ।। **एवंविधामिति** ।। उभयसिद्धप्रामाण्याविषयकज्ञान-भिन्नज्ञानरूपां इदं ज्ञानं प्रमाणं समर्थप्रवृत्तिहेतुत्वादित्यनुमितिं प्रति वक्ष्यमाणदिशा स्मृत्युपनीते व्यवसाये स्मृत्युपनीतप्रामाण्यावगाह्यनुव्यवसायं गृहीतप्रामाण्यकज्ञानसजातीयज्ञानगोचरानुव्यवसायं च प्रति ।

## तर्कताण्डवम्

**अत्राद्यं पक्षद्वयं स्वमतासाधारणम् । तृतीयं तु मीमांसकादि मतसाधारणमिति ज्ञेयम् । एतदेव पक्षत्रयं अभिप्रेत्योक्तं सुधायां 'ज्ञानगतयाथार्थ्यस्य ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वं' इति।**

**अत्राद्ये पक्षे सुधास्थेन ज्ञानग्राहकशब्देन ग्राह्यप्रामाण्या-श्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानं ग्राह्यशब्देन तद्विषयत्वं मात्रपदेन कात्स्न्यर्थपरेण तन्नियमः अवधारणपरेण प्रतिबद्ध-व्यवच्छेदश्च विवक्षितः ।**

**द्वितीयपक्षे ग्राह्यशब्देनोक्तसाक्षिज्ञानविषयत्वयोग्यता अवधारणपरेण मात्रपदेन ज्ञानत्वग्रहणशक्तिवत् प्रमात्व-ग्रहणशक्तेरपि सहजत्वं विवक्षितम् ।**

**तृतीयपक्षे ज्ञानग्राहकशब्देन साक्षितदितरसाधारणं ज्ञानं मात्रशब्देनावधारणपरेणोभयसिद्धप्रामाण्यविषयकज्ञानव्यव-च्छेदः, कात्स्न्यार्थेनाप्रतिबद्धसर्वानुव्यवसायसंग्रहश्च विव-क्षित इति ज्ञेयम् ।।३ ।।**

**स्वमते ज्ञप्तौ स्वतस्त्वनिरुक्तिः ।। १ ।।**

## न्यायदीपः

।। **अत्रेति**।। उक्तस्वतस्त्वे निरुक्तित्रयमध्ये इत्यर्थः ।। **स्वमतेति** ।। तार्किकमतसाधारण्येपि

मीमांसकत्रितयसाधारणं नेत्यर्थः। मीमांसकादीत्यादिपदेन मुरारिमिश्रः सिद्धान्ती मायावादिप्रभृतिर्वा ग्राह्यः। उक्तपक्षत्रयं सुधावाक्यारूढं करोति ॥**एतदिति**॥ **उक्तमिति**॥

"प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि"

इति जिज्ञासानयानुव्याख्यानव्याख्यावसर उक्तमित्यर्थः। त**द्व्य**नक्ति ॥**अत्रेत्यादिना**॥ मात्रपदस्य **द्व्य**र्थत्वमुपेत्याह ॥**कास्न्र्येत्यादि**॥ यावान्ति ज्ञानग्राहकाणि तावद्भिर्ग्राह्यत्वोक्तौ ज्ञानग्राहकेण गृह्यत एवेति नियमलाभादिति भावः॥ **प्रतिबद्धेति**॥ ज्ञानग्राहकेण गृह्यत इत्युक्ते न तु विरोधिसामग्रीसमवहितेनेत्यर्थलाभादिति भावः।

अर्हार्थण्यत्प्रत्ययान्तत्वमुपेत्याह ॥**ग्राह्यशब्देनेति**॥ **प्रमात्वेत्यादि**॥ ज्ञानग्राह्यकमात्रेण इत्यस्य ज्ञानग्राहकेणैव न त्वाधिकेनेत्युक्तौ प्रमात्वग्रहणशक्तेरपि सहजत्वलाभादिति भावः। यद्यपि शक्तेरेकत्वमेव लभ्यते। तथापि प्रतिबन्धस्थले साक्षिणः प्रामाण्यग्रहणशक्तेः प्रतिबन्धेऽपि न ज्ञानत्वग्रहणशक्तेरिति शक्तिद्वित्वमुपेत्य सहजत्वं विवक्षितमित्युक्तम् ॥**तदितरेति**॥ साक्षीतरस्व-प्रकाशानुमित्यनुव्यवसायरूपमित्यर्थः। नैयत्यलाभप्रकारमाह ॥**कात्स्न्र्यार्थेनेति**॥ **अप्रतिबद्धेति**॥ विरोधिसामग्र्यसमवहितज्ञानगोचरसर्वज्ञानग्रहश्च विवक्षित इत्यर्थः ॥ ३॥

स्वमते ज्ञप्तौ स्वतस्त्वनिरुक्तिः ॥ १ ॥

## परोक्तस्वतस्त्वनिरुक्तिभङ्गः

### तर्कताण्डवम्

**यत्तु मणावुक्तं। तदप्रमाण्याग्राहकयावज्ज्ञानग्राहक-सामग्रीग्राह्यत्वं स्वतस्त्वं तदभावश्च परतस्त्वं इति तन्न। तदभाववति तत्प्रकारकत्वरूपाप्रामाण्याग्राहकस्यापि तद्वति तत्प्रकारकत्वरूपप्रामाण्यात्यन्ताभावविषयकस्य ज्ञानज्ञानस्य प्रामाण्यग्राहकत्वेन बाधात्।**

**अप्रामाण्यपदेन प्रामाण्यविरोधिविवक्षायामपि ज्ञानं**

**गुण इत्यादिवाक्यजन्यस्य च ज्ञानज्ञानस्य प्रामाण्याविषय-कत्वाद् बाधतादवस्थ्यात्। ज्ञानग्राहकपदेन स्वविषयघटित-त्वेन ज्ञानग्राहकत्वविवक्षायामपि घटज्ञानमित्यादिशब्द-जन्यस्य ज्ञानज्ञानस्य प्रामाण्याविषयकत्वेन बाध एव।**

## न्यायदीपः

मीमांसकत्रितयसाधारणीं परोक्तस्वतस्त्वनिरुक्तिमनूद्य निराह ॥**यत्त्विति**॥ मणिग्रन्थे "ज्ञानप्रामाण्यमिति पूर्ववाक्यनिर्दिष्टं ज्ञानं तदिति परामृश्यते। तत्र ग्राह्यप्रामाण्याश्रयेऽयं घट इत्यादिज्ञाने अप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री गुरुमते घटमहं जानामीत्येवमाकार-स्वप्रकाशव्यवसायजनिका चक्षुर्घटसंयोगादिरूपा मिश्रमते तदनुव्यवसायजनकमनःसंयोगादिरूपा भट्टमते घटो ज्ञानविषयः ज्ञातताधारत्वादित्याद्यनुमितिजनकव्याप्तिज्ञानादिरूपा। तावत्या ग्राह्यत्वं स्वतस्त्वमित्यर्थः। अत्र निरुक्तौ तत्रेत्युक्त्या यत्र शुक्तिरजतादिज्ञाने विसंवादादिलिङ्गेन अप्रामाण्या-नुमित्यनन्तरमिदमप्रमात्वेन जानामीत्यनुव्यवासयः तत्राप्रामाण्यवत्यप्रामाण्यप्रकारकत्वरूपा-प्रामाण्यघटितानुमितिनिष्ठप्रामाण्यस्य प्रथमज्ञाननिष्ठाप्रामाण्यग्राहिणैवानुव्यवसायेन ग्रहणाद्बाध इति शङ्का अप्रामाण्याग्राहकेत्युक्त्या इदं ज्ञानमप्रमेत्यादावप्रामाण्याग्राहकसामग्र्या तज्ज्ञाननिष्ठस्य प्रामाण्यस्याग्रहणाद् बाध इति शङ्का यावदित्युक्त्या न्यायमते ज्ञानग्राहकानुमितिसामग्र्या क्वचिदनुव्यवसायेन च प्रामाण्यग्रहात्सिद्धसाधनमिति शङ्का निरस्ता। विधिकोटौ बाधवारकाणां तदभावकोटौ सिद्धसाधनतावारकत्वं तद्वारकस्य च बाधवारकत्वं ज्ञेयम्। गुरुमते सर्वज्ञानानां प्रमात्वेपि तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्येच्छायां प्रसिद्धस्येदं ज्ञानमप्रमेत्यादौ स्मरणसम्भवेनागृहीतासंसर्गरूपाप्रामाण्यग्रहसम्भवात् तन्मतेप्यप्रामाण्याग्राहकपदवैयर्थ्यं नेति।

अत्र यदुक्तं प्रामाण्यघटकाप्रामाण्यग्राहिणा ज्ञानेन प्रामाण्यग्रहणाद्बाधवारणाय तत्र ग्राह्य-प्रामाण्याश्रयज्ञाने इत्यर्थकं तत्पदमिति तन्न। इमौ वह्नी इति वह्निद्वयगोचरैकज्ञानविषयकानु-व्यवसायादिरूपज्ञानेन दोषवशादन्यतरांशाप्रामाण्यग्राहिणाप्यन्यतरांशे प्रामाण्यग्रहणेन बाधात्।

यत्तु तदित्यस्य तत्र तदंशे ग्राह्यप्रामाण्याश्रयज्ञानांशे अप्रामाण्याग्राहकेत्यर्थत्वान्न दोष इति तन्न। तथापि तदंशे भावरूपाप्रमाण्याग्राहिणापि नेदं ज्ञानं प्रमाणमिति तदंशे प्रामाण्याभावावगाहिना प्रामाण्या-ग्राहिना प्रामाण्याग्रहणेन बाधादिति मूलोक्तदोषग्रासात्। यदपि तत्पदं ग्राह्यपरं सत्प्रामाण्य-

पदेनान्वीयमानं ग्राह्यप्रामाण्यविरोधीत्यर्थलाभार्थमतो न दोष इति तदपि न। तथात्वेऽतत्प्रामाण्येति निर्देशापातेन यथोक्तनिर्देशे तत्पदस्य प्रामाण्यपदेनासामर्थ्यात्। गुरुमते इदं ज्ञानमप्रमेत्यादावप्रमेति स्मृतेरप्रामाण्यग्राहकत्वेपि इदं ज्ञानमितिग्रहणात्मकस्याप्रामाण्यस्मृतिप्रतिबन्धेन प्रामाण्याग्रहणेन बाधापत्त्योक्तस्वतस्त्वनिरुक्तेर्गुरुमतसाधारण्यायोगाच्च।

नचोत्पत्तिप्रामाण्यग्रन्थे मणिकृतैव ''प्राभाकरास्तु'' इत्यादिना गुरुमते संशयानुपपत्त्युपपादनप्रस्तावे इदं ज्ञानं प्रमा न वेत्यादावपि प्रामाण्यग्रहोस्तीत्युपेत्य संशयस्यान्यविषयत्वोपपादनात् तादृशस्थलेऽपि प्रामाण्यग्रहसद्भावान्न बाध इति शङ्क्यम्। तथात्वे तन्मते तदप्रामाण्याग्राहकपदवैयर्थ्यापत्तेः। तादृशस्थले प्रामाण्यग्रहमुपेत्याग्राहकपदेन ग्राहकसामग्र्यसमवधानविवक्षायां च मिश्रादिमतेऽप्रामाण्यग्रहस्थले तत्सामग्र्यभावेन तदसमवहितेनापि ज्ञानग्राहकेण तत्र प्रामाण्याग्रहाद्बाध एवेत्यादिदूषणं स्फुटत्वादुपेक्ष्योक्तन्निरुक्तौ यावज्ज्ञानविषयकज्ञानविषयत्वमित्येव सामञ्जस्ये ग्राहकसामग्रीत्युक्तिवैयर्थ्याद्गौरवाच्चेत्युपेत्य ग्राहकसामग्रीपदत्यागेन ज्ञानपदेन वानुवदन्यथाश्रुताप्रामाण्यपदार्थे तावद्दोषमाह ॥**तदभाववतीति**॥ **अप्रामाण्याग्राहकस्यापीति**॥ उक्तविधभावरूपाप्रामाण्याविषयकस्यापीत्यर्थः। प्रामाण्यात्यन्ताभावेत्युपलक्षणम्। अप्रामाण्यव्याप्यप्रामाण्यात्यन्ताभावव्याप्यविषयकस्येत्यपि ज्ञेयम्। तेन नञोऽभावार्थविवक्षापि प्रत्युक्ता ध्येया।

ननु नञो विरोधार्थत्वे प्रामाण्याभावतद्व्याप्याप्रामाण्यतद्व्याप्यानां चतुर्णामप्यप्रामाण्यपदेन प्रामाण्यविरोधिवाचिना ग्रहणसम्भवान्नोक्तदोषः। विरोधित्वस्य प्रामाण्यनिश्चयप्रतिबन्धकज्ञानविषयत्वरूपत्वादित्याशयेन पक्षधराद्युक्तविवक्षामनूद्य निराह ॥**अप्रामाण्येति**॥ अपिपदेनैतत् सूचयति- यद्यपि ग्राह्यप्रामाण्यविरोधिलाभो नैतावता भवति। तत्पदमिलितेनाप्यसामर्थ्यादलाभ एव। विरोधितामात्रं त्वप्रयोजकम्। तथाप्यभ्युपगमोयमिति ॥**इत्यादिवाक्येति**॥ ज्ञानं समवेतं ज्ञानममूर्तमित्यादिवाक्यजन्यस्य गुणत्वादिप्रकारकज्ञानविशेष्यकस्येत्यर्थः। ज्ञानज्ञानस्येत्यन्वयः। साक्षाज्ज्ञानत्वव्यापकधर्माप्रकारकेत्यपि ग्राहकविशेषणमस्त्वित्यत उक्तम् ॥**ज्ञानं प्रमेयमितीति**॥ ज्ञाने प्रमेयत्वं ज्ञातं सत् प्रत्यासत्तीभूय स्वविशेषणतासम्बन्धेन स्वाश्रयभूतानि सर्वज्ञानरूपवस्तून्युपस्थापयतीति प्रमेयत्वप्रकारकज्ञानविशेष्यकज्ञानज्ञानस्य प्रमेयत्वाश्रयज्ञाने प्रामाण्याविषयकत्वादित्यर्थः। उक्तदोषपरिहाराय शङ्कते ॥**ज्ञानग्राहकपदेनेति**॥ **प्रामाण्याविषयकत्वेनेति**॥ अपदार्थत्वादवाक्यार्थत्वाच्च घटत्ववद्विशेष्यकत्वादेस्तेन सर्वथा भानाभावादिति भावः। यत्तु शब्दानुपस्थितमपि प्रामाण्यमन्वयितावच्छेदकतया घटज्ञानमिति ज्ञाने भातीति पक्षधरोत्प्रेक्षितं मतं तत्तेनैव दूषितमित्युपेत्योक्तम् ॥**बाध एवेति**॥ विवृतं **चैतद्गुरुपादैः**। ननु शब्दान्यत्वे सति

स्वविषयघटितत्वेन ज्ञानग्राहकत्वविवक्षास्त्विति चेन्न। तथाप्ययं घटज्ञानवान् तद्व्यवहारवत्वात् इत्याद्यनुमानजन्यज्ञानज्ञानस्यापि प्रामाण्याविषयकत्वेन बाधात्। ज्ञानं प्रमेति शब्दजन्यज्ञानस्य प्रामाण्याविषयकत्वापाताच्चेति भावः।

## तर्कताण्डवम्

**ननु ज्ञानग्राहकपदेन ग्राह्यप्रामाण्याश्रयज्ञानप्रकार-प्रकारकतया तत्प्रकारवद्विशेष्यतया च तद्विषयत्वं विवक्षितम्। अत्र च विशेषणद्वयेन तव घटविशेष्यकं ज्ञानमिति तव घटत्वप्रकारकं ज्ञानमिति च शब्दाभ्यां जन्ययोः घटज्ञान-विषयकज्ञानयोः प्रामाण्याविषयकत्वाद् बाध इति शङ्काद्वयं क्रमेण निरस्तमिति चेदुच्यते।**

**त्वदुक्तं यद्ग्राह्यप्रामाण्याश्रयज्ञानप्रकारप्रकारकतया तत्प्रकारवद्विशेष्यतया च तद्विषयत्वं तत्प्रामाण्यविषय-कत्वमेव। स्वप्रकारवद्विशेष्यकत्वस्यैव प्रमाण्यरूपत्वात्। तथा च यावती प्रामाण्यविषयिका सामग्री तद्ग्राह्यत्वं स्वतस्त्वमित्युक्तं स्यात्। तथा चैतादृशस्वतस्त्वस्य परतस्त्व-पक्षेपि सत्वात्सिद्धसाधनम्। एतदभावरूपपरतस्त्वसाधने अपसिद्धान्तश्च। न हि परतस्त्वपक्षे अनुव्यवसायाविषयोपि प्रामाण्यं प्रामाण्यानुमितेरप्यविषयः। अस्मिन्पक्षेऽप्रामाण्या-ग्राहकत्वविशेषणवैयर्थ्यं च।**

## न्यायदीपः

नन्वस्तु तर्हि स्वाश्रयप्रकारप्रकारकतया स्वाश्रयविशेष्यविशेष्यकतया स्वाश्रयग्राहकग्राह्यत्व-मिति यज्ञपतिनोक्तमतम्। तत्र यद्यपि यथाश्रुते घटत्वप्रकारकं किञ्चिद्विशेष्यकं इति ज्ञानेनापि प्रामाण्याग्रहात्स्वाश्रयप्रकारप्रकारकतया स्वाश्रयप्रकारवद्विशेष्यकतयेति वाच्यम्। तत्रापि प्रकारवदित्यत्र प्रकारस्योपलक्षणत्वे प्रागुक्तदोषापत्त्या तत्प्रकारविशिष्टविशेष्यविशेष्यकतयेत्युच्यते।

अतो न कोपि दोष इति भावेन शङ्कते **॥ नन्विति ॥ तत्प्रकारवदिति ॥** तत्प्रकारविशिष्टविशेष्यकतयेत्यर्थः **॥ तद्विषयत्वम् ॥** व्यवसायविषयत्वम्।

अस्मिन् पक्ष इत्यादि वक्ष्यमाणदोषदार्ढ्याय दलद्वयकृत्यं व्यनक्ति **॥ अत्रचेति ॥** विवक्षायामित्यर्थः। किमेतद्वादिमते तद्वत्वरूपं वैशिष्ट्यमनुव्यवसायविषय एव नेति मतिरुत स्वातन्त्र्येण? आद्ये दोषमाह **॥ त्वदित्यादिना ॥ स्वप्रकारवदिति ॥** स्वप्रकारविशिष्टेत्यर्थः। सिद्धसाधनापसिद्धान्तौ व्यनक्ति **॥ नहीति ॥ प्रामाण्यमिति ॥** तद्वत्त्वादिरूपमित्यर्थः। वैशिष्ट्यमनुव्यवसायविषय एव नेति पक्षे तादृशानुव्यवसायविषयत्वमादाय सिद्धसाधनादिदोषाभावेपि इदं ज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वात् इत्यनुमितिसामग्रीरूपा यावती त्वदुक्तलक्षणा ज्ञानग्राहिका सामग्री तावत्यापि प्रामाण्यग्रहात् सिद्धसाधनतापसिद्धान्तावित्यर्थः। अनुमितिविषयत्वोक्तौ तत्सामग्रीविषयत्वं सिद्धमेवेत्युपेत्य अनुमितेः इत्येवोक्तम्। न त्वनुमितिसामग्र्या अपीति। यद्वा तेन सामग्रीत्युक्तावपि ग्राहकज्ञानेत्येव युक्तम्। न तु सामग्रीत्युपेत्यैवमुक्तम्। द्वितीये स्वातन्त्र्येण तद्वद्विशेष्यकत्वग्राहकत्वमिति मतम्, उत ग्राहकत्वमात्रमिति? आद्येप्येतदेवोत्तरम् **॥ त्वदुक्तमित्यादि ॥** प्रामाण्यविषयिका स्वातन्त्र्येण तद्वद्विशेष्यकत्वादिविषयिकेत्यर्थः **॥ अनुव्यवसायाविषयोपि ॥** स्वातन्त्र्येणानुव्यवसायाविषयोपीत्यर्थः **॥ प्रमाण्यानुमितेः** स्वतान्त्र्येण तद्वत्वविशिष्टधर्मिविशेष्यकत्वादिविषयिकानुमितेरपीत्यर्थः। द्वितीयेपि ग्राह्यमित्यत्र ग्राह्यत्वमात्रमभिमतम् उत स्वातन्त्र्येण? आद्ये तादृशानुव्यवसायविषयत्वमादायापि सिद्धसाधनतापसिद्धान्तौ स्पष्टौ। द्वितीये तूक्तरूपानुव्यवसायं प्रति प्रामाण्यस्य न्यायमते स्वातन्त्र्येणाविषयतया यावतीति ज्ञानग्राहकसामग्रीविशेषणेनैव सिद्धसाधनतापत्तेर्दोषान्तरमाह **॥ अस्मिन् पक्ष इति ॥** ग्राह्यत्वमित्यत्रैव स्वातन्त्र्येण ग्राह्यत्वमिति पक्ष इत्यर्थः। तथा अस्मिन्पक्ष इत्यस्य स्वातन्त्र्येण तद्वद्विशेष्यकत्वादिग्राहिकेति पक्ष इत्यप्यर्थमुपेत्य प्राचीनपक्षेप्ययं दोषो बोध्यः। तद्वद्विशेष्यकत्वग्रहे तदभाववद्विशेष्यकत्वरूपाप्रामाण्यग्रहासम्भवेनोक्तविवक्षया तद्वारणादिति भावः॥

ननु तदभाववति तत्प्रकारकत्वरूपाप्रमाण्यग्राहिकापि तद्वद्विशेष्यकत्वग्राहिकैव। तत्प्रकारकत्वविवित्तिवेद्यत्वात् तद्वद्विशेष्यकत्वस्य। तद्वद्विशेष्यकत्वाभाने तत्प्रकारकत्वग्रहणायोगादिति चेत् तर्हि अप्रामाण्याग्राहकत्वरूपविशेषणदानेऽपि तव घटत्वप्रकारकं ज्ञानमिति शब्दजन्यज्ञानेनाप्रामाण्याग्राहकेण त्वदुक्तदिशा प्रकारवित्तिवेद्यतया तद्वद्विशेष्यकत्वग्राहिणापि प्रमाण्याग्रहणाद्बाधापत्तेः। यदि चात्र तद्वत्त्वेन विशेष्यस्याभानान्न बाधः। तर्हि अप्रामाण्यग्राहक-

सामग्र्यामपि तत्तुल्यम्। अत एव पूर्वं दलद्वयकृत्यं व्यक्तीकृतम्॥

यदत्रोक्तं नरहरिणा "अप्रामाण्याग्राहकेत्यत्र नञ्व्यत्यासेनाप्रामाण्याभावग्राहकेत्यर्थे प्रामाण्यग्राहकेति पर्यवसानात् प्रामाण्यग्राहकयावज्ज्ञानग्राहकग्राह्यत्वं विधिकोट्यर्थ" इति तदपि "यावती प्रामाण्यविषयिका सामग्री तद्ग्राह्यत्वं स्वतस्त्वमित्युक्तं स्यात्" इति ग्रन्थकृदुक्त्यैव सिद्धसाधनादिदोषेण निरस्तं भवति। न च ग्राह्यपदेन स्वातन्त्र्येण ग्राह्यमित्यभिमतत्वाद्यावदित्युक्त्यैव सिद्धसाधनत्वदोषाभावः, तथात्वेन अनुव्यवसायविषयत्वस्य न्यायमतेऽभावदिति वाच्यम्। नञो प्रामाण्याभावार्थकत्वे पूर्वपदेन समासायोगात्, नञ्द्वयवैयर्थ्यात्, तत्पदवैयर्थ्याच्चेतिध्ययेम्। तदेतदाह **॥ अप्रामाण्याग्राहकत्वविशेषणवैयर्थ्यमिति ॥**

## तर्कताण्डवम्

**ननु यया ज्ञानग्राहकसामग्र्या ज्ञानग्रहार्थं यावदपेक्षितं तावदेव विषयग्रहार्थमप्यपेक्ष्यते सैव सविषयज्ञानग्राहक-सामग्री विवक्षिता। अनुव्यवसायसामग्री चैवंविधा। तया व्यवसायग्रहे अपेक्षितस्य व्यवसायसम्प्रयोगस्यैव तद्विषय-घटग्रहेऽप्यपेक्षिततत्वात्। घटज्ञानमिति शब्दस्तु ज्ञानग्रहे ज्ञानपदगतां शक्तिमपेक्षते। घटग्रहे तु घटपदगतां शक्तिमिति चेन्न। तथाप्येकयैव शक्त्या प्रकरणप्राप्तघटज्ञानपरामर्शकेन तत्पदेन जनितज्ञानस्य प्रामाण्याविषयकत्वेन बाधताद-वस्थ्यात्।**

**नापि तज्ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वं स्वतस्त्वं। अस्मिंश्च पक्षे संभवमात्रं साध्यं न तु नियमः।**

## न्यायदीपः

पक्षधरोक्तमाशङ्क्य निराह **॥ नन्विति ॥ तावदेवेति ॥** ज्ञानग्राहकत्वप्रयुक्तमेव यस्यां विषयग्राहकत्वं सैवेत्यर्थः। अस्मिन्मते च भ्रम इति पदजन्यज्ञानेन प्रामाण्याग्रहाद् बाधवारणाय अप्रमाण्याग्राहकत्वविशेषणमर्थवत्। विषयोपरक्तज्ञानग्राहकेण प्रमेति पदजन्यज्ञानेनोक्तरूपेण

प्रामाण्यग्रहणात्सिद्धसाधनवारणाय **यावदिति** विशेषणम्। बाधः सिद्धसाधनता च नेति क्रमेण व्यनक्ति ॥ **अनुव्यवसायसामग्रीति** ॥ षष्ठीतत्पुरुषः। आत्ममनःसंयागादिरित्यर्थः। स्वप्रकाशव्यवसायादिसामग्र्यपि ग्राह्या ॥ **व्यवसायसम्प्रयोगस्य** ॥ व्यवसायस्य मनसा सह संयुक्तसमवायरूपसम्बन्धस्यैवेत्यर्थः। बाह्यार्थरूपविषयग्रहे व्यवसायरूपप्रत्यासत्तेरपेक्षाया इवानुव्यवसायजननेपि विषयता व्यवसायापेक्षयास्तुल्यत्त्वादिति भावः। तत्पदेनेत्युपलक्षणम् तत्पदादिनेत्यर्थः।

यदत्र मणिसारादावुक्तम् "असर्वनामत्वेन ग्राहकविशेषणान्न दोष" इति तन्न। तथापि लक्षणया घटज्ञानोपस्थापकेन लाक्षणिकज्ञानपदेन प्रामाण्याग्रहाद्बाधात्। अलाक्षणिकत्वेनापि विशेषणे तु घटज्ञाने ज्ञानपदं शक्तमिति भ्रमे सति तादृशेन ज्ञानपदेनापि प्रामाण्याग्रहाद्बाध एव। भ्रमाघटितत्वेनापि विशेषणे तु अप्रामाण्याग्राहकपदवैयर्थ्यम्। प्रमायामप्रामाण्यानुमानस्य व्याप्तिपक्षधर्मतान्यतरभ्रममूलत्वादेव तत्र बाधवारणात्।

यत्तु इदं ज्ञानमप्रमाणमिति मनसाऽप्रामाण्यारोपस्थलेऽन्यत्र गृहीताप्रामाण्यस्मृतिसम्भवेन तया भ्रमाघटितयापि साम्ग्र्या प्रामाण्याग्रहाद्बाधवारणायाप्रामाण्याग्राहकेति विशेषेणं सार्थकमिति तन्न। तत्र ज्ञानग्राहकत्वप्रयुक्तविषयग्राहकत्वरूपसविषयज्ञानग्राहकत्वस्याभावादेव बाधवारणात्। विस्तरस्तु **गुरुटीकायाम्।**

साधारणं निरुक्त्यन्तरमप्यनूद्य निराह ॥ **नापीति** ॥ तज्ज्ञानं ग्राह्यप्रामाण्याश्रयज्ञानम्। तद्विषयकं ज्ञानं गुरुमते तदेव। भट्टमते ज्ञाततालिङ्गकतदनुमितिः। मिश्रमते तदनुव्यवसायः। तज्जन्यं यज्ज्ञानं तदेव। तद्विषत्वमित्यर्थः। अत्र ज्ञानाजन्येत्युक्त्या अनुमितिविषयत्वेन सिद्धसाधनतेति शङ्का, ज्ञानविषयकेत्युक्त्या गुरुमतेऽनुमित्यादिप्रामाण्यांशे भट्टमते मिश्रमते च सर्वत्र प्रामाण्यानुमित्य-नुव्यवसाययोः व्याप्तिज्ञानव्यवसायाभ्यां जन्यत्वेन बाध इति शङ्का, तदित्युक्त्या पुनरपि गुरुमते लिङ्गज्ञानस्य स्वप्रकाशत्वेन ज्ञानविषयकज्ञानत्वात्तज्जन्यानुमितिप्रामाण्यांशे बाध इति, भट्टमते ज्ञाततालिङ्गकानुमितेर्ज्ञानविषयव्याप्तिज्ञानजन्यत्वाद्बाध इति मिश्रमतेप्यनुव्यवसायस्य व्यवसाय-विषयकस्य तज्जन्यतया तन्निष्ठप्रामाण्यांशे बाध इति शङ्का निरस्ता। भट्टमते सामान्यप्रत्यासत्तेरभावेन व्याप्तिज्ञानस्य ग्राह्यप्रामाण्याश्रयज्ञानाविषयत्वात्। मतान्तरे तु व्यक्तम्।

अत्राद्यज्ञानपदं तत्पदस्य तद्ग्रन्थे पूर्वनिर्दिष्टप्रामाण्यपरामर्शितया सिद्धसाधनत्ववारणाय। द्वितीयं तु व्यापारानुबन्धितया तज्ज्ञानविषयकैरात्मादिभिः प्रामाण्यज्ञानजननादसिद्धिवारणाय

प्रतिपत्त्यनुबन्धितया तद्विषयकत्वलाभार्थम्। तृतीयमपि व्यापारानुबन्धितयात्मादिभिरेव सिद्धसाधनतावारणाय प्रतिपत्त्यनुबन्धितया विषयत्वलाभायेत्याहुः।

## तर्कताण्डवम्

**स्वतस्त्वपक्षेऽपि प्रामाण्यस्य तज्ज्ञानविषयज्ञानजन्यानुमित्यापि ग्राह्यत्वेन तदजन्यज्ञानस्यैव विषय इति नियमस्य तज्ज्ञानविषयकज्ञानाजन्येन घटज्ञानेनाप्यग्राह्यत्वेन गृह्यत एवेति नियमस्य चासम्भव इति वाच्यम्। स्वतस्त्वपक्षे व्यवसायप्रामाण्यग्राहकस्यानुव्यवसायस्य व्यवसायविषयकेश्वरज्ञानजन्यतया तदजन्येश्वरज्ञानविषयत्वेन सिद्धसाधनाच्च।**

**नापि तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानविषयत्वं वा तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्यसमानाधिकरणज्ञानविषयत्वं वा स्वतस्त्वम्। परतस्त्वपक्षेऽपि प्रामाण्यस्यैवं विधं सामान्यप्रत्त्यासत्तिजन्यं प्रमेयमिति यज्ज्ञानं तद्विषयत्वेन सिद्धसाधनात्। विषयपदेन प्रकारत्वाविवक्षायामपि स्वतस्त्वपक्षेपि प्रामाण्यस्य सर्वं ज्ञानं गुण इति शब्दजन्यव्यवसायविषयकानुव्यवसायस्य सर्वज्ञानान्तर्भूतस्वविषयकव्यवसायजन्यत्वेन तदजन्यत्वाभावेनांशे बाधात्। एतदभावरूपपरतस्त्वसाधनेंऽशे सिद्धसाधनाच्च। नचैवंविधव्यवसायप्रामाण्यस्यापक्षत्वान्न बाध इति वाच्यम्। सामान्ये विप्रतिपत्तौ विशेषे साध्यसाधनेऽर्थान्तरात्।**

## न्यायदीपः

ग्रन्थकर्तुः कुतो नियमो नाभिमत इत्यत आह ॥ **स्वतस्त्वेति** ॥ **तज्ज्ञानविषयकज्ञानजन्येति** ॥ पक्षज्ञानजन्यत्वादनुमितेरिति भावः। **ग्राह्यत्वेन**॥ विषयीकार्यत्वेनेत्यर्थः।

**अग्राह्यत्वेन॥** अविषयीकार्यत्वेन। **गृह्यत एव॥** विषयीक्रियत एवेत्यर्थः। किमिदं स्वतस्त्ववादि-मात्रसाधारणम् उत निरीश्वरमीमांसकमात्रसाधारणम् निर्वचनम्?

आद्य आह ॥ **स्वतस्त्वपक्ष इति** ॥ सिद्धान्ते साक्षिशब्दितानुव्यवसायज्ञानस्य नित्यत्वेऽपि प्रामाण्यविषयकत्वरूपविशिष्टवेषेण जन्यत्वादिति भावः।

अन्त्य आह ॥ **परतस्त्वपक्ष इति** ॥ एवं रूपे स्वतस्त्वे त्वां प्रत्युच्यमाने ग्राह्यप्रामाण्याश्रय-विषयं यदीश्वरज्ञानं तदजन्यं तदेव। तद्विषयत्वेन त्वया सिद्धसाधनताया वक्तुं शक्यत्वादिति भावः। अयं च दोषः प्राचीनपक्षेपि समः। यत्त्वीश्वरनिरासाभिप्रायेणैवं साध्यस्य मीमांस केनोच्यमानत्वान्न सिद्धसाधनता दोष इति। तन्न। अर्थान्तरानिवारणादिति रुचिदत्तेनैव दूषितत्वात्।

यज्ञपतिनोक्तविवक्षामनूद्य निराह ॥ **नापीति** ॥ सर्वस्यापि जन्यज्ञानस्य तज्ज्ञानविषयकेश्वर-ज्ञानजन्यत्वेनाप्रसिद्धिवारणायाद्यं जन्यपदम्। द्वितीयं त्वीश्वरज्ञानमादाय सिद्धासाधनतानिरासार्थम्। एवमग्रे समानाधिकरणपदद्वयकृत्यं ध्येयम्। युगपदेव विवक्षाद्वयेपि दोषमाह ॥ **परतस्त्वेति** ॥ एवंविधम् - तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यरूपम्। तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्य-समानाधिकरणरूपं चेत्यर्थः।

॥ **प्रमेयमिति** ॥ प्रमेयत्वप्रकारकं प्रमेयविशेष्यकं यज्ज्ञानं तद्ग्राह्यप्रमाण्याश्रयविषयकं घटादिज्ञानरूपजन्यसमानाधिकरणज्ञानाजन्यं जन्यं समानाधिकरणं प्रमेयत्वप्रकारेण प्रामाण्यविषयकं चेति तद्विषयत्वेन सिद्धसाधनमित्यर्थः। एतच्चोपलक्षणम्-निरीश्वरमते व्यर्थविशेषणत्वं च बोध्यम्। एतेन समानाधिकरणेति विशेषणीयमिति शिरोमणिपक्षोपि प्रत्युक्तः।

ननु प्रमेयमिति ज्ञाने विशेष्यतया प्रामाण्यस्य विषयत्वेपि न प्रकारतया। तथात्वेन विषयत्वं च निरुक्तौ विवक्षितमित्यत आह ॥ **विषयेति** ॥ प्रामाण्यस्य इत्यस्यानुव्यवसायेनेत्यत्रान्वयः। प्रामाण्यगोचरस्येत्यर्थः। गुणत्वप्रकारकसर्वज्ञानविशेष्यकशाब्दज्ञाननिष्ठप्रामाण्यग्राहकोनुव्यवसायो व्यवसायजन्यः। स च व्यवसायः सर्वज्ञानविषयको ज्ञानत्वेन स्वात्मानमपि विषयीकरोतीति तत्प्रामाण्यस्य तज्ज्ञानविषयकज्ञानजन्यज्ञानप्रकारत्वमेवास्ति। तदजन्यज्ञानप्रकारत्वं नेति सर्वं ज्ञानं गुण इति ज्ञाननिष्ठ प्रामाण्यांशे बाध इत्यर्थः। सर्वज्ञानान्तर्भूतं च तत्स्वं चेति विग्रहः। स्वपदेन व्यवसायः।

केनचिदुक्तसमाधिमाशङ्क्य निराह ॥ **नचैवं विधेति** ॥ **अर्थान्तरादिति** ॥ सामान्यधर्मा-वच्छिन्नस्वतस्त्वपरतस्त्वसंशयनिवर्तनानुपयोगादर्थान्तरादिति भावः।

## तर्कताण्डवम्

एतेन तज्ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वमेव स्वतस्त्वम्। नतु जन्यपदद्वयं वा समानाधिकरणपदद्वयं वा प्रक्षेप्यम्। न चैवं पूर्वोक्तेश्वरज्ञानमादाय बाधसिद्धसाधनते स्यातामिति वाच्यं। तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्व-रूपजन्यत्वस्य अभावरूपमजन्यत्वं हि द्वेधा। तद्व्यतिरेक-प्रयुक्तव्यतिरेकाप्रतियोगित्वेन वा तद्व्यतिरेकाप्रयुक्त-व्यतिरेकप्रतियोगित्वेन वेति।

तत्राद्यस्याजन्यत्वस्येश्वरज्ञाने सत्वेऽपि मया विवक्षितस्य द्वितीयस्याभावात्। न हीश्वरज्ञानं प्रागभावरूपव्यतिरेक-प्रतियोगीति निरस्तम्। तथापि पूर्वोक्तस्य प्रमेयमिति ज्ञानविषयत्वेन सिद्धसाधनस्य सर्वं ज्ञानं गुण इत्यादिनोक्तस्य बाधस्य चापरिहारादिति दिक्।

### परोक्तस्वतस्त्वनिरुक्तिभङ्गः ॥ २ ॥

## न्यायदीपः

पक्षधरोक्तमप्यनूद्य निराह ॥ **एतेनेति** ॥ **तद्व्यतिरेकेति** ॥ अत्रोभयत्र व्यतिरेकशब्दः प्रागभावपरः। अन्यथा आद्यस्य संसर्गाभावमात्रपरत्वे तज्ज्ञानविषयकव्याप्तिज्ञानात्यन्ताभाव-रूपव्यतिरेकाप्रयुक्तप्रागभावप्रतियोगिनीं इदं ज्ञानं प्रमेत्यनुमितिमादायैव सिद्धसाधनतापत्तेः। अन्त्यस्यापि तत्परत्वे पूर्वोक्तानुमितिमादायैव सिद्धसाधनतापत्तेः। ध्वंसरूपत**द्व्य**तिरेकस्य तज्ज्ञानविषयकज्ञानव्यतिरेकेण केनाप्यजन्यत्वादिति ध्येयम्। यद्यपि नैतद्रूपं जन्यत्वम्। आकाशादिजन्यशब्दादावभावात्। तथापि। व्यतिरेकिपदार्थेषु भवतीदं जन्यत्वमिति भावः ॥ **द्वेधेति** ॥ उत्तरदलेन नञोऽन्वयेन पूर्वभागेन नञोऽन्वयेन वा द्वेधेत्यर्थः ॥ **प्रयुक्तेति** ॥ तदन्वयाद्यनु-विधाय्युत्तरकालसम्बन्धित्वं प्रयुक्तत्वम्। तद्भिन्नत्वमप्रयुक्तत्वमित्यर्थः ॥ **सत्वेपीति** ॥ तस्य व्यतिरेकमात्राप्रतियोगित्वादिति भावः ॥ **मयेति** ॥ स्वतस्त्वनिर्वचनकर्त्रेत्यर्थः। अभावादित्येतद् व्यनक्ति ॥ **नहीति** ॥ तथा च न प्रागुक्तदोषाविति भावः। एतेनेत्युक्तं व्यनक्ति ॥ **तथापीति** ॥ एवं

विवक्षायामपीत्यर्थः। विषयपदेन प्रकारत्वविवक्षामुपेत्याह ॥**सर्वं ज्ञानमिति**॥ **बाधस्येति**॥ एतदभावरूपपरतस्त्वसाधने सिद्धसाधनाच्च। तस्यापक्षत्वे चार्थान्तरता। इदं ज्ञानं प्रमेति सामान्य-प्रत्यासत्तिजन्यज्ञाने प्रामाण्यस्य प्रकारत्वेन सिद्धसाधनापरिहाराच्च।

नच सामान्यस्याज्ञातस्य प्रत्यासत्तित्वेऽतिप्रसङ्गेन ज्ञातस्यैव प्रत्यासत्तित्वात् प्रमात्वज्ञानस्य चानुमित्यादिरूपस्य प्रमात्वाश्रयरूपपक्षादिज्ञानजन्यतया तज्ज्ञानविषयकज्ञानजन्यत्वमेवेत्युक्तस्थले तज्ज्ञानविषयकज्ञानाजन्यज्ञानप्रकारत्वं नेति न दोष इति वाच्यम्। इच्छायां गृहीतं तद्वति तत्प्रकारकत्वं स्मृतं सज्ज्ञानत्वेन गृह्यमाणे रूप्यभ्रमे यत्रारोप्यते यत्र वा रूप्यत्ववति रूप्यत्वप्रकार-वत्वेन गृह्यमाणायामिच्छायां ज्ञानत्वमारोप्यंते तत्रोभयत्र प्रमात्वाश्रयज्ञानविषयकज्ञानं विनापि रूप्यत्ववति रूप्यत्वप्रकारकज्ञानत्वरूपं जनितं ज्ञानमादाय सिद्धसाधनत्वस्य दुर्वारत्वात्। किं च त्वन्मते गङ्गास्नानादिसत्कर्मजन्यं योगिज्ञानं तज्ज्ञानविषयकज्ञानाजन्यमेवेति तादृशज्ञानप्रकारत्व-मादाय सिद्धसाधनमेव। न हि तदपि निदिध्यासनजन्यम्। मानाभावात्। येन योगिज्ञानं तज्ज्ञान-विषयकज्ञानजन्यं स्यात्। तत्तत्कर्मणां तज्ज्ञानविशेष एव जनकत्वमित्यनुमानखण्डे त्वयैवोक्तेः। प्रमात्वस्य प्रकारत्वार्थं पूर्वोपस्थितेरावश्यकत्वेऽपि उक्तदिशा प्रमात्वाश्रयज्ञानं विनापि प्रमात्वज्ञानसम्भवात्।

यत्तु अनागताविषयकेति द्वितीयतृतीयज्ञानयोर्विशेषणमतो न कोऽपि दोष इति तन्न। वर्तमानघटप्रमात्वप्रत्यासत्त्या दोषतादवस्थ्यात्। अनागतवृष्ट्यादिज्ञानप्रामाण्यांशे बाधात्। तदन्यस्य पक्षत्वे चार्थान्तरत्वात्। यद्यपि तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगितदेकज्ञान-मात्राविषयकज्ञानग्राह्यमिति तदर्थ इति। तदपि न। एवं हि पूर्वदलेन प्रामाण्यानुमितिमादाय तदेकज्ञान-मात्रविशेषणेन सामान्यप्रत्यासत्तिजन्यज्ञानयोगिज्ञानेश्वरज्ञानान्यादाय सिद्धसाधनत्वाभावेऽपि ज्ञानं गुण इत्यादिज्ञानज्ञानप्रामाण्यानुव्यवसायस्य ग्राह्यप्रामाण्याश्रयज्ञानभिन्नप्रथमज्ञानविषयकतया तदेकविषयकत्वाभावेन तदंशे बाधात्। तदन्यस्य पक्षत्वे चार्थान्तरता। किञ्च प्रमावानयं समर्थप्रवृत्तिमत्त्वात् इत्याद्यनुमितिग्राह्यत्वेनार्थान्तरता। मीमांसकमते सामान्यप्रत्यासत्त्यभावेन ग्राह्यप्रमाव्यक्तेः अनुमितिजनकज्ञानागोचरत्वात्। तदन्यप्रामाण्यस्य पक्षत्वं तु सामान्यविप्रतिपत्त्यननुगुणमित्याद्यभिप्रेत्याह ॥**इति दिगिति**॥ यद्वा एवं विप्रतिपत्त्यन्तराण्यपि तत्तद्बुध्युत्प्रोक्षितानि निरस्यानीति भावेनाह ॥**इति दिगिति**॥ तन्निरासश्च गुरुटीकायां व्यक्तः॥

परोक्तस्वतस्त्वनिरुक्तिभङ्गः ॥ २ ॥

## प्रामाण्यस्वतस्त्वेऽनुमानानि

### तर्कताण्डवम्

**स्वतस्त्वे प्रमाणं तु, ज्ञानप्रामाण्यं स्वतो ग्राह्यम्, परतः अगृह्यमाणत्वे सति गृह्यमाणत्वात् ; यद्यदन्येनागृह्यमाणत्वे सति ग्राह्यं तत् तेन ग्राह्यम्। यथा चक्षुरन्येनागृह्यमाणं रूपं चक्षुर्ग्राह्यम् ॥ १ ॥**

### न्यायदीपः

तत्र किं प्रमाणमित्यत आह ॥**स्वतस्त्वे प्रमाणं त्विति**॥ अनुमानमिति वक्ष्यमाणेनान्वयः। यद्यपि—

"पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये"

इति कथालक्षणोक्तेः ग्रन्थस्य च वादकथारूपेण प्रवृत्तेः—

"ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥

पुराणानि च यानीह वैष्णवानि विदो विदुः
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद् विचार्यते"

इत्यादिरागम एव वाच्यः। तथाऽपि हैतुकस्य तार्किकस्यागमेऽत्यादराभावात् तं प्रत्यागमानुकूला न्याया एवात्रोच्यन्त इत्यदोषः।

"ज्ञानगतं याथार्थ्यं तद्ग्राहकेणैव ग्राह्यम्, ग्राहकान्तरानुपपत्तौ सत्यां गृह्यमाणत्वात् यद्यतोऽन्येनानुपपद्यमानग्रहणं गृह्यते तत्तेनैव गृह्यते, यथा चक्षुषोऽन्येनानुपपद्यमानसाक्षात्कारं साक्षात्क्रियमाणं रूपादि चक्षुषा साक्षात्क्रियते" इति तत्त्वनिर्णयटीकोक्तमनुमानं तात्पर्यतोऽनुवदति ॥**ज्ञानप्रामाण्यमिति**॥ याथार्थ्यरूपमित्यर्थः। तत्स्वरूपमुक्तं प्रागस्माभिः। चक्षुरादिरूपानु-प्रमाणव्यावृत्तस्य साक्षाज्ज्ञेयविषयीकारित्वस्य लाभाय ज्ञानेति विशेषणं तत्तज्ज्ञानपरम्। घटत्ववति घटत्वप्रकारकज्ञानत्वादिरूपं प्रामाण्यमित्यर्थः। यदा तु प्रामाण्यपदेन केवलप्रामाण्यग्रहः तदा ज्ञानपदं

स्पष्टार्थम्। अत एव सुधायां "प्रामाण्यम्" इत्येव पक्षोक्तिः ॥**स्वत इति**॥ ग्राह्यप्रामाण्य-विरोध्युपस्थापकसामग्र्यसमविहिततत्तज्ज्ञानविषयकसाक्षिविषय एवेत्यर्थः। विशेषणकृत्यं प्राग्वत्। साक्षी च लौकिकप्रत्यक्षादिरूपानुव्यवसाय एव ॥**परत इति**॥ प्रामाण्यं परतो ग्राह्यं सांशयिकत्वात् इत्यादौ यत् पराभिमतं साध्यं उक्तविशिषेणकसाक्षिज्ञानादन्येनैव ग्राह्यत्वादिरूपं तदभावे सति ग्राह्यत्वादित्यर्थः। तेनानुमित्यादिग्राह्यत्वेऽपि नासिद्धिः "परस्य स्वत्वात् स्वस्य च परत्वात्" इत्यादि मण्युक्तखण्डनस्याप्यनवकाशः।

केचित्तु परतो ग्राह्यत्वं नाम उक्तविशेषणकोक्तरूपसाक्षिज्ञानादन्योत्पाद्यप्राथमिकप्रतीति-कत्वम्, तच्छून्यत्वे सतीत्यर्थः। तेन स्वतस्त्ववादे प्रामाण्यस्यानुमित्यादिग्राह्यत्वेऽपि न विशेष-णासिद्धिरित्याहुः। अत्र सत्यन्तमात्रस्याप्रयोजकत्वाद् ग्राह्यत्वादित्युक्तिः। घटादिगतगन्धादौ सत्यपि ग्राह्यत्वे स्वाश्रयग्राहकोक्तरूपप्रत्यक्षाग्राह्यत्वं नेति व्यभिचारनिरासाय सत्यन्तम्।

## तर्कताण्डवम्

**सुखमनुभवामीति प्रत्ययः दोषशङ्काद्यकलङ्कितज्ञानस्य अनुव्यवसायो वा, निष्कम्पप्रवृत्तिहेतुभूतज्ञानस्यानुव्यवसायो वा, प्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितोऽनुव्यव-सायो वा, स्वग्राह्यज्ञानप्रामाण्यविषयकः तत्प्रकारको वा तद्विरुद्धाविषयकत्वे सति तद्व्याप्यत्वाविषयकत्वे सति तत्संशयविरोधिप्रत्ययत्वात् , तद्व्याप्यत्वाविषयकत्वे सति तदभावनिश्चयविरोधिनिश्चयत्वात् , तद्विषयकव्यवहारहेतु-प्रत्ययत्वात्, तज्ज्ञानप्रकारप्रकारकतया तत्प्रकारवद्विशेष्य-कतया च तद्विषयत्वाच्च प्रामाण्यानुमितिवत् इत्याद्यनुमानम्।**

## न्यायदीपः

प्रामाण्यस्य स्वतो ग्राह्यत्वे क्वचित् संशयाद्युपपादनक्लेशनिरासाय विशिष्याप्याह ॥**सुख-मिति**॥ स्ववृत्तिवर्तमानसुखसाक्षात्कारगोचरः साक्षिरूपः प्रत्यय इत्यर्थः। ज्ञानांशे लौकिक-प्रत्यक्षादिरूपानुव्यवसायः प्रामाण्यविषयको न वेति विप्रतिपत्त्यनुरोधेनैतत्पक्षाणामवतार इति सामान्यविप्रतिपत्त्यनानुगुण्यादर्थान्तरत्वमिति न शङ्क्यम्। बाह्याभ्यन्तरसाधारणपक्षान्तराण्याह

**॥ दोषेति ॥** दुष्टकरणजन्यत्वशङ्कातन्निश्चयाप्रामाण्यादिशङ्कातन्निश्चयाद्यनास्कन्दितघटादिज्ञानस्य इत्यर्थः। न चैवं अन्त्यपक्षाभेद इति शङ्क्यम्। तत्रानुव्यवसायविशेषणत्वेन इह व्यवसायविशेषणत्वेन तत्र प्रामाण्यविरोध्युपस्थापकसमग्रीत्वेन अत्र तु तत्कार्यदोषशङ्कादित्वेन च प्रवेशेनात्यन्तभेदात् **॥ उपस्थापकसामग्रीति ॥** उपस्थितितत्सामग्रीत्यर्थः। अत्र सर्वत्रापि ज्ञानस्येत्यनेन दोषाजन्यप्रमा-रूपज्ञानस्याभिमतत्वादिदं रूप्यमित्यादिभ्रमगोचरानुव्यवसायस्यापक्षतया तस्य तत्र प्रामाण्य-ग्राहकत्वेपि न बाध इति बोध्यम्। तत्र प्रामाण्यग्रहणस्य मानसत्वेन सिद्धान्तेपि भ्रमगोचरानु-व्यवसायेन प्रामाण्याग्रहात्। यद्वा वक्ष्यमाणदिशाऽत्राभिमतानुव्यवसायत्वस्य भ्रमानुव्यवसाये अभावेन तस्यापक्षत्वान्न बाधः। अत एव ज्ञानांशे लौकिकप्रत्यक्षादिरूपस्येह अनुव्यवसायस्य अभिमततया स्मृत्युपनीतप्रामाण्यविषयकानुव्यवसायमादाय न न्यायमते सिद्धसाधनं शङ्क्यम्।

**॥ स्वग्राह्येति ॥** स्वेन अनुव्यवसायेन ग्राह्यं यज्ज्ञानं आद्ये सिद्धान्ते सुखविषयकं स्वप्रकाशरूपं साक्षिज्ञानमेव। परमते मानसं सुखव्यवसायरूपम्। तदन्यपक्षत्रये च घटादिगोचरं मनोवृत्तिरूपं व्यवसायाख्यं साक्षिज्ञानादन्यत्। तन्निष्ठं यत्प्रामाण्यं सुखत्ववति सुखत्वप्रकारकत्वादि-रूपं घटत्ववति घटत्वप्रकारकत्वादिरूपं वा तद्विषयक इत्यर्थः। घटज्ञानानुव्यवसायस्य पटज्ञान-प्रामाण्याविषयकत्वाद् बाधनिरासाय स्वग्राह्यज्ञानेत्युक्तम्। यद्वा प्रामाण्यविषयक इत्येवोक्तौ स्वनिष्ठ-प्रामाण्यविषयकत्वमादाय सिद्धान्ते अर्थान्तरत्वनिरासाय **॥ स्वग्राह्यज्ञानेति ॥** एवं च नार्थान्तरता। न चैवं साक्ष्यंशे स्वग्राह्यव्यवसायप्रामाण्यविषयकत्वाभावाद् व्यभिचारः शङ्क्यः। स्वग्राह्यं यावत्-स्वयमन्यच्च तावति प्रामाण्यग्राहकत्वलाभेन साक्ष्यंशे हेतूनामव्यभिचारात्।

यद्वा सुखत्ववद्विशेष्यकज्ञानत्वादिरूपप्रामाण्यलाभाय स्वग्राह्यज्ञानप्रामाण्येत्युक्तिः। प्रामाण्यविषयकत्वं च साध्यं यन्मते वैशिष्ट्यमनुव्यवसायवेद्यमेव न तन्मतेन बोध्यम्। तद्वेद्यमपि स्वातन्त्र्येण न तद्वेद्यमिति मते तु सत्वेन प्रामाण्यविषयकत्वमभिमतम्। तेन तत्पक्षे सिद्धसाधनतेति शङ्कानवकाशः। अत एव वक्ष्यति ''सत्तया तदुल्लेखस्य साध्यत्वात्'' इति। न च वादिनः सत्वेनेति विशेषणं व्यर्थं, व्यावर्त्याप्रसिद्धेरिति शङ्क्यम्। शुक्तिरूप्यज्ञाने प्रामाण्यविषयकस्यापि मानसदर्शनस्य स्वविषयसत्वानिर्णायकस्यापि सिद्धान्ते सत्वात्। परप्रसिद्धत्वमात्रेण व्यावर्त्यत्वोपपत्तेश्च। परार्थानुमाने परं प्रति सिद्धासाधनोद्धारस्यापि वादिप्रयोजनत्वाच्च। जन्यकृत्यजन्यानीत्यत्र मीमांसकं प्रति जन्यत्वस्येवेहापि वादिनं प्रति प्रमेयत्वादिवदुपरञ्जकत्वेन विशेषणत्वोपपत्तेश्च। उक्तं च उत्पत्तिप्रामाण्यवादे मणावपि ''उभयसिद्धव्यावर्तकत्वं तन्त्रम्। न तु व्यावर्त्यस्योभयसिद्धिः। गौरवात्'' इति।

प्रामाण्यमनुव्यवसायविषयोऽपि प्रागनुपस्थितत्वान्न प्रकारतयेति वदन्तं प्रत्याह ॥ **तत्प्रकारको वेति** ॥ स्वग्राह्यज्ञानप्रामाण्यप्रकारको वेत्यर्थः। विशेषणज्ञानहेतुताया निर्विकल्पकभङ्गे निरसिष्यमाणत्वादिति भावः ॥ **तद्विरुद्धेति** ॥ ग्राह्यप्रामाण्यविरुद्धं यत्प्रामाण्याभावतद्व्याप्याप्रामाण्यादितदविषयकत्वे सतीत्यर्थः। विरुद्धत्वं च तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वम् ॥ **तद्व्याप्यत्वेति** ॥ सुखानुभवादिनिष्ठसुखत्ववद्विशेष्यकत्वादिरूपप्रामाण्यव्याप्यत्वेत्यर्थः ॥ **तत्संशयविरोधीति** ॥ प्रामाण्यसंशयविरोधित्वं नाम तदनुत्पत्तिव्याप्यत्वादिरूपं ज्ञेयम्। विशेषणकृत्यान्यग्रे व्यक्तानि ॥ **तद्विषयकेति** ॥ प्रामाण्यविषयकेत्यर्थः ॥ **तज्ज्ञानेति** ॥ ग्राह्यप्रामाण्याश्रयज्ञानेत्यर्थः। साध्यावैशिष्ट्यनिरासोऽग्रे स्फुटः ॥ **तद्विषयकत्वात्** ॥ व्यवसायविषयकत्वादित्यर्थः ॥ **प्रामाण्यानुमितिवदिति** ॥ इदं ज्ञानं प्रमाणं समर्थप्रवृत्तिहेतुत्वात् इति प्रामाण्यानुमितावुक्तस्य हेतुचतुष्टयस्य साध्यद्वयस्य च सत्वादिति भावः। आदिपदेन ''प्रामाण्यं ज्ञानग्राहकमात्रग्राह्यं अप्रामाण्येतरज्ञानसमवेतधर्मत्वात् ज्ञानत्ववत्'' इत्यादि सुधोक्तानुमानग्रहः।

## तर्कताण्डवम्

**अत्राद्ये हेतौ तद्विरुद्धाविषयकेत्युक्तत्वात्प्रामाण्यविरुद्धाप्रमाण्यनिश्चये, तद्व्याप्यत्वाविषयकेत्युक्तत्वाद् वह्निमत्वाविषयके, तत्संशयविरोधिनि तद्व्याप्यतया धूमनिश्चये, तत्संशयविरोधीत्युक्तत्वाद्घटादिज्ञाने, प्रत्ययेत्युक्तत्वाद् धर्म्यज्ञाने कोट्यस्मरणे च न व्यभिचारः। न चोल्बणविषयान्तरज्ञाने व्यभिचारः। विषयान्तरे मनःसञ्चारादिरूपतज्ज्ञानसामग्र्या एव तद्विरोधित्वात्।**

**ननु तथाऽपि व्यञ्जकस्य करचरणादेः स्वरूपेणैव ज्ञानं व्यङ्ग्यपुरुषत्वादिजातिसंशयविरोधि। न तु व्याप्यतया। करादिज्ञानस्यालोकवत्स्वरूपेणैव व्यङ्ग्यधीहेतुत्वात्। तच्च न व्यङ्ग्यविषयकमिति तत्र व्यभिचार इति चेन्मैवम्।**

**व्यङ्ग्यसंशयो हि द्वेधा। व्यञ्जकभूतं यज्ज्ञानकारणं तदभावेन सामग्र्यभावाद्वा यथान्धकारस्थितघटसंशयः।**

**दूरादिदोषाद्वा। यथा स्थाणौ पुरुषसंशयः। तत्राद्ये व्यङ्ग्य-निश्चयसामग्र्येव संशयविरोधिनी। तस्यां च प्रत्ययत्वं नेति न व्यभिचारः। द्वितीये तद्व्याप्यत्वेन करादिज्ञानमेव दोषजन्य-संशयविरोधीति तद्व्याप्यत्वाविषयकत्वं नेति न व्यभिचारः। न च तद्व्याप्यत्वाविषयकत्वमसिद्धम्। सुखसाक्षात्कारत्वादेः प्रामाण्यव्याप्यत्वाग्रहणेऽसंशयदर्शनात्। न च धर्मिज्ञानाद्य-भावादेव असंशयात्संशयविरोधित्वमसिद्धमिति वाच्यम्। सुखादिज्ञानरूपधर्मिज्ञाने ज्ञानत्वरूपसाधारणधर्मदर्शने दैवात् कोटिस्मरणे विषयान्तरासञ्चारे च सत्यप्यसंशयदर्शनात्।**

**न चाद्यो हेतुरप्रयोजकः ज्ञानस्य तत्संशयविरोधित्वं हि तन्निश्चयत्वेन वा तदभावनिश्चयत्वेन वा तदभावव्याप्य-निश्चयत्वेन वा तद्व्याप्यनिश्चयत्वेन वेति चतुर्धा। तत्र द्वितीयतृतीययोस्तद्विरुद्धाविषयकत्वविशेषणेन चतुर्थस्य तद्व्याप्यत्वाविषयकत्वविशेषणेन निरस्ततया हेतोराद्यं प्रामाण्यनिश्चयत्वरूपं साध्यं विनानुपपत्तेः।**

## न्यायदीपः

आद्यविशेषणस्य यथाश्रुतव्याप्त्याकृत्यसम्भवेऽपि द्वितीयविशेषणे तदसम्भवात् यद्यद्विरुद्धाविषयकत्वे सति यद्व्याप्यत्वाविषयकत्वे सति यत्संशयविरोधिज्ञानं तत्तद्विषयक-मित्यादिसामान्यव्याप्तिमुपेत्य कृत्यमाह ॥ **वह्निमत्वाविषयक इति** ॥ अयं वह्निमान् धूमवत्वादित्यत्र वह्निव्याप्यधूमवानयमिति निश्चये सति अयं वह्निमान्नवेति संशयानुदयेनोक्तरूपहेतुभावेपि वह्निमत्वविषयत्वाभावेन तत्र साध्याभावाद्व्यभिचार इति शङ्का तद्व्याप्यत्वाविषयकत्व-विशेषणान्निरस्तेत्यर्थः।

विशिष्य व्याप्तौ तु घटत्ववद्विशेष्यकत्वरूपप्रामाण्याविषयकेपि तत्संशयविरोधिनि तद्व्याप्यतया कम्बुग्रीवादिमद्विशेष्यकत्वनिश्चये व्यभिचारो नेति ज्ञेयम् ॥ **धर्म्यज्ञाने** ॥ व्यव-

सायरूपधर्मिणो ज्ञानाभाव इत्यर्थः। धर्मिज्ञानस्य संशयहेतुतया तदभावस्य कार्यानुत्पादव्याप्यत्वे न तत्र हेतुसत्वादिति भावः।

धर्मिज्ञानं न संशयहेतुरिति मतेनाह ॥ **कोटीति** ॥ कोटिस्मरणाभाव इत्यर्थः। एतच्चोपलक्षणम्। कुङ्कुमगन्धादिसंशयविरोधिनि तदभिव्यञ्जकगोघृतसंयोगादौ च न व्यभिचारः इत्यपि ध्येयम्। विशिष्टस्यापि हेतोर्व्यभिचारमाशङ्क्य निराह ॥ **न चेति** ॥ **सामग्र्या एवेति** ॥ तथाच तत्र प्रत्ययत्वाभावेन हेतोरेवाभावादिति भावः। न च सामग्र्या विरोधित्वे तज्जन्यज्ञानस्यापि सामग्रीविरोधित्वप्रयुक्तं संशयविरोधित्वं स्यादेव। विरोधिनिश्चयप्रतिबन्धकत्वस्य विरोधिनिश्चयसामग्रीप्रतिबन्धकत्वप्रयुक्तत्वदर्शनात्। "यद्धीसामग्री यत्र प्रतिबन्धिका तद्धीरपि तत्र प्रतिबन्धिका" इति पक्षधरोक्तेरिति वाच्यम्। विरोधिनिश्चयस्य ग्राह्याभावावगाहित्वेनैव प्रतिबन्धकत्वेनान्यप्रयुक्तत्वाभावात्। भिन्ने विषये अनुमितिसामग्र्याः प्रत्यक्षप्रतिबन्धकत्वेपि अनुमितेस्तददर्शनादिति भावः। स्थळान्तरेपि व्यभिचारमाशङ्कते ॥ **नन्विति** ॥ **स्वरूपेणैव** ॥ करचरणादित्वेनैवेत्यर्थः ॥ **व्याप्यतया** ॥ पुरुषत्वादिव्याप्यतयेत्यर्थः। हेतुसत्वमुक्त्वा साध्यं नेत्याह ॥ **तच्चेति** ॥ एतदपि व्यभिचारचोदनं सामान्यव्याप्तिमुपेत्यैवेति ध्येयम्।

विवेकेन समाधिं वक्तुमाह ॥ **व्यङ्ग्येति** ॥ निश्चयसामग्र्यभावप्रयुक्तो वा सत्यां तस्यां तत्प्रतिबन्धकदोषप्रयुक्तो वेति भावेन तद्वैविध्यं व्यनक्ति ॥ **व्यञ्जकेति** ॥ **ज्ञानेति** ॥ निश्चयेत्यर्थः ॥ **सामग्रीति** ॥ निश्चयसामग्र्यभावादित्यर्थः ॥ **यथेति** ॥ तत्रालोकरूपव्यञ्जकाभावादिति भावः ॥ **दूरादीति** ॥ सत्यां निश्चयसामग्र्यामिति भावः ॥ **तद्व्याप्यत्वज्ञानमेवेति** ॥ अन्वयव्यतिरेकाभ्यां तथावगमादिति भावः। अत एवोक्तं ज्ञप्तिप्रामाण्यवादान्ते रुचिदत्तेन "अनुव्यवसायत्वस्य प्रामाण्यनियतस्यापि तन्नियतत्वेनाग्रहात्कथं संशयनिवृत्तिः। न हि व्याप्तिज्ञानमात्रात्संशयनिवृत्तिः। अन्यथा तैलं पृथवी न वेति संशयो न स्यात्" इति।

ननु घटत्वादिप्रकारकानुभवत्वस्य वल्मीकादौ घटत्ववद्विशेष्यकत्वादिरूपप्रामाण्यव्यभिचारेपि अत्र विवक्षितसुखानुभवत्वादिरूपव्यवसायधर्मस्य सुखत्ववद्विशेष्यकत्वादिरूपप्रामाण्याव्यभिचारेण तद्व्याप्यत्वविषयकत्वं तदनुव्यवसायस्यास्त्येवेति भावेन शङ्कते ॥ **नचेति** ॥ व्याप्यत्वे सत्यपि तद्विषयकत्वं नावश्यकमिति भावेन परिहरति ॥ **सुखेति** ॥ **दर्शनादिति** ॥ व्याप्त्यनुसन्धानहीनबालमुग्धादाविति भावः। व्याप्यत्वाविषयकत्वांशे असिद्धिं निरस्य तद्विरुद्धाविषयकत्वांशे विवादाभावात्संशयविरोधित्वांशे तां निराह ॥ **न च धर्मीति** ॥ कोट्य-

स्मरणविषयान्तरसञ्चारादिरादिपदार्थः ॥ **धर्मिज्ञान इति** ॥ धर्मिणो ज्ञाने सतीत्यनेनान्वयः । धर्म्याख्यज्ञान इति व्याख्याने तु न सतिपदेनान्वयः । अपि तु साधारणधर्मदर्शनपदेन । न चास्मिन्पक्षे धर्मिभूतज्ञानानुक्तिः । धर्मिज्ञानस्य साधारणधर्मदर्शनत्वेनैव हेतुत्वात्तेनैव तदुक्तेरिति ॥ **असंशयेति** ॥ तस्य प्रामाण्यनिश्चयनिबन्धनत्वाभावे कदाचित्कस्यचित्तत्र धर्मिज्ञानाद्युदयसम्भवेन रूप्यज्ञानं प्रमा न वेतिवत्सुखज्ञानं प्रमा न वेति संशयः स्यात् । कदापि तददर्शनात्प्रामाण्यनिश्चयनिमित्त एव तदभाव इति तद्विरोधित्वं तस्य नासिद्धमिति भावः । एवं व्यभिचारासिद्धी निरस्य विपक्षे बाधकाभावदोषं च निराह ॥ **नचाद्य इति** ॥ विपक्षे हेतूच्छित्तिं सम्भावितपक्षानुक्त्वा इतरव्यवच्छेदपूर्वकमाह ॥ **ज्ञानस्येति** ॥ स्वतो विरोधाभावात् स्वविषयकृतस्यैव विरोधस्य वाच्यत्वादिति हि शब्दः ।

## तर्कताण्डवम्

**एतेन द्वितीयहेतावप्यप्रयोजकतोद्धृता । पक्षीकृतज्ञाने प्रामाण्यविषयकत्वं प्रामाण्यव्याप्यविषयकत्वं प्रामाण्याभावविषयकत्वं प्रामाण्याभावव्याप्यविषयकत्वं उभयोदासीनविषयकत्वं चेति सम्भाविते प्रकारपञ्चके द्वितीयस्य तद्व्याप्यत्वाविषयकत्वविशेषणेन तृतीयादीनां च त्रयाणां तदभावनिश्चयविरोधिनिश्चयत्वेन निरासाद्धेतोराद्यं प्रामाण्यविषयकत्वरूपसाध्यं विनाऽनुपपत्तेः । तत्राद्यं निश्चयपदं तदभावसंशयविरोधिनि तदभावनिश्चये, द्वितीयं तु तदभावनिश्चयविरोधिनि तदभावसंशये व्यभिचारवारकम् ।**

**सुखसाक्षात्कारस्य तत्प्रामाण्याभिलापस्य च मध्ये प्रामाण्यानुमित्यङ्गीकारे चानुभवविरुद्धं व्याप्तिस्मरणादि बहु कल्प्यं स्यात् । सुखसाक्षात्कारस्य तत्साक्षात्काराभिलापस्य च मध्येपि तत्कल्प्यं स्यात् । प्रामाण्यानुमिति-प्रामाण्याभिलापयोर्मध्येऽपि ज्ञानान्तरं कल्प्यं स्यादिति न तृतीयहेतुरसिद्धः । नाप्यप्रयोजकः व्यवहर्तव्यज्ञानस्य व्यवहारहेतुत्वात् ।**

**न च घटविशेष्यकत्वे सति घटत्वप्रकारकत्वस्यैव प्रामाण्यरूपत्वाच्चतुर्थहेतौ साध्यावैशिष्ट्यम्। त्वयाप्यङ्गीकृतस्य प्रामाण्योल्लेखमात्रस्य हेतुत्वात्। त्वदनङ्गीकृतस्य सत्तया तदुल्लेखस्य च साध्यत्वात्। मन्मते केवलानुप्रमाणसाधारणस्य याथार्थ्यरूपप्रामाण्यविषयकत्वस्य साध्यत्वात् केवलप्रमाणासाधारणस्योल्लेखस्य हेतुत्वाच्च। केचित्तु तथाङ्गीकर्तव्यत्वं साध्यमिति न साध्यावैशिष्ट्यमित्याहुः।**

## न्यायदीपः

एतेनेत्युक्तं व्यनक्ति ॥ **पक्षीकृतज्ञान इत्यादिना** ॥ **उभयेति** ॥ प्रामाण्यतद्व्याप्यप्रामाण्याभावतद्व्याप्यरूपोभयोदासीनेत्यर्थः। सङ्गततया प्रसक्तमप्रयोजकत्वं पूर्वं निरस्य विशेषणकृत्यमाह ॥ **तत्राद्यमिति** ॥ तत्र द्वितीयहेतावित्यर्थः। तदभावज्ञानविरोधिज्ञानत्वादित्युक्ते व्यभिचारादुभयत्र निश्चयपदेन तद्वारणमित्यर्थः। तद्विषयव्यवहारहेतुप्रत्ययत्वादिति तृतीयहेतौ। कुङ्कुमगन्धव्यङ्ग्यव्यवहारहेतौ घृतादिसंयोगरूपव्यञ्जके व्यङ्ग्याविषयके व्यभिचारवारकं प्रत्ययपदं प्रामाण्याविषयके घटादिज्ञाने व्यभिचारवारकं तद्विषयकव्यवहारे त्वितिपदं इति स्पष्टमिति विशेषणकृत्यमनुक्त्वा असिध्यप्रयोजकत्वे क्रमेण निराह ॥ **सुखेति** ॥ सुखमनुभवामीति प्रत्ययस्य न सुखानुभवप्रामाण्यव्यवहारहेतुत्वमस्ति किन्तु सुखसाक्षात्कारानन्तरं अयं सुखानुभवः प्रमा सुखसाक्षात्कारत्वात् पूर्वसुखसाक्षात्कारवदित्यादिलिङ्गजन्यप्रामाण्यानुमितेरेव इत्यभ्यासदशापन्नस्थले झडिति प्रामाण्यानुमितिसामग्रीसमवधानं स्वकारणाधीनमिति ज्ञप्तिप्रामाण्यान्ते मणिकृदुक्तदिशा प्रमाण्यानुमित्यङ्गीकार इत्यर्थः ॥ **व्याप्तिस्मरणादीति** ॥ परामर्शानुमिती आदिपदार्थः। अतिप्रसङ्गं चाह ॥ **सुखेति** ॥ **तत्कल्प्यमिति** ॥ जातिव्यक्त्योरेकवित्तिवेद्यत्वनियममनुपेत्य साक्षात्कारस्वरूपज्ञानानन्तरं सुखज्ञानमिदं साक्षात्कारः स्ववृत्तिवर्तमानविषयकत्वादिति सुखसाक्षात्कारत्वनुमितिमुपेत्य तद्धेतुव्याप्तिस्मरणादिकं कल्प्यं स्यादित्यर्थः। ज्ञानान्तरं शाब्दादिरूपमित्यर्थः। अत्रापि हेतूच्छित्तिरेव विपक्षे बाधिकेत्याह ॥ **व्यवहर्तव्येति** ॥

तज्ज्ञानप्रकारेत्यादिचतुर्थहेतौ दलद्वयकृत्यं परोक्तनिरुक्तिभङ्गे व्यक्तमिति व्यभिचारशङ्कानवकाशात्सन्दिग्धासिद्धिस्वरूपासिद्धी क्रमेण निराह ॥ **नचेत्यादिना** ॥ सुखं मे भूयादितीच्छायामुक्तरूपप्रकारकत्वे सत्यपि न प्रामाण्यमिति तदेव तदित्यसिद्धमिति कश्चित्। तन्न।

सुखत्ववद्विशेष्यकत्वादिरूपप्रामाण्यस्येच्छायामपि सत्वात्। सुखत्ववद्विशेष्यकज्ञानत्वादिकं तदित्यशक्यशङ्कम्। मन्मत इत्यादिवक्ष्यमाणविरोधात्।। **उल्लेखमात्रस्य** ।। विषयत्वमात्रस्येत्यर्थः। मात्रपदेन सत्वव्यावृत्तिः। एतेन यन्मते तद्वत्वमनुव्यवसायस्य सर्वथैवाविषयो न तन्मते नायं हेतुर्वक्ष्यमाणदिशा प्रसाध्याङ्गको वेति सूचितम्। ननु सिद्धान्ते सत्वासत्वौदासीन्येन तद्विषयकत्वाभावात्साध्यावैशिष्ट्यं स्यादित्यत आह ।। **मन्मत इति** ।। वादजल्पकथयोः प्रयोगदशायामित्यर्थः। वह्निमात्रसाधने पर्वतीयवह्निना पर्यवसानमिव ज्ञानमात्रनिष्ठप्रामाण्येन पक्षधर्मताबलात्पर्यवसानमिति भावः।

## तर्कताण्डवम्

**नाप्यसिद्धिः सुखमेव सुखत्वेनानुभवामि स्तम्भमेव स्तम्भत्वेन जानामीत्यनुभवात्। एतेनोक्तवक्ष्यमाणानुमानेषु बाधो निरस्तः। सुखमेव सुखत्वेनानुभवामीत्यादिज्ञाने प्रामाण्यशब्दानुल्लेखेपि तदर्थस्य सुखत्ववति सुखत्वप्रकारकत्वरूपस्य प्रामाण्यस्योल्लेखात्।**

**यद्वा विमतः प्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितोऽनुव्यवसायः स्वविषयव्यवसायप्रामाण्यविषयकः निष्कम्पप्रवृत्तिहेतुव्यवसायविषयकानुव्यवसायत्वात्, उक्तरूपव्यवसायांशे लौकिकप्रत्यक्षत्वाद्वा, गृहीतप्रामाण्येन ज्ञानेन समानविषयकस्योत्तरस्य ज्ञानान्तरस्यानुव्यवसायवत्।**

**अत्र द्वितीयहेतौ लौकिकपदं सामान्यप्रत्यासत्त्यादिजन्ये व्यवसायविषयके ज्ञाने व्यभिचारवारणाय। ज्ञानांश इति विशेषणं तु स्मृत्युपनीतेऽतीतघटज्ञाने तद्विषयकमहं घटज्ञानवानास्मिति यज्ज्ञानमात्मांशे लौकिकप्रत्यक्षं तत्र व्यभिचारवारणार्थम्। न च तव घटज्ञानमस्तीति शाब्दजन्यं यद्घटज्ञानविषयकं ज्ञानं तदनुव्यवसाये व्यभिचारः शङ्क्यः।**

**घटज्ञानांशे घटत्ववति घटत्वप्रकारकत्वरूपस्य तदीयस्य प्रामाण्यस्याग्रहणेन साध्याभावेऽपि लौकिकप्रत्यक्षत्वाभावेन हेत्वभावात्। घटज्ञानविषयकज्ञानांशे तु हेतोः सत्वेऽपि घटज्ञानत्ववति घटज्ञानत्वप्रकारकत्वरूपप्रामाण्यग्रहणेन साध्यसद्भावात्।**

**न च दृष्टान्तः साध्यविकलः। उत्तरस्य ज्ञानान्तरस्य पूर्वेणा प्रामाण्यग्रहणेनाव्यवहितत्वे तस्यैव व्यवहितत्वे तु प्रामाण्यस्मरणस्यैव विशेषणज्ञानतया विशेषणोपस्थितिविशेष्येन्द्रियसन्निकर्षतदसंसर्गाग्रहरूपविशिष्टज्ञानसामग्र्याः सत्वेन ज्ञानान्तरानुव्यवसायस्य प्रामाण्यविशिष्टव्यवसायविषयकत्वात्।**

## न्यायदीपः

॥ **एतेनेति** ॥ तद्वद्विशेष्यकत्वोल्लेखादेरनुभवसिद्धत्वेनेत्यर्थः। तदेव व्यनक्ति ॥ **सुखमेवेति** ॥ **अनुल्लेखेपीति** ॥ इदं ज्ञानं प्रमाणमित्यनाकारेपीत्यर्थः ॥ **उल्लेखात्** ॥ विषयीकरणादित्यर्थः।

पूर्वोक्तहेतुविशेषणेषु प्रतिवादिविप्रतिपत्तेः प्रसाध्याङ्गकत्वं मन्वानः प्रागुक्तपक्षतावच्छेदकेषु एकं पक्षतावच्छेदकं कृत्वाऽन्यं हेतूकृत्याह ॥ **यद्वेति** ॥ यद्वा पूर्वं प्रामाण्यं क्वापि नानुव्यवसायवेद्यमिति मतमुपेत्य प्रामाण्यानुमितिदृष्टान्तेन प्रयोगा उक्ताः इदानीं तु क्वचित्तद्वेद्यमिति मतमुपेत्य तद्रष्टान्तेनाह ॥ **यद्वेति** ॥ **विमत इति** ॥ प्रामाण्यविषयकत्वाविषयकत्वाभ्यां विप्रतिपत्तिविषय इत्यर्थः विमतेरपि नियतविषयत्वायावच्छेदकमावश्यकमेव तत्किमित्यत आह ॥ **प्रामाण्येति** ॥ **उपस्थापकेति** ॥ उपस्थितितत्सामग्रीत्यर्थः। नन्वेवमुक्तरूपानुव्यवसायत्वस्यैव पक्षतावच्छेदकत्वसम्भवे किं विमत्येति चेन्न "यद्यपि विमतिरपि नियतविषयत्वायावच्छेदकसापेक्षा। तथापि सावयवत्वसाधितेन कार्यत्वेन पृथिव्याः सकर्तृकत्वसाधनमिव स्वनियामकनियतया लब्ध्या विमत्या पक्षतावच्छेदो न विरुद्धः" इति न्यायामृतोक्तदिशोपपत्तेरिति तात्पर्यात्। अत्र प्रामाण्येत्यादिविशेषणोक्त्या प्रतिबद्धानुव्यवसाये बाधशङ्का, अनुव्यवसाय इत्युक्त्या घटज्ञानमितिशाब्दज्ञाने बाधशङ्का निरस्तेति ध्येयम्। अतीताद्यविषयकप्रत्यक्षत्वादिरूपत्वादनुव्यवसायत्वस्य

प्रथमज्ञानगोचरानुव्यवसायोऽत्रपक्षत्वेन पर्यवसितो ज्ञेयः। उत्तरज्ञानगोचरस्य दृष्टान्तत्वेनोपादानात्। स्वविषयेति साध्यांशः पूर्ववद्व्याख्येयः। प्रामाण्यप्रकारको वेत्यपि ध्येयम्। प्रागुपस्थितेरप्रयोजकताया निर्विकल्पकभङ्गे व्यक्तत्वात्। निष्कम्पप्रवृत्तिहेत्विति व्यवसायविशेषणेन संशयादिगोचरानुव्यवसाये अनुव्यवसायेत्युक्त्या तादृशज्ञानगोचरशाब्दज्ञाने च न व्यभिचारः। अनुव्यवसायत्वं चातीतानागताविषयकप्रत्यक्षत्वं न तु तत्प्रकारप्रकारकतया तत्प्रकारवद्विशेष्यकतया तज्ज्ञानत्वरूपमिति युक्तम्। निष्कम्पेत्यादिविशेषणवैयर्थ्यात्। पूर्वोक्तहेतुसाङ्कर्याच्च। नापि ज्ञानांशे लौकिकप्रत्यक्षत्वम् उत्तरहेतुसाङ्कर्यात्। अत एव सामान्येत्यादिना वक्ष्यमाणज्ञानद्वयेपि न व्यभिचारः तस्यातीतादिविषयकत्वात् अत्र निष्कम्पप्रवृत्तीत्यस्य संवादिप्रवृत्तीत्यर्थः। तेन शुक्तिरूप्यज्ञानगोचरानुव्यवसाये साक्षिरूपे तत्र प्रामाण्यग्रहस्य मानसत्वेन तन्निष्ठप्रामाण्याविषयके न व्यभिचारः ॥ **उक्तरूपेति** ॥ निष्कम्पप्रवृत्तिहेतुव्यवसायांश इत्यर्थः। लौकिकत्वं चालौकिकप्रत्यासत्यजन्यत्वम्। संशयादिगोचरानुव्यवसाये व्यभिचारनिरासायोक्तरूपव्यवसायांश इत्युक्तिः। गृहीतप्रामाण्येनेति बहुव्रीहिः। घटादिज्ञाने प्रवृत्तिसामर्थ्यादिना प्रामाण्यानुमित्यन्तरं तत्रैवायं घट इत्याद्युत्पन्नसमानाधिकरणज्ञाने प्रामाण्यं तदनुव्यवसायवेद्यमिति प्राचीनन्यायमतेऽभ्युपगमादिति भावः। उपपादयिष्यते चाग्रे ग्रन्थ एव ॥ **सामान्यप्रत्यासत्त्यादीति** ॥ ज्ञानत्वसामान्येत्यर्थः। आदिपदेन योगजप्रत्यासत्तिज्ञानप्रत्यासत्त्योर्ग्रहः ॥ **ज्ञानांश इति** ॥ उक्तरूपव्यवसायांश इत्युक्तैकदेशानुवादः। विशिष्टस्य हेतोर्व्यभचारमाशङ्क्य विवेकेन समाधिमाह ॥ **नचेत्यादिना** ॥

"स्वर्गसाधनं याग इति ज्ञानस्य प्रामाण्ये निश्चिते तत्समानविषयकज्ञानान्तरे अप्रामाण्यशङ्का भवतीति ज्ञानान्तरमगृहीतप्रमाण्यमपि" इत्यादिमणिकृदुक्तेरुत्तरज्ञानानुव्यवसाये प्रामाण्यविषयकत्वं विप्रतिपन्नमिति वदन्तं प्रति साध्यसत्वं दृष्टान्ते व्यनक्ति ॥ **न च दृष्टान्त इत्यादिना** ॥ **उत्तरस्येति** ॥ अनुमित्यादिना गृहीतप्रामाण्यकात् पूर्वज्ञानादुत्तरस्येत्यर्थः ॥ **तस्यैवेति** ॥ विशेषणज्ञानतयेत्यन्वयः। प्रामाण्यानुमितेरेव प्रामाण्यघटकघटत्वादिविशेषणज्ञानत्वेन प्रामाण्यानुमित्यनन्तरमेव घटघटत्वनिर्विकल्पकं विनैव घटत्वादिविशिष्टव्यवसायोत्पत्तौ तदुत्तरकाले विनश्यत्प्रामाण्यज्ञानसत्वादिति भावः। न च वक्ष्यमाणदिशा पूर्वोत्तरज्ञानयोः प्रामाण्यस्यैकत्वेप्युत्तरज्ञानगतत्वेन पूर्वमभानान्न तत्रोपनय इति शङ्क्यम्। यदवच्छेदेन यत्र यद्गृहीतं तत्र तद्ग्रहत्वस्यैवोपनयसामग्रीत्वात्। चन्दनखण्ड इत्यादिप्रत्यक्षे तथा दर्शनात्। तथाच तद्विषयकत्वावच्छेदेन पूर्वज्ञाने प्रामाण्यग्रहात्तद्विषयकत्वेन ज्ञाते द्वितीयज्ञाने तदुपनयो भवत्येवेति भावः ॥ **सन्निकर्षेति** ॥ संयुक्तसमवायरूपेत्यर्थः ॥ **तदिति** ॥ विशेषणविशेष्ययोः प्रामाण्यतदाश्रयज्ञानयोरसंसर्गेत्यर्थः।

## तर्कताण्डवम्

ननु तज्ज्ञानविषयकेत्यादिस्वतस्त्वनिरुक्तौ तच्छब्देन व्यक्तिविशेषो न विवक्ष्यते। किन्तु ग्राह्यप्रामाण्याश्रयीभूत-ज्ञानमात्रम्। समानविशेष्यकत्वे सति समानप्रकारकयोश्च ज्ञानयोर्विशेष्यप्रकारघटितं प्रामाण्यमेकमेव।

एवञ्चोक्तानुव्यवसायस्य ग्राह्यप्रामाण्याश्रयद्वितीय-ज्ञानविषयकज्ञानानपेक्षत्वेऽपि प्रथमज्ञानाविषयकज्ञान-सापेक्षत्वान्न स्वतस्त्वमिति साध्यवैकल्यमिति चेन्न। व्यवसायप्रामाण्यमनुव्यवसायस्य विषयो न वेति विप्रतिपत्ताव नुव्यवसायविषयत्वमात्रसाधनात्। तस्य च दृष्टान्ते सत्वात्। तज्ज्ञानविषयकेत्यादिनोक्तस्वतस्त्वस्यापि पक्षधर्मताबलात्सिद्धेश्च।

यद्वा अनुमित्यनुव्यवसायो दृष्टान्तः। नच नवीनन्यायमते तत्रापि स्वतः प्रामाण्याभावात्साध्यवैकल्यम्। तथात्वे तत्प्रामाण्ये कदाचित्संशयविपर्ययव्यतिरेकप्रमान्यतरा-पातात्।

## न्यायदीपः

यत्तु मणावुक्तं ''तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानविषयत्वं स्वतस्त्वम्। तदन्यग्राह्यत्वं हि परतस्त्वम्। मनसा चैवं प्रामाण्यग्रहस्य तज्ज्ञानविषयकजन्यज्ञानजन्यत्वान्न परतस्त्वहानिरिति'' तद्धृदि कृत्वा प्रकारान्तरेण साध्यवैकल्यमाशङ्कते ।। **नन्विति** ।। ग्राह्यप्रामाण्याश्रयज्ञान-विषयकज्ञानाजन्यत्वे सति स्वग्राह्यज्ञानप्रामाण्यविषयकत्वं साध्यार्थं मन्वानस्येयं साध्यवैकल्यशङ्केति ध्येयम्। तज्ज्ञानविषयकज्ञानसापेक्षत्वोपपादनायाह ।। **तच्छब्देनेति** ।। **मात्रमिति** ।। ग्राह्यप्रामाण्या-श्रययत्किञ्चिज्ज्ञानमित्यर्थः। पूर्वज्ञानस्य ग्राह्यप्रामाण्याश्रयत्वलाभाय सापेक्षत्वोपपादनाय चाह ।। **समानेति** ।। प्रामाण्यस्य भिन्नत्वे तज्ज्ञानसापेक्षत्वायोगात्। ततश्च किमित्यत आह ।। **एवञ्चेति** ।।

तत्पदेनोक्तरूपज्ञानमात्रेऽभिमते सति प्रामाण्यस्यैकत्वे च सतीत्यर्थः ।। **सापेक्षत्वादिति** ।। प्रामाण्यरूपविशेषणोपनायकत्वेनेति भावः ।। **साध्यवैकल्यमिति** ।। ज्ञानप्रामाण्यं तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वेति विप्रतिपत्तौ तादृशज्ञानग्राह्यत्वस्यैव स्वतस्त्ववादिना साध्यत्वात्। तस्य च द्वितीयज्ञानप्रामाण्येऽभावेन तदनुव्यवसाये तज्ज्ञानविषयकज्ञानाजन्यत्त्वे सति स्वग्राह्यज्ञानप्रामाण्यविषकत्वरूपसाध्यस्य अभावादिति भावः। परोक्तस्वतस्त्वेपि न दोष इत्याह ।। **तज्ज्ञानेति** ।। दृष्टान्ते साध्यानुगमार्थं स्वग्राह्यज्ञानप्रामाण्यविषयक इत्येव साध्यकरणेपि त्वदभिमतविशिष्टसाध्यसिद्धिः हेतोः पक्षधर्मतया स्यादेव। निष्कम्पप्रवृत्तिहेतुव्यवसायविषयकानुव्यवसायत्वादिरूपहेतुना प्रथमज्ञानगोचरानुव्यवसायरूपपक्षनिष्ठेन प्रामाण्यविषयकत्वं सिध्यत् अनुव्यवसायस्य तज्ज्ञानविषयकज्ञानानपेक्षत्त्वादुक्तरूपमेव सिध्यतीति भावः।

अनुमित्यादिप्रामाण्यं स्वत इति प्राचीनमतानुरोधेनाह ।। **यद्वेति** ।। एतेन भिन्नभिन्नदृष्टान्तकथनेन मन्मते सर्वत्र स्वतस्त्वमिव त्वन्मते न सर्वत्र प्रामाण्यस्य परतस्त्वम्। क्वचित्स्वतस्त्वस्य अभ्युपगमात्। तथाच किमर्धजरतीयेन सर्वत्रापि स्वतस्त्वमेवोपेयमिति सूचितम्।

ननु मणौ ''यत्त्वनुमानस्य निरस्तसमस्तभ्रमाशङ्कस्य स्वत एव प्रामाण्यग्रह इत्युक्तमाचार्यैः तद्धूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यनियतमनुव्यवसाये चोपनीतम् ततो विशेषदर्शनान्न तत्राप्रमाण्यशङ्केति। प्रामाण्यनिश्चयादिवाप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पव्यवहार इत्यभिप्रायम्'' इति प्राचीनमतस्यान्यथातात्पर्यस्योक्तत्वात्कथं तन्मतेऽयंदृष्टान्त इति भावेनाशङ्क्य तेनाप्यङ्गीकारयति ।। **नचेत्यादिना** ।। **संशयेति** ।। अनुमितिः प्रमा न वेति संशयः अप्रमैवेति विपर्ययः प्रमा न भवतीति प्रामाण्यव्यतिरेकविषयप्रमा वा स्यात्। तद्विरोधिनः प्रामाण्यनिश्चयस्यानुदयादित्यर्थः। न चेष्टापत्तिः। निरस्तसमस्तविभ्रमेत्युक्तिविरोधात्। व्यतिरेकप्रमापत्तेरनिष्टत्वाच्चेति भावः। अत एव न धर्म्यज्ञानादिनोपपत्तिः। कदापि विभ्रमाभावोपगमात्। अत्र संशयविपर्यययोरेकराशीकरणात् अन्यतरेति साधु।

## तर्कताण्डवम्

**ननु वह्निज्ञानप्रामाण्यनियतस्य धूमवद्विशेष्यकत्वे सति वह्निप्रकारकत्वस्यानुमित्यनुव्यवसायेन ग्रहणात्तत्रासंशय इति चेन्न। अनुमितेर्वह्निमत्वमात्रविषयकत्वेन बहिरर्थस्य धूम-**

**वत्वस्योपनायकाभावेनानुव्यवसायाविषयत्वात्।**

**न च लिङ्गपरामर्शस्तदुपनायकः। यत्रानुमितिद्वयेच्छा तत्र परामर्शानन्तरं प्रथमानुमितिरूपसाध्यसिद्धेः सत्वेप्यनुमित्सा-धीनपक्षतायाः सत्वेनानुमित्यनन्तरं तदनुव्यवसायकाले उपनायकपरामर्शनाशात्। ज्ञानान्तरोपनीतस्य ज्ञानान्तरानु-व्यवसायेन ग्रहणेऽतिप्रसङ्गाच्च। वह्निमनुमिनोमीत्यनु-व्यवसायेन धूमवत्वस्यानुल्लेखनात्।**

**एतेनैव धूमवत्वे परामर्शोपनीतेऽनन्तरं वह्निमत्व-विषयत्वेन जायमानाऽनुमितिः सुरभि चन्दनमिति ज्ञानवद्विशिष्टवैशिष्ट्यज्ञानसामग्रीमहिम्ना लिङ्गोपहित-लैङ्गिकविषयेति सैवोपनायकेति निरस्तम्। अनुमितेः वह्निमत्वमात्रविषयत्वानुभवबलेन प्रत्यक्षज्ञान एव सामग्री-महिम्नः सङ्कोचात्। असङ्कोचे वा धूमवति धूमप्रकारकत्व-रूपस्य प्रामाण्यस्यानुमित्यनुव्यवसायेन ग्रहणे धूमवत्त्वांशे अनुमितेः स्वतः प्रामाण्याद् दृष्टान्तसिद्धिः। किञ्चैवं वह्निमत्वांशस्य साक्षादनुमित्युपनीतत्वाद्वह्निमद्विशेष्यकत्वे सति वह्नित्वप्रकारकत्वरूपं प्रामाण्यमेवानुमित्यनुव्यवसा-यस्य विषयोऽस्त्विति न साध्यवैकल्यम्।**

## न्यायदीपः

मण्युक्तमेव संशयादिनिवृत्युपायमाशङ्कते ॥ **नन्विति** ॥ **नियतस्येति** ॥ यत्र धूमवद्वि-शेष्यकत्वे सति वह्निप्रकारकत्वं तत्र वह्निमद्विशेष्यकत्वे सति वह्निप्राकारकत्वमिति व्याप्तेरिति भावः। किं धूमवद्विशेष्यकत्वमनुमित्युपनीतमेव तदनुव्यवसायेन गृह्यत इत्युच्यते अथ परामर्शोपनीतमिति हृदि विकल्प्याद्यं निराह ॥ **अनुमितेरिति** ॥ **उपनायकेति** ॥ अनुव्यवसाये भासकाभावेनेत्यर्थः। उपलक्षणं चैतत्। प्रामाण्यनियतस्यापि तत्वेनाभाने संशयानिरासात्। धूमवद्विशेष्यकत्वादेः वह्निमद्विशेष्यकत्वव्याप्यत्वस्य बहिरर्थस्यानुमितौ सर्वथा भानाभावेन तदनुव्यवसाये तस्योपनायका-

भावेनानुव्यवसायाविषयकत्वादित्यपि ध्येयम्। यत्तु प्रामाण्यव्याप्यस्य स्वरूपेणैव ज्ञानं संशयादिविरोधीत्येतदिहैव अनन्यगत्या कल्प्यत इति तन्न। स्वतस्त्वेनाप्युपपत्या अनन्यगतेरभावात्।

द्वितीयं निराह **॥ न चेति ॥ अनुमितिद्वयेच्छेति ॥** ननु पूर्वं ममानुमितिद्वयं स्यादितीच्छा पश्चाल्लिङ्गपरामर्शः पश्चादनुमितिः। अनन्तरं द्वितीयानुमित्युत्पत्तिवेलायां धूमवत्त्वोपनायकस्य परामर्शस्यानाशेऽपि द्वितीयोत्पत्तिसमये पूर्वोत्पन्नेच्छाया अभावादनुमित्साया अभावेन द्वितीयानुमित्युत्पाद एवायुक्त इति चेन्न। अनुमित्सापदेनानुमित्साविषयसिध्यननुगुणानन्तरितत्वस्य विवक्षितत्वात्। तथैव पक्षतालक्षणेऽभिधानादिति भावः। पक्षताया इत्युपलक्षणम्। विनश्यदवस्थपरामर्शभावादित्यपि ध्येयम्।

**॥ अनुमित्यनन्तरमिति ॥** द्वितीयानुमित्युत्पत्त्यनन्तरमित्यर्थः। अनुमित्यन्तरमिति पाठे जायत इति शेषः। ननु तदा परामर्शनाशेपि तज्जन्यसंस्कारसहितानुव्यवसायस्यास्तु तद्ग्रहणमित्यत आह **॥ ज्ञानान्तरेति ॥** घटज्ञानानुव्यवसाये पटज्ञानोपनीतस्य भानापत्तेरित्यर्थः। ननु तदुपनीतस्य तज्जन्यज्ञानान्तरानुव्यवसायेन ग्रहणमित्युक्तौ न दोष इत्यत आह **॥ वह्निमिति ॥** एतेन परामर्शनिष्ठप्रामाण्यानुमित्युपनीतं धूमवद्विशेष्यकत्वमिति प्रत्युक्तम्॥ **सैवेति ॥** अनुमितिरेवेत्यर्थः।

एतेनैवेत्युक्तं व्यनक्ति **॥ अनुमितेरित्यादिना ॥ स्वत इति ॥** ज्ञानानुव्यवसायवेद्यप्रामाण्यकत्वरूपस्वतः प्रामाण्यादित्यर्थः **॥ दृष्टान्तेति ॥** धूमवत्वांशे अनुमित्यनुव्यवसायवदिति दृष्टान्तेत्यर्थः। नन्वेवं तत्रेव क्वापि विप्रतिपन्नप्रामाण्यमनुव्यवसायवेद्यं न स्यात्। संशयाद्यभावस्य ज्ञानानुव्यवसाये प्रामाण्यव्याप्यविषयकत्वादेवोपपत्तेः। तत एव निष्कम्पप्रवृत्युपपत्तेश्चेत्यत आह **॥ किञ्चैवमिति ॥** धूमवत्वांशे स्वतः प्रामाण्ये सतीत्यर्थः **॥ साक्षादिति ॥** धूमवत्वांश इव ज्ञानान्तरनैरपेक्ष्येणेत्यर्थः। प्रामाण्यमेवेत्येवकारेण प्रामाण्यांश एव संशयाद्यभावस्योपगमेन तत्रैव तन्निश्चयस्वीकारो युक्तो न तु व्याप्यांशे तन्निश्चयस्वीकारः प्रामाण्यव्याप्यत्वेनापि तन्निश्चयावश्यम्भावश्चेत्याचष्टे।

## तर्कताण्डवम्

**यद्वा अहं सुखीति ज्ञानप्रामाण्यं तदनुव्यवसायविषयः तस्मिन् सत्यप्रकाशमानत्वरहितत्वात् व्यवसायवत्। न चासिद्धिः। तथात्वे तत्प्रामाण्ये कदाचित्संशयाद्यापातात्।**

**वस्तुतस्तु तद्वति तत्प्रकारकत्वरूपं याथार्थ्यमेव प्रामाण्यं तज्ज्ञानस्यैव प्रवर्तकत्वात्। तत्रानुव्यवसायस्य व्यवसायगतं यत्किञ्चिद्विशेष्यकत्वं रजतत्वप्रकारकत्वं ज्ञानत्वं च विषय इत्यत्र न विवादः। किन्तु विशेष्यस्य यद्रजतत्ववैशिष्ट्यं तद्द्विषयकत्व एवेति तदेव साध्यते।**

**निष्कम्पप्रवृत्तिहेतुव्यवसायविषयभूतं धर्मधर्मिवैशिष्ट्यं सत्तयाऽनुव्यवसायविषयः निष्कम्पप्रवृत्तिहेतुव्यवसाय-विषयत्वात् विशेष्यवत्। नचाप्रयोजकता। वैशिष्ट्यप्रतीति-सामग्र्या वक्ष्यमाणत्वात्।**

## न्यायदीपः

एवं प्राचीनमतेऽविप्रतिपन्नं नवीनमते प्रसाध्याङ्गकं दृष्टान्तमुक्त्वा प्रयोग उक्तः। अधुना नवीनमतेप्यविप्रतिपन्नदृष्टान्तकं प्रयोगमाह ॥ **यद्वेति** ॥ यद्वा पूर्वमनुव्यवसायपक्षकान् प्रयोगानुक्त्वा इदानीं तद्विषयपक्षकप्रयोगावाह ॥ **यद्वेति** ॥ **वस्तुतस्त्विति च** ॥

यद्वा तद्वत्वादेर्बाह्यार्थस्य नानुव्यवसायविषयतेत्यतस्तर्हि सुखत्ववत्त्वादेरबाह्यत्वात्तत्रास्तु स्वतो वेद्यतेति भावेनाह ॥ **यद्वेति** ॥ **विषय इति** ॥ सत्तयेत्यपि ध्येयम्। तस्मिन्नित्यनेन तदनुव्यवसायपरामर्शः। साध्याविशेषनिरासाय नञ्द्वयम् ॥ **तथात्व इति** ॥ ज्ञानानुव्यवसाये सति तत्प्रमाण्याप्रकाश इत्यर्थः। धर्म्यज्ञानाभावात्कोटिस्मृतेरपि कदाचित्सम्भवादिति भावः।

ननु "आन्तरप्रामाण्यमपि न स्वतः। तस्य स्वतस्त्वे वा न सर्वस्य तथात्वम्। विशेष्यनिष्ठा-त्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नत्वादिकं प्रामाण्यम् स्वतो गृहीतुमशक्यमिति परत एव गृह्यत" इति मणिकृदुक्तेःकथमनुव्यवसायवेद्यतासाधनमित्यतस्तत्स्वरूपं निर्धारयन्नेव विशिष्याप्याह ॥ **वस्तुतस्त्विति** ॥ **तद्वतीति** ॥ विशेष्यत्वं सप्तम्यर्थः। तद्वद्विशेष्यकत्वे सति तत्प्रकारक-ज्ञानत्वरूपेत्यर्थः। तद्वद्विशेष्यकत्वमात्रस्य भ्रमेऽपि सत्वात्।

॥ **निष्कम्पेति** ॥ सशङ्कप्रवृत्तिहेतुव्यवसायविषये बाधनिरासाय हेत्वन्तं व्यवसायविशेषणम्। हेतौ च व्यभिचारनिरासाय। वैशिष्ट्यं च परमते समवायादिभिः सिद्धान्ते स्वरूपसम्बन्धादिभिः। यन्मते वैशिष्ट्यमनुव्यवसायविषयोपि न स्वातन्त्र्येण तद्विषय इत्यभ्युपगमस्तन्मते सिद्धसाधनता-

निरासाय सत्तयेति विशेषणम्। वादिनं प्रति तत्सार्थक्यमाद्यसाध्यविवृतावस्माभिरुक्तं ध्येयम् ॥ **वैशिष्ट्येति** ॥ सत्तयेत्यपि योज्यम्॥ **वक्ष्यमाणत्वादिति** ॥ उत्तरभङ्गबाधोद्धारे नन्वेवमित्यादि-ग्रन्थेनेत्यर्थः। तथाच तादृशव्यवसायविषयत्वस्यैवोक्तसाध्ये सामग्रीत्वेन सामग्रीमुपेत्य कार्या-नभ्युपगमे व्याघातप्रसङ्गान्नाप्रयोजकत्वमित्यर्थः।

## तर्कताण्डवम्

**यद्वा विमतोऽनुव्यवसायः स्वग्राह्यज्ञानप्रामाण्यविषयीकरणयोग्यः। अनुव्यवसायत्वात्। गृहीतप्रामाण्यज्ञानसमानविषयकज्ञानान्तरानुव्यवसायवत्। अनुमित्यनुव्यवसायवद्वा। व्यवसायविषयभूतं धर्मधर्मिवैशिष्ट्यं वा स्वविषयव्यवसायविषयकानुव्यवसायं प्रति सत्तया विषयत्वयोग्यं व्यवसायविषयत्वात् विशेष्यवत्; तत्तज्ज्ञानप्रामाण्यं वा स्वाश्रयज्ञानविषयकानुव्यवसायविषयत्वयोग्यं तद्विषयत्वायोग्योपाध्यघटितज्ञानधर्मत्वात् तत्तज्ज्ञानत्ववदिति सामान्यतः स्वतस्त्वं साध्यम्।**

**नचान्त्यहेतोरसिद्धिः। प्रामाण्योपाधेर्विषयसत्वस्य व्यवसायविषयत्वेनानुव्यवसायविषयत्वयोग्यत्वात्। योग्यायोग्योपाधिघटिते प्रमाप्रमान्यतरत्वादौ व्यभिचारनिरासाय नञ्द्वयम्।**

## न्यायदीपः

द्वितीयनिरुक्त्यनुरोधेन प्रयोगत्रयमाह॥ **यद्वेति** ॥ इति सामान्यतः स्वतस्त्वं साध्यमित्यन्वयः। तत्राद्यमनुव्यवसायपक्षकम्। उत्तरं तु द्वयं तद्विषयपक्षकम्। तत्राप्याद्यं व्यवसायविषयपक्षकम्। अन्त्यं तन्निष्ठप्रामाण्यपक्षकमिति व्यक्तम् ॥ **विमत इति** ॥ प्रामाण्यविषयीकरणयोग्यत्वतदयोग्यत्वाभ्यां विमतिविषयः। विमतेरपि नियतविषयत्वायावच्छेदकस्यापेक्षितत्वात्तदाह॥ **अनुव्यवसाय इति** ॥ वक्ष्यमाणदिशा तत्प्रकारप्रकारकत्वादिरूपानुव्यवसायत्वेन नियता लघ्वी विमतिरेव पक्षतावच्छे-

दिकेत्यर्थः। अत एव प्रमानुव्यवसाये न बाधादिः। वक्ष्यमाणरूपानुव्यवसायत्वस्य तत्राभावात्। बाधनिरासाय स्वग्राह्यज्ञानेति साध्यविशेषणम्। योग्यत्वं च स्वविषयज्ञानद्वारा प्रामाण्यावच्छिन्न-सहजशक्तिकत्वं ध्येयम्। वक्ष्यमाणरूपानुव्यवसायत्वादिति हेत्वर्थो ध्येयः। तेनाप्रमागोचरा-नुव्यवसाये न व्यभिचारः **॥ गृहीतेति ॥** अयं च दृष्टान्तो ''न च दृष्टान्तः साध्यविकलः'' इत्यादिना प्रागेव साधित इति भावः। प्राचीनमतरीत्याह **॥ अनुमितीति ॥** अयमपि दृष्टान्तो नवीनमतेऽपि प्राक्साधितः **॥ व्यवसायेति ॥** प्रमारूपो व्यवसायोऽत्राभिमतः **॥ विशेष्यवदिति ॥** तद्विशेष्य-वदित्यर्थः। ''प्रामाण्यं ज्ञानग्राहकमात्रग्राह्यं अप्रामाण्येतरज्ञानवृत्तिधर्मत्वात् ज्ञानत्ववत्'' इति।

''प्रत्यक्षवच्च प्रामाण्यं स्वत एव''इत्येतद्व्याख्यानसुधायामुक्तमनुमानं परिष्कृत्याह **॥ तत्तज्ज्ञानेति ॥ योग्यमिति ॥** ''योग्यत्वं च साक्षिनिष्ठां सहजां ग्रहणशक्तिं प्रति स्वविषयज्ञानद्वारा अवच्छेदकत्व'' मिति पूर्वोक्तं ध्येयम्। तद्विषयत्वायोग्योपाध्यघटितेत्युक्त्या सुधास्थाप्रामाण्येतर-पदार्थो विवृतः। तेन विशेष्यावृत्यप्रकारकत्वरूपप्रामाण्ये व्यभिचारो निरस्तः **॥ सामान्यतः ॥** प्रतिबद्धाप्रतिबद्धसाधारण्येनेति वा प्रामाण्यमात्रसाधारण्येनेति वा नत्वहं सुखीति ज्ञानप्रामाण्यमिति-वद्विशिष्येत्यर्थः। वैशिष्ट्यसत्वविषयकत्व एव विवादादाह **॥ विषयसत्वस्येति ॥ अन्यतरत्वादा-विति ॥** तद्विषयत्वयोग्योपाधिघटितज्ञानधर्मत्त्वादित्युक्तावुक्तस्थले हेतुसत्वेपि साध्याभावाद् व्यभिचारः प्राप्नोतीति तन्निरासाय तद्विषयत्वायोग्योपाध्यघटितेत्युक्तिरित्यर्थः। विशेष्यनिष्ठा-त्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नत्वतद्वति तप्रकारकत्वादिरादिपदार्थः। ज्ञानधर्मत्वादित्येवोक्ता-वप्रमात्वादौ व्यभिचार इति भावः।

## तर्कताण्डवम्

**अनुव्यवसायत्वं च व्यवसायप्रकारप्रकारकतया तत्प्रकारवद्विशेष्यकतया च तद्विषयकप्रत्यक्षत्वं वा ज्ञानांशे लौकिकप्रत्यक्षत्वं वेति न कश्चिद्दोषः। अप्रामाण्यं तु विसंवादाद्यनुसन्धाने सत्येव गृह्यत इति न स्वतस्तद्ग्रहः। प्रामाण्यधीस्तु संवादाद्यनुसन्धानं विनाऽपि दृष्टेति विशेषः।**

## न्यायदीपः

नन्वत्र सर्वानुमानेष्वभिमतमनुव्यवसायत्वं यदि ज्ञानगोचरज्ञानत्वं तदा ज्ञानमिति शब्दजज्ञाने

बाधादिर्दोषः। सविषयकज्ञानगोचरज्ञानत्वे तु घटज्ञानमिति शाब्दज्ञाने दोषः। ज्ञानगोचरप्रत्यक्षत्वे त्वप्रमागोचरानुव्यवसाये सामान्यप्रत्यासत्तिजन्यज्ञानगोचरप्रत्यक्षे च बाधादिरेव। ज्ञानगोचरनित्य-ज्ञानत्वे ईश्वरज्ञानमादाय सिद्धसाधनतेत्यत आह ॥ **अनुव्यवसायत्वं चेति** ॥ एतेन ''तार्किका-भिमतानुव्यवसाय एवास्माकं साक्षीति'' प्रागुक्तं विवृतं ध्येयम्। अत्र दलद्वयकृत्यं प्रागेव व्यक्तम्।

ननु यदि व्यवसायप्रकारप्रकारकतयेत्यादिरूपमनुव्यवसायत्वं तर्हीदमेव प्रामाण्यविषयकत्व-मिति सिद्धसाधनतादोष इति चेन्न। सत्तया प्रमाण्योल्लेखस्यास्मिन्पक्षे साध्यस्याभिमतत्वात्। यदा तु प्रामाण्यविषयकत्वमात्रमेव साध्यमिति मतं तत्पक्षे प्रकारान्तरेणाह ॥ **ज्ञानांश इति** ॥ लौकिकत्वं तु सामान्यप्रत्यासत्त्याद्यजन्यत्वम्। ज्ञानांश इति विशेषणं तु स्मृत्युपनीत अतीतघटज्ञाने तद्विषयकमहं घटज्ञानवानिति यज्ज्ञानमात्मांशे लौकिकप्रत्यक्षं तत्र बाधादिनिरासायेति भावः। नन्वेवं ज्ञानधर्मत्वबाह्यार्थत्वयोरविशेषाद्विसंवादसंवादापेक्षत्वस्योभयत्र साम्यादप्यप्रामाण्यमपि स्वतो गृह्येतेति ततः कः प्रामाण्यस्य विशेष इत्यत आह ॥ **अप्रामाण्यं त्विति** ॥ विवरिष्यते चैतत्प्रामाण्यानुमित्यसम्भववादे ॥ **दृष्टेति** ॥ अभ्यासदशापन्नस्थल इति भावः।

## तर्कताण्डवम्

**ननु गृहीताप्रामाण्यज्ञानसमानविषयकज्ञानान्तरा-प्रामाण्ये संशयादर्शनेन तत्रानुव्यवसायवेद्यत्वे सिद्धेऽन्यत्रापि तथेत्यप्रामाण्यधीरपि स्वतः स्यादिति चेन्न। अप्रामाण्योपाधेः व्यवसायविषयाभावस्य तदनुपनीतत्वेनानुव्यवसाया-योग्यत्वात्। तदुक्तं भगवत्पादैः ''प्रामाण्यं च स्वत एव अन्यथानवस्थानात्'' इति। ज्ञायत इति शेषः। उक्तानुमान-साध्यानि विनोक्तहेतूनां पक्षेऽवस्थित्ययोगादित्यर्थः।**

**स्वतस्त्वेऽनुमानानि ॥ ३ ॥**

## न्यायदीपः

ननु अनुव्यवसायः स्वग्राह्यज्ञानाप्रामाण्यविषयीकरणायोग्यः अनुव्यवसायत्वात् गृहीता-

प्रामाण्यकज्ञानसमानविषयकज्ञानान्तरानुव्यवसायवदित्याभाससाम्यमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **व्यवसायेति** ॥ व्यवसाये इदं रूप्यमित्यादिभ्रमे अविषयो योऽभावो रजतत्वाभावः तस्येत्यर्थः। तदभाववति तत्प्रकारकत्वरूपत्वादप्रामाण्यस्य तद्धटकोपाधिरूपस्याभावस्येदं रूप्यमिति ज्ञानेऽनुल्लेखेन नेदं रूप्यमिति ज्ञान एवोल्लेखेन कथं तस्यानुव्यवसाययोग्यत्वम्। तथा च तत्र बाध एव दोष इति भावः ॥ **तदुक्तमिति** ॥ स्वतस्त्वे एतान्यनुमानान्यनवद्यानीत्येतद् विष्णुतत्वनिर्णय उक्तमित्यर्थः। तत्पठित्वा प्रकृतानुगुणमर्थमाह ॥ **प्रामाण्यं चेति** ॥

स्वतस्त्वेऽनुमानानि ॥ ३ ॥

## स्वतस्त्वानुमानेषु बाधोद्धारः।

### तर्कताण्डवम्

ननूक्तरूपं याथार्थ्यं न साक्षिणो अनुव्यवसायस्य वा विषयः। रजतत्वप्रकारकत्वे सन्देहादर्शनेन तस्य तद्विषयकत्वेऽपि रजतत्ववद्विशेष्यकत्वे सन्देहदर्शनेन रजतत्ववत्वरूपे बहिरर्थे तस्य असामर्थ्यात्। तथाच स्वतस्त्वानुमानानि बाधितविषयाणीति चेन्न। सुखत्ववत्वादेर्बहिरर्थत्वाभावेन साक्षिवेद्यसुखादिज्ञाने स्वतः प्रामाण्याप्रतिहतेः।

किञ्च किं रजतत्वादिवैशिष्ट्यमनुव्यवसायाविषय एव किं वा व्यवसायविषयतया तद्विषयोपि स्वातन्त्र्येण तदविषयः। नाद्यः। अनुव्यवसायस्य ससम्बन्धिकव्यवसायविषयकसाक्षात्कारत्वेन सम्बन्धितावच्छेदकरजतत्वादिवैशिष्ट्यविषयकत्वनियमात्। धर्मधर्म्यंशयोरिव तद्वैशिष्ट्यांशेपि व्यवसायप्रत्यासत्तेः सत्वेन तदप्रतीतौ हेत्वभावाच्च। रजतं जानामीत्यनुव्यवसायेपि रजतरजतत्वयोः स्वरूपेणैव भाने तस्य पुरोवर्तिरजतत्वे जानामीति समूहालम्बनरूपानुव्यव-

**सायाद् विषयभेदाभावापाताच्च। व्यवसायगतस्य रजतत्व-वैशिष्ट्यविषयकत्वस्य असिद्ध्यापाताच्च। नह्यनुव्यवसायात् अन्येन तत्सिद्धिः। न च वैशिष्ट्यमगृह्णन्ननुव्यवसायः तद्विषयकत्वग्रहणे शक्तः।**

## न्यायदीपः

ननु अप्रामाण्यघटकोपाधेरभावस्य व्यवसायाविषयतया तदनुव्यवसायवेद्यत्वमप्रामाण्यस्य बाधितमिति यथोच्यते तथैव प्रामाण्यघटकोपाधेर्धर्मधर्मिवैशिष्ट्यस्य व्यवसायविषयत्वेपि न तदनुव्यवसायविषयता। तस्य बहिरर्थत्वात् अन्यथा धर्मधर्म्यंश इव वैशिष्ट्ये अस्ति न वेति कदापि सन्देहो न स्यादिति भावेन ''अस्तु तावदिदं प्रामाण्यं तथाप्यनुव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये अर्थस्य तद्वत्वे च संशयस्यानुभवसिद्धत्वान्नार्थतद्वत्त्वं तस्य विषयः'' इति मणिकृदुक्तं हृदि कृत्वा शङ्कते ॥ **नन्विति** ॥ **उक्तेति** ॥ तद्वति तत्प्रकारकज्ञानत्वरूपमित्यर्थः। वक्ष्यमाणोपपादनसौकर्याय एतदुक्तिः। स्वरूपज्ञानं साक्षीति सिद्धान्तावष्टम्भेनाह ॥ **साक्षिण इति** ॥ मानसज्ञानानुभवो अनुव्यवसाय इति मतावष्टम्भेनाह ॥ **अनुव्यवसायस्य वेति** ॥ तद्वद्विशेष्यकत्वसन्देहस्य तद्वत्वसन्देहपर्यवसानाद्रजतत्ववत्त्वरूपेत्युक्तम् ॥ **तस्येति** ॥ अनुव्यवसायस्येत्यर्थः।

सर्वप्रामाण्यस्य स्वतस्त्वानापत्तेराह ॥ **किञ्चेति** ॥ ''नार्थतद्वत्वं तस्य विषयः'' इति मण्युक्तेरुभयथा सम्भवात् स्वातन्त्र्येणेति कैश्चिद्व्याख्यानाच्च द्वेधा विकल्पः ॥ **सम्बन्धितेति** ॥ व्यवसायसम्बन्धिनि रजते या सम्बन्धिता तदवच्छेदकेत्यर्थः ॥ **नियमादिति** ॥ संयोगप्रत्यक्षादौ तथा दर्शनादिति भावः। न च संयोगनिर्विकल्पके व्यभिचारः। तदभावस्य वक्ष्यमाणत्वात्। तस्यापि संयोग्यंशे सविकल्पकत्वाच्च। साक्षात्कारपदेनासाधारणधर्मप्रकारेण ससम्बन्धिकसाक्षात्कारस्य अभिप्रेतत्वाच्च। अत एव गुणत्वप्रमेयत्त्वादिसामान्यप्रत्यासत्तिजन्ये ससम्बन्धिकसंयोगादि-साक्षात्कारे न व्यभिचारः। न चैवमपि संयोगत्वसामान्यप्रत्यासत्तिजन्ये संयोगसाक्षात्कारे व्यभिचारः। एवं हि लौकिकेत्यपि साक्षात्कारो विशेषणीयः ॥ **धर्मेति** ॥ बाह्यार्थत्वेपि रजतस्थं रजतत्वं तदाधारभूतं विशेष्यं च यथानुव्यवसायस्य विषयः तथा रजते रजतत्ववैशिष्ट्यमपि विषयोऽस्तु, तयोर्व्यवसायोपनीतत्वे तद्वत्वस्यापि व्यवसायोपनीतत्वमस्तु, न हि व्यवसायः स्वविषयमध्ये धर्मधर्मिणोरेवोपनायको न वैशिष्ट्यस्येत्यत्र हेतुरस्तीत्यर्थः। प्रत्यासत्तेरिति पररीत्योक्तम्। व्यवसायविषयत्वस्य नियामकस्य सत्वेनेति वार्थः। ननु धर्मधर्म्यंशयोः संशयो न कदाचित् तद्वत्वांशे

तु सोऽस्तीति संशय एव तदप्रतीतौ हेतुकल्पक इति चेन्न। तस्यान्यथोपपत्तेर्वक्ष्यमाणत्वादिति भावः।

ननु वैशिष्ट्यस्यापि भाने भासमानवैशिष्ट्यप्रतियोगित्वरूपस्य रजतत्वादिगतस्य प्रकारत्वस्यापि भानप्रसङ्गेनेदं रजतत्वेन जानामीत्येवानुव्यवसायो भवेन्नत्विदं रजतं जानामीत्यत आह ।। **रजतमिति** ।। अपीत्यभ्युपगमवादः। रजतत्वेनेत्येवाकारो नत्वेवं तथापीत्यर्थः। यद्वा वैशिष्ट्यस्यानुव्यवसायाविषयत्वे दोषान्तरमाह ।। **रजतमिति** ।। न केवलं समूहालम्बन इत्यपेरर्थः। इदं रजतमिति व्यवसायसमानाकारतयोत्पद्यमानेपीति वार्थः ।। **स्वरूपेणैव** ।। असम्बद्धतयैवेत्यर्थः ।। **असिद्धीति** ।। रजतरजतत्वयोः स्वरूपेणैव भान इत्यनुकर्षः ।। **तद्विषयकत्वेति** ।। वैशिष्ट्य-विषयकत्वेत्यर्थः।

## तर्कताण्डवम्

**ननु वैशिष्ट्यविषयकव्यवहारादिलिङ्गकानुमित्या व्यवसायप्रामाण्यानुमित्या वा तत्सिद्धिः। न त्वनुव्यवसायेन। इदं रजतत्वेन जानामीति हि तदाकारो नत्विदं रजतमिति। तृतीयार्थश्च न वैशिष्ट्यम्। व्यवसायेऽपि तदर्थोल्लेखापत्तेः। किं तु व्यवसायगतं रजतत्वप्रकारकत्वम्। तस्माद्वैशिष्ट्यं नानुव्यवसायविषय इति चेन्मैवम्। वैशिष्ट्यविषयकत्वस्य अनुमेयत्वेऽनुमितितः प्राक्तत्र कदाचित्संशयाद्यापातात्। भासमानवैशिष्ट्यप्रतियोगित्वादन्यस्य प्रकारत्वस्याभावेनेदं रजतत्वेन जानामीत्याकारेणैवानुव्यवसाये धर्मधर्म्यंश-विषयकत्वस्येव वैशिष्ट्यविषयकत्वस्यापि भानेऽनुभवसिद्धे तत्त्यागेनान्यतस्तत्सिद्धिकल्पने धर्मधर्म्यंशविषयकत्वस्यापि अन्यतः सिद्धिकल्पनापाताच्च। न च व्यवसायस्य वैशिष्ट्य-विषयकत्वमगृह्णन् धर्म्यंशादिविषयकत्वमात्रं गृह्णन्नन्योऽनु-व्यवसायोऽनुभूयते।**

**न च व्यावर्तकत्वं वा तज्ज्ञानजनकज्ञानविषयत्वं वा**

विशेष्यानिष्ठो रजतत्वादिनिष्ठो ज्ञानेन सह स्वरूपसम्बन्धविशेषो वा प्रकारत्वमिति वाच्यम्। बहिरर्थानां तेषां वैशिष्ट्यवद्व्यवसायविषयत्वाभावेनानुव्यवसाये भानायोगात्। क्लृप्तस्य भासमानवैशिष्ट्यप्रतियोगित्वस्य त्यागेन स्वरूपसम्बन्धविशेषकल्पनायोगाच्च। इदं रजतत्वविशिष्टतया जानामीत्यनुव्यवसायाच्च। व्यवसायस्य त्वदुक्तरजतत्वप्रकारकत्वेनैवेदं रजतमित्याकारस्येदं रजतमित्यभिलपनं रजतार्थिप्रवृत्तिं च प्रति हेतुत्वस्य च सम्भवे तस्य वैशिष्ट्यविषयकत्वाभावापाताच्च।

अनुव्यवसाय एव तृतीयार्थोल्लेखस्तु तत्र वैशिष्ट्यभाने अप्यधिकस्य रजतत्वे व्यवसायं प्रति प्रकारत्वस्यापि भानात्। अत एवानुव्यवसायस्येदं रजतमित्याकारत्वाभावोऽपि। वैशिष्ट्यस्य स्वातन्त्र्येणाभानात्।

## न्यायदीपः

॥ **व्यवहारादीति** ॥ प्रवृत्तिरादिपदार्थः। व्यवसाये वैशिष्ट्यविषयकः तद्विषयव्यवहारप्रवृत्तिहेतुत्वात् सम्मतवदित्यनुमित्या इदं ज्ञानं प्रमाणं समर्थप्रवृत्तिहेतुत्वादित्यादिप्रामाण्यानुमित्या वेत्यर्थः। तद्वद्विशेष्यकत्वस्य प्रामाण्यरूपत्वादिति भावः ॥ **तत्सिद्धिः** ॥ व्यवसाये वैशिष्ट्यविषयकत्वसिद्धिरित्यर्थः। ''इदं रजतं जानामीति नानुव्यवसायाकारः। बहिर्विशेष्यके मनसोऽसामर्थ्यात्। किं त्विदं रजतत्वेन जानामीति'' त्यादिमण्युक्तमाह ॥ **इदं रजतत्वेनेति** ॥ **वैशिष्ट्यविषयकत्वस्य इति** ॥ व्यवसायगतस्येत्यनुषङ्गः ॥ **धर्म्यंशेति** ॥ इदन्त्वविशिष्टेदमंशविषयकत्वस्येवेत्यर्थः। विशेष्यांशेति वार्थः ॥ **अन्यत इति** ॥ अनुव्यवसायादन्यतो व्यवहारादिलिङ्गतो व्यवसाय प्रामाण्यानुमितितो वेत्यर्थः। संशयाभावतद्भावौ त्वन्यथोपपन्नाविति भावः। ननु तदंशेऽनुव्यवसायान्तरतः सिद्धिरनुभवसिद्धेत्यतो निराह ॥ **न चेति** ॥

अन्यस्य प्रकारत्वस्याभावेनेत्येतस्यासिद्धिमाशङ्क्य निराह- **नच व्यावर्तकत्वमित्यादिना।** विशेष्यनिष्ठव्यनिष्ठव्यावृत्तिबुद्धिजनकत्वं व्यावर्तकत्वं ॥ **तज्ज्ञानेति** ॥ वैशिष्ट्यज्ञानेत्यर्थः।

विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वादिति भावः ॥ **वैशिष्ट्यवदिति** ॥ वैशिष्ट्यस्य यथा व्यवसायविषयत्वं तथाऽभावेनेत्यर्थः। वैशिष्ट्यस्य बाह्यार्थत्वेऽपि व्यवसायविषयत्वात् तत्प्रतियोगित्वरूपप्रकारत्वस्यानुव्यवसाये भानं युक्तमिति भावः। ज्ञानेन सह स्वरूपसम्बन्धविशेषो न बहिरर्थ इत्यत आह ॥ **क्लृप्तस्येति** ॥ अतीतादिस्थले व्यावृत्तिबुद्धिजनकत्वरूपव्यावर्तकत्वायोगात्। विशेषणज्ञानाहेतुत्वपक्षे च द्वितीयस्यायोगेन तत्र भासमानेत्यादिरूपस्यैव प्रकारत्वस्य क्लृप्तत्वादिति भावः। "वैशिष्ट्यविषयकत्वस्यापि भानेऽनुभवसिद्धे" इति प्रागुक्तमसिद्धमित्यत आह ॥ **इदं रजतत्वेति** ॥

ननु इदंविशेष्यकरजतत्ववैशिष्ट्यप्रकारकज्ञानवानहमित्यनुव्यवसायादिति ह्यस्यार्थः। न च वैशिष्ट्यं व्यवसाये प्रकारः। प्रागनुपस्थितत्वेन संसर्गमर्यादयैव भानादिति चेन्न। विशेषणज्ञानहेतुताया निर्विकल्पकभङ्गे निरसिष्यमाणत्वेन प्रागनुपस्थितस्यापि वैशिष्ट्यस्य व्यवसाये रजतत्वस्येव प्रकारतया भाने बाधकाभावादिति भावः। एवंरूपानुव्यवसाये विप्रतिपत्तिरिति चेत्तर्हीदं रजतत्वेन जानामीत्याकारोऽपि वैशेष्ट्याभानेप्युपपद्यतामित्यतिप्रसङ्ग इत्याह ॥ **व्यवसायस्येति** ॥ इत्याकारस्य हेतुत्वस्य च सम्भव इत्यन्वयः।

वैशिष्ट्यस्य तृतीयार्थत्वे व्यवसायेपि तृतीयार्थोल्लेखापत्तेरिति प्रागुक्तदोषं निराह-**अनुव्यवसाय एवेति** ॥ **प्रकारत्वस्येति** ॥ भासमानवैशिष्ट्यप्रतियोगित्वरूपस्येत्यर्थः। व्यवसाये त्वात्माश्रयापत्तेः नोक्तरूपप्रकारत्वस्य भानमिति भावः। वैशिष्ट्यस्यापि भाने व्यवसायसमानाकारता स्यादित्यत आह ॥ **अत एवेति** ॥ अत एवेत्युक्तं व्यनक्ति ॥ **वैशिष्ट्यस्येति** ॥ **स्वातन्त्र्येणेति** ॥ व्यवसाय इव ज्ञानाविशेषणतयेत्यर्थः।

## तर्कताण्डवम्

**नन्वनुव्यवसाये वैशिष्ट्यस्य व्यवसायगतस्य रजतत्ववद् विषयकत्वस्य च भानेऽपि प्रामाण्यान्तर्गतं व्यवसायनिष्ठं रजतत्ववद्विशेष्यकत्वं न भासते। न च रजतत्ववद्विषयकत्वे सति रजतत्वप्रकारकत्वमेव प्रामाण्यम् मन्मते भ्रमसाधारण्यादिति चेन्न। रजतत्वे तृतीयार्थोल्लेखबलेन प्रकारकत्वस्येव रजतेऽपि द्वितीयार्थोल्लेखबलेन विशेष्यकत्वस्यानुव्यवसायेन**

**गृहीततया समानसंवित्संवेद्यतया च व्यवसाये तद्विशेष्यकत्वस्यापि ग्रहणात्।**

**अस्ति हि दोषशङ्काद्यवतारदशायामिदं रजतत्वेन जानामीत्यनुव्यवसायेऽपि तदनवतारदशायां रजतं रजतत्वेन जानामीत्यनुव्यवसायः। तस्मान्नाद्यः। द्वितीये सिद्धं प्रामाण्यस्य स्वतस्त्वम्। वैशिष्ट्यरूपस्य तद्वत्त्वस्याप्यनुव्यवसायेन ग्रहणात्।**

### न्यायदीपः

''बहिर्विशेष्यके मनसोऽसामर्थ्या''दिति मणौ विशेष्यपदप्रयोगसूचितं ''न च तन्मात्रं प्रामाण्यम्। भ्रमसाधारणत्वात्। किं नाम रजतत्ववद्विशेष्यकं रजतत्वप्रकारकमिदं ज्ञानं'' इत्यादिपक्षधरोक्तं हृदि कृत्वाशङ्कते ।। **नन्विति** ।। **न भासत इति** ।। मनसो बहिरसामर्थ्यादिति भावः। तद्विषयकत्वमेवास्तु प्रामाण्यम्। किं रजतत्ववद्विशेष्यकत्वेनेत्यत आह ।। **नचेति** ।। **मन्मते** ।। तार्किकमत इत्यर्थः। तन्मते शुक्तौ रजतत्वाद्यारोपे सति तदाश्रयस्य सत्यरजतस्यापि विषयत्वादिति भावः। द्वितीया विषयत्वरूपकर्मत्व एव शक्ता। न तु विशेष्यत्व इति वादिनं प्रत्याह ।। **समानेति** ।। प्रकारत्वविशेष्यत्वयोरिति वा प्रकारत्वतद्विशेष्यकत्वयोरिति वार्थः।

नन्वेवं भ्रमेऽपि प्रामाण्यापत्तिरिति चेत्कस्य दोषः। मन्मत इवासत एवारोपः स्वीक्रियताम्। तदनधिकरणाविशेष्यत्वादिकमधिकं वा निवेश्यतामिति भावः। रजते द्वितीयार्थोल्लेखोऽसिद्ध इत्यत उपपादयति ।। **अस्तीति** ।। न च बाह्यार्थेषु व्यवसायस्यासामर्थ्यम्। उपनायके सति सामर्थ्यसम्भवात्। न चोपनीतं विशेषणत्वेन भातीति नियमः। परमाणुमहं जानामीत्यादौ व्यभिचारादिति भावः ।। **सिद्धमिति** ।। स्वातन्त्र्येण ज्ञानग्राहकग्राह्यत्वस्य स्वतस्त्वनिरुक्तावप्रवेशात्। सत्वेन तथात्वस्य सत्वाच्चेति भावः।

### तर्कताण्डवम्

**नन्वेवमप्यनुव्यवसायस्य श्रुतसाक्षिवाक्यवदन्यविषयतया वैशिष्ट्यग्राहकत्वेपि तत्संशयविरोधित्वरूपं सत्ता-**

**निश्चयरूपत्वं नास्तीति न तद्घटितप्रामाण्ये निश्चयरूपता। न ह्यन्यविषयतयाप्यर्थग्राहकेणार्थसत्वसिद्धिः। गेहे घटमिच्छामि गेहे घटसंशयः गेहे घटज्ञानमित्यादिवाक्यजन्यज्ञानेन अपि घटसत्वसिध्यापातादिति चेन्न। यत्र ज्ञानस्यन्यद्वारेण अर्थविषयता तत्र द्वारिणा द्वारं सत्वेन अर्थविषयकमिति ग्रहणे द्वारिणोऽपि सत्वेनार्थविषयतेति दृष्टानुसारेण कल्पनेऽनतिप्रसङ्गात्। न हि द्वारमिच्छादिकं सत्वेनार्थविषयतया द्वारिणा ज्ञानेन गृहीतम्। दोषशङ्कादिना अनास्कन्दितो व्यवसायस्त्वनुव्यवसायेन तथा गृहीतः। गेहे घटज्ञानं साक्षिणा श्रुतवाक्यं च यदि सत्वेनार्थविषयतया द्वारिणा ज्ञानेन गृहीतं तदा तेनापि घटसत्वं सिद्ध्यत्येव। यदि च सव्यवधानत्वमात्रेण सत्वानिश्चायकत्वं तर्हि गेहे मम घटप्रमेत्याप्तवाक्यजन्यज्ञानेनापि घटसत्वं न सिध्येत्।**

## न्यायदीपः

नन्वर्थसत्वघटितस्यैव प्रामाण्यरूपत्वात्तस्यानुव्यवसायवेद्यता न प्राप्तेति भावेन शङ्कते ॥ **नन्विति** ॥ **श्रुतेति** ॥ साक्षिणा श्रुतं तेनोच्चरितं वाक्यं साक्षिवाक्यं तस्येवेत्यर्थः। गृहे घटोऽस्तीति श्रुणोमीत्यादिसाक्षिवाक्यस्येवेति यावत्। अन्यविषयतया व्यवसायविषयतयेत्यर्थः। व्यवसायो रजते रजतत्वमस्तीत्याह नाहं तज्जानाम्यस्ति न वेत्येवं रूपतयेति भावः ॥ **तद्घटितेति** ॥ वैशिष्ट्यसत्वघटितेत्यर्थः। अनुव्यवसायो नार्थसत्वावधारणरूपः अन्यविषयतया तद्ग्राहकत्वात् श्रुतसाक्षिवाक्यवदित्युक्तं भवति। हेतोरप्रयोजकत्वं निराह ॥ **नहीति** ॥ अन्यविषयतया वैशिष्ट्यग्रहणेपि तत्सत्वावधारणरूपत्वमनुव्यवसायस्याविरुद्धमिति वक्तुं सामान्यन्यायं च वदन्नतिप्रसङ्गं निराह ॥ **यत्रेति** ॥ पक्षे तद्दर्शयति ॥ **दोषेति** ॥ दुष्टकरणजन्यत्वशङ्का भ्रमत्वादिशङ्कादिनेत्यर्थः ॥ **तथेति** ॥ सत्वेनार्थविषयकतयेत्यर्थः। तर्हि पूर्वोक्तस्थलेप्येवं स्यादित्यत आह ॥ **गेह इति** ॥ इच्छासंशयग्राहिणोऽसत्वेनार्थविषयकतया द्वारग्रहणबाधाद्गेहे घटज्ञानमित्येवोक्तम्। एतेनानुव्यवसायः सत्तयार्थविषयकः सत्वेनार्थविषयकतया व्यवसायविषयकत्वात् तादृशं यद्गेहे घटज्ञानमिति ज्ञानं श्रुतं साक्षिवाक्यं च तद्वत्। गेहे घटसंशय इत्यादिज्ञाने तु हेतोरेवाभावान्न व्यभिचार इत्युक्तं भवति।

पूर्वपक्ष्युक्तो हेतुरप्रयोजक इत्याह ॥ **यदि चेति** ॥

## तर्कताण्डवम्

**ननु तत्रार्थतथात्वघटितं प्रमात्वं गृह्णज्ज्ञानं घटसत्वं स्वातन्त्र्येणापि गृह्णातीति चेन्न। मम मतेऽनुव्यवसायस्यापि प्रामाण्यग्राहकत्वेनात्रापि स्वातन्त्र्यस्य सुवचत्वात्।**

**अर्थसत्वनिश्चयत्वमात्रेण तद्घटितप्रामाण्यनिश्चयत्वोपपत्तौ स्वातन्त्र्यस्यानपेक्षिततत्वाच्च। स्वतन्त्रादप्यनाशङ्कित-दोषान्यद्वारा ग्राहकस्य।**

**''ऋषिभिर्बहुधा गीतं छन्दोभिः विविधैः पृथक्''**

**''तदेतदृचाभ्युक्तम्''**

**इत्यादिवत् संवादेन आधिक्याच्च। एवं सत्यनुव्यवसायस्य धर्म्यंशेपि प्रामाण्यनिश्चयरूपत्वाभावापातेन तत्रापि कदाचित् सन्देहापाताच्च।**

## न्यायदीपः

वैषम्यमाशङ्क्य प्रकृतेपि सममित्याह ॥ **नन्वित्यादिना** ॥ **स्वातन्त्र्येणापीति** ॥ व्यवसाय-वदिति भावः ॥ **सुवचत्वादिति** ॥ व्यवसायनिष्ठस्य तद्वत्वघटितप्रामाण्यस्य ज्ञानत्ववत् साक्षादेव अनुव्यवसायविषयता। न तु व्यवसायद्वारा। परन्तु तद्वत्वस्य तदयोग्यतया चाक्षुषज्ञाने सौरभस्येवोप-नीतस्य भानम्। इयांस्तु विशेषः। यदत्रोपनायकस्यापि सामग्रीसद्भावाज्ज्ञानविषयता। तत्र तु सामग्र्यभावात्तदविषयतेति भावः।

एतेन यत्कैश्चिदुक्तं ''घटज्ञानवानहं अयं घट इत्यत्र वैलक्षण्यस्य सर्वसम्मतया तन्नियामकस्य उपनायकभानसामग्रीसमवधानतदसमवधानादेरवश्यकल्पनात्। यत्रोपनायकमपि भासते तत्रोपनेयांशे स्वातन्त्र्यम्। अत एव सुरभि चन्दनमित्यत्र स्वातन्त्र्यम्। स्वातन्त्र्यञ्च ज्ञाननिष्ठं संशयादि-विरोधितावच्छेदकमेव किञ्चित्फलबलकल्प्यम्। स्वरूपसम्बन्धविशेषविषयत्वात्'' इति। तन्निरस्तम्। स्वातन्त्र्येणोपनायकत्वेऽज्ञायमानत्वस्य प्रयोजकत्वे गौरवात्। गेहे घटप्रमेत्यादि-

शब्दस्थले प्रमात्वेन ज्ञायमानस्यापि स्वातन्त्र्येणोपनायकत्वाङ्गीकारेण व्यभिचाराच्च। गृहीतप्रामाण्यकज्ञानसमानविषयकज्ञानानुव्यवसायस्थले प्रमात्वेन ज्ञायमानस्यापि ज्ञानस्य स्वातन्त्र्येणोपनायकत्वाच्च।

ननु विषयसत्तानियतसत्ताकज्ञानवृत्तिधर्माविशेषणत्वे सति ज्ञानविशेषणतया भानमेवास्वातन्त्र्यम्। तदभाव एव स्वातन्त्र्यमिति घटप्रमावानहमित्यादौ तथा भानेऽपि घटज्ञानवानहमित्यादौ न स्वातन्त्र्येण भानम्। तत्र शुद्धज्ञानविशेषणतयैव भानात्। अनुव्यवसायमात्रस्य प्रामाण्यविषयकत्वाविवादादित्यत आह ॥ **अर्थसत्वेति** ॥ ननु स्वातन्त्र्येणाभाने कथमनुव्यवसायस्य प्रामाण्यसंशयादिविरोधिता। कथं वा निष्कम्पप्रवृत्तिहेतुतेत्यत आह ॥ **स्वतन्त्रादपीति** ॥ अनाशङ्कितदोषेति बहुव्रीहिः। तद्रूपान्यद्वारेणेत्यर्थः। त्रयोदशे गीतायां क्षेत्रक्षेत्रज्ञस्वरूपं ऋषिभिर्बहुधा गीतमित्यनाशङ्कितदोषऋषिगानच्छन्दोरूपद्वारेण अर्थग्राहकस्य कृष्णवाक्यस्याधिक्यं तथा निर्दोषऋग्द्वारेणार्थग्राहकस्य च्छन्दोगद्युपनिषद्वाक्यस्य यथाधिक्यं तथेत्यर्थः।

स्वातन्त्र्यस्य अनपेक्षिततत्वादित्यत्र विपक्षे बाधकं चाह ॥ **एवंसतीति** ॥ अर्थसत्वनिश्चयमात्रेणैव संशयादि विरोधितारूपप्रामाण्यनिश्चयत्वोपपत्तावपि स्वातन्त्र्याभावेन तदभाव इत्यर्थः।

यद्वा स्वातन्त्र्याभावेऽर्थसत्वनिश्चयरूपतैव न युक्तेत्यत आह ॥ **एवंसतीति** ॥ सव्यवधानत्वमात्रेण सत्वानिश्चायकत्व इत्यर्थः। धर्म्यंशे रजतादिरूपेदमंश इत्यर्थः।

## तर्कताण्डवम्

**ननु धर्मिणस्सदेकरूपत्वात्तत्रासंशय इति चेत्। कोर्थः किं साधारणधर्मज्ञानं नास्तीति किं वा विशेषदर्शनमस्तीति? नाद्यः। प्रतीतिविषयत्वस्य सदसत्साधारण्यात्। अन्त्ये धर्मित्वस्य सदेकनिष्ठत्वेन विशेषत्वेऽपि तस्य सत्वानिश्चये कथंसंशयविरोधिता। न हि सन्दिग्धसत्ताकः करादिः पुरुषत्वसंशयविरोधी।**

**अपिचैवं त्वदीये अयं वह्न्यनुभवः प्रमा, नाप्रमा वा दाहसमर्थविशेष्यकत्वे सति वह्नित्वप्रकारकनिश्चयत्वात्**

**व्यतिरेकेणाप्रमावादिति प्रामाण्यानुमाने दाहसामर्थ्यवद्वि-शेष्यकत्वे सतीति विशेषणस्य केन सिद्धिः। तद्धि न तावद्दाह-समर्थोऽयमिति व्यवसायेन सिद्धम्। व्यवसायविषयतया विशेष्यस्य विशेष्यत्वस्य तदविषयत्वात्। नाप्यनुव्यवसायेन। बहिरर्थे दाहसामर्थ्ये मनसोऽसामर्थ्यात्।**

## न्यायदीपः

धर्म्यंशेपि संशयानुत्पादो नार्थसत्वघटितप्रामाण्यनिश्चयरूपत्वेन ''इदन्त्वरजतत्ववैशिष्ट्यम् पुरोवर्तिनो नानुव्यवसायवेद्य''मिति मण्युक्तेः। ''स्वातन्त्र्येण इति शेष'' इति पक्षधरोक्तेः। किन्त्वन्यथैवेति शङ्कते ॥ **नन्विति** ॥ **सदेकेति** ॥ पुरतः सन्नेव धर्मी नत्वसन्निति धर्मिणः सत्वाव्यभिचारान्न तत्र सन्देहो न तु तदंशे प्रामाण्यनिश्चयत्वसत्वेनेत्यर्थः ॥ **सदसदिति** ॥ पुरतो सदित्यर्थः। मन्मते त्वसन्मात्रेत्यर्थः ॥ **विशेषत्वेपीति** ॥ तथा च तद्दर्शनमात्रं न विशेषदर्शनं किन्तु तद्वैशिष्ट्यसत्वदर्शनमेवेति तस्य च तत्राभावे कथं तत्र न संशयः स्यादिति भावः ॥ **तस्येति** ॥ धर्मित्ववैशिष्ट्यस्येत्यर्थः। तथा च धर्मित्वरूपेदन्त्ववैशिष्ट्यांशेऽनुव्यवसायस्य तत्सत्तानिश्चयत्वरूप-प्रामाण्यनिश्चयत्वाभावे धर्म्यंशेपि संशयः स्यादेवेति भावः। सत्वानिश्चयेपि संशयनिवृत्तिरस्त्वित्यत आह ॥ **न हीति** ॥ **सन्दिग्धसत्ताकः** ॥ अनिश्चितसत्ताक इत्यर्थः। यद्वा तत्सत्वानिर्णये तत्सत्वेऽपि सन्देहः स्यात्। ततश्च धर्मिसन्देह इति भावेनायं ग्रन्थो योज्यः।

एवमिदन्त्ववैशिष्ट्यांशे तत्सत्तानिश्चयत्वरूपं प्रामाण्यनिश्चयत्वमनुव्यवसायस्य धर्म्यंशे स्वतः प्रामाण्यमुपपाद्य ''ननु व्यवसायस्येदन्त्वरजतत्वविशिष्टेदंविषयकत्वेऽनुव्यवसाय एव मानम्'' इत्यादिना धर्म्यंशदृष्टान्तेन शङ्कितस्वतःप्रामाण्यस्य ''मैव'' मित्यादिना ''न स्वतः प्रामाण्यग्रहः'' इत्यन्तेन मण्युक्तखण्डनं निरस्येदानीं ''ननु वह्निज्ञानस्य दाहसमर्थविषयकत्त्वं न दाहसमर्थोऽयमिति व्यवसायग्राह्य''मित्यादिना शङ्कितस्य ''उच्यत'' इत्यादिना यत्समाधानमुक्तं तत्समानन्यायेन अन्यत्राप्यनुव्यवसायस्य स्वतः प्रामाण्यं व्यनक्ति ॥ **अपि चैवमिति** ॥ सव्यवधानत्वमात्रेणार्थसत्त्व-निश्चयरूपत्वाभाव इत्यर्थः।

॥ **त्वदीय इति** ॥ प्रामाण्यानुमान इत्यन्वयः। मणिकृदुक्त इत्यर्थः। प्राचीनरीत्याह ॥ **प्रमेति** ॥ ''प्रथममप्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणा साध्यम्'' इति मणिकृदुक्तेराह ॥ **नाप्रमा इति** ॥

## तर्कताण्डवम्

ननु स्मृत्युपनीते व्यवसाये स्मृत्युपनीतं यद्दाहसामर्थ्यं तद्वद्विशेष्यकत्वं मनसा परिच्छिद्यते। नचैवं स्मृत्युपनीते व्यवसाये स्मृत्युपनीतं यद्रजतत्वं तद्वद्विशेष्यकत्वमपि मनसा परिच्छद्यताम्, तथा च प्रामाण्यस्य स्वतस्त्वं स्यादिति वाच्यम्। मनसैवं प्रामाण्यग्रहेऽपि प्रथमानुव्यवसायेनागृहीत-तया यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वस्य तज्ज्ञानविषयक-ज्ञानानपेक्षज्ञानग्राह्यत्वस्य चाभावेन परतस्त्वाहानेरिति चेत् हन्तैवं पाश्चात्यस्मृत्युपनीते दाहसामर्थ्ये मानसज्ञानमिव प्राथमिकव्यवसायोपनीते रजतत्ववैशिष्ट्येऽनुव्यवसाय एव सत्तानिश्चयरूपः अस्तु। अविशेषात्। त्वत्पक्षे व्यवसायस्य यथार्थत्वेन स्मृतितोऽविशेषाच्च। अनुमितौ प्रामाण्यनियतस्य धूमवति वह्निमत्वज्ञानत्वस्यानुव्यवसायेन गृहीतत्वान्न तत्राप्रामाण्यशङ्केति वदता त्वया लिङ्गोपहितलैङ्गिकविषया-नुमितिरूपव्यवसायोपनीते धूमवत्वेऽनुव्यवसायस्य सत्तानिश्चयरूपत्वाङ्गीकाराच्च।

## न्यायदीपः

॥ **व्यवसायेति** ॥ विशेष्यस्य व्यवसायविषयत्वाद्धेतोः विशेष्यत्वस्य व्यवसाया-विषयत्वादित्यर्थः। क्वचिद्व्यवसायविषयताविशेषस्य विशेष्यत्वस्येति पाठः। तदा तु न क्लेशः। धर्मधर्मिवैशिष्ट्यानां व्यवसायविषयत्वेन धर्मे वैशिष्ट्ये चाविद्यमानो धर्मिमात्रनिष्ठो विषयत्वविशेष इत्यर्थः। ''व्यवसायतद्विषयतयोस्तदविषयत्वात्'' इति मणिवाक्यनिष्कृष्टार्थस्यायमनुवादः ॥ **बहिरर्थ इति** ॥ दाहसामर्थ्यवैशिष्ट्यरूप इत्यर्थः ॥ **असामर्थ्यादिति** ॥ पूर्वोक्तदिशा सामर्थ्यवैशिष्ट्यग्रहण एव वा वैशिष्ट्यग्रहणशक्तावपि स्वातन्त्र्येण तद्ग्रहणे वाऽसामर्थ्यादिति भावः।

॥ **स्मृतीति** ॥ अयं वह्निरिति व्यवसायविषयकानुव्यसायजन्यस्मृत्युपनीते अयं वह्निरिति व्यवसाये दाहसमर्थोऽयमिति व्यवसायजन्यस्मृत्युपनीतं यद्दाहसामर्थ्यवत्वं तद्वद्विशेष्यकत्वं

वह्निरित्यनुभवो दाहसामर्थ्यवद्विशेष्यको मम वृत्त इति मनसा परिच्छिद्यत इत्यर्थः। तुल्यन्यायत्वात् प्रामाण्यांशेऽप्याशङ्क्येष्टापत्त्या निराह ॥ **न चैवमिति** ॥ दाहसामर्थ्यवद्विशेष्यकत्वग्रह इत्यर्थः। इदं रजतमिति व्यवसायविषयकानुव्यवसायजन्यस्मृत्युपनीते तस्मिन्व्यवसाये इत्यादिरूपेण पूर्ववद् व्याख्येयम्।

॥ **एवमिति** ॥ पञ्चमानुव्यवसायेनेत्यर्थः ॥ **ज्ञानानपेक्षेति** ॥ पञ्चमानुव्यवसायस्य च तादृशज्ञानसापेक्षत्वादिति भावः। हन्तेति हर्षे। पाश्चात्या वा स्मृतिः तदुपनीत इत्यर्थः ॥ **पाश्चात्येति** ॥ प्राथमिकेति हेतुगर्भम् ॥ **दाहसामर्थ्ये** ॥ दाहसामर्थ्यवत्व इत्यर्थः ॥ **मानसज्ञानमिवेति** ॥ अनुव्यवसाय इवेत्यर्थः। पारतन्त्र्येण तद्विषयतोपगमादिष्टापत्तिनिरासायाह ॥ **सत्तानिश्चयेति** ॥

नन्विन्द्रियस्यायं स्वभावो यदुपनीतमुपनीतान्तरवृत्तित्वेनैव गृह्णातीति चेन्न। सुरभि चन्दनमिति चाक्षुषज्ञानानुपपत्तेः। मनसस्तथास्वभाव इत्यस्यापि मानाभावेनायुक्तत्वात्। संशयानुपपत्तिरेव मनसस्तादृशस्वभावकल्पिकेति चेन्न। तस्या अन्यथोपपादयिष्यमाणत्वात्। निमीलितनेत्रस्यापि "अहं गौर" इत्यादिप्रत्ययानापत्तेश्चेति भावेनाह ॥ **अविशेषादिति** ॥ वैपरीत्यमेवोचितमित्याह ॥ **त्वत्पक्ष इति** ॥ **व्यवसायस्येति** ॥ अनाशङ्कितदोषत्वात् ग्राह्यप्रामाण्याश्रयव्यवसायस्येति भावः।

ननूपनीतं तद्वत्वं उपनीतवृत्तित्वेन गृह्यत इति कल्प्यत इत्यतोऽयमपि नियमो नेत्याह ॥ **अनुमिताविति** ॥ अनुमितौ कदापि प्रामाण्यसन्देहाभावेन तत्र प्रामाण्यं स्वत इति प्राचीनमतं दूषयता सर्वत्र परतस्त्ववादिना मणिकृताऽनुमितौ प्रामाण्यशङ्काभावो न प्रामाण्यनिश्चय-निबन्धनोऽपितुतत्प्रामाण्यव्याप्यस्य धूमवद्विशेष्यकत्वे सति वह्निप्रकारकज्ञानत्वस्य यज्ज्ञानं तन्निमित्तक एवेति वदता त्वयेत्यर्थः। तदभियुक्तव्याख्यानानुरोधेनाह ॥ **लिङ्गोपहितेत्यादि** ॥ परामर्शोपनीतव्याप्ययुक्तव्यापकविषयकधूमवत्पर्वतोऽग्निमानित्येवंरूपेत्यर्थः।

ननु पञ्चमानुव्यवसाये प्रत्यासत्तीभूतान्याविषयतयार्थस्य भानेन तस्यार्थसत्तानिश्चयरूपत्वेपि प्रथमानुव्यवसाये तादृशान्यविषयतया तद्वत्वरूपार्थस्य भानान्न तत्सत्तानिश्चयरूपत्वमतः अविशेषादित्युक्तहेतुरसिद्ध इत्याशङ्क्य निराह ॥ **नचेति** ॥ दाहसामर्थ्ये दाहसामर्थ्यत्वत्त्व इत्यर्थः ॥ **संस्कार एवेति** ॥ दाहसमर्थोयमिति प्राचीनव्यवसायजन्यसंस्कार एव न तु तज्जन्यस्मृतिरित्यर्थः।

यद्यपि स्मृतेः प्रत्यासत्तित्वेऽपि तस्याः सुरभिचन्दनमित्यादौ सौरभादिज्ञानस्येव ताटस्थ्येनैव तथात्वान्नैतच्चोद्यावकाशः। तथाऽपि सविषयकत्वात्संभावितत्वाभिप्रायेणैतच्चोद्यमपि शङ्कोत्थान-दार्ढ्यार्थं कृतमिति ध्येयम्।

## तर्कताण्डवम्

**न च दाहसामर्थ्ये संस्कार एव प्रत्यासत्तिः। स च निर्विषयक इति न तद्विषयतया भानम्। इह तु प्रत्यासत्तीभूतो व्यवसायः सविषयक इति वैषम्यमिति वाच्यम्। संस्कारे सत्यप्यस्मृतिदशायामुक्तमानसज्ञानाभावात्।**

**ननु मानसज्ञानस्य दाहसमर्थ एव मम वह्नित्वप्रकारकं ज्ञानं वृत्तमित्याकारत्वेन तत्र दाहसामर्थ्यं वह्निनिष्ठमेव भाति। न तु स्मृतिविषयतया। स्मृतिस्तु प्रत्यासत्तिमात्रम्। अनुव्यवसायस्य तु पुरोवृत्तिविशेष्यकं रजतत्ववैशिष्ट्यावगाहिज्ञानं वृत्तमित्याकारत्वेन ज्ञानविषयत्वेनैव वैशिष्ट्यं विषयः। न तु पुरोवृत्तिनिष्ठत्वेनेति वैषम्यमिति चेन्न। तत्रापि दाहसमर्थ एवेति विषयसप्तम्याऽतीतव्यवसायविषयत्वेनैव दाहसामर्थ्यस्य भानात्। अत्रापि सुखज्ञानस्य दोषशङ्कादिरहितस्तम्भादिज्ञानस्य च प्राथमिक एवानुव्यवसाये मम सुख एव सुखत्वेन ज्ञानं वृत्तं स्तम्भ एव स्तम्भत्वेन ज्ञानं वृत्तमित्याकारदर्शनाच्च।**

## न्यायदीपः

**।। भानमिति ।।** पञ्चमानुव्यवसाये दाहसामर्थ्यवत्वस्य संस्कारविषयतया न भानमित्यर्थः **।। इहत्विति ।।** प्रथमानुव्यवसाय इत्यर्थः **।। अस्मृतिदशायमिति ।।** अत एव त्वयापि ''प्राग्भवीयसंस्कारात्स्मृतं प्रामाण्यं वह्निज्ञानादौ साध्यमान''मित्याद्युक्तम्।

एतच्चोपलक्षणं यदसाधारणं कारणमासाद्य मनो बहिर्गोचरां प्रमां जनयति तन्मानान्तरमिति व्याप्तेः संस्कारस्य मानान्तरत्वापत्तेश्चेत्यपि ध्येयम्।

स्मृतेः प्रत्यासत्तित्वेप्यविशेषादिति हेतुरसिद्ध इति भावेन शङ्कते **।। नन्विति ।। तत्रापीति ।।** पञ्चमानुव्यवसायेपीत्यर्थः **।। दाहसामर्थ्यस्य ।।** दाहसामर्थ्यवत्वस्येत्यर्थः। अत्रापीत्यस्यैव विवरणं **।। प्राथमिक एवानुव्यवसाय इति ।।**

## तर्कताण्डवम्

ननु तथापि तत्र यस्य व्यवसायस्य विषयतया दाह-सामर्थ्यं भाति स न प्रत्यासत्तिः। या तु स्मृतिः प्रत्यासत्तिर्न तद्विषयतया तद्भाति इह तु वैशिष्ट्यं प्रत्यासत्तीभूतव्यवसाय-विषयतया भातीति चेन्न। अन्यविषयतया ग्रहणे श्रुतसाक्षि-वाक्यसाम्येऽविशिष्टेऽस्य वैधर्म्यमात्रत्त्वात्। तस्मात्प्रामाण्य-ग्रहणे साक्षी समर्थ इति एतदप्युक्तं ''अन्यथे'' त्यादिना। साक्षी धर्म्यंश इव वैशिष्ट्यांशेपि सत्तानिश्चयरूपो न चेदस्य व्यवसायस्येदं वैशिष्ट्यं विषय इत्यादिलोकसिद्ध-व्यवस्थित्ययोगादित्यर्थः॥

स्वतस्त्वानुमानेषु बाधोद्धारः ॥ ४॥

प्रकारान्तरेण वैषम्यमाशङ्क्य निराकरोति॥ **ननु तथापीत्यादिना**॥ **तत्रेति**॥ पञ्चमानुव्यव-साय इत्यर्थः॥ **इह त्विति**॥ प्राथमिकानुव्यवसाय इत्यर्थः। अविशिष्ट इति विभागः।

स्वतस्त्वानुमानेषु बाधोद्धारः ॥ ४॥

## स्वतस्त्वे संशयोपपादनम्

## तर्कताण्डवम्

ननु तथापि स्वतस्त्वेऽनभ्यासदशायां संशयो न स्यात्। ज्ञानग्रहे प्रामाण्यग्रहात्। अग्रहे च धर्मिज्ञानाभावादिति चेन्न। असति प्रतिबन्धे साक्षिवेद्यत्वनियमो वा साक्षिवेद्यत्वयोग्यता वा स्वतस्त्वमित्युक्तम्। अप्रामाण्यसंशयस्थले च प्रामाण्य-ग्रहणशक्तिप्रतिबन्धिकाऽप्रामाण्यग्रहणसामग्रीसमवहितैव। अन्यथाऽप्रामाण्यसंशयायोगात्। एवं च ज्ञानं गृह्णता साक्षिणा शक्तिप्रतिबन्धात् प्रामाण्याग्रहणेऽप्यस्मदुक्तस्वतस्त्वाहान्या

**स्वतस्त्वपक्षेऽपि धर्मिज्ञानस्य प्रामाण्यानिश्चयस्य च सम्भवेन संशयो युक्त एव। न हि ज्ञानत्वप्रमात्वग्रहणशक्त्योरेकप्रति-बन्धकप्रतिबध्यत्वमपि स्वतस्त्वान्तर्गतम्।**

## न्यायदीपः

उक्तानुमानेषु प्रतिकूलतर्कपराहतिं मण्याद्युक्तमाशङ्कते ॥ **नन्विति** ॥ **तथाऽपीति** ॥ प्रबलबाधरूपदोषाभावेऽपीत्यर्थः ॥ **प्रामाण्यग्रहादिति** ॥ अन्यथा स्वतस्त्वभङ्गापत्तेरिति भावः ॥ **अग्रहे चेति** ॥ ज्ञानस्येत्यनुषङ्गः। यथा हि त्वन्मते जातिव्यक्त्योरेकवित्तिवेद्यत्वनियमेपि दोषवशादिदं रूप्यमिति भ्रमस्थले शुक्तिग्रहेपि न शुक्तित्वग्रहः तथा मन्मतेपि ज्ञानप्रामाण्ययोः एकवित्तिवेद्यत्वनियमेपि संशयस्थले ज्ञानग्रहे सत्यपि तेन तत्प्रामाण्याग्रहेपि न स्वतस्त्वभङ्गः।

अस्माभिरुक्तस्वतस्त्वस्य तत्रापि सत्वादिति भावेन ''धर्म्युपलब्धावपि व्याघातादिदर्शनेन साक्षिणि प्रतिबद्धे प्रामाण्यविषये मनसि संशयोपपत्तेः'' इति तत्वनिर्णयटीकां विवृण्वानः समाधत्ते ॥ **असति प्रतिबन्ध इति** ॥ प्रामाण्यविरोध्युपस्थापकसामग्र्यसमवधाने सतीत्यर्थः। अत्र सर्वत्र साक्षी प्रागुक्तरूप एव ज्ञेयः ॥ **ग्रहणेति** ॥ निश्चयेत्यर्थः ॥ **अन्यथेति** ॥ उक्तरूपसामग्र्यभाव इत्यर्थः।

अस्तु सामग्री ततः किमित्यत आह ॥ **एवं चेति** ॥ प्रामाण्यविरोध्युपस्थापकसामग्रीसमवधाने सतीत्यर्थः ॥ **धर्मिज्ञानस्येति** ॥ व्यवसायरूपस्य संशये धर्मिणो यज्ज्ञानं तस्येत्यर्थः ॥ **संशयो युक्त एवेति** ॥ मानसोऽयं बोध्यः। न तु साक्षिरूपः तस्य सुदृढनिर्णयरूपत्वात्।

अस्मदुक्तस्वतस्त्वाहान्येत्युक्तं व्यनक्ति ॥ **न हीति** ॥ असति प्रतिबन्धे ज्ञानगोचरसाक्षि-वेद्यत्वनैयत्यमित्यस्य प्रतिबन्धे सति साक्षिणा ज्ञानं प्रामाण्यं चोभयं न गृह्यत इति यद्यर्थस्तदा परं स्वतस्त्वहानिः। नह्येवं विवक्ष्यत इति भावः।

## तर्कताण्डवम्

**तद्ग्रहणशक्त्योर्भिन्नत्त्वेपि ज्ञानत्वग्रहणशक्तिवत् प्रामाण्यग्रहणशक्तिः सहजा। नत्वप्रामाण्यग्रहणशक्तिरिव आहितेत्येतावतैव प्रामाण्यस्य स्वतस्त्वात्। दृश्यते च वह्नौ दाहप्रकाशनशक्त्योः सहजत्वेपि प्रतिबन्धकभेदः।**

**अस्तु वा तयोरेकैव ग्रहणशक्तिस्तथापि तस्या एनं मा दहेत्यादौ दाहशक्तेरिव विषयभेदेन प्रतिबन्धाप्रतिबन्धौ युक्तौ।**

**नचैवं प्रतिबन्धकाभावरूपस्याधिकस्य हेतोरनुप्रवेशात् सिद्धसाधनम्। न्यायमतेऽप्रतिबद्धेनाप्यनुव्यवसायेन प्रामाण्याग्रहणात्।**

**नाप्यपसिद्धान्तः। "अप्रामाण्यग्रहणकारणाभावस्यापि प्रामाण्यग्रहणोपयोगाङ्गीकारेपि न कदाचिदस्माकं हानिः" इति टीकोक्तेः। "प्रतिबन्धकाभावो न हेतुः" इत्युत्पत्ति-स्वतस्त्ववादे वक्ष्यमाणत्वाच्च।**

**यत्र पूर्वं दोषशङ्कादेरभावेपि कारणान्तरोपनिपातात् पश्चात् तत्संशयस्तत्र पूर्वं प्रामाण्यं निश्चीयत एव। तदा प्रतिबन्धकाभावात्।**

## न्यायदीपः

ननु ज्ञानत्वप्रमात्वग्रहणशक्त्योरैक्योपगमेऽन्यतराग्रहणे द्वयोरप्यग्रहणमवर्जनीयम्। भेदे तु स्वतस्त्वहानिरेव। ज्ञानग्रहणशक्त्यतिरिक्तशक्तिग्राह्यत्वात्। अन्यथाऽप्रामाण्यस्यापि स्वतस्त्वा-पात्तिरित्यतो "मानस्यादोषशङ्कया प्रमाण्यग्रहणशक्तिः प्रतिबद्धा" इति प्रकृतिनयसुधावाक्येन भेदपक्षस्य "करणानां ज्ञानजननशक्त्यैव तद्याथार्थ्यजनकत्वं स्वतस्त्व" मित्यादिजिज्ञासानय-सुधा वाक्येनाभेदस्य च प्रतीतेर्भेदाभेदरूपपक्षद्वयेपि समाधिमाह ॥ **तद्ग्रहणेति** ॥ **न त्वप्रामाण्य-ग्रहणशक्तिरिति** ॥ सहजेत्यनुकर्षः। किं तु दोषाहितेत्यर्थः ॥ **मा दहेतीति** ॥ "अमानोना प्रतिषेध" इति निषेधार्थकमाशब्दोऽयम्। न माङ्। तेन "माङि लु" ङित्युक्तलुङभावः साधुः ॥ **टीकोक्ते-रिति** ॥ तत्वनिर्णयटीकोक्तेरर्थतोऽनुवादोयम्।

ननु तत्र "न प्रकृते काचिदस्माकं हानिः" इति हि पाठः। तथा च प्रकृते वेदापौरुषेयत्वे काचिद्धानिर्नेत्यभ्युपगमवादेनाप्युपपन्ना सा टीकोक्तिः। एवं च ज्ञानग्रहहेत्वतिरिक्तहेतुसापेक्षग्राह्यत्वे कथं न प्रामाण्यस्य स्वतस्त्वहानिरित्यतस्तत्वनिर्णयटीकास्थं "न हि दाहाभाव एव वेत्रबीजं वेत्राङ्कुरं

जनयतीत्येतावता दाहाभावो वेत्राङ्कुरस्य कारणं भवति। किं तु ततो विपरीतकार्यानुत्पादे सति वेत्रबीजं स्वमहिम्नैवाङ्कुरं करोति। अन्यथोत्सर्गापवादौ क्वापि न स्यातां'' इति पूर्ववाक्यं हृदि कृत्वाह **॥ प्रतिबन्धकेति ॥**

## तर्कताण्डवम्

**केचित्तु धर्मिज्ञानस्य संशयाहेतुत्वात्संशयरूप एवानुव्यवसाय उत्पद्यते। धर्मिज्ञानस्याहेतुत्वेपि संशये धर्मिनियमो धर्मिज्ञानजनकनियमादेव युक्तः। कोट्युत्कटत्वे तु कोटेर्धर्म्यसंस्पृष्टत्वेनाज्ञातोर्ध्वत्वादिसाधारणधर्मेण भूयस्साहचर्यदर्शनमेव हेतुः। न तु संशयधर्मिनिष्ठत्वेन ज्ञातसाधारणधर्मेण भूयस्साहचर्यदर्शनम्। गौरवात्। ऊर्ध्वतादिसाधारणधर्मज्ञानं त्वनियतादृष्टादिहेतुजन्यस्मृतिरूपमित्याहुः।**

## न्यायदीपः

एवं प्रतिबन्धकेन प्रामाण्यानिश्चयमुपेत्य संशयमुपपाद्य क्वचित् प्रामाण्यनिश्चयमुपेत्यापि संशयमुपपादयति **॥ यत्रेति ॥** यद्वा अस्त्वेवं प्रामाण्यविरोध्युपस्थापकसामग्रीसमवधानस्थले प्रामाण्यानिश्चयेपि विवक्षितस्वतस्त्वाहान्या संशयोपपत्तिः। तत्सामग्रीसमवधानात्प्राक्काले तु कथम्। तत्र प्रामाण्यानिश्चये स्वतस्त्वहानेः। यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिकेत्यस्य अभावात्। प्रामाण्यनिश्चये वोदीरितसन्देहो न स्यादित्यत आह **॥ यत्रेति ॥ निश्चीयत एवेति ॥** मनसेति भावः। न तु साक्षिणा। तस्य दृढनिर्णयत्वात्।

''सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम्'' इति।

''मानसे दर्शने दोषा नैव स्युः साक्षिदर्शने।
यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्''॥

इति च ज्ञानपादीयानुव्याख्यानोक्तेरिति ज्ञेयम्। एतेन यदुक्तं मणौ ''निश्चितेपि प्रामाण्ये दोषान्तरात्तत्र संशय इति चेन्न। प्रवृत्तिप्रसङ्गात्'' इति तन्निरस्तम्। प्रामाण्यनिश्चयकालेऽप्रतिबन्धादिष्टापत्तेः। पश्चात्तु तस्य नाशात्प्रतिबन्धाच्च अप्रवृत्त्युपपत्तेः।

एतेन प्रामाण्यनिश्चये जाग्रति कथं सन्देह इति निरस्तम्। उत्तरकाले तस्य नाशात्। प्रामाण्यनिश्चये प्रामाण्यसन्देहात्संशयोपपत्तेश्च। यत्तु ''न च प्रामाण्यसंशयाद्विषयसंशयवत्प्रामाण्यज्ञाने प्रामाण्यसंशयात् प्रामाण्यसंशय इति वाच्यम्। प्रामाण्यज्ञानेपि स्वतः प्रामाण्यग्रहे संशयानुपपत्तेः'' इति मणिवचनं तदप्येतेनैव निरस्तं बोध्यम्। दोषोपनिपातस्थले मानसप्रामाण्यनिश्चये दोषवशेन प्रामाण्यानिश्चये तत्संशयोपपत्तेरिति। एवं वास्तवं मूलग्रन्थाद्युक्तं संशयोपपादनं प्रदर्श्याधुना यदुक्तं मणौ ''धर्मिज्ञानं च संशयहेतुः। अन्यथा धर्मिनियमः कोट्युत्कटत्वं च न स्यात्'' इति ग्रन्थेन धर्मिज्ञानाभावेन संशयाभावोपपादनदूषणं तदपि नेति भावेन प्रौढ्या समाधिद्वयमन्यापदेशेनाह **।। केचित्त्वित्यादिना ।। अहेतुत्वादिति ।।** विषयेन्द्रियसन्निकर्षकोटिस्मृतिरूपविशेषणज्ञानतदुभयासंसर्गाग्रहादिविशिष्टज्ञानसामान्यसामग्रीत एव तदुत्पत्तौ तदतिरिक्ता संशये धर्मिज्ञानरूपा विशेषसामग्री न कल्प्या। तथाच संशयस्थले धर्मिणो व्यवसायस्यैवाज्ञानेन प्रामाण्यनिश्चयोपपत्या स्वतस्त्वाहानिः प्रामाण्यादिसंशयश्च युक्त इति भावः।

ननु तुरगादौ वेगेन गच्छतः पुंसोऽनेकवृक्षेन्द्रियसन्निकर्षेपि क्वचिदेव पनसत्वादिसन्देहो न सर्वत्रेति एवंविधो धर्मिनियम एव संशये धर्मिज्ञानहेतुतां व्यवस्थापयतीत्यत आह **।। धर्मिज्ञानस्य अहेतुत्वेपीति ।। धर्मिज्ञानजनकेति ।।** त्वयापि हि सर्वत्र सन्निकर्षेऽविशिष्टेति क्वचिदेव धर्मिज्ञानं नान्यत्रेत्यत्र विषयमाहात्म्यादिकं नियामकं वाच्यम्। तदेव संशये नियामकमस्तु। तद्धेतोरेवास्तु हेतुत्वं मध्ये किं तेनेति न्यायात्। तेषामननुगतत्वेपि धर्मिज्ञानहेतुत्वेनानुगमसम्भवादिति भावः। यत्तु ''धर्मिज्ञानसामग्रीत्वेन हेतुत्वे लाघवाद्धर्मिज्ञानत्वेनैव हेतुत्वमस्तु'' इति **शिरोमणिवचनम्।** तन्न क्लृप्तसामग्र्यैवोपपत्तावपूर्वधर्मिज्ञानहेतुताकल्पनस्य गुरुत्वात्।

ननु धर्मिज्ञानस्याहेतुत्वे संशये कोट्युत्कटत्वं न स्यात्। तस्याव्याप्यवृत्तितया जातित्वायोगेन संशयधर्मिणि संशयकोटिसहचरितानेकधर्मोपलम्भरूपस्य वा संशयधर्मिवृत्तितया गृह्यमाणधर्मेण सह कोटेर्भूयस्सहचारोपलम्भरूपस्य वा कोट्युत्कटत्वस्य वाच्यतया तादृशस्य धर्मिज्ञानाहेतुत्वे अनुपपत्तेरित्यत आह **।। कोट्युत्कटत्वे त्विति ।।** दर्शनमेव हेतुरित्यन्वयः **।। धर्म्यसंस्पृष्टत्वेन ।।** धर्म्यसम्बद्धत्वेनेत्यर्थः। ननु साधारणधर्मदर्शनस्य संशयहेतुत्वाद्धर्मज्ञानार्थं धर्मिज्ञानमावश्यकमित्यत आह **।। ऊर्ध्वतादिसाधारणेति ।।**

## तर्कताण्डवम्

**इतरे तु अन्यत्र विपर्यये धर्मिज्ञानस्य हेतुत्वेपि वर्तमान-**

व्यवसायधर्मिकेऽनुव्यवसायरूपेऽप्रमायां प्रमात्वविपर्यये तस्याहेतुत्ववदन्यत्र संशये धर्मिज्ञानस्य हेतुत्वेपि प्रामाण्य-संशये तस्याहेतुत्वं युक्तम्। नच प्रागारोप्यस्य प्रामाण्यस्य अनुपस्थितेर्न तदारोप इति वाच्यम्। स्वतस्त्वपक्षे प्रमायां प्रामाण्यप्रमितेरिव भ्रमे प्रामाण्यारोपस्यापि तदनपेक्षत्वा-दित्याहुः।

अन्ये तु संशयस्थलेप्युक्तरीत्या सामग्रीसत्वेन आदावेव अनुव्यवसायेन प्रामाण्यनिश्चयेप्यनुव्यवसायनाशानन्तरं स्मृत्युपनीते व्यवसाये तत्संशयो युक्त एव। नह्यनुव्यव-सायकाल एव संशयो न तु तदव्यवहितोत्तरकाल इति योगादिसम्पत्तिं विनाज्ञातुं शक्यम्। परमतेऽपि न प्रामाण्यसंशयकाले व्यवसायोस्ति। धर्मिज्ञानानन्तर-भाविकोटिस्मरणकाल एव व्यवसायनाशादित्याहुः। एतदप्युक्तं ''अन्यथे'' त्यादिना। प्रतिबन्धदशायां कार्या-जननमात्रेण शक्तेः सहजत्वाभावे वह्न्यादौ दाहादिशक्तेः सहजत्वमिति व्यवस्थित्यनुपपत्तेरित्यर्थः॥

**स्वतस्त्वे संशयोपपादनम्॥५॥**

## न्यायदीपः

केचिदित्युक्तास्वारस्यबीजं तु व्यवसायरूपसंशयधर्मिणः सुखादिवत् ज्ञातैकसत्वेन कोटिस्मृतेः पूर्वं तस्य साक्षिणा ग्रहणे प्रतिबन्धाभावाद्धर्मिज्ञानमावश्यकमित्यस्मदुक्तदिशैव संशयोपपादानं साधु। न तु धर्मिज्ञानानभ्युपगमेनेति ज्ञेयम्। अत एव ''ज्ञानमवश्यवेद्य'' मिति वक्ष्यति। अन्यत्तु गुरुटीकायाम्। ॥ **अन्यत्रेति** ॥ शुक्तिरूप्यादिविषयक इत्यर्थः। शुक्त्यादावेव रजतत्वाद्यारोपो नान्यत्रेत्येत-न्नियामकतया रूप्यादिनिष्ठचाकचक्यादिमत्तया शुक्त्यादिज्ञानस्य तदारोपहेतुत्वमावश्यकमिति भावः ॥ **वर्तमानेत्यादि** ॥ यथा हि घटादिप्रमायां तदनुव्यवसायेन व्यवसायोपनीततद्वत्वादिघटितप्रामाण्यग्रहः, तथा शुक्तिरूप्याद्यप्रमायामपि तदनुव्यवसायेन

तदुपनीततद्वत्वादिघटितप्रामाण्यं धर्मिज्ञानं विनैव तदुत्तरक्षण एव परिच्छिद्यत इत्युपेतं तद्वदित्यर्थः। प्रामाण्यानुपस्थितेः कथं तदारोप इत्याशङ्क्य निराह ॥ **न चेत्यादिना** ॥ अत एव पूर्वपक्षे मणिकृताप्युक्तम् "अप्रमापि प्रमेत्येव गृह्यते" इत्यादीति भावः।

अत्रारुचिबीजं तु ज्ञानग्रहस्य साक्षित्वात्प्रामाण्यसन्देहस्य मानसत्वात् ज्ञानग्रहेण च प्रामाण्याग्रहेण स्वतस्त्वभङ्गापत्तिनिरासाय प्रागुक्तरीतेरेवानुसर्तव्यत्वादिति ज्ञेयम्।

धर्मिज्ञानहेतुत्वं तेन प्रामाण्यनिश्चयं चोपेत्य संशयोपपादनं प्रकारान्तरेण दर्शयति ॥ **अन्ये त्विति** ॥ **उक्तेति** ॥ बाधोद्धारग्रन्थोक्तरीत्येत्यर्थः। तदा व्यवसायस्यापि धर्मिणो नाशान्न संशय इत्यत आह ॥ **स्मृतीति** ॥ अनुव्यवसायाहितसंस्कारजन्यस्मृत्युपनीत इत्यर्थः। ननूपनीतस्य कथं संशये विशेष्यतया भानमित्यत आह ॥ **परमतेऽपीति** ॥

अत्रापि कल्पे संशयादिस्थले ज्ञानग्रहस्य साक्षित्वात्प्रामाण्यग्रहस्य च मानसत्वान्मानसप्रामाण्यनिश्चयस्य नाशेऽपि ज्ञानग्रहसाक्षिणा औत्तरिकानुस्मृतिसिद्धसौषुप्तिकात्मस्वरूपानुभवरूपस्य सदा सत्वेन तेन प्रामाण्याग्रहेण ज्ञानग्रहेण प्रामाण्यग्रहणमुपेत्य तन्नाशेन संशयोपपादनस्याशक्यतया तदुपपादनस्य प्रागुक्तदिशैव कार्यत्वात्किमनेन प्रकारेण। न च ज्ञानज्ञानं मानसम्। तथात्वे कदाचित् तज्ज्ञानत्वे संशयाद्यापातात्। उक्तं हि ज्ञानपादे।

"इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः।
साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान्क्वचित्" ॥

इत्यरुचिबीजं ध्येयम्। सिद्धान्ताननुगुणस्याप्येतत्पक्षत्रयस्य तार्किकं प्रति दूषणतया वक्तुं शक्यमिति भावेनात्रोपन्यास इति भावः ॥ **एतदपीति** ॥ उक्तरीत्या संशयस्थले स्वतस्त्वोपपादनमपीत्यर्थः।

स्वतस्त्वे संशयोपपादनम् ॥ ५ ॥

## प्रामाण्यनिश्चयस्य प्रवर्तकत्वम्

### तर्कताण्डवम्

**न चाप्रयोजकाः स्वतस्त्वहेतवः। परतस्त्वे प्रामाण्यज्ञानस्यापि प्रामाण्यं संवादादिलिङ्गजन्यानुमितिरूपेणान्येन**

**ज्ञानेन ग्राह्यम्, एवं तत्प्रामाण्यमप्यन्येनेति फलमुख्ये का अनवस्था। एवं प्रामाण्यस्यानुमेयत्वे लिङ्गव्याप्त्यादिज्ञान-प्रामाण्यानिश्चयेऽसिद्ध्यादिप्रसङ्गेन तन्निश्चयार्थं लिङ्गाद्यन्तरं, तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः, एवं तत्र तत्रापीति कारणमुख्यान्यापीत्यनवस्थाद्वयापत्तेः।**

**न च यत्र दोषशङ्कादिरूपाकाङ्क्षा तत्रैव संवादापेक्षेति नानवस्थेति वाच्यम्। तथात्वे प्रतिबन्धनिरासार्थमेव संवादा-पेक्षा न तु प्रामाण्यग्रहार्थमिति मन्मतप्रवेशापत्तेः। उक्तं हि भगवत्पादैः ''आकाङ्क्षाया एव बुद्धिदोषात्मकत्वात्'' इति।**

## न्यायदीपः

**॥ अप्रयोजका इति ॥** हेतवः सन्तु स्वतो ग्राह्यत्वरूपसाध्यं मास्त्वित्यत्र विपक्षे बाधकस्य साध्यसाधनेऽनुकूलतर्कस्याभावादिति न चेत्यर्थः। पूर्वं क्वचिद्धेतावप्रयोजकत्वोद्धारस्य प्रातिस्विकरूपेण कृतत्वेऽपि सामान्यतोयमुद्धार इत्यदोषः। अत एव हेतव इत्युक्तिः। ''तत्प्रामाण्यस्याप्यन्येन ग्रहणाङ्गीकारेऽनवस्थानात्'' इति टीकां विवृण्वानो मण्याद्युक्तदिशैव अनवस्थाद्वयमाह **॥ परतस्त्व इति ॥** ज्ञानग्राहकसाक्षिव्यतिरिक्तेन येन केनापि ग्राह्यत्व इत्यर्थः

**॥ फलमुखीति ॥** फलं प्रामाण्यज्ञानं मुखमुपस्थितिहेतुर्यस्याः सा फलमुखीत्यर्थः। कारणान्तरानवस्थोपलक्षणतयैकत्रानवस्थानिर्धारणाय वा पराभ्युपगमानुरोधेन वानुमेयत्व इत्यापा-दकनिर्धारणोक्तिः। पूर्वं तु सामान्यमुपेत्य परतस्त्व इत्याद्येवोक्तम्। न तु विशिष्येति ध्येयम्। **॥ कारण-मुखीति ॥** पूर्ववद्व्याख्येयम्। ज्ञानानां प्रामाण्यमनुमितिग्राह्यं अनुमितिप्रामाण्यं तु स्वत इति प्राचीनमते फलमुखानवस्थाभावात्कारणमुख्या अप्युक्तिरित्येके।

अन्ये तु तन्मते क्वापि स्वप्रकाशत्वाभावात्तत्राप्यनवस्थाऽस्त्येव। अत एव परतस्त्व इति सामान्योक्तिः। न त्वनुमेयत्व इति विशिष्येत्याहुः।

यत्र तु प्रामाण्यज्ञानेऽप्रामाण्यशङ्कया प्रामाण्यसंशयस्तत्र प्रामाण्यज्ञानप्रामाण्यनिश्चयादेव प्रामाण्यनिश्चय इत्यादिमण्युक्तमाशङ्कते **॥ न च यत्रेति ॥ दोषेति ॥** दुष्टकरणजन्यत्वादिशङ्का-

रूपेत्यर्थः। ''न चाकाङ्क्षायामेव प्रमाणान्तरापेक्षत्वादनवस्थाभाव'' इति तत्वनिर्णयानुकरणादाकाङ्क्षेत्युक्तिः ॥ **उक्तं हीति** ॥ तत्वनिर्णये। आकाङ्क्षेति बुद्धिदोष इत्यप्रामाण्यशङ्केति चानर्थान्तरम्।

## तर्कताण्डवम्

**न चावश्यवेद्यत्वाभावान्नानवस्था। ज्ञानमवश्यवेद्यमिति वक्ष्यमाणत्वात्। कृष्यादौ सन्देहात्प्रवृत्तावपि बहुवित्तव्ययायाससाध्ये पारत्रिकफलगे यागादौ निष्कम्पप्रवृत्यर्थं प्रामाण्यस्याप्यवश्यवेद्यत्वात्।**

**ननु तत्राप्यर्थनिश्चय एव हेतुः। समानविषयत्वात्। आवश्यकत्वाच्च। न तु प्रामाण्यनिश्चय इति चेन्न। पीतः शङ्ख इत्यादावाकारान्तरार्थोल्लेखाभावेन शङ्खः पीतत्वेनैव भातीत्यनुभवेन चैकाकारनियते संशयान्यज्ञानरूपे निश्चये सत्यपि पीतार्थिनोऽप्रवृत्तिदर्शनात्।**

**न चाप्रामाण्याज्ञानरूपसहकारिविरहादप्रवृत्तिरिति वाच्यम्। एवं तर्ह्यप्रामाण्यस्याप्यनुमेयत्वेन तदननुमितिदशायां पीतार्थिनः प्रवृत्तिः स्यात्।**

**किञ्चाप्रामाण्याज्ञानात्प्रवृत्तौ प्रामाण्याज्ञानान्निवृत्तिः स्यात्। किञ्च तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यशङ्काद्यभावः अनेकाभावघटितत्वाद् गुरुः। प्रामाण्यनिश्चयस्तु न तथेति लघुः। एवमप्रामाण्यशङ्काद्यभाववत्तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्यात्यन्ताभावशङ्काद्यभावः। एवं तद्व्याप्यदोषजन्यत्वादिशङ्काद्यभावोपि हेतुरित्यभावा अनेके। प्रामाण्यनिश्चयस्त्वेकः। अभावानां प्रामाण्यनिश्चयविरोध्यभावत्वेनैकत्वे त्वावश्यकत्वाल्लाघवाच्च प्रामाण्यनिश्चय एव सहकारी।**

## न्यायदीपः

तत्वनिर्णयटीकोक्तरीत्या प्रकारान्तरेणानवस्थाभावमाशङ्क्य निराह ॥ **न चेति** ॥ ज्ञानस्येति शेषः ॥ **अवश्यवेद्यमिति** ॥ एतेन चरमप्रामाण्यज्ञानस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामाण्यसंशयानवश्यम्भावान्नानवस्थेति मण्याद्युक्तं निरस्तं ध्येयम्। नन्वस्तु ज्ञानस्यावश्यवेद्यतया ज्ञातत्वेन तत्प्रामाण्यानिश्चये तत्संशयोऽवर्जनीयः। तथापि कृष्यादाविव प्रवृत्तिरस्त्वित्यत आह ॥ **कृष्यादाविति** ॥

''यत्राप्रामाण्यशङ्का नास्ति करतलादिज्ञाने तत्र व्यवसाय एवार्थनिश्चयः तत एव निष्कम्पप्रवृत्तिः'' इत्यादिमण्याद्युक्तमाशङ्कते ॥ **ननु तत्रापीति** ॥ पारलौकिकयागादावपीत्यर्थः ॥ **आवश्यकत्वाच्चेति** ॥ प्रामाण्यनिश्चयप्रवर्तकत्ववादिनाप्यर्थनिश्चयस्याभ्युपेयत्वादिति भावः।

किमर्थनिश्चय एव प्रवर्तकः उत प्रामाण्यविरोधिज्ञानविरहसहकारिसहितः, अथ प्रामाण्यविरोधिज्ञानविरहः न सहकारी किन्तु प्रवर्तकतावच्छेदकः, यद्वाऽर्थनिश्चय एव प्रवर्तकः अप्रामाण्यादिज्ञानं प्रतिबन्धकं प्रतिबन्धकान्तरसम्पादकं वा, इति विकल्पान् हृदि कृत्वाऽद्यो व्यभिचारीत्याह ॥ **पीत इति** ॥ शुक्लो वेत्याकारान्तरेत्यर्थः ॥ **द्व्याकारार्थेति** ॥ अकारान्तरेति क्वचित्पाठः।

द्वितीयं शङ्कते ॥ **न चाप्रामाण्येति** ॥ प्रामाण्यविरोधिनो निश्चयसंशयसाधारणज्ञानाभावरूपसहकारीत्यर्थः। इष्टापत्तिमाशङ्क्याह ॥ **किञ्चेति** ॥ नन्वप्रामाण्यज्ञानस्य प्रतिबन्धकत्वं सर्वसिद्धमित्यस्तु तद्विरहात्तत्र प्रवृत्तिः। प्रामाण्यज्ञानप्रवर्तकत्वमद्यापि न सिद्धमिति कथं तदभावान्निवृत्तिरापाद्यत इत्यतस्तत्साधयति ॥ **किञ्चेति** ॥ शङ्कादीत्यादिपदेन निश्चयग्रहः ॥ **विरोध्यभावत्वेनेति** ॥ विरोधिनिश्चयविषयाभावत्वेनेत्यर्थः।

## तर्कताण्डवम्

**नचाप्रामाण्याज्ञानमप्यावश्यकम्। प्रामाण्यनिश्चयस्याप्यप्रमात्वेन ज्ञातस्याप्रवर्तकत्वादिति वाच्यम्। मन्मते तस्यापि निश्चितप्रामाण्यकस्यैव प्रवर्तकत्वात्।**

**न चाप्रामाण्यशङ्काभावः क्लृप्तः प्रामाण्यनिश्चयस्तु कल्प्य इति वाच्यम्। गृहीतप्रामाण्यज्ञानसमानविषयकज्ञानान्तरे निष्कम्पप्रवृत्तिजनकज्ञानत्वमात्रेण सामग्रीसत्वेन**

तत्क्लृप्तेरुक्तत्वात्। फलमुखगौरवस्य चादोषत्वात्। अन्यथा अनुमितौ व्याप्तिज्ञानं न हेतुः। किं तु सहचारदर्शनवतो व्यभिचाराज्ञानम्। एवं पक्षे लिङ्गज्ञानं न हेतुः। किं तु पक्ष-ज्ञानवतः पक्षे लिङ्गासंसर्गाग्रहः। एवं प्रवृत्तौ विशिष्टज्ञानं न हेतुः। किं तु भेदाग्रहः। एवमर्थेन्द्रियादिसबन्धेऽर्थाभावाज्ञानं प्रवर्तकम् न त्वर्थनिश्चय इत्याद्यतिप्रसङ्गः।

एतेन उक्तरूपोर्थनिश्चय एव प्रवृत्तिहेतुः। अप्रमात्वेन अज्ञातत्वादिकं दण्डगतदार्ढ्यवत् कारणतावच्छेदकम्। तदभावात्पीतः शङ्ख इति ज्ञानान्न प्रवृत्तिरिति निरस्तम्। लाघवेन प्रमात्वेन ज्ञातत्वस्यैव तदवच्छेदकत्वौचित्यात्। अन्यथा अनुमित्यादौ सहचारादिज्ञानमेव हेतुः व्यभि-चरितत्वादिनाऽज्ञातत्वं कारणतावच्छेदकमिति स्यात्।

## न्यायदीपः

तौल्यमाशङ्क्य निराह ॥ **न चाप्रामाण्याज्ञानमपीति** ॥ **मन्मत इति** ॥ अनवस्था तु निरसिष्यत इति भावः ॥ **क्लृप्त इति** ॥ सर्वत्र सत्वादिति भावः ॥ **ज्ञानान्तर इति** ॥ क्लृप्तेरुक्तत्वादित्यन्वयः। बाधोद्धारग्रन्थ इत्यर्थः ॥ **सामग्रीसत्वेनेति** ॥ प्रामाण्यनिश्चयसामग्रीसत्वेनेत्यर्थः। कल्प्यत्वमुपेत्यापि आह ॥ **फलमुखेति** ॥ कारणताकल्पनावसरेऽवच्छेदकगौरवादेरिव प्रामाण्यनिश्चयकल्पनस्य अनुपस्थितत्वात् पश्चात्तदुपस्थितावुपजीव्यविरोधेन गृहीतकारणत्वाबाधकत्वादिति भावः। विपक्षे बाधकं चाह ॥ **अन्यथेति** ॥ एवं क्लृप्तत्वे गौरवस्यादोषत्वे च प्रामाण्यनिश्चयस्य अप्रवर्तकत्वमुपेत्य अप्रामाण्याज्ञानसहितार्थनिश्चयस्यैव प्रवर्तकत्व इत्यर्थः।

तृतीयकल्पं निराह ॥ **एतेनेति** ॥ **उक्तेति** ॥ अप्रामाण्यज्ञानशून्यार्थनिश्चय एवेत्यर्थः। एतेनेत्युक्तं व्यनक्ति ॥ **लाघवेनेत्यादिना** ॥

## तर्कताण्डवम्

एतेनैवार्थनिश्चय एव प्रवर्तकः। पीतः शङ्ख इत्यादौ

**त्वप्रामाण्यज्ञानं प्रवृत्तिप्रतिबन्धकमिति निरस्तम्। निर्विषयस्य जातिविशेषेणैव प्रतिबन्धकस्य मण्यादेस्त्वन्मते स्वाभावरूपकारणविघटनरूपतया प्रतिबन्धकत्वेपि मन्मते शक्तिविघटकत्वेन प्रतिबन्धकत्वेपि यथा जातिविशेषरहितस्य व्यभिचारादिज्ञानस्य मतद्वयेप्यनुमित्यादिजनकीभूतव्याप्त्यादिज्ञानविघटकत्वेनैव तत्प्रतिबन्धकता तथैव अप्रामाण्यज्ञानस्यापि प्रवृत्तिहेतुभूतज्ञानविघटकत्वेनैव प्रतिबन्धकतेति वक्तव्ये अर्थनिश्चयस्य पीतः शङ्ख इत्यादौ सत्वेन तद्विघटनासम्भवात्तेन विघटनीयस्य प्रामाण्यज्ञानस्य हेतुत्वसिद्धेः। ज्ञानं हि ज्ञानान्तरस्य विषयद्वारैव विरोधीति स्वविषयविरुद्धविषयकमेव ज्ञानं विघटयति।**

**अन्यथा व्यभिचारादिज्ञानमपि स्वाभावरूपहेतुविघटनतया अनुमित्यादिप्रतिबन्धकं वा सहचारादिज्ञानगतशक्तिविघटकत्वेन प्रतिबन्धकं वा स्यात्। न तु व्याप्त्यादिज्ञानविघटकम्। बाधादिस्तु ग्राह्याभावविषयकत्वेन साक्षाद्विरोधित्वात्स्वत एवानुमितिप्रतिबन्धकः। ज्ञाननिष्ठाप्रामाण्यविषयकज्ञानं तु घटिविषयकप्रवृत्तेर्न साक्षाद्विरोधि।**

## न्यायदीपः

चतुर्थकल्पं निराह ।। **एतेनैवेति** ।। अप्रामाण्यज्ञानं प्रामाण्यविरोधिज्ञानमित्यर्थः। एतेनेत्युक्तं दुर्गमात्वाद्व्यनक्ति ।। **निर्विषयस्येत्यादिना** ।। जातिविशेषहीनस्य साक्षादविरोधिनो ज्ञानस्य प्रतिबन्धकत्वं तज्जनकज्ञानविघटकत्वेनैवेति व्याप्तेर्यथेत्यादिना विवक्षितत्वान्मण्यादौ निर्विषये व्यभिवारो नेति भावेन निर्विषयस्येत्याद्युक्तिः।

ननु ज्ञानमपि मण्यादिवद् बाधप्रतिपक्षवच्च कारणीभूतस्वाभावविघटनरूपतयैवास्तु प्रतिबन्धकं किं कारणीभूतज्ञानविघटकतयेत्यत आह ।। **ज्ञानं हीति** ।। स्वमतावष्टम्भेनाह ।। **शक्तिविघटकत्वेन इति** ।। बाधवैषम्यामाह ।। **बाधादिस्त्विति** ।। अस्तु ज्ञानं हीत्यादिनोक्तमप्रामाण्य-

ज्ञानं तु बाधादिवत्स्यादित्यत आह ।। **ज्ञाननिष्ठेति** ।। **अप्रामाण्येति** ।। प्रामाण्यविरोधीत्यर्थः। किं तु प्रामाण्यनिश्चयस्यैवेति तद्विघटकतयैव प्रतिबन्धकमिति प्रामाण्यज्ञानस्य हेतुत्वसिद्धिः। तद्वत्त्वाभावस्य प्रवृत्तिविषयाभावत्वेपि न तन्मात्रमप्रामाण्यमिति भावः।

## तर्कताण्डवम्

**किञ्चोक्तप्रकारेणाप्रामाण्यज्ञानवत् प्रामाण्यात्यन्ताभावादिज्ञानानामपि प्रतिबन्धकत्वादभावकूटस्य कारणता कल्प्या इत्यतिगौरवम्। ततो वरमेकः प्रामाण्यनिश्चयो हेतुः, अप्रामाण्यादिज्ञानं तु तद्विघटकमिति। मण्यादौ तु त्वन्मते तद्विघटनीयस्यैकस्याभावादभावकूटस्य हेतुतास्तु।**

**एतेनैव उपाधिज्ञानस्याधेयव्यभिचारज्ञानरूपानुमितिप्रतिबन्धकान्तरसम्पादनेनानुमितिप्रतिबन्धकत्वमिवाप्रामाण्यसन्देहस्यापि मानसार्थसन्देहरूपप्रवृत्तिप्रतिबन्धकान्तरसम्पादनेन प्रवृत्तिप्रतिबन्धकत्वम्। उक्तं हि- ''अप्रामाण्यसंशयेनार्थनिश्चयं परिभूयार्थसंशय'' इतीति निरस्तम्। मानसार्थसन्देहस्यापि पीतः शङ्ख इत्यादावुक्तरीत्यार्थनिश्चयसद्भावेन तद्विघटकत्वायोगेन सदर्थत्वरूपप्रामाण्यनिश्चयविघटनेनैव प्रतिबन्धकत्वस्यैव उचितत्वात्। तस्मादसंसर्गग्रहव्यभिचारज्ञानादेः प्रवृत्त्यनुमित्यादिप्रतिबन्धकत्वान्यथानुपपत्त्यैव तद्विघटनीयस्य संसर्गग्रहव्याप्तिज्ञानादेः प्रवृत्त्यनुमित्यादिहेतुत्ववत् अप्रामाण्यज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वान्यथानुपपत्त्यैव तद्विघटनीयस्य प्रामाण्यज्ञानस्य तद्धेतुत्वसिद्धिः।**

## न्यायदीपः

जनकज्ञानविघटकत्वमनुपेत्य बाधवत्प्रवृत्तौ स्वकारणीभूताभावविघटनरूपत्वेनैव प्रतिबन्ध-

कत्वे दोषान्तरमाह ॥ **किञ्चेति** ॥ **उक्तेति** ॥ ''एवमप्रामाण्यशङ्काद्यभाववत्'' इत्यादिनोक्त-प्रकारेणेत्यर्थः ॥ **अतिगौरवमिति** ॥ अप्रामाण्यज्ञानाभावः कारणमित्येतदेव प्रामाण्यज्ञानाद्गुरु। तत्राप्यभावकूटः कारणमित्युक्तावतिगौरवमित्यर्थः। शक्तेरनङ्गीकारादन्यस्य प्रतिबन्धस्याभावात् अप्रामाण्यज्ञानाभावादिषु चानुगतैकहेतुतावच्छेदकस्यासम्भवादभावकूटस्यैव हेतुतायास्त्वया वाच्यत्वादिति भावः। नन्वेवं मण्याद्यभावकस्थले मणिमन्त्राद्यभावकूटस्य कारणता क्लृप्तेत्यत्रापि तथा स्यादित्यत आह ॥ **मण्यादौ त्विति** ॥ इह त्वस्ति विघटनीयं प्रामाण्यज्ञानमिति किमर्थमति-गौरवाश्रयणमिति भावः।

पञ्चमं पक्षं प्रत्याचष्टे ॥ **एतेनैवेति** ॥ उपाधेर्व्यभिचारोन्नायकत्वपक्षमुपेत्योक्तम् ॥ **आधेय-व्यभिचारज्ञानेति** ॥ सन्देहनिश्चयसाधारणज्ञानमात्रस्य प्रतिबन्धकत्वाज्ज्ञानपदप्रयोगः ॥ **उक्तं हीति** ॥ मणावित्यर्थः।

एतेनैवेत्युक्तं व्यनक्ति ॥ **मानसार्थसन्देहस्यापीति** ॥ तद्विघटकत्वा-योगेनेत्यादिनान्वयः। ज्ञानं हीत्यादिनोक्तरीत्या प्रामाण्यनिश्चयविघटनेनैव प्रतिबन्धकत्वस्य उचितत्वादित्यर्थः। अर्थ-सन्देहस्य प्रामाण्यनिश्चयविरोधित्वघटनाय सदर्थत्वरूपेत्युक्तम् ॥ **तस्मादिति** ॥ अन्यस्य विघट-नीयस्याभावाज्ज्ञानस्य ज्ञानान्तरविघटकत्वाच्चेत्यर्थः। अनुमित्यादीत्यादिपदेन लिङ्गपरामर्शादिग्रहः। अप्रामाण्याज्ञानस्य इत्युपलक्षणम्। अर्थसन्देहस्य चेत्यपि ध्येयं ॥ **तद्धेतुत्वेति** ॥ प्रवृत्तिहेतुत्वेत्यर्थः।

## तर्कताण्डवम्

**यद्यपि परप्रक्रियया न निश्चितप्रामाण्यज्ञानं प्रवर्तकम्। प्रामाण्यलिङ्गज्ञानादिनार्थज्ञानस्य नाशात्। किन्तु तत्समानविषयकमप्रामाण्यशङ्कारहितमुत्तरं ज्ञानान्तरमेव। तथापि मन्मतेपि साक्षिरूपस्य सुखादिज्ञानस्य स्वप्रकाशत्वेन स्वस्यैव स्वप्रामाण्यनिश्चयरूपत्वात्। घटादिज्ञानस्य तु परग्राह्यत्वेपि तद्ग्राहकेण नित्येन साक्षिणा प्रमाणत्वेनैव ग्रहणात्तस्य च स्वप्रकाशत्वेनानवस्थाभावात् निश्चित-प्रामाण्यमेव ज्ञानं प्रवर्तकम्। किञ्चाद्ये ज्ञाने प्रामाण्यनिश्चयेन कथं द्वितीये तच्छङ्काभावः।**

## न्यायदीपः

आशुविनाशिनो ज्ञानस्य प्रवृत्तिकालेऽभावात्कथं प्रमात्वेन ज्ञातस्य प्रवर्तकत्वम्। उक्तं च मणौ ''ज्ञानं गृहीतप्रामाण्यं न प्रवर्तकम्। प्रामाण्यानुमितेः पूर्वमेव तस्य नाशात्। किं तु तज्ज्ञानसमानविषयकमप्रामाण्यशङ्काशून्यज्ञानान्तरमेवेत्यादी''त्येतच्चोद्यमनूद्य समाधिमाह **॥ यद्यपीति ॥ स्वप्रकाशत्वेनेति ॥**

''यदि साक्षी स्वयं भातो न मानं केन गम्यते।
अक्षजादेश्च मानत्वमनवस्थान्यथा भवेत्'' ॥

इति वैशेषिकनयानुव्याख्याने तथा-

''नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरम्।
स्वप्रामाण्यं सदा साक्षी पश्यत्येव सुनिश्चयात्'' ॥

इति ज्ञानपादीयानुव्याख्याने चोक्तेरिति भावः **॥ घटादिज्ञानस्य त्विति ॥** मनोवृत्तिरूपज्ञानस्येत्यर्थः।

''इच्छा ज्ञानं सुखं दुःखं भया भयकृपादयः।
साक्षिसिद्धा''

इत्युक्तेरिति भावः **॥ नित्येनेति ॥** औत्तरिकानुस्मृतिसिद्धात्मस्वरूपभूतसैषुप्तिकानुभवरूपस्य तस्य नित्यत्वादिति भावः **॥ अनवस्थेति ॥** पूर्वोक्तद्विविधानवस्थाभावादित्यर्थः। तथा च मणावुक्तो दोषः परेषामेव। नास्माकम्। ''अन्यथा भट्टमते प्रामाण्यस्यानुमितिग्राह्यत्वे अनवस्था स्यात्। गुरुमते प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यम्। स्वरूपप्रामाण्यबहिर्भूतत्वात्। किन्तु परग्राह्यत्वे अनवस्थाना''दित्यपि मणिकृदुक्तो दोषो नास्मत्पक्षे। स्वग्राह्यत्वस्यापि साक्षिवेद्यत्वादिति भावः।

## तर्कताण्डवम्

**ननु यदीदं रजतं न स्यात्तदा रजतत्वप्रकारकप्रमाविषयो न स्यादिति तर्कप्रभावाद् द्वितीये शङ्काभावः। तर्केणार्थसत्त्वशङ्कानिवर्तनेन तद्घटिताप्रामाण्यशङ्कानिवर्तनात् इति चेन्न। क्लृप्तसामग्रीकस्य लघोश्चानुव्यवसायरूप-प्रामाण्यनिश्चयस्य त्यागेनान्यस्य विपरीतस्योक्तरूप-**

तर्कानुसन्धाननियमस्य च कल्पनेऽनुभवविरोधात्।।

किञ्चाप्रामाण्यशङ्कानन्तरं प्रवृत्तौ प्रामाण्यनिश्चयो हेतुरिति तावदविवादम्। तत्र निश्शङ्कप्रवृत्तित्वमेव कार्यतावच्छेदकं लाघवात्। न तु शङ्कानन्तरनिश्शङ्कप्रवृत्तित्वं गौरवात्। तत्र प्रामाण्यनिश्चयोऽप्रामाण्यशङ्कानिरासोपक्षीण इति तु गौरवादिना निरस्तम्। अन्यथा व्याप्त्यादिनिश्चयोपि व्यभिचारादिशङ्कानिरासोपक्षीणः स्यात्।

किञ्च प्रामाण्यनिश्चयस्याप्रामाण्यशङ्कानिवर्तकत्वेन उपक्षये त्वत्पक्षे प्रामाण्यस्यानुमेयत्वेनावश्यकेन प्रामाण्यव्याप्यतया लिङ्गज्ञानेनैवाप्रामाण्यशङ्कानिवृत्ति-सम्भवात्प्रामाण्यज्ञानस्य प्रवृत्तावनुपयोगात्तद्ग्रहणचिन्ता व्यर्था। यद्यपि व्यवसायः शङ्कानिवर्तकपरीक्षाकाले नास्ति। तथापि स्मृत्युपनीतस्य व्यवसायस्य प्रामाण्यनिश्चय एव प्रवर्तकः।

यद्वा त्वन्मते गृहीतप्रामाण्येन ज्ञानेन समानशीलत्वाद-प्रामाण्यशङ्कारहितं ज्ञानान्तरमिव मन्मते निरस्तप्रतिबन्धेन साक्षिणा गृहीतप्रामाण्यं ज्ञानान्तरमेव प्रवर्तकम्। एतदप्युक्तम् ''अन्यथे''त्यादिना। प्रामाण्यनिश्चयस्याप्रवर्तकत्वे व्याप्त्यादिनिश्चयोऽनुमित्यादिहेतुरिति व्यवस्थायोगा-दित्यर्थः।

प्रामाण्यनिश्चयस्य प्रवर्तकत्वम् ।। ६ ।।

## न्यायदीपः

ननु समानविषयकज्ञानान्तर इवाप्रामाण्यशङ्कानिवृत्तावेव प्रामाण्यज्ञप्तेरुपक्षयान्न प्रवृत्तिहेतुता कल्प्या। ''अप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानं'' इति

मण्युक्तेरित्यतो द्वितीयज्ञानेपि प्रामाण्यनिश्चय एव प्रवर्तक इति भावेनाह ।। **किञ्चेति द्वितीय इति** ।। गृहीतप्रामाण्यज्ञानसमानविषयके ज्ञानान्तर इत्यर्थः ।। **क्लृप्तेति** ।। ''न च दृष्टान्तः साध्यविकलः उत्तरस्य ज्ञानस्य'' इत्यादिना स्वतस्त्वानुमानावसरोक्तरीत्या क्लृप्तसामग्रीकस्येत्यर्थः। अन्यत्र क्लृप्तत्वाच्च द्वितीयज्ञानादावपि प्रामाण्यनिश्चय एव प्रवर्तक इति भावेनाह। ।। **किञ्चाप्रामाण्येति** ।। **अविवादमिति** ।। ''परतः पक्षे प्रामाण्यग्रहो न क्वचित्प्रवर्तकः'' इति मण्युक्तेरस्ति विवादः। तथापि ''यत्रचानभ्यासदशायामप्रामाण्यशङ्कयार्थनिश्चयं परिभूयार्थसंशयस्तत्र प्रामाण्यनिश्चयाधीनज्ञानादर्थं निश्चित्य निष्कम्पं प्रवर्तते'' इत्युक्त्या तत्र स्थले प्रामाण्यनिश्चयस्य नियतपूर्ववृत्तित्त्वाल्लघुत्वाद् हेतुत्वमवश्यं वाच्यमिति भावेनैवमुक्तिः। अन्यत्रोपक्षयात्कथं हेतुतेत्यत आह ।। **तत्र प्रामाण्येति** ।। **गौरवादिनेति** ।। गौरवातिगौरवादिना पूर्वमेव निरस्तमित्यर्थः। अतिप्रसङ्गं किञ्चिद्व्यनक्ति ।। **अन्यथेति** ।।

यदपि मणौ ''नन्वेवं बहुवित्तव्ययायाससाध्ये'' इत्यादिना प्रामाण्यज्ञानस्यानुपयोगमाशङ्क्य अप्रामाण्यशङ्कानिवर्तकत्वेनोपयोगकथनं तदप्ययुक्तमित्याह ।। **किञ्च प्रामाण्येति** ।। अप्रामाण्य-शङ्कानिवृत्तिस्थले व्यवसायस्य नाशेन प्रवृत्तिकालेऽभावात्कथं प्रमात्वेन ज्ञातं ज्ञानं प्रवृत्तिहेतुरित्या-शङ्क्य द्वेधा समाधिमाह ।। **यद्यपीत्यादिना** ।। **स्मृतीति** ।। परीत्येदम्। यद्वा सिद्धान्ते साक्षिरूपनित्य-ज्ञानविषयस्यापि स्मृत्युपनीतत्वप्रकारो जिज्ञासानयभाष्यटीकाभावदीपेऽस्माभिरुक्तो ध्येयः ।। **एतदपीति** ।। प्रामाण्यनिश्चयस्याप्रवर्तकत्वेऽतिप्रसङ्ग इत्येतदपीत्यर्थः।

प्रामाण्यनिश्चयस्य प्रवर्तकत्वम् ।। ६ ।।

## परतस्त्वेऽनवस्थोक्तिः

### तर्कताण्डवम्

**किञ्चाप्रामाण्यशङ्काभावस्य प्रवर्तकत्वेपि तदर्थमेव प्रामाण्यनिश्चयो वाच्यः। ननु धर्म्यज्ञानादिनापि शङ्काभावो युक्तः। न हि ज्ञानं ज्ञातं सदेव प्रवर्तकम्। सत्यप्यर्थज्ञाने तदज्ञानेनाप्रवृत्त्यदर्शनादिति चेन्न। न तावद्धर्म्यज्ञानं युक्तम्। योग्यस्य धर्मिणो ज्ञानस्य मनस्संयुक्तात्मसमवायरूप-**

**सम्प्रयोगवत्त्वेनैवोत्पत्या ज्ञानत्वेन ज्ञानज्ञानसामग्र्याः सत्वात्।**

## न्यायदीपः

एवं प्रामाण्यनिश्चयस्य प्रवर्तकत्वसाधनेन तन्निश्चयस्य परतोज्ञायमानत्वेऽनवस्थाद्वयमुक्त्वा अप्रामाण्याशङ्काशून्यस्यार्थनिश्चयस्य प्रवर्तकत्वेपि तदर्थमेव प्रामाण्यनिश्चयस्यावश्यकत्वादनवस्थाद्वयं दुर्वारमेव परतस्त्वपक्षे इत्याह ॥ **किञ्चेति** ॥ यद्वा प्रामाण्यनिश्चयस्य प्रवर्तकत्वपक्षे तस्यावश्यवेद्यत्वेप्यप्रामाण्यशङ्काशून्यार्थनिश्चयस्य प्रवर्तकत्वपक्षे तदनावश्यकत्वान्नानवस्थेत्यत आह ॥ **किञ्चेति** ॥ **प्रवर्तकत्वेपीति** ॥ प्रवर्तकार्थनिश्चयसहकारित्वेपीत्यर्थः। यद्यपि सिद्धान्ते परीक्षयाऽप्रामाण्यशङ्कानिवृत्तावेव साक्षिणा प्रामाण्यनिश्चयेन प्रामाण्यनिश्चयस्याप्रामाण्यशङ्काभावार्थत्वं नास्ति। ''सा च बुद्धिदोषमात्रं निरस्याति। तस्मिन्निरस्ते साक्षी स्वमहिम्नैव प्रामाण्यं गोचरयति'' इति तत्वनिर्णयटीकाद्युक्तेः। तथापि ''यत्र तु प्रामाण्यज्ञानेऽप्रामाण्यशङ्कया प्रामाण्यसंशयः तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः'' इति मण्युक्तेस्तं प्रत्येतदापादनमित्यदोषः।

ननु तच्छङ्काभावः प्रामाण्यनिश्चयरूपप्रतिबन्धादिव स्वहेत्वभावादपि सम्भवतीति भावेन ''प्रामाण्यज्ञानस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामाण्यनिश्चयानवश्यम्भावात्'' इति मण्याद्युक्तमाशङ्कते ॥ **नन्विति** ॥ तथात्वे प्रवृत्तिर्न स्यादित्यत आह ॥ **न हीति** ॥ ''ज्ञानं ह्यबुभुत्सितग्राह्यतया तीव्रसंवेदनं'' इत्यादिप्रथमपादीयसुधावाक्यं विवृण्वन्नाह ॥ **न तावदिति** ॥ कोट्यस्मरणं चायुक्तमिति कल्पापेक्षया तावच्छब्दः। अज्ञानं हि तदर्थयोग्यत्वाभावेन वा सन्निकर्षादिसामग्र्यभावेन वा सहकारिविरहप्रयुक्तसामग्र्यभावेन वा प्रतिबन्धेन वेति चतुर्धा। आद्यद्वयं न प्रकृत इत्याह ॥ **योग्यस्येत्यादिना** ॥ मनस्संयुक्तेत्याद्युक्तिः परीत्या। सिद्धान्ते त्वात्मसंयुक्तमनस्समवायेत्यर्थः। समवायस्तादात्म्यं ज्ञेयम्। सुखाद्यनुभवरूपसाक्ष्याशयेन वायं ग्रन्थः सिद्धान्ते योज्यः। सत्यपि धर्मिज्ञाने साधारणधर्मादर्शनादसन्देह इति शङ्कापनोदायोक्तं ॥ **ज्ञानत्वेन ज्ञानज्ञानेति** ॥

न च ज्ञानत्वनिर्विकल्पकविलम्बात्तदभावः। निर्विकल्पकस्याप्यनुत्पत्तौ बीजाभावान्निरसिष्यमाणत्वाद्वेति भावः। एतेन ''सुखादिवत्सत्यां सामग्र्यां वेद्यत्वापरिहारात्'' इति तत्वनिर्णयटीका विवृता।

## तर्कताण्डवम्

नच ज्ञानज्ञाने बुभुत्सा हेतुः साचासार्वत्रिकीति वाच्यम्। ज्ञानस्य सुखादिवद्योग्यात्मविशेषगुणत्वेनाबुभुत्सित-ग्राह्यत्वात्। बुभुत्साया ज्ञानरूपधर्मिज्ञानसाध्यत्वेना-नवस्थानाच्च। वर्तमानस्वीयज्ञाने बुभुत्साया अदर्शनाच्च॥

न च धर्म्यज्ञानरूपफलात्सुखादिसामग्री तज्ज्ञानसामग्री वा ज्ञानप्रतिबन्धिका कल्प्यत इति वाच्यम्। धर्म्यज्ञानस्य अद्याप्यसिद्ध्यान्योन्याश्रयात्। ज्ञानस्याज्ञाने तत्र कदाचित् संशयाद्यापाताच्च। कोट्यस्मरणं चायुक्तम्। ज्ञानत्वरूप-साधारणधर्मदर्शनस्य यागादौ निष्कम्पप्रवृत्यर्थं प्रामाण्यादि-रूपविशेषबुभुत्सायाश्च सत्वेन तत्स्मरणसामग्र्याः सत्वात्।

न च विषयान्तरसञ्चारादसन्देह इति युक्तम्। यागादौ निष्कम्पप्रवृत्तिहेत्वसन्देहप्रयोजकविशेषावधारणाय विषयान्तरसञ्चारस्यैव निरोद्धव्यत्वात्। न हि प्रेक्षावन्तो बहुवित्तव्ययायाससाध्ये साधनत्वानिश्चयेपि विषयान्तर-सञ्चारसम्पादितासन्देहमात्रेण चैत्यवन्दनादौ प्रवर्तन्ते।

किञ्चोक्तरीत्या सम्पन्नसामग्रीकेण क्लृप्तेन प्रामाण्य-निश्चयेनैवासन्देहसम्भवे कथं विषयान्तरसञ्चारादिकल्पनम्।

अपि च विषयान्तरसञ्चारेपि सुखादिज्ञानप्रामाण्ये नियमेनासन्देहो दृश्यत इति नासावसन्देहहेतुः। अन्यथा सुखादिकमपि सुखत्वादिना नावश्यवेद्यम्। तत्रासन्देहस्तु धर्म्यज्ञानादिनेति स्यात्। तत्र सामग्रीसत्वादवश्यवेद्यतेति चेत्समं प्रामाण्येपि।

## न्यायदीपः

सहकार्यन्तरविरहान्न ज्ञानज्ञानमिति तृतीयमाशङ्क्य निराह ॥ **न चेति** ॥ **अनवस्थानाच्चेति** ॥ बुभुत्सा हीच्छाविशेषः। तस्याः स्वविषयज्ञानसाध्यत्वाद् बुभुत्साहेतुज्ञानस्य धर्मिज्ञानविषयकस्य तद्विषयबुभुत्सासाध्यत्वात् सा च तद्विषयज्ञानसाध्येति पूर्वपूर्वज्ञानव्यक्तिबुभुत्साव्यक्तिपरम्परया-ऽनवस्थानाच्चेत्यर्थः। भविष्यदादिज्ञानज्ञाने कथञ्चिद् बुभुत्सासम्भवेपि न वर्तमाने। तथाच तत्र व्यभिचारान्नक्वापि सा ज्ञानज्ञानहेतुरित्याह ॥ **वर्तमानेति** ॥ **स्वीयेति** ॥ यद्यपि स्वस्येदमित्यर्थेऽणि कृते स्वशब्दस्य द्वारादिषु पाठेन "द्वारादीनाञ्चे"तिसूत्रेण वकारात्पूर्वमैजागमेनौकारे सति सौवेति भाव्यम्। तथापि स्वस्मै हितमित्यर्थे "प्राक् क्रीताच्छ" इति छप्रत्यये स्वीयेति साध्विति ज्ञेयम्।

चतुर्थं निराह ॥ **न च धर्म्यज्ञानेति** ॥ व्यवसायरूपधर्मिणोऽज्ञानेत्यर्थः ॥ **ज्ञानस्याज्ञान इति** ॥ अननुव्यवसाय इत्यर्थः ॥ **संशयेति** ॥ ज्ञानं वृत्तं न वेत्येवं संशयेत्यर्थः। एतेन "न च जिज्ञासायामेव अनुभवोऽनुभूयते" इत्यादिभाष्यटीका विवृता ध्येया। कोट्यस्मरेणनेत्येतन्निराह ॥ **कोट्यस्मरणं चेति** ॥ "ज्ञाने हि ज्ञाते तत्प्रामाण्यानुपलब्धौ कथं संशयो न स्यात्" इति तत्वनिर्णयटीकां विवृण्वान आह ॥ **ज्ञानत्वेति** ॥

मण्युक्तमन्यदपि निराह ॥ **न चेति** ॥ परकीयप्रवृत्तिहेतुभूतः शङ्काभावः प्रामाण्यनिश्चयहेतुक एव। न तु विषयान्तरसञ्चारहेतुक इति तु दुर्ज्ञानमित्यत आह ॥ **किञ्चोक्तरीत्येति** ॥ बाधोद्धार-ग्रन्थोक्तरीत्या सम्पन्नसामग्रीकेण प्रामाण्यनिश्चयप्रवर्तकत्ववादोक्तरीत्या क्लृप्तेनेत्यर्थः। व्यभिचाराच्च असन्देहहेतुरेवायं न भवतीत्याह ॥ **अपिचेति** । **अन्यथेति** ॥ क्लृप्तासन्देहहेतुत्यागेनाक्लृप्तहेतुकल्पन इत्यर्थः ॥ **सममिति** ॥ अत्रापि सामग्र्याः बाधोद्धारग्रन्थ उपपादितत्वादिति भावः।

## तर्कताण्डवम्

**एतेन शङ्काविश्रान्तिभूमौ सुखादिज्ञाने प्रामाण्यव्याप्यस्य सुखज्ञानत्वादेर्विशेषस्य दर्शनादेवासंशय इति निरस्तम्। प्रामाण्यव्याप्यतया सुखज्ञानत्वदुःखज्ञानत्वादिज्ञानादपि प्रामाण्यज्ञानस्य लघुत्वात्। सुखज्ञानत्वादेः प्रामाण्य-व्याप्यत्वग्रहेप्यसंशयदर्शनाच्च। जन्मान्तरीयव्याप्तिग्रह-कल्पनस्य चातिप्रसङ्गित्वात्। तस्मात्प्रामाण्यस्यावश्य-**

**वेद्यत्वादनवस्थाद्वयं दुष्परिहरम्। एतदप्युक्तं ''अन्यथा'' इत्यादिना। परतस्त्वे उक्तानवस्थाद्वयापत्तेरित्यर्थः।**

**ननु त्वन्मते यद्यपि प्रामाण्यग्रहणार्थं संवादविसंवाद-भावाभावरूपपरीक्षा नापेक्षिता। तथापि दोषशङ्कादिरूप-प्रतिबन्धनिरासार्थं साऽपेक्षितैव। तथा च तत्रापिदोषशङ्कायां तन्निरासाय परीक्षान्तरमित्यनवस्था तुल्यैवेति चेन्न। साक्षि-वेद्यसुखदुःखादिज्ञाने दोषशङ्काया अभावेन परीक्षानव-स्थाभावात्। उक्तं हि भगवत्पादैः-**

**''न परीक्षानवस्था स्यात्साक्षिसिद्धे त्वसंशयात्'' इति।**

**परतस्त्वे अनवस्थोक्तिः ॥७॥**

## न्यायदीपः

यदपि ''विशेषदर्शनान्न तत्राप्रामाण्यशङ्का'' इति मणिवचनं तद्विवरणपूर्वं तदपि नेत्याह ॥ **एतेनेति** ॥ **व्याप्यतयेति** ॥ स्वरूपज्ञानमात्रस्याप्रयोजकत्वादिति भावः। प्रामाणिकं गौरवं न दोषावहमित्याह ॥ **सुखज्ञानत्वादेरिति** ॥ यद्वा व्यभिचारान्नायमसंशयहेतुरित्याह ॥ **सुखेति** ॥ व्यभिचारासिद्धिमाशङ्क्य निराह ॥ **जन्मेति अतिप्रसङ्गित्वादिति** ॥ ज्ञानहेतुकत्वव्यभिचारस्थले सर्वत्रैवं परिहारसम्भवादिति भावः। यद्वा नारिकेलद्वीपवासिनो वह्न्यनुमानापत्तेरिति भावः। एवमियता ग्रन्थेन ''अवश्यवेद्यत्वाभावान्नानवस्थेत्यभिप्राय इति चेन्न। निश्शङ्कं प्रवृत्ताववश्यवेद्यत्वात्'' इति तत्वनिर्णयटीकावाक्योक्तं निःशङ्कप्रवृत्यर्थं तद्धेत्वप्रामाण्यशङ्काभावार्थं चावश्यवेद्यमित्यतीतवादत्रये चोपपाद्योपसंहरति ॥ **तस्मादिति** ॥ अतीतवादोक्तदिशा निश्शङ्कप्रवृत्यर्थं अत्र वादे उक्तदिशा धर्म्यज्ञानादिना शङ्काभावायोगेनाप्रामाण्यशङ्काभावार्थं च प्रामाण्यनिश्चयस्यापेक्षिततत्वादित्यर्थः ॥ **एतदपीति** ॥ परतस्त्वे प्रामाण्यज्ञानस्यापीत्यादिनोक्तमित्यर्थः।

''अवश्यं तत् स्वतःप्रामाण्यग्रहणवादिनाप्यङ्गीकर्तव्यं'' इत्यादिटीकार्थं निष्कृष्य वक्तुं स्वमतेऽनवस्थादोषं शङ्कापूर्वमुद्धरति ॥ **नन्वित्यादिना** ॥ **उक्तं हीति** ॥ ज्ञानपादीयानुव्याख्यान इत्यर्थः।

परतस्त्वे अनवस्थोक्तिः ॥७॥

## परतस्त्वे प्रथमप्रामाण्यानुमित्यसम्भवः।

### तर्कताण्डवम्

**किञ्च प्रामाण्यमनुमेयं चेत्कथं प्राथमिकं तज्ज्ञानम्। अप्रसिद्धविशेषणत्वेनानुमानाप्रवृत्तेः। प्रवृत्तिगतसंवादरूप-वैचित्र्येण तद्धेतुज्ञाने वैचित्र्यानुमानेपि वह्न्यर्थिप्रवृत्तिहेतोः वह्नित्ववति वह्नित्वप्रकारकत्वादिरूपप्रामाण्यस्य विशिष्यासिद्धेः।**

**न च प्रामाण्यमात्रनिषेधे व्याघातदण्डभयेन विशेष्य-वृत्तिप्रकारकत्वरूपं प्रामाण्यं सामान्यत एव प्रसिद्धं वह्निज्ञाने साध्यमानं पक्षधर्मताबलाद्वह्नित्ववति वह्नित्वप्रकारकत्वादौ पर्यवस्यति। एवं च नाप्रसिद्धविशेषणत्वं नाप्यसाधारण्यमिति वाच्यम्। प्रथमे स्वार्थानुमाने परकीयस्य प्रामाण्यनिषेधस्य अभावेन व्याघातानुपस्थितेः। स्वयं निषेधस्य च तद्धीपूर्वकत्वात्।**

**न च तत्र प्राग्भवीयसंस्कारजन्या स्मृतिरूपा तत्प्रसिद्धिः। प्रथमप्रामाण्यज्ञानस्य प्रामाण्यस्वतस्त्वेनैवोपपत्तौ तत्कल्प-काभावात्।**

### न्यायदीपः

एवं परतस्त्वे अनवस्थाद्वयोक्त्या स्वतस्त्वहेतूनामप्रयोजकत्वं निरस्य विपक्षेऽनुमित्यसम्भव-रूपबाधकान्तरादपि नाप्रयोजकाः स्वतस्त्वहेतव इति भावेनाह ॥ **किञ्चेति** ॥ ननूक्तमत्र मणौ ''प्रथमं च प्रामाण्यज्ञानं व्यतिरेकिणा'' इति तत्राह ॥ **अप्रसिद्धेति** ॥ साध्याप्रसिद्धौ तन्निरूपितव्याप्त्य-ज्ञानादिति भावः। ननु संवादप्रवृत्तिर्विसंवादप्रवृत्तिहेतुविलक्षणहेतुसाध्या तद्विलक्षणकार्यत्वादित्य-नुमानेन सिद्ध्यद्वैलक्षण्यं प्रामाण्यरूपमेव सेत्स्यतीत्यत आह ॥ **प्रवृत्तीति** ॥ दाहसमर्थविशेष्यवृत्ति-प्रकारकत्वादिरादिपदार्थः।

प्रकारान्तरेण प्रसिद्धिमाशङ्क्य निराह ॥ **न चेति** ॥ विशेष्यवृत्तिप्रकारकज्ञानं नास्ति, प्रमा नास्तीत्यादिनिषेधस्य क्वचित्प्रमाप्रसिद्धिं विनानुपपत्तेस्तदर्थं तत्प्रसिद्ध्यभ्युपगमे व्याघातरूपदण्ड-प्रसङ्गात्तद्भयेन क्वचित्प्रसिद्धेरवश्यवाच्यत्वात् ॥ **सामान्यतः सिद्धमित्युक्तम्** ॥ **साध्यमानमिति** ॥ वह्निज्ञानं विशेष्यवृत्तिप्रकारकं समर्थप्रवृत्तिहेतुत्वादिति व्यतिरेकिणा साध्यमानमित्यर्थः ॥ **नाप्यसाधारण्यमिति** ॥ व्यक्तिविशेषे साध्यस्यानिश्चयेन सपक्षानिर्णयादिति भावः। ननु स्वर्थानुमाने परकीयव्याघातानवतारेपि स्वकीयप्रामाण्यनिषेधानुपपत्त्यैव तत्सिद्धिः स्यादित्यत आह ॥ **स्वयमिति** ॥ तथा च सा धीरेव कथं स्यादिति मृग्यत इति भावः।

''प्रागभवीयसंस्काराद्विशेष्यावृत्यप्रकारकत्वं तद्वति तत्प्रकारकज्ञानत्वं वा तत्प्रामाण्यं तन्मात्रं स्मृतं वह्निज्ञानादौ साध्यमानं'' इत्यादिना मणिकृदुक्तं तत्सम्प्रदायविदां मतमनूद्य निराह ॥ **न च तत्रेति** ॥ प्रथमप्रामाण्यानुमितिस्थल इत्यर्थः ॥ **उपपत्ताविति** ॥ तदुपपत्तिप्रकारश्च बाधोद्धारग्रन्थे संशयोपपादनग्रन्थादौ चोक्त इति भावः।

## तर्कताण्डवम्

**अथ प्रथमं अयं वह्नित्वेनानुभवो वह्नित्वप्रकारकत्वे सति वह्नित्वाभाववद्विशेष्यको न समर्थप्रवृत्तिजनकत्वात् व्यतिरेकेणाप्रमावदित्यनुमानेनाप्रामाण्याभाव एवानुमेयः। तत एव निष्कम्पप्रवृत्तेः। न च तत्रापि साध्याप्रसिद्धिर्दोषः। अभावसाध्यके व्यतिरेकिणि साध्यप्रसिद्धिं विनैव साध्याभावरूपस्य भावस्य हेत्वभावव्याप्यत्वग्रहात्।**

**यद्वा वह्नित्वाभाववद्विशेष्यको नेत्येव साध्यम्। पक्षधर्मताबलादप्रामाण्याभावसिद्धिः। नच घटादिरूपात् सपक्षाद् व्यावृत्याऽसाधारण्यम्। तस्यानित्यदोषत्वादिति चेन्मैवम्। प्रथमस्य प्रामाण्यग्रहणस्योपाये पृष्टेऽप्रामाण्या-भावग्रहणोपायकथनस्य व्यधिकरणत्वात्।**

**न चोक्तव्यतिरेक्येव पक्षधर्मताबलाद्वह्नित्ववद्वि-शेष्यकत्वरूपं प्रामाण्यं गृह्णातीति वाच्यम्। व्याप्त्या**

**व्यापकतावच्छेदकावच्छिन्नत्वेनोपस्थापितस्यापूर्वस्य व्यक्तिविशेषस्यैव पक्षधर्मतया पक्षसम्बन्धसिध्या तथानुप-स्थपितस्योक्तरूपप्रामाण्यस्य पक्षसम्बन्धबोधने तस्या असामर्थ्यात्।**

## न्यायदीपः

''वयं तु ब्रूमः प्रथममप्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणा साध्यं'' इत्यादिनोक्तं मणिकृदभिमतं पक्षमाशङ्कते ।। **अथेति** ।। भ्रमव्यावृत्यर्थमयमित्युक्तिः। द्रव्यत्वादिना वह्न्यनुभवेऽबाधाय वह्नित्वेनेत्युक्तिः। ''वह्नित्वाभाववति वह्नित्वप्रकारको न'' इति मण्युक्तसाध्यस्य यज्ञपतिटीकानुरोधेनार्थोक्तिर्वह्नित्वप्रकारकत्वे सतीत्यादिसत्यन्तं न नञर्थभूताभावविशेषणम्। एवं च अत्र वह्नित्वमिति ज्ञाने वह्नित्वाभाववद्वह्नित्वविशेष्यकत्वसत्वेपि विशेषणाभावप्रयुक्तविशिष्टा-भावरूपसाध्यसत्वान्न व्यभिचारः। अत एव मणौ ''दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वा''दित्यादिहेतूक्तावपि ''वह्नित्वाभाववति वह्नित्वप्रकारकत्वादि-समर्थप्रवृत्तिजनकत्वाभावयोः'' इत्यग्रे तदीयग्रन्थानुरोधात्समर्थेत्यादिहेतूक्तिः। अन्यथा साध्ये विशेष्यवैयर्थ्यात्। वह्निविषयकेति समर्थप्रवृत्तिर्विशेषणीया। तेन न घटादिज्ञाने व्यभिचारः। एवमप्यत्र वह्नित्वमिति ज्ञाने व्यभिचार इति चेत्। एवं तर्हि वह्नित्वप्रकारकत्वे सतीति विशेषणीयम्।

ननु प्रामाण्यनिश्चयाभावे कथं प्रवृत्तिरित्यत आह ।। **तत एवेति** ।। अप्रामाण्याभावज्ञानत इत्यर्थः। प्रामाण्यनिश्चयस्यापि तन्मते तत्रैवोपयोगादिति भावः ।। **अभावसाध्यक इति** ।। व्याप्तिज्ञानार्था हि साध्यप्रसिद्धिः। व्याप्तिश्च साध्याभावहेत्वभावयोरेव। तथाच तयोरेव ज्ञानमावश्यकम्। तत्र च साध्याभावोऽप्रामाण्यमेव। तच्च भावरूपंसाध्यभूतस्वाभावरूप-प्रतियोगिज्ञानं नापेक्षते इति तदप्रसिद्धावपि यत्राप्रामाण्यं तत्र समर्थप्रवृत्तिजनकत्वाभाव इति हेत्वभावेन व्याप्यत्वग्रहसम्भवादिति भावः।

वह्नित्वप्रकारकत्वे सतीति विशेषणवैयर्थ्यं मन्वानः पक्षधराद्युक्तसाध्यनिष्कर्षमाह ।। **यद्वेति** ।। कथं तर्हि तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्याभावः सिद्ध्येदित्यत आह ।। **पक्षेति** ।। उक्तहेतोर्वह्नित्वप्रकारकानुभवरूपपक्षे वह्नित्वप्रकारकत्वविशिष्टवह्निमत्वाभाववद्विशेष्यकत्वरूपा-प्रामाण्यनिषेधो विशेषणाभावे बाधाद्विशेष्याभावमादायैव विशिष्टनिषेधे पर्यवस्यतीति तन्मात्राभावसाधने विशिष्टाभावः सिद्ध्यतीत्यर्थः। अत्रापि पूर्ववद्धेतुविशेषणं ध्येयम्। तेन न

प्रागुक्तव्यभिचारः ॥ **घटादिरूपात्सपक्षादिति** ॥ तस्य निर्विषयकत्वेन तत्र साध्यसत्वनिश्चयादिति भावः ॥ **अनित्येति** ॥ अनुकूलतर्काभाववेलायामेव दोषत्वादिह च हेतूच्छित्तिरूपविपक्षबाधकस्य अनुकूलतर्कस्य सत्वेनादोषत्वादित्यर्थः ॥ **व्यधिकरणत्वादिति** ॥ अर्थान्तरत्वरूपनिग्रहस्थानापत्ते-रिति भावः । इदं प्रमेयमित्यदौ प्रमेयत्वाभावाप्रसिद्ध्या तद्घटिताप्रामाण्याभावानुमानासम्भवाच्चेत्यपि ध्येयम् ।

ननु विरुद्धप्रकारद्वये तदभाववद्विशेष्यकत्वाभावे तद्वद्विशेष्यकत्वमादायैव पर्यवसानम् । अन्यथा हेतोः पक्षसम्बन्धो न घटत इत्याशयेन ''तदभाववति तत्प्रकारकत्वव्यतिरेकः सिद्ध्यंस्तद्वति तत्प्रकारकत्वमादाय सिद्ध्यति । तृतीयप्रकाराभावात्'' इति मण्युक्तमाशङ्क्य निषेधति ॥ **नचेति** ॥ **व्याप्त्येति** ॥ यद्धर्मावच्छिन्ननिरूपितव्याप्तिर्यद्धर्मावच्छिन्नस्य गृहीता तद्धर्मावच्छिन्नस्य पक्षधर्मतया तद्धर्मावच्छिन्नस्यैव सिद्धिः स्यात् । न तु प्रामाण्यस्येत्यर्थः ।

न चायं नियमोऽन्वयिनि हेतौ न व्यतिरेकिणीति शङ्क्यम् । व्यतिरेकसहचारेणान्वयव्याप्तिर्गृह्यत इति मताभिप्रायेण वा व्यतिरेकिण्यपि हेत्वभावव्याप्याभावविषयत्वनैयत्याभिप्रायेणवैवमुक्तिः ॥ **तस्या इति** ॥

## तर्कताण्डवम्

**एतेन अप्रामाण्याभावानुमित्यनन्तरं अयं वह्नित्वेन अनुभवो वह्नित्ववद्विशेष्यकः अवह्न्यविशेष्यकत्वे सति सविशेष्यकत्वादिति व्यतिरेक्यन्तरेण तत्सिद्धिरिति निरस्तम् । वैशिष्ट्यमनुव्यवसायावेद्यमिति परतः पक्षे साध्याप्रसिद्धेः ।**

**किञ्चाप्रामाण्यमपि यद्यनुमेयं तर्हि कथं तत्प्रसिद्धिः । येनाप्रामाण्याभावसाधकहेतौ साध्याभावरूपाप्रामाण्य-व्यापकाभावप्रतियोगित्वज्ञानम् ।**

**यदि तु बाधानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन ज्ञानं मम वृत्तमित्यप्रामाण्यं मनसा परिच्छिद्यते तर्हि प्रवृत्तिसामर्थ्यानन्तरं स्मृत्युपनीते व्यवसाये स्मृत्युपनीतं**

**वह्नित्ववैशिष्ट्यविषयकत्वमेव मनसा परिच्छिद्यताम्। आदावेव वा व्यवसायगतं तदुपनीतवह्नित्ववैशिष्ट्यविषय-कत्वमनुव्यवसायेनैव परिच्छिद्यताम् किमनया कुसृष्ट्या।**

**एतेन वह्नित्ववद्विशेष्यकत्वमिच्छादौ मनसा प्रसिद्धमिति निरस्तम्। तथात्वे उक्तरीत्या प्रामाण्यस्यैव मनसा परिच्छेद-सम्भवात्।**

**किञ्च प्रमासमर्थप्रवृत्त्योः कार्यकारणभावो नियमगर्भः। नियमश्चानन्त्यव्यभिचाराभ्यां न व्यक्त्योरेव। किन्तु प्रमात्वावच्छेदेनेति प्रमात्वेज्ञाते प्रवृत्तिकारणत्वज्ञानं तेनैव च प्रमात्वज्ञानमित्यन्योन्याश्रयः।**

## न्यायदीपः

''इदं वह्नित्वप्रकारकं ज्ञानं वह्नित्ववद्विषयकं'' इत्यादिना मण्युक्तं पक्षान्तरं निराह ।। **एतेनेति** ।। विषयपदं विशेष्यपरमिति तदीयव्याख्यानोक्तेर्विशेष्यक इत्युक्तम्।

।। **साध्याप्रसिद्धेरिति** ।। न च प्राग्भवीयसंस्कारानुसरणाददोष इति शङ्‍क्यम्। निरस्तत्त्वात्। आदावेवैवमनुमानसम्भवे प्रथमममप्रामाण्याभावानुमानस्य व्यर्थत्वाच्चेत्यपि ध्येयम्। अप्रामाण्या-भावानुमानेपि व्यतिरेकव्याप्याप्रसिध्या व्याप्त्यसिद्धिरिति भावेनाह ।। **किञ्चेति** ।। द्वितीयानुव्यव-सायेनाप्रामाण्यं प्रसिद्धमित्याशङ्कते ।। **यदि त्विति** ।। नायं वह्निरितिबाधानन्तरमित्यर्थः ।। **स्मृतीति** ।। वह्निभ्रमानुव्यवसायजन्यस्मृतीत्यर्थः ।। **अप्रामाण्यमिति** ।। बाधरूपानुभवजन्यस्मृत्युपनीतमित्यर्थः। प्रामाण्यस्यापि पञ्चमानुव्यवसायवेद्यत्वमस्त्वित्याह ।। **तर्हीति** ।। तथा च पञ्चमानुव्यवसायमादाय साध्यप्रसिद्ध्याप्रामाण्यानुमानस्यैव प्राथमिकत्वसम्भवे किं प्रामाण्याभावानुमानेनेति भावः।

अभ्युपेत्य चेदमुक्तम्। वस्तुतस्तु प्रामाण्यानुमानमेवायुक्तम्। पञ्चमानुव्यवसायवेद्यत्वोपगमे च प्रथमानुव्यवसायवेद्यत्वस्य सुतरामुपेयत्वस्योपपादितत्वादिति भावेनाह ।। **आदावेव वेति** ।। **कुसृष्ट्येति** ।। पूर्वमप्रामाण्याभावानुमानं पश्चात्प्रामाण्यानुमानं अप्रामाण्यप्रसिद्ध्यर्थं पञ्चमानुव्यवसायानुसरणमित्यादिरूपकुसृष्ट्येत्यर्थः।

ननु वह्नित्ववति वह्नित्वेनेच्छावानहमित्यनुव्यवसायेनेच्छोपनीतं तद्वत्त्वमिच्छायां गृह्यते। एवं द्वेषादाविति तत्र प्रसिद्धं वह्निज्ञाने साध्यताम्। एवं च नाप्रसिद्धिरित्यत आह **॥ एतेनेति ॥ उक्तरीत्येति ॥** बाधोद्धारग्रन्थोक्तरीत्या व्यवसायोपनीतस्येत्यर्थः।

एवमनुमेयत्वपक्षे प्रामाण्यस्याप्रामाण्यस्य चाप्रसिद्ध्युक्त्या तन्निरूपितव्याप्त्यसिद्धिमुक्त्वा हेतोः प्रमित्यसिद्धिमाह **॥ किञ्चेति ॥ नियमेति ॥** या प्रमा सा समर्थप्रवृत्तिपूर्व-भाविनीत्येवं-रूपनियमेत्यर्थः **॥ व्यभिचाराभ्यामिति ॥** एतत्प्रमाव्यक्त्यभावेपि व्यक्त्यन्तरेण प्रवृत्ति-दर्शनादित्यर्थः। ''नियमश्च न व्यक्त्योरेव व्यभिचारादतिप्रसङ्गाच्च'' इत्युत्पत्तिप्रामाण्ये त्वयैवोक्तेरिति भावः **॥ अन्योन्याश्रय इति ॥** यदि क्वचिन्मनसा प्रामाण्यग्रहोपगमेन तत्र प्रवृत्तिकारणत्व-ग्रहान्नान्योन्याश्रयस्तर्हि प्रथममेव प्रामाण्यं मनसा गृह्यताम्। किमनुमानेनेति भावः। एतच्च प्रामाण्यज्ञानं प्रवृत्तिकारणमित्युपेत्योक्तम्। अप्रामाण्याभावज्ञानमेव प्रवृत्तिकारणमिति पक्षे प्रमात्वपदमप्रमात्वाभावपरं ज्ञेयम्।

यद्वा ''तदभाववति तत्प्रकारकत्वव्यतिरेकः सिध्यंस्तद्वति तत्प्रकारकतामादाय सिध्यति। तृतीयप्रकाराभावेन तेन विना साध्यस्योपसंहर्तुमशक्यत्वात्'' इति ग्रन्थेनाप्रामाण्याभावानुमानमेव प्रामाण्यानुमानमित्युक्तत्वात्प्रमात्वपदप्रयोगः।

एतेन दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वादित्यपि हेतुः परास्तः। प्रथमं जनकत्वस्य दुर्ज्ञानत्वात्। दाहसमर्थविशेष्यकवह्नित्वप्रकारकनिश्चयत्वादित्यादिरपि दाहसमर्थविशेष्यकत्वस्यादौ दुर्ज्ञानत्वस्य प्रागेवोक्तत्वान्निरस्तप्रायः। दाहसमर्थेत्येवमादिरूपहेतूनां प्रमात्वसामान्याननुमापकत्वाच्च।

## तर्कताण्डवम्

**नच गुणजन्यत्वाद्यवच्छेदेन नियमः। जन्यतावच्छेद-कस्याप्रमात्वस्याज्ञाने गुणजन्यत्वस्यैव दुर्ज्ञानत्वात्। किञ्च न प्रवृत्तिसामर्थ्येन प्रामाण्यानुमानम्। चन्द्रतारादिज्ञाने तदभावात्। प्रवृत्तेः प्रामाण्यज्ञानाधीनत्वेन अन्योन्याश्रयाच्च। मणिप्रभायां मणिभ्रमे व्यभिचाराच्च। नापि संवादेन। ज्ञानान्तरसंवादस्य व्यभिचारात्। प्रमासंवादस्याद्याप्यसिद्धेः।**

विसंवादाभावस्य चानुपसञ्जातबाधभ्रमेपि सत्वात्। विसंवादयोग्यत्वाभावस्य च प्रमात्वाज्ञाने दुर्ज्ञानत्वात्। गुणजन्यत्वस्य दोषाभावजन्यत्वस्य दोषाजन्यत्वस्य च प्रमारूपकार्यकल्प्यत्वेन जन्यतावच्छेदकप्रमात्वाज्ञाने गुणजन्यत्वादेर्दुर्ज्ञानत्वेन चान्योन्याश्रयात्।

मन्मते तु उत्सर्गतः प्रामाण्यं गृह्णन्नपि साक्षी बाधानन्तरमुक्तरीत्या विसंवादलक्षणादपवादात् अप्रामाण्यमपि गृह्णति। उक्तं हि सुधायाम्। साक्षी अपवादकसद्भावे अप्रामाण्यमपि गृह्णाति इति।

या तु विष्णुतत्वनिर्णयटीकायां ''अनुमेयमेवाप्रामाण्यं'' इत्युक्तिः सा साक्षिणोऽप्रामाण्यग्रहणे विसंवादापेक्षानियतेत्यभिप्रेत्य। अत एव तत्रैव ''न पुनर्ज्ञानग्राहकमात्रग्राह्यत्वं'' इत्युक्तम्। वादावल्यां च ''अप्रामाण्यस्य अनुमेयत्वावसायात्'' इत्युक्त्वा ''न चाप्रामाण्यं क्वचिदपि निरपेक्षेण साक्षिणा निश्चितचरं'' इत्युक्तम्। अप्रामाण्यशङ्कादिकं तु मानसमेव। उक्तं हि भगवत्पादैः -

''यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्'' इति।

''सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम्'' इति च।

तस्मात्प्रामाण्यस्य परतस्त्वे प्राथमिकं तज्ज्ञानमेव न सम्भवतीति। एतदप्युक्तं ''अन्यथा'' इत्यादिना। परतस्त्वे प्राथमिकप्रामाण्यानुमितेरेवासम्भवेन ''इयं प्रमा'' ''इयं त्वप्रमा'' इति व्यवस्थित्यसम्भवादित्यर्थः।

परतस्त्वे प्रथमप्रामाण्यानुमित्यसम्भवः ॥ ८ ॥

## न्यायदीपः

प्रमात्वसमनियतधर्मावच्छेदेनास्तु तद्ग्रह इत्याशङ्क्य निराह ॥ **न चेति** ॥ आदिपदेन दोषाभावजन्यत्वादुष्टकरणजन्यत्वादिग्रहः ॥ **प्रमात्वस्येति** ॥ अनित्यज्ञाननिष्ठस्येत्यर्थः। युक्तिपादीयसुधोक्तदिशा वादावल्युक्तदिशा च प्रामाण्यानुमापकसप्तहेतूनपाकरोति ॥ **किञ्चेति** ॥ **सामर्थ्येन** ॥ विषयलाभरूपेणेत्यर्थः। तदन्यस्यास्तु पक्षतेति वादिनं प्रत्याह ॥ **प्रवृत्तेरिति** ॥ **प्रामाण्यज्ञानाधीनत्वेनेति** ॥ साधितत्वात्परमतेप्यप्रामाण्यज्ञानाभावार्थमप्य-पेक्षितत्वादिति भावः। मन्मते प्रवृत्तिमात्रं न प्रामाण्यज्ञानाधीनमिति वदन्तं प्रत्याह ॥ **मणीति** ॥ **व्यभिचारादिति** ॥ भ्रमान्तरसंवादिभ्रम इति भावः।

ननु भवन्मतेप्यप्रामाण्यस्य परतस्त्वात्साध्याप्रसिद्धिस्तदनुमाने स्यात्। तत्र जन्मान्तरीयसंस्कारानुसरणस्य वा प्रथमं प्रामाण्याभावानुमानद्वारानुसरणस्य वा पञ्चमानुव्यवसायप्रसिद्धत्वानुसरणादेर्वा कार्यत्वे ममापि साम्यादित्यत आह ॥ **मन्मते त्विति** ॥ **उत्सर्गतः** ॥ स्वस्वभावसामर्थ्यत इत्यर्थः। स्वत एवास्तु किं विंसवादेनेत्यत आह ॥ **उक्तरीत्येति** ॥ ''अप्रामाण्यं तु विसंवादाद्यनुसन्धाने सत्येव गृह्यते ''इत्यादिना'' स्वतोऽप्रामाण्यग्रहे असामर्थ्यात् इत्यादेः स्वतस्त्वानुमानवादे उक्तत्वात्तत्रोक्तरीत्येत्यर्थः ॥ **उक्तं हीति** ॥ आद्यपादे-

''प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि।
अनवस्थान्यथा हि स्यादप्रमाण्यं तथान्यतः''

इत्येतद्व्याख्यावसर इत्यर्थः। सुधावाक्यस्यार्थतोनुवादः ॥ **साक्षीत्यादि** ॥ **उक्तिरिति** ॥ ''दुष्टबुद्धीनामेवाप्रामाण्यशङ्का'' इत्येतद्व्याख्यावसर इत्यर्थः। नन्वेवमिदमप्रमाणं न वेति सन्देहादिरपि साक्षी किं नेत्याह ॥ **अप्रामाण्येति** ॥ **उक्तं हीति** ॥ ज्ञानपादे।

परतस्त्वे प्रथमप्रामाण्यानुमित्यसम्भवः ॥ ८ ॥

## ज्ञप्तौ परतस्त्वानुमानभङ्गः ।

## तर्कताण्डवम्

**यच्चोक्तं स्वाश्रयविषयकनिश्चयावधिकतृतीयक्षणवृत्ति-**

**समानाधिकरणसंशयविषयीभूतं ज्ञानप्रामाण्यं ग्राह्यज्ञान-प्रकारप्रकारकतया तद्विशेष्यविशेष्यकतया च स्वाश्रय-ग्राहकयावज्ज्ञानाग्राह्यम्। तज्ज्ञानविषयकसमानाधिकरण-ज्ञानाजन्यसमानाधिकरणज्ञानाप्रकारो वा। स्वाश्रयविषयक-निश्चयावधिकतृतीयक्षणवृत्तिसमानाधिकरणसंशय-कोटित्वात्। स्वाश्रयविषयकनिश्चयसमानकालीनसामग्री-जन्यसंशयविषयत्वात्। स्वाश्रयविषयककिञ्चिन्निश्चय-धर्मिकप्रामाण्यसंशयजन्यसंशयाविषयत्वाच्च। अप्रामाण्य-वत्।**

## न्यायदीपः

एवं स्वतस्त्वानुमानानां बाधं विपक्षेऽनवस्थाद्वयस्यानुमित्यसम्भवस्य चोक्त्याऽप्रयोजकत्वं चोद्धृत्य परोक्तानुमानविरोधनिरासाय तानि दूषयितुमनुवदति ॥ **यच्चेति** ॥ परोक्तस्वतस्त्व-निरुक्तिभङ्गेन संशयस्यान्यथोपपादनेन च परोक्तहेतूनामप्रयोजकत्वाद्युक्तावपि प्रबलदोषोक्त्यर्थं पुनरारम्भः।

"विवादपदं न यावत्स्वाश्रयग्राहकग्राह्यं स्वाश्रयनिश्चये सत्यपि तदुत्तरतृतीयक्षणे अप्रामाण्य-संशयं विना सन्दिह्यमानत्वादप्रामाण्यवत्" इति मण्युक्तावपि "विप्रतिपत्तौ यथा साध्यमुक्तं तदभाव इह साध्यं ज्ञेयं" इति पक्षधरादितट्टीकोक्तरीत्या परिष्कारपूर्वकं तदीयप्रयोगानुवादं करोति ॥ **स्वाश्रयेति** ॥ किमवच्छेदेन विवादविषय इत्यज्ञानात्तदभिमतं विवादनियामकं पक्षतावच्छेदकं टीकाद्यनुक्तमपि स्वयं व्यक्तीकृतवानिति ज्ञेयम्। स्वस्य प्रामाण्यस्याश्रयो व्यवसायः। तद्विषयकनिश्चयोऽनुव्यवसायः। तदुत्पत्तिक्षणावधिको यस्तृतीयः क्षणः तद्वर्ती स्वाश्रयनिश्चय-समानाधिकरणो यः संशयः तद्विषयीभूतं ज्ञानप्रामाण्यमित्यर्थः। संशयाविषये प्रामाण्ये तथा निश्चिते व्यधिकरणसंशयविषये तथा चतुर्थक्षणवर्तिसंशयविषये यत्किञ्चिदवधिकतृतीयक्षणवर्तिसंशयविषये चासिद्धिरित्यतो विशेषणानि। ज्ञानप्रामाण्यांशस्याधिकस्यात्र प्रवेशान्न पक्षतावच्छेदकैक्यनिमित्तं सिद्धसाधनं शङ्क्यम्।अप्रामाण्येन सिद्धसाधनतानिरासाय ज्ञानप्रामाण्यमित्युक्तिः। तादृशानुमि-त्यादिग्राह्यत्वेन बाधनिरासाय साध्ये यावदित्युक्तिः। ज्ञानं घटज्ञानमित्यादिशब्दजन्यज्ञानाग्राह्यत्वस्य स्वतस्त्वेपि सत्वाद्ग्राह्यज्ञानप्रकार इत्युक्तिः। दलद्वयकृत्यमपि प्रागेव व्यक्तम्।

अत्र मण्युक्तमेकं साध्यं विप्रतिपत्तावुक्तसाध्यान्तरस्याप्युपलक्षणं मत्वा दूषणसौकर्याय स्वयमाह ।। **तज्ज्ञानेति** ।। तदर्थो विशेषणकृत्यं च परोक्तस्वतस्त्वनिरुक्तिभङ्गे व्यक्तम्। मतद्वयेपीश्वरज्ञानसत्वात्क्रमेणाप्रसिद्धिबाधवारणाय समानाधिकरणपदद्वयम्।। **निश्चयावधिकेति** ।। निश्चयोत्पत्तिक्षणावधिकेत्यर्थः। तेन स्वाश्रयविषयकनिश्चयस्थितिक्षणावधिकतृतीयक्षण-वृत्त्यर्थसंशयकोट्यावर्थे व्यभिचारो न शङ्क्यः।

''स्वाश्रयनिश्चये सत्यपि तदुत्तरतृतीयक्षणे सन्दिह्यमानत्वात्'' इति मण्युक्तहेतोः सतिसप्तमी-बलेन सामानाधिकरण्यलाभरूपं तट्टीकोक्तमेकमर्थमुपेत्यैको हेतुरुक्तः। समानकालीनतारूपमर्थान्तरं चोपेत्य हेत्वन्तरमाह ।। **स्वाश्रयविषयकेत्यादि** ।। संशयविषयत्वादित्यस्य पूर्ववत्संशय-कोटित्वादित्यर्थः। तेनात्र पूर्वत्र च न व्यवसाये व्यभिचारः।

स्वाश्रयनिश्चयेऽप्रामाण्यसंशयं विना सन्दिह्यमानत्वात् इति मण्युक्त्यभिमतं हेतुं व्यनक्ति ।। **स्वाश्रयविषयककिञ्चिदित्यादि** ।। स्वाश्रयविषयकनिश्चयशब्देन यावन्निश्चयो मणिकृतो नाभिमतः। प्रामाण्यानुमितेरपि प्रमाण्याश्रयविषयकनिश्चयत्वेन तद्धर्मिकप्रामाण्यसंशयजन्य-संशयविषयत्वेनासिद्ध्यापत्तेः। किन्तु यत्किञ्चिदनुव्यवसायरूपनिश्चय एवाभिमत इति भावेन किञ्चिन्निश्चयधर्मिकेत्युक्तम् ।। **अप्रामाण्यवदिति** ।। पक्षीभूतप्रामाण्यसंशयकोटीभूता-प्रामाण्यवदित्यर्थः। मतद्वयेपि तस्य परतस्त्वेन साध्यहेतू सम्मताविति भावः।

## तर्कताण्डवम्

**यद्वा उक्तहेतुत्रयमध्ये एकं पक्षतावच्छेदकं कृत्वाऽन्यौ हेतू कर्तव्यौ। यद्वा एतज्ज्ञानप्रामाण्यमेतज्ज्ञानप्रामाण्यसंशय-पूर्वकालीनैतन्निश्चयाविषयः। एतज्ज्ञानविषयकनिश्चया-वधिकेत्याद्युक्तहेतुत्रयात्। अप्रामाण्यवत्।**

**विमतं व्यवसायप्रामाण्यं न तदनुव्यवसायवेद्यम्। तदवधिकतृतीयेत्याद्युक्तहेतुत्रयात् अप्रामाण्यवदिति विशिष्य प्रयोक्तव्यम्। तस्मादनुमानविरुद्धानि स्वतस्त्वानुमानानि।**

**अत्र साध्यविशेषणप्रयोजनं स्वतस्त्वनिरुक्तावुक्तप्रायम्। आद्यहेतौ रजतत्वादिरूपेऽर्थेपि किञ्चिदवधिकतृतीयक्षण-**

**वृत्तिसंशयविषयत्वस्य, तथा स्वाश्रयनिश्चयावधिक-चतुर्थ-लक्षणवृत्तिसंशयविषयत्वस्य, तथा चैत्रीयस्वाश्रयनिश्चया-वधिकतृतीयक्षणवृत्तिमैत्रीयसंशयविषयत्वस्य च सत्वात्तत्र व्यभिचारः। तद्वारणाय क्रमेण स्वाश्रयनिश्चयावधिकत्वेन तृतीयक्षणवृत्तित्वेन समानाधिकरणत्वेन च संशयो विशेषितः।**

## न्यायदीपः

हेतुपक्षतावच्छेदकैक्यनिबन्धनसिद्धसाधनताशङ्कापि यथा न भवति तथा पक्षान्तरमाह ॥ **यद्वेति** ॥ **एकमिति** ॥ आद्यं द्वितीयं वा पक्षतावच्छेदकीकृत्य द्वितीयतृतीयौ वाद्यतृतीयौ वा हेतूकर्तव्यावित्यर्थः।

''अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यं'' इत्यादिना मण्युक्तं पक्षान्तरं चाह ॥ **यद्वैतज्ज्ञान-प्रामाण्यमिति** ॥ वस्तुतो यदनुव्यवसायानन्तरं तृतीयक्षणे संशयविषयीभूतं प्रामाण्यं तद्व्यक्तेरेवैतत्पदेन ग्रहणम्। अतो नासिद्धिर्हेतूनामिति भावः। बाधवारणाय कालीनेत्यन्तम् ॥**पूर्वेति**॥ अव्यवहितपूर्वकालीनेत्यर्थः। एतज्ज्ञाननिश्चयानन्तरं सन्दिह्यमानत्वादित्युक्तेहेतुमुपलक्षणं मत्वाह ॥ **हेतुत्रयादिति** ॥

एवं स्वतस्त्ववादिमात्रसाधारणं वा गुरुभिन्नस्वतस्त्ववादिमात्रसाधारणं वा द्वेधा प्रयोगं मण्यभिमतं प्रदर्श्य अनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यमिति गुरुमतासाधारण्येन प्रयोगोक्तिमुपलक्षणमभिप्रेत्य सिद्धान्तविरोधिप्रयोगान्तरमाह ॥ **विमतमिति** ॥ यद्वेत्यनुषङ्गः। उक्तरूपसंशयविषयीभूतप्रामाण्यस्यैव व्यवसायप्रामाण्यपदेन ग्रहणमिति द्योतनाय विमतमित्युक्तिः ॥ **तस्मादिति** ॥ उक्तरीत्या प्रयोगसम्भवादित्यर्थः ॥ **स्वतस्त्वेति** ॥ सामान्यतः प्रागुक्तस्वतस्त्व-साधकानुमानानीत्यर्थः। न तु संशयानवतारस्थलीयपक्षकानुमानानि। मण्याद्युक्तानां संशयस्थलीय-पक्षकाणां भिन्नविषयतया विरोधाभावात्। यद्वा संशयस्थले तथात्वसिद्धावन्यत्रापि तथात्वमेव कल्प्यम्। न वैरूप्यमित्याशयेन सर्वानुमानानीत्यर्थः।

दूषणसुज्ञानतायै पदकृत्यं विवेचयति ॥ **अत्र साध्येत्यादिना** ॥ **स्वतस्त्वनिरुक्ताविति** ॥ परोक्तस्वतस्त्वनिरुक्तिभङ्गप्रस्ताव इत्यर्थः। आद्ये पूर्वदलद्वयेन तव घटत्वप्रकारकं ज्ञानं तव

घटत्ववद्विशेष्यकं ज्ञानमिति शाब्दज्ञानयोः सिद्धसाधननिरासः। यावादित्त्युक्त्या न्यायमते पञ्चमानुव्यवसायादौ बाधनिरासः फलम्। द्वितीये आद्येन ज्ञानपदेन तत्पदस्य प्रामाण्यपरामर्शितापत्त्या बाधनिरासः फलम्। द्वितीयेन तु व्यापारानुबन्धितया तादृशात्मादिनाऽप्रसिद्धिनिरासः फलम्। तृतीयेनापि व्यापारानुबन्धितयात्मादिग्राह्यतया बाधनिरासः फलम्। सामानाधिकरणपदद्वयेन तादृशेश्वरज्ञानग्राह्यतया तदग्राह्यत्वाभावाद् बाधनिरासः फलमुक्तप्रायमित्यर्थः।

## तर्कताण्डवम्

**प्रथमं व्यवसायः, अनन्तरं ज्ञानत्वनिर्विकल्पकं विना ज्ञानांशे निर्विकल्पस्य घटांशे सविकल्पकस्य नरसिंहाकारस्य धर्मिज्ञानरूपस्यानुव्यवसायस्योत्पत्तिः, अनन्तरं द्वितीये तदनुव्यवसायस्य स्थितिक्षणे कोटिस्मरणं, अनन्तरं तृतीयक्षणे प्रामाण्यसन्देहः, तदनन्तरं चतुर्थक्षणेऽर्थसन्देह इति स्थितिः।**

**द्वितीयहेतावपि तृतीये प्रमाण्यसन्देहक्षणेऽनुव्यवसाय-नाशात् प्रामाण्यसंशयघटिता याऽर्थसन्देहसामग्री तस्य अनुव्यवसायसमकालीनत्वं नास्तीति नार्थे व्यभिचारः। न तु स्वाश्रयविषयकनिश्चयसमानकालीनसंशयविषयत्वं हेतुः। प्रामाण्यसंशयोत्पत्तिक्षणेऽनुव्यवसायस्य नाशेनासिद्धेः।**

**तृतीयहेतावपि घटविषयकनिश्चयधर्मिकप्रामाण्य-संशयजन्यसंशयविषयत्वं पटेप्यस्तीत्यर्थे व्यभिचारः। तद्वारणाय ग्राह्यप्रामाण्याश्रयविषयकत्वेन निश्चयो विशे-षितः। तथापि व्यवसायप्रामाण्यस्य स्वाश्रयविषयिका या प्रामाण्यानुमितिस्तद्धर्मिकप्रामाण्यसंशयजन्यसंशय-विषयत्वादसिद्धिः। तद्वारणाय किञ्चिदिति विशेषणम्। एवं च नासिद्धिः। अनुमितिप्रामाण्यसंशयेन व्यवसायप्रामाण्य-**

**संशयेपि अनुव्यवसायप्रामाण्यसंशयेन तत्संशयाभावात्। न तु प्रामाण्यसंशयाजन्यसंशयविषयत्वं हेतुः। अर्थस्यापि तदजन्यसंशयं प्रत्यपि विषयत्वेन व्यभिचारात्। अत्र सर्वत्र विपक्षे हेतूच्छित्तिरेव बाधिका। स्वतस्त्वपक्षेऽनुव्यवसायस्यैव प्रामाण्यनिश्चयरूपत्वात् द्वितीये तत्स्थितिक्षणे तदभावघटिता या संशयसामग्री तदभावेन तृतीयक्षणे प्रामाण्यसंशया-नुपपत्तेः।**

## न्यायदीपः

उक्तार्थपरिज्ञानाय पक्षधराद्युक्ततदीयप्रक्रियामाह ।। **प्रथममिति** ।। **निर्विकल्पकस्येति** ।। ज्ञानत्ववैशिष्ट्यविषयकस्येत्यर्थः ।। **सविकल्पकस्येति** ।। घटत्वप्रकारकत्वपुरोवृत्तिविशेष्यकत्व-विषयकस्येत्यर्थः। संशयहेतुत्वोपपादनायैवमुक्तिः। घटांशेपि निर्विकल्पकस्य तदयोगात् ।। **कोटीति** ।। कोटिद्वयस्मरणं समूहालम्बनरूपमित्यर्थः। साधारणधर्मदर्शनरूपधर्मिज्ञानस्योभय-कोटिसाधारण्यादिति भावः ।। **अथेति** ।। इदं रजतं न वेत्येवं रूपेणार्थसन्देह इत्यर्थः। अर्थघटितपूर्व-भाविप्रामाण्यसन्देहस्यैव कोटिस्मृतिरूपत्वाच्चतुर्थक्षणेऽर्थसन्देह इति भावः।

।। **प्रामाण्यसंशयघटितेति** ।। कोटिस्मृतिरूपत्वात्तस्य तद्घटितात्ममनस्संयोगादिरूपा या सामग्रीत्यर्थः। सामग्रीजन्येति विशेषणं व्यर्थं। एवं च नार्थे नैकान्त्यमित्याशङ्क्य तत्सार्थक्यं वक्तुमाह ।। **नत्विति** ।। द्वितीयहेतुर्मणिकृदभिमत एवोत्प्रेक्षितो न साक्षादुक्त इति एवमेव तस्याभिमतिः किं सामग्रीपदप्रक्षेपेणेत्यतोऽसिद्धिरूपबाधकोपदर्शनमेतत्कृतम्। असिद्धिवारकत्वेपि यथोक्तविशेषण-विशेष्यभावेन वैयर्थ्यमिति भावः ।। **पटेपीति** ।। पटज्ञानस्यापि ग्राह्यप्रामाण्याश्रयतया तद्ग्राहकानु-व्यवसायग्राह्यत्वेन साध्याभावादिति भावः।

।। **विशेषित इति** ।। तथा च तस्याप्यनुव्यवसायग्राह्यतया तद्धर्मिकप्रामाण्यसंशयजन्यसंशय-योग्यत्वेन हेत्वभावान्न व्यभिचार इति भावः ।। **नासिद्धिरिति** ।। अखण्डाभावत्वान्नासिद्धिवारकत्वं दोष इति भावः ।। **अनुव्यवसायेति** ।। तस्य प्रामाण्यनियमेन कदापि तत्र सन्देहाभावादिति भावः। हेतूच्छित्तिं व्यनक्ति ।। **स्वतस्त्वेत्यादिना** ।। **प्रामाण्यनिश्चयेति** ।। तथा च विशेषदर्शने कथं सन्देह इति भावः ।। **तदभावेति** ।। प्रामाण्यनिश्चयरूपविशेषदर्शनाभावेत्यर्थः।

## तर्कताण्डवम्

अत एव द्वितीये प्रामाण्यनिश्चयस्थितिक्षणे तदभाव-घटितसंशयसामग्र्यभावेन प्रामाण्यस्य स्वाश्रयनिश्चय-समानकालीनसामग्रीजन्यसंशयविषयत्वायोगात्। अनु-व्यवसायस्य प्रामाण्यग्राहकत्वे ग्राहकप्रामाण्यसन्देहे ग्राह्यसन्देहनियमेन व्यवसायप्रामाण्यानुमितेः प्रामाण्य-सन्देहेनेवानुव्यवसायप्रामाण्यसन्देहेनापि कदाचिद्व्यवसाय-प्रामाण्यसन्देहापातात्। न चेष्टापत्तिः। अनुव्यवसायस्य प्रामाण्यनियमादिति।

उच्यते - आद्ये साऽध्येऽपसिद्धान्तो बाधो व्याघातश्च। द्वितीयेंऽशे सिद्धसाधनम्। उपपादितं चैतत्परोक्तस्वतस्त्व-निरुक्तिभङ्गे।

किञ्च साध्ये स्वशब्दः किं पक्षीकृतप्रामाण्यमात्रपरः किं वा समभिव्याहृतपरः। नाद्यः। अप्रामाण्यस्याप्रामाण्यवत्य-प्रामाण्यप्रकारकत्वरूपप्रामाण्याश्रयग्राहकेण ज्ञानेन ग्राह्यतया तदग्राह्यत्वरूपसाध्यस्याप्रामाण्यरूपे दृष्टान्ते अभावात्। नान्त्यः। घटरूपेऽर्थे व्यभिचाराप्रसक्त्या हेतौ तृतीयपदस्य व्यर्थत्वात्।

अस्मिन् पक्षे हि समभिव्याहृतो घट एव स्वशब्दार्थः। घटे च घटाश्रयीभूतकपालग्राहकयावज्ज्ञानाग्राह्यत्वरूपं साध्यमस्त्येवेति कथं तत्र व्यभिचारप्रसक्तिः।

## न्यायदीपः

॥ **अत एव** ॥ प्रामाण्यनिश्चयस्य तन्निश्चयत्वादेवेत्यर्थः। द्वितीय इत्यस्य विवरणं स्थितिक्षण इति। तृतीये हेतूच्छित्तिं व्यनक्ति ॥ **अनुव्यवसायस्येति** ॥

प्रतिज्ञादोषांस्तावदाह ।। **आद्ये साध्य इत्यादिना** ।। उक्तरूपेण स्वाश्रयग्राहकत्वस्य प्रामाण्यग्राहकत्वरूपतया तादृशेनानुमित्यादिना ग्राह्यत्वस्य परमतेपि सिद्धत्वात्तदभावसाधने अपसिद्धान्तः। प्रामाण्यग्राहकेण प्रामाण्यं न ग्राह्यमित्युक्ते बाधो व्याघातश्च स्फुटएव। स्वातन्त्र्येणेत्युक्तावपि बाधोद्धारग्रन्थोक्तरीत्या बाध एव। उक्तरूपसाध्यस्यार्थेपि सत्वेन व्यभिचाराप्रसक्त्या तद्वारकहेतुविशेषणवैयर्थ्याच्चेति भावः ।। **अंश इति** ।। सर्वं ज्ञानं गुण इति शब्दजन्यज्ञानप्रामाण्यांश इत्यर्थः। तत्पक्षीकरणस्यापि प्रागुक्तत्वादिति भावः। अत एवाह ।। **उपपादितं चैतदिति** ।। बाधव्याघातयोः कण्ठतोऽनुक्तावपि उपपादितप्रायत्वादुपपादितमित्युक्तम्

दृष्टान्तहेतुदोषौ पक्षभेदेनाह ।। **किञ्चेति** ।। **अप्रामाण्यस्येति** ।। शुक्तौ रूप्यत्वभ्रमानन्तरं बाधावतारादिदं ज्ञानमप्रमेत्यनुव्यवसाये यदप्रामाण्यवत्यप्रामाण्यप्रकारकत्वरूपं प्रामाण्यं तस्यापि पक्षत्वेन तत्प्रामाण्याश्रयग्रहकेण तद्घटकीभूताप्रामाण्यस्य ग्राह्यतया तत्र साध्यवैकल्यमित्यर्थः। अप्रामाण्यवदित्यत्र पक्षीभूतप्रामाण्यसंशयकोटिभूताप्रामाण्यवदित्यर्थस्य तट्टीकोक्तावपि तादृशप्रामाण्यघटकस्यापि तथात्वादिति भावः। व्यभिचाराप्रसक्तिं व्यनक्ति ।। **अस्मिन् पक्ष इति** ।।

ननु ग्राह्यज्ञानप्रकारेत्यत्र ग्राह्यज्ञानशब्दस्यापि स्वाश्रयपरतया घटाश्रयकपालस्य निष्प्रकारतया घटाश्रयप्रकारप्रकारतया तद्विशेष्यविशेष्यकतया घटाश्रयग्राहकयावज्ज्ञानमप्रसिद्धमिति चेन्न। तादृशज्ञानाप्रसिद्धेरेव तद्ग्राह्यत्वं नेति तदभावरूपसाध्यसत्वात्। अत एव ''साध्यमस्त्येव'' इत्युक्तम्।

## तर्कताण्डवम्

**किञ्चैतैरनुमानैः प्रामाण्यस्य किं साक्षिग्रहणयोग्यत्वाभावः साध्यते निश्चयरूपफलाभावो वा। नाद्यः धर्म्यंश इव वैशिष्ट्यांशेपि त्वन्मते व्यवसायोपनीतत्वरूपा मन्मते व्यवसायोपनीते तस्मिन् साक्षिणः सहजशक्तिरूपा योग्यतास्तीत्युक्तत्वेन बाधात्। संशयस्य निश्चयरूपफलाभावेनैव उपपत्त्या योग्यत्वाभावसाधने अप्रयोजकत्वाच्च। अन्त्येऽपि फलाभावसाधनं किं दोषशङ्कादिरूपेण प्रामाण्यविरोध्युपस्थापकसामग्रीसमवधानेनाप्रतिबन्धदशायामुत प्रतिबन्धदशायाम्।**

**नाद्यः। तदा प्रामाण्ये संशयाभावेनाश्रयासिद्धेः। स्वरूपासिद्धेश्च। नान्त्यः। इष्टापत्तेः।**

**न च फलाभावेनैव योग्यत्वाभावः सिध्यति। बाधस्य उक्तत्वात्। वह्नौ दाहशक्तेरिव साक्षिणि प्रामाण्यग्रहणशक्तेः सहजत्वेपि मण्यादिप्रतिबन्धेनादाहस्येव दोषशङ्कादिप्रतिबन्धेन प्रामाण्याग्रहणस्योपपत्तेश्च। उक्तं हि टीकाकारैः – "न हि गोक्षुरकापसर्पणसापेक्षत्वेन गजस्य गमनशक्तिः परतन्त्रा" इति।**

## न्यायदीपः

यद्वा कपालविषयतादृशज्ञानाप्रसिद्धेरेव तद्विषयत्वरूपफलाभावो घटे न सिद्धः। येन तत्र व्यभिचारप्रसक्तिर्न स्यादित्यतरुचेराह ॥ **किञ्चेति** ॥ धर्म्यंश इत्युपलक्षणम्। धर्मधर्म्यंशयोरिवेत्यर्थः ॥ **अस्मिन्निति** ॥ वैशिष्ट्यांशविषय इत्यर्थः ॥ **उक्तत्वेनेति** ॥ बाधोद्धारग्रन्थे ॥ **अप्रतिबन्धेति** ॥ साध्ये संशयवेलायामग्राह्यमित्यनुक्तेर्विकल्पद्वयावकाश इति भावः ॥ **इष्टापत्तेरिति** ॥ अप्रतिबद्धसाक्षिवेद्यत्वस्य साक्षियोग्यत्वस्य वा स्वतस्त्वस्यास्मदभिमतस्यानपायादिति भावः।

ननु फलाभावेन योग्यत्वाभावानुमानात्स्वतस्त्वहानिरेवेत्यत आह ॥ **न चेति** ॥ **बाधस्योक्तत्वादिति** ॥ त्वन्मत इत्यादिनेत्यर्थः। शक्तिरूपयोग्यत्वसत्वे तदग्रहोऽयुक्त इत्यत आह ॥ **वह्नाविति** ॥ प्रतिबन्धाभावसापेक्षत्वे कथं न स्वतस्त्वहानिरित्यत आह ॥ **उक्तं हीति** ॥ वादावल्यामित्यर्थः।

## तर्कताण्डवम्

**किञ्चोक्तेनानवस्थारूपेण प्रथमस्य प्रामाण्यग्रहणस्य अनुपपत्तिरूपेण च तर्केण पराहतिः। अपि चोपाधेर्व्यभिचारोन्नायकत्वपक्षेऽनुव्यवसायविषयत्वयोग्यतारहितोपाधिघटितत्वमुपाधिः। तदग्राह्योपाधिघटितत्वं च तदग्राह्यत्वं विनाऽनुपपन्नम्। प्रत्यक्षाग्राह्यगुरुत्वघटितगुरुत्ववत्त्वादौ तथा**

**दर्शनात्। त्वदीयो हेतुस्तु तद्ग्राह्यत्वेपि ग्रहणरूपफला-भावेनैवोपपन्न इत्युपाधिः साध्यव्यापकः।**

**किञ्चानुव्यवसायस्य नरसिंहाकारत्वे घटविषयकं प्रमाणं न वेत्येव संशयः स्यात्। न तु घटविषयकं ज्ञानं प्रमाणं न वेति। ज्ञानत्वस्य धर्मितावच्छेदकत्वेनाज्ञानात्।**

ननु मण्युक्तहेतूनां स्वोक्तहेतुप्रतिपक्षत्वेनात्रोपन्यासादुपाधेः प्रतिपक्षोन्नायकत्वपक्षे प्रतिपक्षे प्रतिपक्षान्तरवदुपाध्युद्भावनं व्यर्थमित्यतो मणिकृन्मतावष्टम्भेनाह ॥ **उपाधेर्व्यभिचारेत्यादि** ॥

धर्मधर्मिव्द्वैशिष्ट्यांशेपि योग्यताया उपपादितत्वेनानुव्यवसाययोग्यतारहितोपाधिघटितत्वं पक्षीभूतप्रामाण्ये साधनवति नेति साधनाव्यापकत्वं स्पष्टम्। साध्यव्यापकत्वं कथमित्यतः साध्यं प्रति प्रयोजकत्वमस्य व्यनक्ति ॥ **तद्ग्राह्येति** ॥ पूर्वोक्तोपाधेर्निष्कृष्यानुवादोयम्।

हेतोरप्रयोजकत्वमाह ॥ **त्वदीय इति** ॥ तद्ग्राह्यत्वेपि तद्ग्रहणयोग्यत्वेपीत्यर्थः। एवं चोपाधिहेत्वोरनुकूलतर्कभावाभावोक्त्या-

> ''अनुकूलेन तर्केण सनाथे सति साधने।
> साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः।''

इत्यस्यानवकाश इति भावेनाह ॥ **साध्यव्यापक इति** ॥

साक्षिणो ज्ञानगोचरस्य ज्ञानत्वांशेपि सविकल्पकत्वात्तत्सिद्ध्यर्थं परोक्तं निराह ॥ **किञ्चेति** ॥ **अज्ञानादिति** ॥ एवं च तदर्थं ज्ञानत्ववैशिष्ट्यज्ञानान्तराङ्गीकारे च स्वाश्रयनिश्चयावधिक-तृतीयक्षणवृत्तित्वमसिद्धमिति भावः।

## तर्कताण्डवम्

**किञ्चाद्ये हेतौ संशयस्य तृतीयक्षणवृत्तित्वमसिद्धम्। असर्वज्ञेनातीन्द्रियातिसूक्ष्मक्षणेयत्ताया निश्चेतुमशक्यत्वेन स्वाश्रयनिश्चयावधिकतृतीयक्षण एव संशयो न तु चतुर्थादा-विति निर्णेतुमशक्यत्वात्।**

**यदि त्वनुव्यवसायस्य प्रामाण्यनिश्चयरूपत्वाभावाद् द्वितीयक्षणे तन्निश्चयाभावविशिष्टकोटिस्मरणरूपसंशय-सामग्र्याः सत्वेन संशयस्य तृतीयक्षणवर्तित्वकल्पनं तर्हि संशयस्य तृतीयक्षणवृत्तित्वेनानुव्यवसायस्य प्रामाण्यनिश्चय-रूपत्वाभावारूपं परतस्त्वं त्वया साध्यत इत्यन्योन्याश्रयः।**

**न च चतुर्थादिक्षणवृत्तिनापि संशयेन परतस्त्वसिद्धिः। द्वितीयक्षणोत्पन्नेन कोटिस्मरणेन प्रामाण्यनिश्चयरूप-प्रतिबन्धकवशात्तृतीयक्षणे संशयानुत्पादेपि तृतीयक्षणोत्पन्नेन प्रतिबन्धकध्वंसेन विशिष्टं तत्क्षणे तिष्ठद्यत्संशयसामग्री-रूपकोटिस्मरणं तेन चतुर्थक्षणे संशयोत्पादसम्भवात्।**

**द्वितीयहेतावप्यनुव्यवासयस्य प्रामाण्याविषयकत्वे सिद्धे द्वितीयेऽनुव्यवसायस्य स्थितिक्षणे प्रामाण्यनिश्चया-भावविशिष्टकोटिस्मरणरूपसंशयसामग्र्याः सत्वेन तस्या अनुव्यवसायरूपनिश्चयसमानकालीनत्वसिद्धिः। सिद्धे च तस्मिन्नुक्तरूपसामग्रीजन्यसंशयविषयत्वेन प्रामाण्यस्यानु-व्यवसायाविषयत्वसिद्धिरित्यन्योन्याश्रयः।**

## न्यायदीपः

ननु निश्चयपदेन सविकल्पक एव विवक्ष्यत इत्यत आह ॥ **किञ्चेति** ॥ हेतुत्रयसाधारण-दोषानुक्त्वा प्रातिस्विकरूपेणापि दोषमाह ॥ **किश्चाद्य इति** ॥ **असिद्धमिति** ॥ सन्दिग्धासिद्धमित्यर्थः ॥ **अन्योन्याश्रय इति** ॥ सिद्धे चानुव्यवसायस्य प्रामाण्यनिश्चयत्वाभावे संशयस्य तृतीयक्षण-वृत्तित्वसिद्धिः। तत्सिद्धौ च तत्सिद्धिरित्यर्थः।

ननु मास्तु हेतुनिश्चयः चतुर्थादिक्षणवृत्तिसंशयविषयत्वेनाप्युक्तसाध्यसिद्धिरस्त्वित्यतः प्रथमक्षणे धर्मिज्ञानरूपानुव्यवसायेन प्रामाण्ये निश्चितेपि चतुर्थक्षणादौ तत्र संशयो नानुपपन्न इत्यप्रयोजको हेतुरित्याह ॥ **न चेत्यादिना** ॥ **द्वितीयेति** ॥ अनुव्यवसायस्थितिक्षणोत्पन्नेनेत्यर्थः

**।। प्रामाण्यनिश्चयरूपेति ।।** पूर्वतनधर्मिज्ञानाख्यप्रामाण्यनिश्चयरूपेत्यर्थः **।। तत्क्षण इति ।।** तृतीयक्षण इत्यर्थः **।। सामग्रीरूपमिति ।।** तदा तन्मते धर्मिज्ञानस्य नाशेपि तस्य कोटिस्मरण एवोपयोगेन तदभावस्यादोषत्वात्। तस्य नाशेपि स्मृत्युपनीते तस्मिन् ज्ञानं प्रमाणं न वेति संशयोपपत्तेश्च।

न च तस्य प्रामाणत्वेनैव स्मृत्योपनयः तथैव प्रागनुभवादिति वाच्यम्। दोषेण प्रामाण्यांशप्रति-बन्धसम्भवात्। वस्तुतस्तु मन्मते दोषस्थले व्यवसायस्य साक्षिवेद्यत्वात्तत्प्रामाण्यस्य च मानसत्वात्तन्मात्रोपनयो न विरुद्ध इति भावः।

**।। द्वितीयहेतावपीति ।।** स्वाश्रयनिश्चयसमानकालीनत्वं संशयसामग्र्यामसिद्धमिति योज्यम्। ननु धर्मिनिश्चयरूपानुव्यवसायस्य प्रामाण्याविषयकत्वादेव विशेषादर्शनविशिष्टा कोटिस्मरणादि-सामग्री तत्कालीनेति ज्ञायत इत्यतो दुर्ज्ञानमेतदित्याह **।। अनुव्यवसायस्येत्यादिना ।।** द्वितीय इत्यस्यार्थोऽनुव्यवसायस्य स्थितिक्षण इति।

## तर्कताण्डवम्

**एवं तृतीयहेतावप्यनुव्यवसायस्य प्रामाण्यनियमे सिद्धे किं प्रमैव प्रमात्वेन गृहीता अप्रमैव वेति संशयस्य प्रामाण्या-नुमितिधर्मिकत्वमेव न त्वनुव्यवसायधर्मिकत्वमित्यस्यार्थस्य सिद्ध्या व्यवसायप्रामाण्यानुव्यवसायधर्मिकप्रामाण्य-संशयजन्यसंशयाविषयत्वसिद्धिः। सिद्धे तस्मिन्ननुव्यव-सायस्य प्रामाण्यनियमसिद्धिरित्यन्योन्याश्रय एव।**

**एतेन प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्। परतस्त्वं च यत्प्रतिवादिना निषिध्यते तदेव साध्यते। अत्र च भागासिद्धिर्न दोषः। उद्देश्यस्य पक्षतावच्छेदकधर्मसमानाधिकरणसाध्यप्रतीति-रूपस्य फलस्य तत्समानाधिकरणसाधनप्रतीतिरूपस्य करणस्य चाविघातात्। यत्र सर्वत्र पक्षे साध्यप्रतीतिरुद्देश्या तत्रैव सा दोषः। अत्र च न काचन कुसृष्टिः। नापि सामान्य-**

**विप्रतिपत्त्यनानुगुण्यमिति निरस्तम्। बाधाप्रयोजकत्वाद्युक्त-दोषात्।**

**एतेनैव प्रामाण्यं परतो ज्ञायते। प्रामाण्याप्रामाण्या-न्यतरमात्रकोटिकसंशयविषयत्वादप्रामाण्यवदित्याद्यपि निरस्तम्।**

**तस्माज्ज्ञप्तावुत्पत्तौ च प्रामाण्यं स्वत एवेति। एतदप्युक्तं ''अन्यथा'' इत्यादिना। फलाभावमात्रेण स्वरूपयोग्यत्वा-भावसाधने लोकसिद्धसर्वव्यवस्थायोगादित्यर्थः।**

**ज्ञप्तौ परतस्त्वानुमानभङ्गः ॥ ९ ॥**

## न्यायदीपः

॥ **तृतीयहेतावपीति** ॥ अनुव्यवसायधर्मिकप्रामाण्यसंशयजन्यसंशयविषयत्वं दुर्ज्ञानमिति योज्यम्। अनुव्यवसायस्य प्रामाण्यनियमादेव तत्सुज्ञानमित्यत आह ॥ **अनुव्यवसायस्येति** ॥ **सिद्धे च तस्मिन्निति** ॥ व्यवसायप्रामाण्यस्येत्यादिपरामर्शः। सिद्धान्तेपि संशयादिस्थलीयप्रामाण्या-नुव्यवसायस्य प्रमात्वानियमादिति भावः।

एवं मण्युक्तानुमानानि निरस्य द्वितीयस्तबके कुसुमाञ्जलावुदयनोक्तं सुधायामाशङ्कितमनुमानं च निराह ॥ **एतेनेति** ॥ निरस्तमित्यन्वयः। ननु परत्वस्यान्यत्वरूपस्य केवलान्वयित्वेन स्वतस्त्वेप्युपपत्याऽर्थान्तरमित्यतस्तत्परिष्करोति ॥ **परतस्त्वं चेति** ॥ तत्प्रकारप्रकारेत्यादिना प्रागुक्तरूपज्ञानाग्राह्यत्वं निषिध्यत इति तदेवेत्यर्थः। तथा च ''स्वग्राह्यत्वेपि कदाचित्परग्राह्यत्वात् स्वस्याप्यन्यापेक्षया परत्वात्'' इत्यादिमण्युक्तखण्डनानवकाश इति भावः ॥ **अत्र चेति** ॥

ननु ''अनभ्यासदशायामिति भागासिद्धिवारणार्थं'' इति वर्धमानोक्तेः कथं भागासिद्धिशङ्केति चेन्न। प्रामाण्यमात्रस्य पक्षत्वेन सांशयिकत्वादित्युक्तौ क्वचिदसिद्धेरनभ्यासदशायामित्युक्ता-वभ्यासदशोत्पन्न ज्ञानप्रामाण्ये पक्षैकदेशेऽनभ्यासोत्पन्नेपि सर्वत्र सन्देहाभावेन भागासिद्धिशङ्कायां प्राचीनमताभिप्रेतादोषत्वोक्तिरिति ज्ञेयम्।

॥ **उद्देशस्येति** ॥ यथा भोगायतनत्वादिरूपा व्यग्रशरीरादिलक्षणेनापि केवलव्यतिरेकिणेतर-

भेदादिसाधनम् अन्यथा तन्न स्यात्। तथेहापि यावति हेतुरस्ति तावति पक्षे पक्षताच्छेदकसामानाधिकरण्येन साध्यसिद्धिसम्भवात्। तावत एवोद्देश्यत्वात्। उद्देश्यसिद्धिफलकत्वादनुमानस्येत्यर्थः। तर्हि स दोष एव न स्यादित्यत आह ॥ **यत्र त्विति** ॥ तथा च मणौ यदनभ्यासेति विशेषणमुदयनोक्तहेतुविशेषणं भङ्क्त्वा पक्षविशेषणं कृतं तदसिद्धिवारकं व्यर्थमित्युपेत्येति ज्ञेयम्।

मण्युक्तपक्षापेक्षयात्र गुणविशेषमाह ॥ **अत्र चेति** ॥ प्राचीनोक्तानुमानपक्षे पक्षतावच्छेदकनिर्वचनक्लेशो वा हेतुपक्षतावच्छेदकैक्यनिबन्धनः सिद्धसाधनताक्लेशो वा नरसिंहाकारज्ञानहेतुविशेषणदुर्ज्ञानत्वक्लेशो वा नेत्यर्थः। अप्रयोजकत्वादीत्यादिपदेन प्रतिकूलतर्कपराहतिसोपाधिकत्वादिग्रहः। सुधोक्तदिशा स्वतः प्रमाणत्वेनाङ्गीकृतधर्मिज्ञानानुमितिप्रामाण्ये व्यभिचारस्य च ग्रहः ॥ **एतेनैवेति** ॥ बाधादिनैवेत्यर्थः। दृष्टान्तघटनाय हेतावप्रामाण्यपदम्। अन्यतरशब्द उभयपरः। प्रामाण्याप्रामाण्योभयमात्रकोटिकेत्यर्थः। संशयविषये घटाद्यर्थे व्यभिचारनिरासाय प्रामाण्याप्रामाण्यान्यतरकोटिकेत्युक्तिः। इदं ज्ञानं गुणो न वा प्रामाणमप्राणं वेति तदङ्गीकृतचतुष्कोटिकसंशयविषयज्ञानगुणत्वे व्यभिचारनिरासाय मात्रेत्युक्तिः। यदि च विषयत्वादित्यस्य कोटित्वादित्यर्थस्तदा गुणत्वे व्यभिचारवारणाय मात्रपदमिति ज्ञेयम्। आदिपदेन प्रामाण्यं परतो ज्ञायते स्वतोऽग्राह्यत्वे सति ग्राह्यत्वादित्यादेर्ग्रहः।

उपपादितज्ञप्तिस्वतस्त्वेनैवोत्पत्तावपि तत्सिद्धप्रायमिति भावेनोत्तरवादोपक्षेपणायोक्तमुपसंहरति ॥ **तस्मादिति** ॥ स्वतस्त्वे साधकभावाद् बाधकाभावात्परतस्त्वपक्षे तदुभयाभावादित्यर्थः। उत्पत्तौ स्वतस्त्वं च सुधोक्तदिशा ज्ञानजनकमात्राधीनजन्मत्वमिति स्प्रष्टमिति भावः ॥ **एतदपीति** ॥ निश्चयरूपफलाभावे योग्यत्वाभावो नेत्येतदपीत्यर्थः ॥ **लोकेति** ॥ प्रतिबन्धकस्थलीयदाहाद्यभावेपि वह्न्यादेस्तच्छक्ततास्तीति लोकसिद्धव्यवस्थेत्यर्थः।

ज्ञप्तौ परतस्त्वानुमानभङ्गः ॥ ९ ॥

## तर्कताण्डवम्

### उत्पत्तौ परतस्त्वे चिरन्तनानुमानभङ्गः।

**ननु कथमेतत् अनित्यप्रमा ज्ञानहेत्वतिरिक्तहेतुजन्या कार्यत्वे सति तद्विशेषत्वात्। अप्रमावत्। अन्यथाऽप्रमापि**

**प्रमा स्यात्। यदि दोषप्रतिबन्धान्न प्रमा तर्हि ज्ञानमपि सा न स्यादित्यनुकूलतर्कसनाथानुमानविरोधात्। स्वतस्त्वे च मानाभावादिति चेन्न। प्रमाया ज्ञानत्वेन तद्धेतोर्ज्ञानहेतुतया तदतिरिक्तजन्यत्वसाधने बाधात्। विरोधाच्च।**

**नापि ज्ञानत्वप्रयोजकहेत्वतिरिक्तहेतुजन्येति साध्यम्। प्रत्यक्षत्वादिप्रयोजकानामिन्द्रियादीनां चाक्षुषत्वादि-प्रयोजकानां चक्षुरादीनां च ज्ञानत्वप्रयोजकातिरिक्तत्वेन यथायथं तैस्सिद्धसाधनात्।**

## न्यायदीपः

।। **एतदिति** ।। उत्पत्तौ च प्रामाण्यं स्वत एवेत्येतदित्यर्थः। कुत इत्यतः कुसुमाञ्जल्युक्तेन तत्वनिर्णयटीकाद्याशङ्कितेनानुमानेन विरोधं मानाभावं च हेतुद्वयमाह ।। **अनित्यप्रमेति** ।। प्रमेत्येवोदयनोक्तावपीश्वरज्ञानांशे बाधवारणाय तदभिप्रेतं ।। **स्वयमुक्तमनित्येति** ।। अत एव अनित्यप्रमात्वं कार्यतावच्छेदकं इति रुचिदत्तोक्तिः। हेत्वधीनत्वे ज्ञानहेत्वधीनत्वे च साध्ये सिद्धसाधनमतो ।। **ज्ञानहेत्वतिरिक्तहेतुजन्येति** ।। **तद्विशेषत्वात्** ।। ज्ञानविशेषत्वादित्यर्थः। ईश्वरज्ञाने व्यभिचारनिरासाय ।। **कार्यत्वे सतीति** ।। ज्ञाने तद्दोषनिरासाय विशेष्यम्।

एतेन मणौ जन्यत्वादिति हेत्वनुवादोऽनुचित इति सूचितम्। कुसुमाञ्जलौ मणौ चोक्तमनुकूलतर्कमाह ।। **अन्यथेति** ।। प्रमात्वस्य ज्ञानसामग्रीमात्रप्रयोज्यत्वेऽप्रमायामपि प्रमात्वं स्यात्। तत्रापि ज्ञानसामान्यहेतोः सत्त्वादिति भावः ।। **ज्ञानमपीति** ।। ज्ञानत्वप्रमात्वयोरेक-सामग्रीप्रयोज्यत्वादेकांशे प्रतिबन्धेऽपरांशेपि तथात्वादिति भावः। मानाभावाच्चेति चान्वयः। व्याघातं चाह ।। **विरोधाच्चेति** ।। ज्ञानाजनकजन्यत्वार्थत्वेप्युक्तदोषावेवेति भावः।

मणिकृतोत्प्रेक्ष्य दूषितानपि पक्षान् शिष्याणां सुबोधायानूद्यनिरा करोति ।। **नापीति** ।। प्रत्यक्षत्वादीत्यादिपदेनानुमितित्वोपमितित्वशाब्दत्वानां तथा चाक्षुषत्वादीत्यत्र रासनत्वादीनां द्वितीयचतुर्थादिपदाभ्यां च परामर्शोपमानशब्दज्ञानानां रसनादीनां च ग्रहः। सिद्धसाधनादि-त्युपलक्षणम्। ज्ञानत्वस्येश्वरज्ञानवृत्तित्वेन कारणाप्रयोज्यतया तत्प्रयोजकसामग्र्यप्रसिद्ध्या साध्याप्रसिद्धिरित्यपि बोध्यम्।

## तर्कताण्डवम्

**नापि ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीजन्येति साध्यम्। सामग्रीशब्देन कृत्स्नकारणचक्रविवक्षायां सामग्रीभेदे कार्यभेदनियमेन प्रमाया ज्ञानभिन्नत्वापत्तेः। कतिपयकारणचक्रविवक्षायां चोक्तरीत्येन्द्रियादिभिः सिद्धसाधनात्।**

**एतेनानित्यज्ञानत्वावच्छिन्नकार्यताभिन्नकार्यत्वप्रतियोगिककारणजन्येति साध्यत इति निरस्तम्। इन्द्रियादिभिः सिद्धसाधनात्।**

**एतेन अनित्यप्रमा प्रमाऽप्रमोभयहेतुभिन्नहेतुजन्या जन्यत्वात्, प्रमाऽप्रमान्यतरप्रतिबन्धकजन्या वा प्रमाऽप्रमान्यतरत्वात्, स्वविरोध्यनुभवप्रतिबन्धकजन्या वा अनित्यानुभवत्वात् अप्रमावत्। चाक्षुषप्रमा चाक्षुषभ्रमाजनकजन्या अनित्यप्रमात्वात् रासनप्रमावदिति निरस्तम्। प्रमाजनकव्यक्तिविशेषस्योभयहेतुभिन्नत्वेनाप्रमाप्रतिबन्धकत्वेन चाक्षुषभ्रमाजनकत्वेन च सिद्धसाधनात्।**

## न्यायदीपः

ननु ज्ञानत्वप्रयोजकहेत्वित्यस्य ज्ञानत्वाश्रयजनकसामग्रीत्यर्थो विवक्षितः। तेन नेन्द्रियादिभिः सिद्धसाधनम्। तेषामपि तदाश्रयजनकसामग्रीत्वेन तदन्यत्वाभावादित्यत आह ।। **नापि ज्ञानसामान्येति** ।। ज्ञानत्वाश्रयसामग्रीत्यर्थः ।। **सामग्रीभेद इति** ।। सामान्यविशेषकार्यस्थलेपि सामान्यकार्यसामग्रीतो विशेषकार्यसामग्री न भिन्ना किन्तु मिलितैवेति भावः ।। **सिद्धसाधनादिति** ।। इन्द्रियादीनामपि ज्ञानत्वाश्रयकतिपयकारणान्यत्वादिति भावः।

ज्ञानत्वस्य नित्यवृत्तितयानवच्छेदकत्वादाह ।। **अनित्यज्ञानत्वेति** ।। अनित्यज्ञानत्वेन अनवच्छिन्ना नियता व्यावर्तिता वा या कार्यता अनित्यज्ञानमात्रवृत्तिरात्ममनोयोगादिप्रयोज्या कार्यता

तदन्यकार्यत्वं प्रमानिष्ठमप्रमानिष्ठं च तत्प्रतियोगिकं तन्निरूपितं यत्कारणं प्रमारूपकार्यकारणं अप्रमारूपकार्यकारणं गुणदोषलक्षणं तज्जन्येत्यर्थः। दोषजन्यत्वे बाधाद्गुणजन्यत्वेन साध्यपर्यवसानं दृष्टान्तेऽप्रमायां दोषजन्यत्वेन साध्यानुगमो ज्ञेयः ॥ **सिद्धसाधनादिति** ॥ कार्यत्वपदेन प्रमादिवृत्तिकार्यत्वमिव प्रत्यक्षमात्रवृत्तिकार्यत्वमनुमित्यादिमात्रवृत्तिकार्यत्वं चाक्षुषादिज्ञानमात्रवृत्तिकार्यत्वमपि भवतीति तत्तत्प्रतियोगिककारणानीन्द्रियादीन्यपि भवन्तीति तैः सिद्धसाधनमित्यर्थः ॥ **प्रमाऽप्रमेति** ॥ तदुभयहेतुर्ज्ञानसामान्यसामग्र्यात्ममनोयोगादिः। तद्भिन्नहेतुर्गुणो दोषश्च। तज्जन्यत्वं च पक्षदृष्टान्तयोः प्रमाऽप्रमयोः पूर्ववज्ज्ञेयम्। प्रमेत्युक्त्या सिद्धसाधनत्वस्याप्रमेत्युक्त्या बाधस्य च निरासः। न च प्रागभावव्यक्तिविशेषेणार्थान्तरम्। भावत्वेन विशेषणात्।

यन्मते गुणादेर्विरोधिप्रतिबन्धकत्वं स्वकार्यकरत्वं च तन्मतेनाह ॥ **प्रमाऽप्रमान्यतरेति** ॥ अनित्यप्रमेत्येवं प्रागुक्तपक्षानुकर्षोऽत्रोत्तरत्र च ज्ञेयः। अन्यतरप्रतिबन्धकश्च गुणो दोषश्च। तज्जन्यत्वं पूर्ववत्। हेतौ जन्यप्रमेति योज्यम्। प्रमाऽप्रमाबहिर्भूतमीश्वरज्ञानमिति मते तु यथाश्रुतमेव। अनुमित्यादिप्रतिबन्धकप्रत्यक्षसामग्रीजन्यत्वेन सिद्धसाधनवारणाय स्वविरोधीत्यनुभवविशेषणम्। अप्रामारूपोऽनुभव इत्यर्थः। स्वशब्दस्य पक्षीभूतानित्यप्रमामात्रपरत्वेनानुमित्यादेः स्वविरोधित्वाभावान्नोक्तदोषः। स्वविरोधिस्मृतिप्रतिबन्धकानुभवसामग्रीजन्यतया सिद्धासाधनतावारणायानुभवपदम् ॥ **अप्रमावदिति** ॥ तत्र दोषजन्यत्वेन साध्यानुगमो ध्येयः ॥ **चाक्षुषभ्रमाजनकेति** ॥ पक्षे गुणजन्यत्वेन दृष्टान्ते रसनेन्द्रियसम्प्रयोगजन्यत्वेन साध्यं बोध्यम्।

आद्यद्वयं स्मृत्यनुभवसाधारणं साध्यम् द्वितीयमनुभवासाधारणं तृतीयं चक्षुरादिप्रत्यक्षसाधारणमिति साध्यत्रयं विवेक्तव्यम् ॥ **व्यक्तिविशेषस्येति** ॥ निर्देषार्थकरणसम्प्रयोगादिरूपस्येत्यर्थः ॥ **अप्रमाप्रतिबन्धकत्वेनेति** ॥ तदनुत्पादव्याप्यत्वरूपप्रतिबन्धकत्वेनेत्यर्थः। अप्रमायाः स्वविरोध्यनुभवत्वादप्रमाप्रतिबन्धकत्वेनेत्यनेनैव स्वविरोध्यनुभवप्रतिबन्धकत्वेनेत्यस्य अप्युक्तत्वान्न तस्य पृथगुक्तिः ॥ **इन्द्रियसम्प्रयोगस्येति** ॥ इन्द्रियादिसम्प्रयोगत्वस्याप्रमाव्यावृत्तत्त्वेन तदवच्छिन्नकार्यत्वं तस्येत्यर्थः। इन्द्रियसम्प्रयोगस्येति ध्येयम्। अग्र इन्द्रियादीति श्रवणात् ॥ **तज्जन्यत्वेनेति** ॥ संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन जनकत्वादिन्द्रियस्यापि द्रव्यत्वादिति भावः।

## तर्कताण्डवम्

**नापि अनित्यप्रमा अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यताप्रतियोगिककारणजन्या अप्रमाविजातीयकार्यत्वात्।**

**घटवदिति युक्तम्। अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यत्व-मिन्द्रियसम्प्रयोगस्य तत्प्रतियोगिककारणमिन्द्रियादीति तज्जन्यत्वेन सिद्धसाधनात्।**

**नापि अनित्यप्रमा अप्रमाकारणविजातीयकारणजन्या अप्रमाविजातीयकार्यत्वात् घटवत्। अन्यथा कार्यवैजात्य-माकस्मिकं स्यादिति युक्तम्। हेतौ विजातीयत्वं यदि विरुद्ध-जात्यधिकरणत्वं तदा प्रमात्वस्य अजातित्वेन असिद्धेः। यदि तु विरुद्धधर्ममात्राधिकरणत्वं तदा पटज्ञानविजातीयकार्ये घटज्ञाने व्यभिचारः। अनुमित्यादिसाधारणघटज्ञानमात्रा-नुगतकारणाभावात्। पाकजरूपरसादौ कारणवैजात्येपि कार्यवैजात्यदर्शनाच्च।**

**स्यादेतत्। अनित्यप्रमात्वं अनित्यज्ञानत्वावच्छिन्न-कार्यत्वप्रतियोगिककारणताभिन्नकारणताप्रतियोगिकार्यता-वच्छेदकम्। अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वात् अप्रमात्ववत्।**

## न्यायदीपः

मणिकृता सिद्धान्तितानुमानान्यप्यनूद्य निराह ॥ **नाप्यनित्यप्रमेत्यादिना** ॥ **अप्रमाविजातीयेति** ॥ अप्रमाकारण विजातीयेत्यर्थः। तदुक्तमेवानुकूलतर्कमाह ॥ **अन्यथेति** ॥ विजातीय-कारणाजन्यत्व इत्यर्थः ॥ **अजातित्वेनेति** ॥ इदं रजतमित्यादौ धर्म्यंशे सत्वेपि धर्मांशेऽभावेन प्रमात्वस्याव्याप्यवृत्तित्वात्। ज्ञानत्वसमनियतत्वाच्चेति भावः।

घटज्ञानजातीयमपि कार्यं तद्विजातीयकार्यकारणविजातीयघटेन्द्रियसन्निकर्षादिजन्यमिति न व्यभिचार इति मण्युक्तनिरासाय व्यभिचारं व्यनक्ति ॥ **अनुमित्यादीति** ॥ अप्रयोजकत्वं चाह ॥ **पाकजेति** ॥ न च तत्रापि तत्प्रागभावरूपहेतुवैजात्यमस्तीति वाच्यम्। भावरूपविजातीयेति साध्यार्थत्वात्। अन्यथा प्रागभावेनैव सिद्धसाधनतापत्तेरिति भावः।

मण्युक्तानुमानान्तरमाशङ्कते ॥ **स्यादेतदिति** ॥ प्रमात्वस्य नित्यवृत्तितया कार्यतानव-

च्छेदकत्वादनित्यप्रमात्वमित्युक्तिः। एवं साध्येऽपि ज्ञेयम्। अनित्यज्ञानत्वावच्छिन्नं यत्कार्यत्वं तत्प्रतियोगिका तन्निरूपिता कारणता आत्ममनोयोगादिनिष्ठा तद्भिन्ना या कारणता गुणदोषनिष्ठा तत्प्रतियोगिककार्यतावच्छेदकमित्युक्तौ पक्षे गुणजन्यतावच्छेदकत्वेन दृष्टान्ते दोषजन्यतावच्छेद-कत्वेन साध्यसिद्धिः। अन्यथा बाधादिति भावः। हेतावनित्यज्ञानत्वे व्यभिचारनिरासाय व्याप्यान्तं धर्मविशेषणम्। अभेदेपि व्याप्यत्वमिति पक्षे तु न्यूनवृत्तित्वं व्याप्यत्वं बोध्यम्। अनित्यघटज्ञानत्वादौ तद्वारणाय विशेष्यम् ॥ **बाधकं विनेति** ॥ अवच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वं वा स्वावच्छिन्नकार्यताप्रतियोगिककारणासम्भवो वा एकव्यक्तिकत्वं वा गौरवं वेत्यादि यत्कार्यताव-च्छेदकत्वे बाधकं तद् विनेत्यर्थः ॥ **अप्रमात्ववदिति** ॥ तत्र बाधकचतुष्टयस्याप्यभावाद्धेतुसाध्ये व्यक्ते इति भावः।

## तर्कताण्डवम्

**न च विशेष्यासिद्धिः। अनित्यप्रमात्वं कार्यतावच्छेदकं बाधकं विना कार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववदित्यनेन तत्सिद्धेः। नीलघटत्वादौ प्रत्येकानुगतप्रयोजकद्वयादेव नीलरूपघटत्वयोः सिद्ध्या समाजस्यार्थिकत्वं बाधकम्। जन्यघटज्ञानत्वादौ तु स्वावच्छिन्नकार्यत्वप्रतियोगिक-कारणासम्भवो बाधक इति न तत्र व्यभिचार इति चेन्मैवम्। घटज्ञान इव वक्ष्यमाणरीत्याऽनित्यप्रमामात्रेप्यनुगतगुणा-भावेनानुमानद्वयेपि बाधात्। द्वितीये विशेषणासिद्धेश्च। बाधकराहित्यस्यैव हेतुत्वसम्भवे व्यर्थविशेष्यत्वाच्च। साधकाभावेन सत्प्रतिपक्षत्वाच्च। अप्रमामात्रानुगतदोषा-भावेन दृष्टान्तस्य साध्यसाधनवैकल्याच्च।**

**ननु प्रमाविशेषहेतूनां भूयोऽवयवेन्द्रियसन्निकर्षादीनां प्रमामात्रे सन्निकर्षत्वादिनाऽननुगमेपि गुणत्वेनानुगतिरस्तीति कथं बाध इति चेन्न। गुणत्वस्याजातित्वेन प्रमामात्रजनकत्व-रूपतयान्योन्याश्रयात्।**

**एतदप्युक्तं ''प्रामाण्यं च स्वत एव अन्यथानवस्थानात्'' इति। उत्पद्यत इति शेषः। ज्ञानात्मिकाया भ्रमेपि धर्म्यंशेऽनुवृत्तायाश्च प्रमायाः ज्ञानहेत्वजन्यहेतुजन्यत्वादिति साधने घटादिवदज्ञानत्वाद्यापत्त्या प्रमा ज्ञानं घटस्तु नेत्यादिव्यवस्थाऽयोगादित्यर्थः।**

**उत्पत्तौ परतस्त्वे चिरन्तनानुमानभङ्गः॥ १०॥**

## न्यायदीपः

हेतौ विशेषणकृत्यं मण्युक्तमेव दूषणज्ञानसौकर्यायाह ॥ **नीलेति** ॥ **प्रयोजकद्वयादिति** ॥ घटत्वप्रयोजकान्नीलत्वप्रयोजकाच्चेत्यर्थः ॥ **समाजस्य** ॥ घटत्वनीलत्वयोर्मेलनस्येत्यर्थः ॥ **आर्थिकत्वमिति** ॥ घटत्वनीलत्वरूपावच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वमित्यर्थः ॥ **स्वेति** ॥ स्वावच्छिन्नं यत्कार्यत्वं तन्निरूपितानुगतैककारणासम्भव इत्यर्थः ॥ **घटज्ञान इवेति** ॥ जन्यघटज्ञान इवेत्यर्थः ॥ **विशेषणेति** ॥ स्वावच्छिन्नकार्यत्वप्रतियोगिकैककारणासम्भवरूपबाधकस्यैव सत्वेन बाधकं विनेत्यस्यासिद्धेरित्यर्थः ॥ **व्यर्थेति** ॥ ज्ञानत्वादौ नित्यवृत्तित्वबाधकाभावेनैव व्यभिचारनिरासादिति भावः। न च बाधकं विनेत्यत्र प्रागुक्तबाधकचतुष्टयमेव बाधकपदेन विवक्षितम्। अतो ज्ञानत्वादौ व्यभिचारनिरासाय विशेष्यमिति वाच्यम्। सामान्यशब्दस्य विशेषपरत्वमुपेत्य विशेष्यकृत्योक्तेरयुक्तत्वादिति भावः।

॥ **साधकेति** ॥ अनुगतकारणतावच्छेदकेन हि कार्यतावच्छेदकमुपेयम्। प्रकृते चानुगतकारणं नेति वक्ष्यमाणत्वादिति भावः ॥ **दृष्टान्तस्येति** ॥ अनुमानद्वयेपीत्यनुकर्षः। अनुगतदोषाभावेनाद्यहेतौ कार्यतावच्छेदकत्वस्य द्वितीये स्वावच्छिन्नकार्यतेत्यादिबाधकाभावस्य चाभावेन साधनवैकल्यम्। अनुगतकारणाभावेन साध्यवैकल्यं चेत्यर्थः ॥ **अजातित्वेनेति** ॥ संयोगत्वज्ञानत्वादिना साङ्कर्यादिति भावः। एतेन दृष्टान्ते भ्रमहेतूनां दोषत्वेनानुगमोपि प्रत्युक्तः ॥ **अन्योन्याश्रयादिति** ॥ अनित्यप्रमात्वस्य कार्यतावच्छेदकत्वसिद्धावुक्तरूपगुणत्वसिद्धिः। तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ **चिरन्तनानुमानभङ्गः** ॥ उदयनोक्तानुमानस्यैव मणिकृता परिष्कृतत्वेन नूतनानुमानाकरणात्तद्भङ्गेन मण्युक्तानुमानभङ्गोपीति चिरन्तनेत्येवोक्तम्।

उत्पत्तौ परतस्त्वे चिरन्तनानुमानभङ्गः ॥ १० ॥

## अनित्यप्रमामात्रानुगतगुणभङ्गः

### तर्कताण्डवम्

अथ मतं ग्राह्यप्रमा वा विशेष्यनिष्ठविशेषणज्ञानं वा अविद्यमानासंसर्गाग्रहो वा गुणः। प्रमामात्रेऽनुगतो हेतुः। नचात्र प्रमाणाभावः। आद्ये पक्षे विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यां धारावाहिकोत्तरप्रमां प्रति विशेष्यमपि विषयीकुर्वन्त्याः पूर्वस्या ग्राह्यप्रमायाः कारणत्वे क्लृप्ते प्रमान्तरं प्रत्यपीश्वरनिष्ठाया ग्राह्यप्रमाया गुणत्वकल्पनात्।

द्वितीयेपि विशिष्टज्ञानरूपं सामान्यं प्रति विशेषणज्ञानस्य विशेषणज्ञानत्वरूपेण सामान्येन कारणत्वे "यत्सामान्ययोः कार्यकारणभावो बाधकाभावे सति तद्विशेषयोरपि सः" इति न्यायेन विशिष्टप्रमां प्रति विशेष्यनिष्ठविशेषणज्ञानत्वेन कारणत्वकल्पनात्।

तृतीयेपि संसर्गग्रहसामान्यं प्रत्यसंसर्गाग्राहमात्रस्य कारणत्वेन तद्विशेषस्याविद्यमानासंसर्ग्राग्रहस्य संसर्गप्रमां प्रति कारणत्वकल्पनात् इति।

मैवम्। आद्यपक्षे धारावाहिकपूर्वप्रमायां ग्राह्यप्रमात्वे सत्यपि तस्या विशेषणज्ञानत्वेनैव कारणतया ग्राह्यप्रमात्वेन तदभावात्। तत्र तस्याः समानाधिकरणाया एव कारणत्व-क्लृप्त्या प्रमान्तरेपि तत्कल्पनाप्रसङ्गाच्च।

ईश्वरज्ञानस्य भ्रमं प्रतीवोपादानसाक्षात्कारतयैव कारणत्वस्य क्लृप्तत्त्वेन ग्राह्यप्रमात्वेन कारणत्वकल्पनस्य प्रामाण्यपरतस्त्वनिश्चयाधीनत्वेनान्योन्याश्रयाच्च।

**लिङ्गाभासविप्रलम्भकवाक्यजन्ययोर्यादृच्छिक-संवादेन प्रमयोस्त्वदुक्तव्यधिकरणगुणजन्यत्ववत् समाना-धिकरणदोषजन्यत्वस्यापि सत्वेनाप्रामाण्यस्याप्यापाताच्च।**

## न्यायदीपः

यदुक्तमनुगतगुणाभावेनानुमानद्वये बाधादित्यादि तन्नेति भावेनानुगतगुणमाशङ्क्य निराह ।। **अथेति** ।। यद्यपि ''प्रमामात्रे नानुगतो गुण'' इत्येवोक्तं मणौ तथापि पक्षधरप्रगल्भादि-व्याख्यातृभिरनुगतगुणस्योक्तत्वात्तन्मताशङ्केयम् ।। **ग्राह्येति** ।। येन यद्ग्राह्यं तत्र तत्प्रमाहेतुरित्यर्थः ।। **विशेष्यनिष्ठेति** ।। विशेष्यसम्बद्धेत्यर्थः । तेनाकाशे शब्द इत्यादौ न दोषः । अविद्यमानो योऽसंसर्गः धर्मिधर्मसम्बन्धाभावः तदग्रह इति तृतीयपक्षार्थः । मतत्रयेपि क्रमेण युक्तीराह ।। **आद्येत्यादिना** ।। **प्रमान्तरं प्रतीति** ।। अनुभवं प्रतीत्यर्थः ।। **विशिष्टेति** ।। जन्यविशिष्टज्ञानेत्यर्थः ।। **तदभावादिति** ।। कारणत्वाभावादित्यर्थः । ग्राह्यप्रमात्वेनैव कारणत्वमित्यत्र कल्पकाभावादिति भावः ।

न च शाब्दप्रमायां ग्राह्यविशेषस्य वाक्यार्थस्य प्रमाहेतुरिति प्रमासामान्ये ग्राह्यप्रमासामान्यं हेतुरिति वाच्यम्। तथापि ग्राह्यप्रमामात्रस्यातिप्रसक्ततया तद्ग्राह्यप्रमायां तद्ग्राह्यप्रमाहेतुरित्यननुगम एवेत्यनुगतगुणालाभात्। अप्रमात्वे दृष्टान्ते साध्यवैकल्यस्यैवमप्यपरिहाराच्चेति भावः।

नन्वस्तु विशेषणज्ञानत्वेनैव हेतुतेत्यत आह ।। **तत्रेति** ।। यद्वा ग्राह्यप्रमात्वेन तत्र कारणत्वेपि न सर्वत्रानुगतगुणलाभ इत्याह ।। **तत्रेति** ।। उक्तिविशिष्टप्रमायां तस्याः विशेषणप्रमात्वेन हेतुभूत-पूर्वप्रमाया इत्यर्थः ।। **क्लृप्तचेति** ।। अन्यथातिप्रसङ्गान्निर्विकल्पकानादरापत्तेश्चेति भावः।

नन्वीश्वरज्ञानस्याकारान्तरेण हेतुत्वात्क्लृप्तेर्वा प्रमात्वस्य गुणप्रयोज्यत्बान्यथानुपपत्त्या वैतत्कल्प्यत इत्यत आह ।। **ईश्वरेति** ।। **यादृच्छिकेति** ।। यादृच्छिसंवादेन हेतुनावगतप्रमात्व-योरित्यर्थः ।। **अप्रामाण्यस्येति** ।। नचायं दोषः सिद्धान्तेऽपीति वाच्यम्। विषयसत्त्वाभावविशिष्ट-स्यैव दोषस्याप्रमाहेतुत्वात्। नचैवं परमते युक्तम्। उक्तरूपदोषाभावादेव प्रमात्वोपपत्तौ गुणस्य हेतुतानापत्तेरिति भावः।

## तर्कताण्डवम्

**धारावाहिके भ्रमे पूर्वस्य भ्रमस्योत्तरभ्रमं प्रति त्वदुक्त-**

रीत्या ग्राह्यभ्रमत्वेन कारणत्वे क्लृप्ते भ्रमान्तरेपि ग्राह्यभ्रमः कारणत्वेन कल्प्यः। स एव च भ्रममात्रेऽनुगतो दोषः। एवं च संवादिशुकादिवाक्यमूलत्वेन नित्यप्रमावद्विसंवादिशुकादि-वाक्यमूलत्वेन नित्यभ्रमोऽपि सिद्ध्येदित्यतिप्रसङ्गाच्च।

आद्यद्वितीययोर्विशिष्टज्ञानं प्रति विशेषणज्ञानकारण-त्वस्यैव मां प्रत्यसिद्धेश्च। वक्ष्यते चैतन्निर्विकल्पकभङ्गे। द्वितीयतृतीययोनिर्विकल्पकरूपप्रमाननुगमाच्च।

ननु निर्विकल्पकेप्यविद्यमानस्यासंसर्गस्याग्रहोऽस्त्येवेति चेन्न। असंसर्गाग्रहस्यासंसर्गग्रहरूपो यः संसर्गग्रहप्रतिबन्धकः तदभावतया संसर्गग्रह एव हेतुत्वात्।

न च निर्विकल्पकं प्रमाऽप्रमाबहिर्भूतम्। तथापि निर्वि-कल्पकस्य गुणाजन्यत्वेप्यप्रमावैजात्यवत्प्रमाया अपि तदु-पपत्तेः। तृतीयेऽविद्यमानासंसर्गशब्देनोक्तस्य विद्यमान-संसर्गस्य योऽयमग्रहस्तस्य धारावाहिकद्वितीयादिप्रमा-ननुगमाच्च। अविद्यमानासंसर्गस्य संसर्गरूपतया तदग्रहस्य असंसर्गाग्रहविशेषत्वाभावाच्च।

## न्यायदीपः

॥ **नित्यभ्रमोपीति** ॥ अन्यथा प्रागुक्ताप्रमात्वदृष्टान्ते साध्यसाधनवैकल्यापत्तेः। इतोन्यस्य अनुगतदोषस्याभावेन कार्यतावच्छेदकत्वासिद्धेरिति भावः ॥ **विशेषणज्ञानकारणत्वस्यैवेति** ॥ दूरे यत्सामान्ययोरिति न्यायावतार इत्येवकारार्थः। प्रामाणिकत्वेनसिद्धमित्यत आह ॥ **वक्ष्यत इति** ॥

रुचिदत्तादिस्तु विशेष्यनिष्ठविशेषणज्ञानं गुण इत्ययुक्तम्। लोहितः स्फटिक इत्यादौ लौहित्यसाक्षात्सम्बन्धविषयकभ्रमे अन्वयव्यभिचारात्। लौहित्यरूपविशेषणस्य परम्परासम्बन्धेन विशेष्यनिष्ठत्वात्। न च तत्सम्बन्धविषयकप्रमायां तत्सम्बन्धेन विशेष्यवृत्ति यद्विशेषणं तज्ज्ञानत्वेन हेतुतेति वाच्यम्। एवं हि तत्सम्बन्धविषयकतद्विशेषणविशेष्यकप्रमात्वं कार्यतावच्छेदकम्।

तत्सम्बन्धेन तद्विशेषणज्ञानत्वं कारणतावच्छेदकमित्यननुगम एव। किञ्च भावत्वविशिष्टप्रत्यक्षे व्यभिचारश्चेत्यदूषणात्।

॥ **अननुगमाच्चेति** ॥ नन्वीश्वज्ञानमादाय द्वितीयमपि निर्विकल्पके अनुगमयितुं शक्यमिति चेन्न। तस्य साधारणहेतुत्वेन विशेषाकारेण हेतुत्वकल्पकाभावादितिभावः। तृतीयमनुगतमिति शङ्कते ॥ **नन्विति** ॥ अननुगमो न दोषायेति शङ्कते ॥ **नचेति** ॥ **बहिर्भूतमिति** ॥ गुणदोषान्यतराजन्यत्वादिति भावः ॥ **संसर्गरूपतयेति** ॥ नञ्द्वयेन विध्यमानसंसर्गलाभं विना पर्यवसानाभावादिति भावः ॥ **असंसर्गाग्रहविशेषत्वाभावाच्चेति** ॥ तथाच यत्सामान्ययोरिति न्यायानवतरेण कथं तस्य गुणत्वलाभ इति भावः।

## तर्कताण्डवम्

**किञ्चानित्यप्रमामात्रानुगतगुणाङ्गीकारे प्रमारूपानुमित्यादौ प्रमात्वस्यानित्यप्रमामात्रानुगतगुणेन अनुमितित्वशाब्दत्वादेश्च लिङ्गपरामर्शशब्दकारणकत्वादिनैवोपपत्त्या यथायथं लिङ्गपरमर्शादिप्रतिनियतगुणोक्तिर्व्यर्था।**

**किञ्च परतस्त्ववादिना हि विषयसत्वनैरपेक्ष्येण स्वत एवाप्रमाव्यावृत्तं ज्ञानसाधारणकारणाद धिकं किञ्चित्कारणं प्रमायां साधनीयम्। नतु ज्ञानसाधारणकारणस्यैव विषयसत्वविशेषणेनाप्रमाव्यावृत्तिः साधनीया। स्वतस्त्ववादिनापि प्रमायां ज्ञानसाधारणकारणस्य विषयसत्वस्य स्वीकृतत्वेन सिद्धसाधनात्। अत एव सुधायां ''ज्ञानजनकमात्राधीनजन्मत्वं स्वतस्त्वं'' इति मात्रशब्देन जनकान्तरमेव निषिद्धम्। न तु विषयसत्वम्। तस्यातीतादिविषयकानुमित्यादिसाधारणत्वेन प्रामाण्यशरीरान्तर्गतत्वेन च तदजनकत्वात्।**

## न्यायदीपः

एवमनुगतगुणपक्षत्रयं प्रत्येकं दूषयित्वा संहत्यापि दूषयितुं ''भूयोऽवयवेन्द्रियसन्निकर्षयथार्थ-

लिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वं'' इति मण्युक्तं विरुद्धं चेति भावेनाह ।। **किञ्चेति** ।। यद्वा उक्तप्रकारत्रयेण वा प्रकारान्तरेण वा प्रमामात्रानुगतगुणस्वीकारपक्ष एव न युक्त इत्याह ।। **किञ्चेति** ।।

न च प्रमात्वानुमितित्वादिरूपकार्यतावच्छेदकबलात्तदनुगुणोनुगतगुणः कश्चित्स्वीकार्य इति शङ्क्यम्। नीलघटत्वादाविव प्रमात्वानुमितित्वादेः स्वसामग्रीमहामाहिम्नैवैकत्र समाजेनावच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वरूपबाधकेन तस्य कार्यतानवच्छेदकत्वात्। अत एव प्रमात्वस्यानुमितित्वादेश्च प्रयोजकसामग्रीसमाजस्य प्रमामात्रानुगतगुणेनेति लिङ्गपरामर्शशब्दकारणकत्वादिनेत्युक्तिः।

पूर्वोक्तमतत्रयेपि विषयसत्वमेव गुण इति फलितमिति ''तच्चानेन साधितमित्यादिना'' वक्ष्यन् विषयसत्त्वं च न गुण इत्याह ।। **किञ्चेति** ।। **अप्रमेति** ।। अप्रमाकारणव्यावृत्तमित्यर्थः। ज्ञानसाधारणकारणस्येति पररीत्योक्तिः। स्वमते ग्राह्यज्ञानविशेषणज्ञानयोरहेतुत्वादिति ज्ञेयम् ।। **अप्रमेति** ।। अप्रमाकारणव्यावृत्तिः ।। **अत एवेति** ।। विषयसत्वस्यानुमतत्वादेवेत्यर्थः ।। **सुधायां** ।। जिज्ञासाधिकरणसुधायामित्यर्थः।

ननु विषयसत्वस्यापि प्रमाजनकतया जनकान्तरनिषेधे विषयसत्वमपि सुधायां निषिद्धमेव। अतस्तदनुप्रवेशे सति न सिद्धसाधनमित्यत आह ।। **तस्येति** ।। विषयसत्वस्येत्यर्थः ।। **अतीतेति** ।। अनुमित्यादिप्रामाण्याय पूर्वं तत्र विषयसत्वस्य वाच्यतया तस्येदानीन्तनानुमित्यजनकत्वादिति भावः ।। **तदजनकत्वादिति** ।। यत्तु प्रमाणपद्धतौ साधनपदेन प्रमातृप्रमेययोर्व्यवच्छेद इति कारणत्वमात्रमुपेत्य साधकतमत्वाभाववचनं तदभ्युपेत्य वादेनेति भावः

## तर्कताण्डवम्

**एतेन यादृच्छिकसंवादेन प्रमायां लिङ्गाभासेन शब्दाभासेन च जन्यायामनुमितौ शाब्दप्रतीतौ च पक्षस्य वस्तुतः साध्यवत्वं योग्यता च गुण इति निरस्तम्। स्पष्टयिष्यते चैतत्। तच्चानेन साधितम्। विशेषणज्ञानस्यासंसर्गाग्रहस्य च भ्रमसाधारण्यात्। विशेष्यनिष्ठशब्देनाविद्यमानशब्देन च विषयसत्वस्यैवोक्तेः। अन्यथा भ्रमेपि विशेष्यानिष्ठविशेषण-**

ज्ञानं विद्यमानासंसर्गाग्रहश्च प्रमाव्यावृत्तत्वाद्दोष इति तज्ज-न्यत्वेनैव परतस्त्वं स्यात्।

तस्माद् भ्रमे स्वत एव प्रमाव्यावृत्तं पित्तादिकमिव प्रमायामपि स्वत एव भ्रमव्यावृत्तं भूयोऽवयवेन्द्रियसन्नि-कर्षादिकमधिकं वाच्यमिति किमनेन।

एतेन अनित्यप्रमात्वं अप्रमाकरणतावच्छेदकरूपा-नवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्। भ्रमा-वृत्तिकार्यतावच्छेदकत्वात्। घटत्ववदित्याद्यपि निरस्तम्। कार्यतावच्छेदकत्वस्यैव निरासादिति।।

एतदुक्तं "अन्यथा" इत्यादिना। अनुगतगुणाभावेप्य-नित्यप्रमात्वस्य कार्यतावच्छेदकत्वे घटत्वादिकं कार्यता-वच्छेदकं न तु नीलघटत्वादिकमिति व्यवस्थाऽयोगादित्यर्थः।

अनित्यप्रमामात्रानुगतगुणभङ्गः ।

## न्यायदीपः

।। **एतेनेति** ।। विषयसत्वस्य गुणत्वाभाववचनेनेत्यर्थः। वास्तवसाध्यवत्वयोग्यतयोर्विषय-सत्वरूपत्वादिति भावः। कथमिदं साध्यवत्वादिकं विषयसत्वगर्भमित्यत आह ।। **स्पष्टयिष्यत इति** ।। उत्तरभङ्ग इत्यर्थः।

नन्वस्तु विषयसत्वं न गुणः। तथापि ग्राह्यप्रमेत्याद्युक्तपक्षत्रयेपि किमागतमित्यत आह ।। **तच्चेति** ।। ज्ञानसाधरणकारणस्य विषयसत्वेन विशेषितत्वमनेन पक्षत्रयेण साधितं त्वयेत्यर्थः। कथमित्यतो व्यनक्ति ।। **विशेषणेत्यादिना** ।। विशेषणज्ञानस्येत्युक्त्या ग्राह्यज्ञानस्यापि ग्रहः प्राप्तः ।। **विशेष्यनिष्ठेति** ।। ग्राह्यप्रमेति प्रमाशब्देनेत्यपि ध्येयम्।

परतस्त्ववादिना हीत्यादिनोक्तप्रमेयानङ्गीकारे बाधकमाह ।। **अन्यथेति** ।। स्वत एवाप्रमा-व्यावृत्तस्य ज्ञानसाधारणकारणादधिकस्यानङ्गीकारे विषयसत्वेनैव परतस्त्वस्वीकार इत्यर्थः। ग्राह्य-भ्रमोऽप्यत्रोपलक्ष्यः। यद्वा आद्यपक्षस्यातिफल्गुत्वाद् द्वितीयतृतीययोरेवात्र पूर्वत्र च दोषोत्कीर्तनमिति

बोध्यम् ।। **स्वत एवेति** ।। विषयसत्वनैरपेक्ष्येणेत्यर्थः । एवं प्रमात्वमात्रेऽनुगतकारणदूषणेन मण्युक्तमनुमानान्तरमपि निरस्तमित्याह ।। **एतेनेति** ।। **अप्रमेति** ।। अप्रमाकारणतादोषादिनिष्ठा तदनवच्छेदकं रूपं विशेष्यनिष्ठविशेषणज्ञानत्वादिकम्। तदवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकमित्यर्थः। दृष्टान्ते दण्डत्वादिकमेव अप्रमाकारणतानवच्छेदकरूपं बोध्यम्। हेतावप्रमात्वे व्यभिचारवारणाय भ्रमाद्यवृत्तीति। भ्रमनिष्ठात्यन्ताभावप्रतियोगीत्यर्थः। नित्यानित्यवृत्तिप्रमात्वादौ तन्निरासाय विशेष्यम्। आदिपदेन अनित्यरजतप्रमात्वं रजताप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं रजतभ्रमावृत्तिकार्यतावच्छेदकधर्मत्वाद् घटत्ववदित्यादिग्रहः ।। **कार्यतेति** ।। अनुगतगुणनिरासेन स्वावच्छिन्नकार्यत्वप्रतियोगिककारणासम्भवरूपबाधकस्यैव भावेन बाधकं विना कार्यमात्रवृत्तिधर्मत्वात् कार्यतावच्छेदकमित्यस्यासम्भवात्। तथाच बाधासिद्धी इति भावः। रजतानुमित्यादिसाधारणगुणाभावेन रजतप्रमात्वेपि न कार्यतावच्छेदकत्वमिति ज्ञेयम्।

अनित्यप्रमामात्रानुगतगुणभङ्गः ।। ११ ।।

## तर्कताण्डवम्

### यज्ञपत्युक्तवक्रानुमानभङ्गः

**अथापि स्यात्। प्रमामात्रानुगतगुणाभावेपि परतस्त्वं सेत्स्यति। न ह्यनित्यप्रमात्वस्योक्तकार्यतावच्छेदकत्वं परतस्त्वम्। किन्तु तस्य स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्तित्वम्। तच्चानित्यप्रमामात्रानुगतगुणाभावेप्यननुगतगुणैरपि सेत्स्यति।**

**तत्र च प्रमाणं अनित्यप्रमात्वं स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्ति स्वाश्रयमात्रावृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणत्वाश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वात्। अप्रमात्ववदित्यनुमानम्।**

**अनेन सामान्यकारणमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वरूपेण हेतुना साध्यमानं विशेषकारणजन्यत्वं सर्वप्रमानुगत-**

**गुणस्य बाधितत्वेनाननुगतगुणजन्यत्वमादाय पर्यवस्यति।**

## न्यायदीपः

यज्ञपतिमतमाशङ्कते ।। **अथापीति** ।। अथापीत्याद्युक्तमेव व्यनक्ति ।। **प्रमेति** ।। **उक्तेति** ।। अप्रमाकारणतेत्यादिनोक्तेत्यर्थः ।। **तस्येति** ।। अनित्यप्रामात्वस्येत्यर्थः ।। **स्वेति** ।। स्वस्यानित्यप्रमात्वस्य य आश्रयस्तन्मात्रवृत्तयस्तदितरावृत्तित्वे सति तद्वृत्तयो ये धर्माः जन्यप्रत्यक्षप्रमात्वादयः तदवच्छिन्नकार्यताश्रय एव वर्तमानत्वमुक्तकार्यताश्रय एव वर्तमानत्वं उक्तकार्यताश्रयत्वव्याप्यत्वमिति यावत्।

तदुक्तमेव पञ्चमात्रानुमानमाह ।। **अनित्यप्रमात्वमिति** ।। बाधनिरासाय ।। **नित्येति** ।। साध्यमुक्तार्थम्। साध्यहेत्वोः स्वपदं समभिव्याहृतपरम्। एवं चानित्यप्रमात्वाश्रय एव यो न वर्तते धर्मः अनित्यज्ञानत्वादिः तदवच्छिन्नकार्यतानिरूपितकारणताश्रयो मनस्संयोगादिः तन्मात्रानुत्पाद्य कार्यमनित्यप्रमा तन्मात्रवृत्तिधर्मत्वादिति हेत्वर्थः। अनित्यज्ञानकारणमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वादिति फलितोर्थः। हेतोरप्रयोजकतां निरस्यन् साध्यपर्यवसानप्रकारमाह ।। **अनेनेति** **अननुगतेति** ।। प्रत्यक्षप्रमा स्वेकैकानुगतेत्यपि योज्यम्। अन्यथा जन्यप्रत्यक्षप्रमात्वादेरवच्छेदकत्वायोगेन बाधापत्तेरिति भावः।

## तर्कताण्डवम्

**अत्र च साध्ये आद्यं मात्रपदं स्वतस्त्वपक्षेप्यनित्यप्रमात्वस्य स्वाधिकदेशवृत्तिनानित्यज्ञानत्वेनावच्छिन्नकार्यताश्रय एव वर्तमानत्वात्सिद्धसाधनमिति शङ्कानिरासाय। द्वितीयं तु सर्वासां प्रमाणां गुणजन्यत्वसिद्ध्यर्थम्।**

**हेतौ प्रथममात्रपदाभावे एतद्धटपटान्यतरत्वे व्यभिचारः। घटत्वपटत्वयोः कार्यतावच्छेदकयोः एतद्धटपटान्यतरत्वादिकारणमात्रवृत्तित्वाभावेन साध्याभावत्। अन्यतरत्वस्य च स्वानुगतकारणाभावेन कार्यतानवच्छेदकत्वात्।**

**अतः स्वाश्रयमात्रावृत्तिधर्मावच्छिन्नकार्यत्वप्रति-**

**योगिककारणताश्रयमात्रानुत्पाद्येति कार्यं विशेषितम्। तेनैतद्धटपटान्यान्यत्वाश्रयकार्यस्य तदुभयान्यात्वाधिकरणमात्रावृत्तिघटत्वपटत्वावच्छिन्नकार्यत्वप्रतियोगिककारणत्वाश्रयमात्रोत्पाद्यत्वेन हेत्वभावान्न व्यभिचारः।**

**प्रथममात्रपदाभावे हेतुस्तत्र वर्तते। अन्यतरत्वाश्रयावृत्तिकुड्यत्वादिरूपधर्मावच्छिन्ना या कार्यता तत्प्रतियोगिककारणत्वाश्रयीभूतं यत्कुड्यकारणं तन्मात्रानुत्पाद्ये एतद्धटपटरूपे कार्येऽन्यतरत्वस्य वृत्तेः। मात्रपदे दत्ते तु न व्यभिचारः। स्वाश्रयमात्रावृत्तिपदेनान्यतरत्वाधिकदेशवर्तिनोर्घटपटत्वयोरपि सङ्गृहीतत्वेन तदवच्छिन्नकार्यता प्रतियोगिककारणत्वाश्रयीभूतं यद्धटादिकारणं तन्मात्रोत्पद्ये घटादावप्यन्यतरत्वस्य वृत्त्या तदनुत्पाद्यकार्यमात्रवृत्तित्वरूपहेत्वभावात्।**

## न्यायदीपः

साध्ये मात्रपदद्वयं व्यवच्छेदार्थकं न तु कात्स्न्यार्थकमित्युपेत्य दूषणज्ञानसौकर्याय व्यावर्त्यं व्यनक्ति ।। **अत्र चेति** ।। **द्वितीयमिति** ।। अनित्यप्रमात्वं तादृशकार्यताश्रय एव वर्ति न त्वन्यत्रेत्यस्य व्यवच्छेदार्थकमात्रपदेन लाभात्तस्य जन्यप्रत्यक्षप्रमात्वानुमितित्वोपमितित्वशाब्दत्वाश्रयेषु सर्वत्र वर्तनं तेषां सर्वेषां गुणजन्यत्व एवोपपाद्यते। अन्यथा बाधात्। कात्स्न्यार्थत्वे तु यत्किञ्चित्तादृशधर्मावच्छिन्नकार्यताश्रये सर्वत्र वर्तित्वोपपत्त्येष्टासिद्धेर्व्यवच्छेदार्थ एव द्वितीयोपीति भावः।

हेतावपि मात्रपदानि व्यवच्छेदार्थनीत्युपेत्यानुत्पाद्यान्तविशेषणकृत्यं वक्तुमाह ।। **हेताविति** ।। घटपटान्यतरत्वे साध्यसत्वादेतदित्युक्तम्। एतद्धटपटान्यतरत्वे साध्याभावं व्यनक्ति ।। **कार्यतेति** ।। ययोर्घटत्वपटत्वयोः कार्यतावच्छेदकत्वं न तयोः स्वाश्रयमात्रवृत्तित्वं ततोऽधिकदेशवृत्तित्वात्। अन्यतरत्वस्याप्यनुगतकारणाभावेन कार्यतानवच्छेदकत्वात्। एवं च स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयवृत्तित्वरूपसाध्याभावादित्यर्थः। एतेन प्रथममात्रपदस्यापि कृत्यमुक्तं ध्येयम्। प्रथममात्रपदं हित्वा स्वाश्रयावृत्तिधर्मावच्छिन्नेत्यादेरेवोक्तावेतद्धटपटान्यतरत्वस्य स्वाश्रयावृत्तिकुड्यत्वा-

दिधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयः कुड्याद्यसाधारणकारणं तन्मात्रानुत्पाद्यं यदेतद्घटपटरूपं कार्यं तद्वृत्तित्वेन एतद्घटपटान्यतरत्वे उक्तहेतोः सत्वेपि मूलोक्तदिशा साध्याभावेन व्यभिचारः। दत्ते तु मात्रपदे न दोषः। कुड्यत्वस्य एतद्घटपटान्यतरत्वान्यतराश्रये अवृत्तिधर्मत्वेपि तद्वृत्तित्वे सति ततोधिकदेशवृत्तित्वरूपतन्मात्रावृत्तिधर्मत्वाभावेन तत्र हेतोरेवाभवात्।

यद्यप्यत्र विवक्षितं तन्मात्रानुत्पाद्यत्वं तदुत्पाद्यत्वे सति ततोऽधिकोत्पाद्यत्वम्। तच्चोक्तस्थले नास्ति। एतद्घटपटान्यतरत्वे कुड्यकारणोत्पाद्यत्वे सति ततोधिकोत्पाद्यत्वरूपतन्मात्रानुत्पाद्यत्वस्य बाधात्। तथाच हेत्वभावादेव न तत्र व्यभिचारः। तथापि तन्मात्रानुत्पाद्यत्वं तदितरानुत्पाद्यत्वे सति तदुत्पाद्यत्वरूपतन्मात्रोत्पाद्यत्वस्याभाववत्वरूप यत्तदनुत्पाद्यत्वं तदस्त्येवैतद्घटपटा- न्यतरत्वाश्रये एतद्घटपटरूपेऽर्थ इति तावन्मात्रेण तत्र हेतुसत्वमुपेत्य व्यभिचारे चोदिते मात्रपदेन तन्निरासः।

मूले तु प्रकृताभिमततन्मात्रानुत्पाद्यत्वस्य तत्राभावात्। कुड्याद्यसाधारणकारणेतरेश्वर- ज्ञानोत्पाद्यत्वेन तदितरानुत्पाद्यत्वस्याप्रसिद्ध्या तदभावस्य दुर्ग्रहत्वाच्च व्यभिचारचोदना न युक्तेत्यरुच्यैव प्रथममात्रपदस्येदं कृत्यमित्याद्यनुक्त्वा स्वाश्रयमात्रावृत्तिधर्मावच्छिन्नकार्यत्व- प्रतियोगिककारणताश्रयमात्रानुत्पाद्येति कार्यं विशेषितमित्येवोक्तम्।

केचित्तु प्रथममात्रपदाभावे इत्यादिः प्रथममात्रपदकृत्यपरतयापि पाठ उपलभ्यत इति पक्षे तु तन्मात्रानुत्पाद्येत्यस्य तदितरानुत्पाद्यत्वविशिष्टतदुत्पाद्यत्वाभाववत्वरूपतन्मात्रानुत्पाद्यार्थकत्वेपि इहाप्रसिद्धिनिरासाय तदितरानुत्पाद्यत्वमात्रं विवक्षणीयम्। तच्च गगनादौ प्रसिद्धमिति तदभाव एतद्घपटान्यतरत्वाश्रयकार्ये ग्रहीतुं शक्य इति व्यभिचारः चोदनोपपाद्या असिद्धिरप्रसिद्धिः। तथाच नासिद्धिवारकत्वं दोष इत्याहुः।

## तर्कताण्डवम्

**द्वितीयमात्रपदाभावेऽसिद्धिः। अनित्यप्रमात्वस्य स्वाश्रयाधिकदेशवृत्तिनाऽनित्यज्ञानत्वेनावच्छिन्ना या कार्यता तत्प्रतियोगिककारणत्वाश्रयो यो मनःसंयोगादिः तदुत्पाद्य- प्रमारूपकार्यवृत्तित्वेन तदनुत्पाद्यकार्यवृत्तित्वाभावात्। मात्रपदे दत्ते तु नासिद्धिः। प्रमाया ज्ञानसामान्यकारणोत्पा-**

द्यत्वेपि तन्मात्रानुत्पाद्यत्वात्। तथात्वेन ह्यप्रमापि प्रमा स्यात्।

तृतीयं मात्रपदं तु कार्याकार्यवृत्तिधर्मेषु व्यभिचार-वारणायेति चेन्मैवम्। स्वतस्त्वेप्यनित्यप्रमामात्रवृत्तिना तत्तत्प्रमात्वरूपेण धर्मेणावच्छिन्ना या तत्तत्प्रागभाव-निरूपिता कार्यता तदाश्रयमात्रवृत्तित्वस्यानित्यप्रमात्वे सत्वेन सिद्धसाधनात्। न च प्रागभावस्यापि तत्तत्प्रागभाव-त्वेन तत्तद्व्यक्तिं प्रति न हेतुता किन्तु प्रागभावत्वेन कार्यमात्रं प्रति हेतुतेति वाच्यम्। उत्पन्नस्य घटस्य स्वप्रागभावा-भावेप्यन्यप्रागभावसत्वेन पुनरुत्पत्तिदोषतादवस्थ्यात्।

यदि तु सिद्धसाधनवारणाय साध्ये कार्यताशब्देन भावकारणनिरूपिता कार्यताऽभिप्रेता। तर्हि सामान्यकारण-मात्रानुत्पाद्यकार्यमात्रवृत्तित्वहेतोरभावरूपविशेषकारणेना-प्युपपत्त्याऽप्रयोजकता। तत्तद्घटत्वादौ व्यभिचारश्च। तद्वार-णाय हेतावपि कार्यमात्रेत्यत्र कार्यशब्देन भावकारणो-त्पाद्यकार्यविवक्षायां स्वतस्त्ववादिनं प्रत्यसिद्धिः। प्रत्यक्ष-प्रमादाविन्द्रियार्थसन्निकर्षादेर्गुणस्य सत्वान्नासिद्धिरित्यादि त्वनुपदमेव निरसिष्यते।

यज्ञपत्युक्तवक्रानुमानभङ्गः ॥ १२ ॥

न्यायदीपः

॥ **तथात्व इति** ॥ तन्मात्रोत्पाद्यत्व इत्यर्थः ॥ **कार्याकार्येति** ॥ प्रमात्वादावित्यर्थः। अनित्यज्ञानत्वस्य ततोऽधिकदेशवृत्तित्वेन तत्र साध्याभावात्। प्रागभावनिरूपिता प्रागभावनिष्ठ-कारणतानिरूपिता तत्तत्प्रमात्वावच्छिन्नकार्यतेत्यर्थः ॥ **उत्पन्नस्येति** ॥ घटोत्पत्तिसमवहितोत्तरक्षणे तद्घटसामग्रीसत्वेन तया तस्यैव घटस्य पुनरुत्पत्तिप्रसङ्गदोषनिरासाय हि प्रागभावे हेतुतोक्ता। प्रागभावत्वेनैव हेतुत्वे हेतुतावच्छेदकावच्छिन्नयत्किञ्चिद्धेतुसत्वेपि कार्योत्पत्तिनियमेन तादृशप्राग-

भावान्तरसत्वात्पुनस्तदुत्पत्तिदोषो न परिहृत एव स्यादिति न प्रागभावत्वेन हेतुता किन्तु तत्प्रागभावत्वेनेति प्रागुक्तदोष एवेति भावः।

**।। भावेति ।।** भावनिष्ठकारणतानिरूपितेत्यर्थः **।। अप्रयोजकतेति ।।** सामान्यसामग्रीमात्रानुत्पाद्य कार्यमात्रवृत्तित्वस्य विशेषकारणजन्यत्वं विनाऽनुपपत्या तदाक्षेपकत्वेपि विशेषकारणत्वस्य भावत्वं विनाऽनुपपत्त्यभावेन भावभूतविशेषकारणजन्यवृत्तित्वसाधने अप्रयोजकतैवेति भावः **।। तत्तद्धटत्वेति ।।** घटत्वेन मृत्पिण्डत्वेनैव कार्यकारणभावो न तद्धटत्वेन मृत्पिण्डत्वेन हेतुहेतुमद्भावः। एकव्यक्तिकत्वेन बाधकेन तद्धटत्वस्य कार्यतानवच्छेदकत्वात्। बाधकं विना कार्यमात्रवृत्तिधर्मत्वादिति हेतुनैव कार्यतावच्छेदकत्वसाधनात्। तथाच स्वाश्रयमात्रवृत्तेः स्वस्य वान्यस्य वा धर्मस्य कार्यतावच्छेदकस्याभावेन तदवच्छिन्नकार्यताश्रयमात्रवृत्तित्वरूपसाध्याभावे न स्वाश्रयमात्रवृत्तिघटत्वरूपधर्मावच्छिन्नकार्यताप्रतियोगिककारणमात्रानुत्पाद्यकार्यं तद्धट एव। स्वप्रागभावभूताधिककारणजन्यत्वात्। तथाच तन्मात्रवृत्तित्वरूपहेतुसत्वाद्व्यभिचार इत्यर्थः।

यत्सामान्यन्यायेन विशेषयोः कार्यकारणभावो न तत्वेन रूपेण किन्तु सामान्येनैव। न चैवं तन्मृत्पिण्डत्वेन हेतुहेतुमद्भावाभावो मृत्पिण्डान्तरादेतद्धटोत्पत्तिः स्यादिति वाच्यम्। मृत्पिण्डान्तरे एतद्धटप्रागभावाभावादेव तत उत्पत्त्यप्रसक्तेः। तत्तत्प्रागभावत्वेन हेतुत्वकल्पनं पूर्वोक्तदिशोत्पन्नस्य पुनरुत्पत्तिबाधकादेवेति भावः **।। भावकारणेति ।।** स्वाधिकरणमात्रावृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणमात्रानुत्पाद्यभावकारणकार्येत्युक्तौ तादृशकारणादधिकभावकारणजन्यकार्यमात्रवृत्तित्वादित्यर्थलाभात्। तद्धटत्वादौ च स्वप्रागभावरूपाधिककारणजन्यकार्यमात्रवृत्तित्वेनोक्तहेत्वभावान्न व्यभिचार इति भावः **।। असिद्धिरिति ।।** अनित्यप्रमात्वव्याप्यानित्यप्रत्यक्षप्रमात्वाद्याश्रयनिष्ठकार्यतानिरूपिता नुगतगुणाभावादनित्यज्ञानसामान्यसामग्रीतोऽधिकभावकारणजन्यकार्यमात्रावृत्तिधर्मत्वस्यानित्यप्रमत्वेऽभावादिति भावः। अत एवोक्तं रुचिदत्तेनापि ''सन्दिग्धासिद्धे''रिति।

यत्तूक्तस्थले व्यभिचारवारणाय यावत्कार्यमात्रवृत्तिधर्मत्वादिति विशेषणम्। तत्तद्धटत्वादेश्च तादृशैककार्यमात्रवृत्तित्वादिति तन्न। तथापि नीलघटत्वादौ व्यभिचारानिरासात्। एतेन साध्ये स्वाश्रयमात्रवृत्त्यनेकमात्रवृत्तिधर्मेति विशेषणमितिनिरस्तम्। अप्रयोजकत्वव्यभिचारयोरपरिहारात्। यज्ञपत्युक्तेरर्वाचीनत्वान्न तन्निरासो मूलारूढतया प्रदर्शितः।

यज्ञपत्युक्तवक्रानुमानभङ्गः ।। १२ ।।

## तर्कताण्डवम्

### प्रत्यक्षादिप्रमासु प्रत्येकानुगतगुणभङ्गः

**अथ मतं अनित्यप्रत्यक्षप्रमात्वमनुमितिप्रमात्वं शाब्दप्रमात्वं च कार्यतावच्छेदकम् बाधकं विना कार्यमात्रवृत्तित्वात् घटत्ववदिति प्रत्येकमेव प्रयोक्तव्यम्। बाधकं च समाजस्यार्थिकत्वमनुगतहेत्वभावश्च। तेन नीलघटत्वादौ घटज्ञानत्वादौ च न व्यभिचारः। एतादृशप्रत्यक्षप्रमात्वादिकं प्रत्यनित्यप्रमात्वस्य व्यापकत्वमेव प्रमात्वस्य परतस्त्वम्। एवं च तत्तत्प्रागभावनिरूपितकार्यतया नार्थान्तरम्।**

**नचात्राप्यनुगतहेत्वभावो बाधकः। प्रत्यक्षप्रमायामिन्द्रियार्थसन्निकर्षस्यार्थस्य च अनुमितिप्रमायां यथार्थलिङ्गपरामर्शस्य शाब्दप्रमायां यथार्थवाक्यार्थज्ञानस्य च गुणस्य अनुगमात्। भ्रमे त्वर्थोऽसन्निति न हेतुर्न वा तस्य सन्निकर्ष इति चेदुच्यते।**

### न्यायदीपः

अनित्यप्रमात्वं कार्यतावच्छेदकं बाधकं विना कार्यमात्रवृत्तिधर्मत्वात् इति मण्युक्तानुमाने प्रगल्भादिनोक्तानुगतगुणपक्षं निरस्य यज्ञपत्युक्तप्रमामात्रानुगतगुणमाक्षिप्यानुमानं च निरस्य यत्पक्षधरेणैव पक्षान्तरमुक्तं "यद्यपि यथाश्रुतं साध्यं बाधितं अनित्यप्रमानुगतहेत्वसिद्धेः अत एव स्वरूपासिद्धिरपि तथाप्यनित्यप्रमात्वमित्यनेन अनित्यप्रत्यक्षप्रमात्वादिकमेव विवक्षितं कार्यतावच्छेदकव्यापकत्वमेव साध्यं तादृशकार्यमात्रवृत्तिधर्मव्यापकत्वादिति हेतुरिति वा स्मर्तव्यमिति" तदनुरोधेन प्रमामात्राननुगतगुणपक्षमाशङ्कते ।। **अथेति** ।। **मतमिति** ।। इति प्रयोक्तव्यमित्यन्वयः ।। **बाधकं विनेति** ।। अवच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वस्वावच्छिन्नकार्यताप्रतियोगिककारणासम्भव इत्यादिबाधकं विनेत्यर्थः।

नित्यवृत्तित्वादि कार्यतावच्छेदकत्वबाधकस्य ज्ञानत्वादाविव नीलघटत्वादावभावात्।

विशिष्टहेतोरपि तत्र व्यभिचार इत्यतो विवक्षितपक्षधराद्युक्तबाधकशब्दार्थोक्त्योक्तदोषं निराह ।। **बाधकं चेति** ।। समाजस्य मेलनस्य आर्थिकत्वं अवच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वमित्यर्थः ।। **अनुगतेति** ।। स्वावच्छिन्नकार्यताप्रतियोगिकानुगतहेत्वभाव इत्यर्थः ।। **तेनेति** ।। बाधकं विनेत्यत्र विवक्षितबाधकाभावरूपविशेषणेनेत्यर्थः ।

एवं जन्यप्रत्यक्षप्रमात्वादेः परतस्त्वप्राप्तावप्यनित्यप्रमात्वस्य तन्न प्राप्तमित्यत आह ।। **एतादृशेति** ।। प्रमात्वस्य अनित्येति योज्यम्। यद्वा ईश्वरज्ञानप्रामाण्यस्यापि परतस्त्वं प्राप्तमिति भावेन प्रमात्वस्येत्येवोक्तिः ।। **एवं चेति** ।। अनित्यप्रत्यक्षत्वादेः कार्यतावच्छेदकत्वेनानित्य-प्रमात्वस्य तद्व्यापकत्वे साध्यमाने सतीत्यर्थः ।। **बाधक इति** ।। स्वावच्छिन्नकार्यतानिरूपितैक-कारणाभावरूपबाधकसत्वाद्बाधकं विनेत्युक्तविशेषणासिद्धिरिति भावः ।

## तर्कताण्डवम्

**प्रत्यक्षप्रमामात्रे न सन्निकर्षार्थौ हेतू। शुक्तौ रूप्यभ्रम-कालेपि तयोः सत्वेन शुक्तित्वेन शुक्तिप्रमाप्रसङ्गात्। दोषः प्रतिबन्धक इति चेत्तर्ह्यावश्यकत्वाद्दोषाभावादेव प्रमास्तु।**

**किञ्च षड्विधसन्निकर्षान्यतरद्योगिप्रत्यक्षादौ प्रत्य-भिज्ञायां च तत्तादौ नास्ति। तत्र च योगजधर्मसंस्कारादिः प्रत्यासत्तिश्चेत्तर्हि भ्रमेपि दोषस्तथा स्यात्।**

**किञ्च चक्षुरादिवत्कारणत्वेन धर्मिग्राहकमानासिद्धोर्थः सन्निकर्षेणान्यथासिद्धत्वादतीतादिविषयकयोगिप्रत्यक्षादौ असत्वाच्च न प्रत्यक्षप्रमाहेतुः। अन्यथा वर्तमानविषयका-नुमितावप्यर्थो हेतुः स्यात्।**

## न्यायदीपः

मण्याद्युक्तमेवाह ।। **प्रत्यक्षेति** ।। अनित्येति योज्यम् ।। **गुणस्येति** ।। अन्वयव्यतिरेकादिति मण्युक्तेरिति भावः। सादृश्यज्ञानमुपमितौ गुण इति मण्युक्तमप्यत्र नानूदितम्। उपमानस्यानुमाना-नतिरेकस्यान्यत्र व्यक्तत्वात् ।। **सन्निकर्षार्थाविति** ।। अल्पनिरासत्वात्सन्निकर्षस्य पूर्वं निर्देशः। यद्वा

"नासिकास्तनयोर्ध्माधेटोः" इत्यादिनिर्देशेन "अल्पाच्तरं पूर्वं" इत्यस्य प्रायिकत्वादर्थस्य यौ सन्निकर्षाविति भ्रमनिरासायैवं निर्देशाददोषः।

अन्वयव्यभिचारमाह ।। **शुक्ताविति** ।। तयोः शुक्तिरूपार्थतत्सन्निकर्षयोरित्यर्थः। इदन्त्वेन प्रमात्वस्य सत्त्वाच्छुक्तित्वेनेत्युक्तिः। तथाचानुगतहेत्वभावरूपबाधकस्यैव भावाद् बाधकं विनेत्यसिद्धमिति भावः। मण्यादिना दाहाभावेपि वह्नेर्दाहाहेतुत्वाभाववदिहाप्यहेतुत्वं न सन्निकर्षादेः प्राप्यत इति भावेनाशङ्क्य निराह ।। **दोष इति** ।। **दोषाभावादेवेति** ।। तस्य चानित्यप्रमामात्रे अनुगतहेतुत्वात्किमुक्तकुसृष्ट्येति भावः।

नन्वेवं दाहस्थलेपि मण्याद्यभाव एव हेतुः स्यान्न वह्निः। अन्वयव्यतिरेकबलाद्वह्नेर्दाहहेतुत्वे सन्निकर्षादेरप्यस्तु हेतुत्वम्। सन्निकर्षोत्कर्षेण प्रमोत्कर्षदर्शनाच्चेति चेत्। किमत्र सन्निकर्षपदेन लौकिक एवाभिमतोऽथालौकिकप्रत्यासत्तिसाधारणं सन्निकर्षमात्रामिति कल्पौ हृदि कृत्वाऽऽद्ये व्यतिरेकव्यभिचारमाह ।। **किञ्च षड्विधेति** ।। संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसमवाय-समवेतसमवाय विशेषणविशेष्यभावरूपेत्यर्थः। अन्यतरदित्यस्य प्राग्वत्साधुत्वं ध्येयम्। योगिप्रत्यक्षादावित्यादिपदेन सामान्यजप्रत्यक्षग्रहः। प्रत्यभिज्ञायामित्युपलक्षणम्। सुरभिचन्दनमि-त्यादिप्रत्यक्षं च ग्राह्यम्। तेन तत्तादावित्यादिपदेनोपनीतगन्धादिग्रहः। द्वितीयमाशङ्क्यान्वय-व्यभिचारेण निराह ।। **तत्र चेति** ।। संस्कारादिरित्यादिपदेन ज्ञानसामान्ययोर्ग्रहः ।। **तथेति** ।। प्रत्यासत्तिरित्यर्थः। तथाच तादृशप्रत्यासत्तौ सत्यामपि तत्र प्रमानुदयाद्व्यभिचार इति भावः।

एवमर्थस्याप्यनन्यथासिद्धान्वयव्यतिरेकौ न स्तः। अन्यथाख्यातिविचारे सुधोक्तरीत्या क्वचिद्विशेषणाभावात् क्वचिद्विशेष्याभावादिति भावेनाह ।। **किञ्चेति** ।। ननु सन्निकर्षेणैवार्थोन्यथा सिद्धश्चेच्चक्षुरादिरपि तथा स्यादित्यत उक्तं ।। **चक्षुरादिवदित्यादि** ।। रूपाद्युपलब्धयः करणसाध्याः क्रियात्वात् च्छिदिक्रियावदित्यनुमानेन सिद्ध्यच्चक्षुरादिकं करणत्वेनैव सिद्धम्। नत्वर्थ इति वैषम्यमिति भावः ।। **अतीतेति** ।। अतीतानागतविषयके योगिप्रत्यक्षे सामान्यजप्रत्यक्षे चेत्यर्थः ।। **अन्यथेति** ।। उक्तदिशाऽन्यथासिद्ध्यकल्पन इत्यर्थः।

## तर्कताण्डवम्

**अपि च त्वन्मते भ्रमेपि यस्मिन्नंशे भ्रमत्वं तद्रजतत्वादिकं विशेषणं सदेव। वैशिष्ट्यं त्वसदप्यसत्ख्यातिभीतस्य तव मते**

**न भाति। किञ्च त्वन्मते प्रत्यक्षप्रमायामपि विशेषणज्ञानमेव हेतुर्न तु विशेषणम्। विशेष्यं तु भ्रमे सदेव।**

**ननु तथापि लौकिकप्रत्यक्षप्रमायां वैशिष्ट्यरूपोऽर्थो गुणः। भ्रमे तु चिरन्तनमतेऽसदपि वैशिष्ट्यं सदुपरक्तत्वेन भातीति चेन्न। अर्थो न हेतुरित्युक्तत्वात्।**

**किञ्च यद्वैशिष्ट्यमसत् न तदंशे त्वन्मते बाधस्तत्प्रयुक्त-भ्रमत्वं वा सम्भवति। त्वन्मतेऽसतोऽभावविरहात्मत्वरूप-प्रतियोगित्वाभावेन स्वप्रतियोगिकाभावप्रमारूपबाधा-योगात्। यत्र तु रजतत्वांशे ते सम्भवतः न तदसदिति नार्थो भ्रमव्यावृत्तो हेतुः। एवं बाष्पे धूमभ्रमेणोत्पन्नायां यादृच्छिक-संवादेन प्रमायामनुमितौ न यथार्थलिङ्गपरामर्शोऽस्ति।**

## न्यायदीपः

अन्वयव्यभिचाराच्चार्थो न हेतुरिति भावेनाह ।। **अपिचेति** ।। **सदेवेति** ।। तथा च तत्रान्वय-व्यभिचारान्नार्थः प्रमायां हेतुरिति भावः। ननु वैशिष्ट्यांश एव भ्रमत्वम्। तच्चासदेव। अतो न व्यभिचार इत्यत आह ।। **वैशिष्ट्यं त्विति** ।। **तवेति** ।। मणिकृत इत्यर्थः। एतेन ''भ्रमे त्वर्थोऽसन्निति न हेतुः'' इति प्रागुक्तं प्रत्युक्तम्।

ननु विशेषणमन्यत्र सदपि पुरतोऽसदेवेति चेत्तर्हि विशेषणमर्थश्चेद-सम्भवि। विशेष्यं चेद्व्यभिचारीत्याह ।। **किञ्च त्वन्मत इत्यादिना** ।। **सदेवेति** ।। तथाच शुक्तित्वेन शुक्तिप्रमा स्यात्। नास्ति च सा अतो न विशेष्यरूपोर्थः पमायां गुणतया हेतुरिति भावः।

ननु मणिकृन्मते वैशिष्ट्यरूपार्थ एव प्रमारूपजन्यप्रत्यक्षमात्रे गुणोस्तु। भ्रमे च वैशिष्ट्यरूपोर्थः पुरतोऽसन्निति तस्य भ्रमाहेतुतया भ्रान्तेः प्रमात्वानापत्तिः। अन्यत्र सत्वेन भ्रान्तौ भानोपपत्तेश्चेति चेन्न। यत्र क्व च न सत्वमात्रेण तद्गोचरजन्यप्रत्यक्षं प्रत्यनन्यथासिद्धनियतपूर्वक्षणवृत्तित्वाभावेन हेतुत्वानिर्धारणात्पुरतोऽसत्वेनाहेतुत्वस्य सन्निकर्षाभावेनोपपत्त्या पुरतस्सत्वस्य सन्निकर्ष एवोपयोगेन सर्वथापि तदहेतुत्वस्यैव न्याय्यत्वाच्चेति ध्येयम्।

प्राचां मतमाशङ्कते ॥ **नन्विति** ॥ **उक्तत्वादिति** ॥ चक्षुरादिवदित्यादिना ग्रन्थेनेत्यर्थः। वैशिष्ट्यरूपोऽर्थोऽर्थपदेन न विवक्षितुं शक्यः। किन्तु विशेषणं विशेष्यं वा। तच्चान्वयव्यभिचारान्न प्रमायां हेतुरिति भावेनाह ॥ **किञ्चेति** ॥ यदिति भिन्नं पदम् ॥ **त्वन्मते** ॥ प्राचीनतार्किकमते ॥ **स्वप्रतियोगिकेति** ॥ प्रामाणिकस्य घटादेरेवात्यन्ताभावोपगमेनाप्रामाणिकात्यन्ताभावाऽनङ्गीकारात्। तदनङ्गीकारे हेतुरभावविरहेत्यादि. बाधायोगादित्युक्त्या तत्प्रयुक्तभ्रमत्वस्याप्ययोग उक्तप्राय इति भावः ॥ **त इति** ॥ बाधभ्रमत्वे इत्यर्थः। उक्तरूपबाधयोगादेव तत्प्रयुक्तभ्रमत्वं च सम्भवतीति भावः।

प्रत्यक्षप्रमायामनुगतगुणासम्भवमुक्त्वा "दृश्यते च यादृच्छिकसंवादिना गुणाभावेपि प्रमाजनकत्वं" इति तत्वनिर्णयटीकां विवृण्वन्ननुमितावपि प्रागुक्तानुगतगुणं निराह ॥ **एवमित्यादिना** ॥

## तर्कताण्डवम्

**नचेश्वरे सोऽस्तीति वाच्यम्। उक्तरीत्या दोषजन्यत्वस्यापि सत्वेन भ्रमत्वस्याप्यापत्तेः। ईश्वरज्ञानस्य सत्यपरामर्शत्वेन कारणत्वकल्पनस्य परतस्त्वसिद्ध्यधीनत्वेनान्योन्याश्रयाच्च। भ्रमघटादिसाधारणेनोपादानाद्यपरोक्षज्ञानत्वेन कारणत्वे च तस्य न गुणता। अन्यथास्मदादिनिष्ठानां संशयप्रत्यक्षानुमितिनिर्विकल्पकानां यथाक्रममीश्वरनिष्ठैर्विशेषदर्शनलिङ्गपरामर्शवाक्यार्थज्ञानविशेषज्ञानैर्जन्यत्वाद्ययथाक्रमं निश्चयत्वानुमितित्वशाब्दज्ञानत्वसविकल्पकत्वानि स्युः।**

**अपिचैवं व्यधिकरणस्य परामर्शस्य गुणत्वे दोषत्वमपि तस्यैव स्यात्। सामानाधिकरण्यस्याप्रयोजकत्वात्। तथाचाभासानुमितिमूलत्वेन नित्यभ्रमः सिद्ध्येत्। किञ्चैवं सति स्थाणौ करादिविपर्ययजन्यस्य पुरुषत्वभ्रमस्येश्वरनिष्ठया वक्रकोटरत्वादिप्रमया जन्यत्वात्स्थाणुप्रमात्वं स्यात्।**

## न्यायदीपः

ननु समानाधिकरणस्य तस्य तत्राभावेपि कार्यमात्रं प्रति कारणस्येश्वरीयज्ञानस्य सल्लिङ्ग-

विषयकस्य तत्रापि सत्त्वमस्ति सामानाधिकरण्यस्याप्रयोजकत्वात्। अतो न व्यतिरेकव्यभिचार इति भावेनाशङ्क्य निराह ।। **न चेति** ।। **दोषेति** ।। अस्मदीयासल्लिङ्गपरामर्शरूपेत्यर्थः।

ईश्वरज्ञानमपि किं सल्लिङ्गपरामर्शत्वेन हेतुरुतोपादानादिज्ञानत्वेन। आद्ये दोषमाह ।। **इश्वरेति** ।। अन्त्ये तु न तस्य गुणत्वेन हेतुत्वम्। तथात्वे भ्रमस्यापि गुणजन्यतापत्तिरिति भावेनाह ।। **भ्रमेति** ।। भ्रमसाधारणेन घटादिसाधारणेनेत्यर्थः। उपादानादिप्रत्यक्षत्वेन हेतुतेत्युपपादनाय घटादित्युक्तिः। विपक्षेऽनिष्टप्रसङ्गद्योतनाय भ्रमेत्युक्तिः। अतिप्रसङ्गान्तराण्याह ।। ***अन्यथेति*** ।। तेनापि रूपेण हेतोस्सल्लिङ्गविषयकत्वमात्रेण गुणत्व इत्यर्थः।

येन केनापि रूपेण हेतोरपीश्वरज्ञानस्य गुणत्वकल्पनेऽतिप्रसङ्गान्तरं चाह ।। **अपि चेति** ।। एवमित्यस्य व्यक्तीकरणं व्यधिकरणस्यैव कल्प्यत्वेऽनुगतिलाभाय सर्वत्र तस्यैव दोषत्वकल्पनौचित्यादिति भावः ।। **नित्यभ्रम इति** ।। ननु सति सम्भवे त्यागायोगात्तत्र समानाधिकरण एवासल्लिङ्गपरामर्शरूपदोषसम्भवान्न व्यधिकरणदोषकल्पनेति चेन्न। गन्धप्रागभावावच्छिनो घटो गन्धवान् पृथिवीत्वादित्यादावाभावाभासानुमितौ समानाधिकरणदोषासम्भवे व्यधिकरणस्यैव कल्प्यत्वेऽनुगतिलाभाय सर्वत्र तस्यैव दोषत्वकल्पनौचित्यादिति भावः।

ननु गुणे सामानाधिकरण्यमप्रयोजकम्। दोषे तु तन्नियमः प्रयोजकः। गन्धप्रागभावावच्छिन्न इत्यादौ बाधिततत्वप्रमादिरेव कश्चित्कल्प्यत इत्यत आह ।। **किञ्चैवं सतीति** ।। व्यधिकरणस्यापि गुणस्य हेतुत्वे सतीत्यर्थः।

।। **स्थाणुप्रमात्वमिति** ।। न च तत्र समानाधिकरणे दोषः प्रबल इति शङ्क्यम्। यादृच्छिकसंवादिनि प्रमानुदयापातात्। न चारोपे सति निमित्तानुसरणमिति न्यायेन तत्र प्रमात्वदृष्ट्या न विशेषप्रमात्वेनेश्वरज्ञानं हेतुरिति युक्तम्। प्रामाण्यस्य स्वतस्त्वेनाप्युपपत्त्या ईश्वरज्ञानस्याप्यनुमितिप्रमायां न गुणत्वेन हेतुत्वमिति सुवचत्वादिति भावः।

## तर्कताण्डवम्

**ननु तर्ह्यनुमितिसमानाधिकरणं वस्तुतः साध्यव्याप्यवतः पक्षस्य व्याप्यवत्वेन ज्ञानं गुणोस्त्विति चेन्मैवम्। लाघवेन वस्तुतः साध्यवत्पक्षस्य ज्ञानेनैव प्रमात्वसम्भवात्। स च विषयसत्वोपहितत्वान्न गुण इत्युक्तम्।**

किञ्च प्रागभावावच्छिन्नो घटो गन्धवान् पृथवीत्वादित्यनुमाने वस्तुतोऽनेककर्तृके लाघवतर्कानुग्रहादेककर्तृकत्वविषयानुमाने चोक्तगुणसद्भावात्प्रमा ज्ञायेत।

न च बाधाभावसहकृतसत्यपरामर्शादिर्गुण इति वाच्यम्। आवश्यकत्वाद्बाधाभावेनैव प्रमात्वसम्भवेन गुणस्य हेतुत्वासिद्धेः। एवं विप्रलम्भकादिवाक्यजन्यायां शुकादिवाक्यजन्यायां च यादृच्छिकसंवादेन प्रमायां न यथार्थवाक्यार्थज्ञानमस्ति। न च तत्रापीश्वरे तदस्तीति शङ्क्यम्। व्यधिकरणगुणजन्यत्वेन प्रमात्ववत् समानाधिकरणदोषजन्यत्वेनाप्रमात्वं च स्यादित्याद्यतिप्रसङ्गात्। किञ्च तद्धि न साक्षाच्छाब्दप्रमाजनकम्। वक्तृनिष्ठे तस्मिंश्चिरध्वस्तेपि श्रोतरि प्रमोत्पत्तेः। किन्तु वाक्यरचनाद्वारा। रचनायां च न तत्कारणम्। शुकबालादीनामिव तादृशपदावलीज्ञानमात्रेण तदुपपत्तेः।

## न्यायदीपः

एवं यादृच्छिकसंवादिनि पूर्वोक्तगुणव्यभिचारमुक्त्वा तत्स्थैर्याय व्यधिकरणस्य गुणत्वमनेकदोषोक्त्या निरस्येदानीं प्रकारान्तरेण तत्र गुणव्यभिचाराभावमाशङ्क्य दोषान्तरमाह ।। **नन्वित्यादिना** ।। यादृच्छिकसंवादिनि धूमाभावेपि वह्निव्याप्यस्यालोकादेः सत्वेन तादृशे पक्षे बाष्पे धूमज्ञानं व्याप्यवत्वज्ञानं भवतीति न तत्र व्यभिचार इति भावः ।। **वस्तुत इति** ।। वस्तुतः साध्यवान् यः पक्षः तादृशपक्षज्ञानेनैवेत्यर्थः ।। **स चेति** ।। उक्तरूपपक्षस्य ज्ञानमित्यर्थः। तच्चेति वक्तव्ये विधेयगुणापेक्षया पुल्लिङ्गप्रयोगः।

उक्तरूपगुणस्यान्वयव्यभिचारं चाह ।। **किञ्चेति** ।। **अनेकेति** ।। प्रासादः सकर्तृकः कार्यत्वात् घटवदित्यनुमान इत्यर्थः ।। **उक्तेति** ।। वस्तुतः साध्यव्याप्यवत इत्यादिनोक्तेत्यर्थः।

एतेन पक्षतावच्छेदकावच्छेदेन ज्ञाप्यवति पक्षे लिङ्गज्ञानं गुण इति रुचिदत्तोक्तं निरस्तम्। वस्तुतोऽनेककर्तृक इत्यादिनोक्तदोषानतिलङ्घनात्। लाघवेन वस्तुतो ज्ञाप्यवत्पक्षस्य ज्ञानेनैव

प्रमात्वसम्भवात्। तस्य च विषयसत्वोपहितत्वेनागुणत्वात्।

एतेनैव पक्षतावच्छेदकाविरोधिसाध्यकानुमितिप्रमायां यथार्थलिङ्गपरामर्शो गुण इति पक्षधरोक्तमपि प्रत्युक्तम्। गन्धप्रागभावेत्युक्तस्थले त्वदुक्तगुणे सत्यपि पक्षतावच्छेदकाविरोधि-साध्यप्रमाया अनुदयात् ॥ **बाधाभावेनैवेति** ॥ स च विषयसत्वपर्यवसन्न इति न गुण इति भावः।

एतेना बाधितत्वज्ञानं गुण इति प्रत्युक्तम्। विषयसत्वोपहितत्वात्। घनगर्जितस्थले व्यभिचाराच्च। ''दृश्यते च यादृच्छिकसंवादिनोऽनाप्तवाक्यस्य गुणाभावेपि यथार्थज्ञानजनकत्वं'' इति तत्वनिर्णयटीकावाक्यं विवृण्वानः प्रागुक्तं शाब्दप्रमायामप्यनुगतगुणं निराह ॥ **एवमिति** ॥ घटोस्तीति वक्तव्ये प्रमादादिना पटोस्तीत्युक्तवाक्यमादिपदार्थः। ननु तद्वाक्ये तादृशगुणाभावेपि तज्जातीये वाक्यान्तरेऽस्तीत्यतस्तत्रापि तस्य न हेतुत्वमित्याह ॥ **किञ्चेति** ॥ चिरध्वस्तेपि तस्मिन्निति पूर्वेणान्वयः।

## तर्कताण्डवम्

**न च तत्रापीश्वरनिष्ठं यथार्थवाक्यार्थज्ञानं रचनाद्वारा हेतुरिति वाच्यम्। तस्य ज्ञानसामान्यं भ्रमं च प्रतीवोपादानापरोक्षत्वेनैव हेतुतया प्रमां प्रत्यसाधारण्याभावात्। अन्यथोक्तातिप्रसङ्गात्। विसंवादिशुकादिवाक्यरचनाहेतुत्वेन भ्रमोपि कल्प्यत इति नित्यप्रमावन्नित्यभ्रमप्रसङ्गाच्च।**

**ननु शाब्दप्रमायां योग्यता तत्प्रमा वा गुणः। स च सर्वत्र प्रमाणवाक्येऽस्तीति चेन्न। मदिष्टवेदापौरुषेयत्वाविरोधिनस्त्वदिष्टेश्वरसिद्धिविरोधिनश्चैवंविधगुणजन्यत्वस्य साधने अर्थान्तरात्।**

## न्यायदीपः

ननु कार्यमात्रं प्रति कारणीभूतमीश्वरज्ञानमेव यथार्थवाक्यार्थज्ञानरूपं सद्रचनाद्वारा प्रमां प्रति गुणत्वेन कारणमस्तु। अतो न यादृच्छिकप्रमायां व्यभिचारः। नापि तेन विना वाक्यरचनोपपत्तिः। तस्य कार्यमात्रं प्रति हेतुत्वेन रचनायां तज्जन्यप्रमायां च हेतुत्वात्। शुकादिवाक्यजन्यप्रमायामपी-

श्वरीयप्रमामादायैव न व्यभिचार इति तदीयव्याख्यात्रुक्तेः। ''भ्रान्तप्रतारकवाक्ये शुकादिवाक्ये चेश्वरस्यैव यथार्थवाक्यार्थज्ञानं जनकं'' इति मण्युक्तेरिति भावेन शङ्कते ॥ **न च तत्रापीति** ॥ यादृच्छिकसंवादिन्यामपीत्यर्थः ॥ **उक्तेति** ॥ अन्यथाऽस्मदादीत्यादिनोक्तेत्यर्थः।

''वयन्तु ब्रूमः'' इत्युपक्रम्य ''शाब्दप्रमायां वक्तुर्यथार्थवाक्यार्थज्ञानं न गुणः। किन्तु योग्यत्वादिकं यथार्थतज्ज्ञानं वेति मण्युक्तं पक्षान्तरमाशङ्कते ॥ **नन्विति** ॥ योग्यता स्वरूपसती न हेतुरतो न गुणः इत्यतस्तत्प्रमा वेत्युक्तम् ॥ **त्वदिष्टेति** ॥

''प्रमायाः परतन्त्रत्वात्सर्गप्रलयसम्भवात्।
तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः।''

इति कुसुमाञ्जल्युक्त्या प्रामाण्यपरतस्त्वस्येश्वरसिध्यर्थत्वोपगमाद्यथार्थवाक्यार्थज्ञानस्य गुणत्वपक्ष एव वेदे तादृशयथार्थवाक्यार्थज्ञानवत्वेनेश्वरसिद्धेरिति भावः।

## तर्कताण्डवम्

**किञ्च योग्यता किं शब्दप्रतिपाद्यस्य संसर्गस्य सत्वं किं वा संसर्गसत्वाविनाभूतं धर्मान्तरम् ॥**

**नाद्यः। शाब्दप्रमायां शाब्दप्रमाया वा तद्विषयस्य वा अजनकत्वात्। विषयसत्वस्य प्रमात्वान्तर्गतत्वेन तद्धेतुत्वा-योगाच्च। प्रत्यक्षादिप्रमास्वपि नियतविषयसत्वस्य सद्भावेन त्वदुक्तस्य शाब्दासाधारण्यस्यायोगाच्च। अप्रमायामपि विषयासत्वस्यैव दोषत्वापाताच्च। आवश्यकेन निर्दोषत्वेनैव प्रमात्वोपपत्तेश्च।**

**नान्त्यः। त्वया ह्येकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ता-भावप्रतियोगित्वप्रमाविशेष्यत्वाभावोवा एकपदार्थसंसर्गेऽ-परपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं वा योग्यतेत्युक्तम् ॥**

## न्यायदीपः

ननु ''न वैदिकप्रमाया गुणजन्यत्वेनेश्वरसिद्धिः'' इति मणिकृदुक्तेरेतन्मते हेत्वन्तरेणास्त्वीश्वरसिद्धिरित्यत आह ॥ **किञ्चेति** ॥ ''वाक्यार्थाबाधो योग्यता'' इतीहैव प्रामाण्यवादे मण्युक्तेराद्यः कल्पः। योग्यता बाधोक्त्यनुरोधेनान्त्यः ॥ **धर्मान्तरमिति** ॥ एतच्चाग्रे व्यक्तम् ॥ **अजनकत्वादिति** ॥ आद्य आत्माश्रयात्। अन्त्येऽतीतादिसाधारण्यादिति भावः ॥ **तद्धेतुत्वायोगाच्चेति** ॥ आत्माश्रयादिति भावः ॥ **विषयासत्वस्यैवेति** ॥ गुणविरोधिन एव दोषत्वादनुगतिसम्भवाच्च। तथाच भ्रमेऽसतोपि भानं त्वयापि स्वीकार्यम्। अन्यथा भ्रमत्वमेव न स्यादिति भावः।

ननु शुकबालादिवाक्यजन्यप्रमायामन्यस्य प्रमात्वप्रयोजकस्याभावादनन्यगत्या विषयसत्वरूपापि योग्यतैव गुणः इत्येव वाच्यमित्यत आह ॥ **आवश्यकेनेति** ॥ वक्तुर्भ्रमविप्रलम्भादिदोषभावे योग्यताया अप्यभावेन तदर्थं तस्यापेक्षणीयत्वेनावश्यकत्वमिति भावः। योग्यतावादोक्तमाह ॥ **एकेति** ॥ जलेन सिञ्चतीत्यादौ सेकरूप एको यः पदार्थः तत्संसर्गेऽपरपदार्थभूतजलनिष्ठात्यन्ताभावप्रतियोगी सेकसंसर्ग इति कदापि प्रमित्यभावेनापरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारिका या प्रमा, तद्विशेष्यत्वाभावोस्तीति तद्योग्यवाक्यम्। वह्निना सिञ्चतीत्यादौ तु सेकनिरूपितसंसर्गे वह्निनिष्ठात्यन्ताभावप्रतियोगी सेकसंसर्ग इति प्रमित्युदयेन तत्रापरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वमेवास्तीति तदयोग्यवाक्यम्। अतो नाव्याप्त्यतिव्याप्ती। अत्र आकाशे शब्द इति योग्यवाक्ये शब्दनिष्ठात्यन्ताभावप्रतियोगित्वप्रमा विशेष्यत्वमवृत्तिपदार्थे आकाशेऽस्तीत्यव्याप्तिनिरासाय एकपदार्थ इत्यनुकत्वा एकपदार्थसंसर्ग इत्युक्तम्। आकाशसंसर्गस्तु न तथेति न दोषः। अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इत्येव पूर्तौ तादृशप्रतियोगित्वप्रमाविशेष्यत्वं प्रतिबन्धकमिति मतावष्टम्भेन तत्प्रमाविशेष्यत्वाभाव इत्यन्तमुक्तमित्याहुः।

नरहरिस्तु उक्तात्यन्ताभावप्रतियोगित्वाभाव इत्येवोक्तौ वाक्यार्थ एव योग्यता स्यादिति तत्प्रमाविशेष्यत्वाभाव इत्युक्तमित्यब्रवीत्। तथाच योग्यतावादे स्पष्टयिष्यामः। घटसंसर्गत्वं गेहनिष्ठात्यन्ताभावप्रतियोगीति प्रमाविषयत्वस्य घटसंसर्गेपि सत्वेन घटोस्तीति वाक्येऽव्याप्तिनिरासाय प्रमाविशेष्यत्वाभाव इत्युक्तम्।

अत्र स्वपरसाधारणप्रमाविशेष्यत्वाभावनिश्चयस्याशक्यत्वात्प्रमाप्रवेशे गौरवाच्चेत्यादिदोषाद्वितीयं लक्षणम्। वह्निसंसर्गत्वं हि सेकपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मः तच्छून्यत्वं जलसंयोगेऽस्तीति जलेन सिञ्चतीत्यादिवाक्यं योग्यम्। अग्निनेति वाक्यं त्वयोग्यमिति नाव्याप्त्यादि-

दोषः। अत्रोक्तरूपप्रतियोगित्वाभावस्य वाक्यार्थरूपसंसर्गसत्वपर्यवसन्नतया तज्ज्ञानस्य शाब्दप्रमायामहेतुत्वादेतत्प्रतियोगितावच्छेदकधर्मशून्यत्वमित्युक्तम्।

## तर्कताण्डवम्

**तत्र चाद्यपक्षेऽनन्वयप्रमाविरहो योग्यता द्वितीये जलेन सिञ्चतीत्यत्र सेकानन्वयप्रतियोगितावच्छेदका येऽग्नित्वादयो धार्मास्तच्छून्यत्वं जले विद्यमानं योग्यतेति पर्यवस्यति। तत्र यद्यपि इदं द्वयं संसर्गसत्वाविनाभूतं न तु संसर्गरूपमिति न पूर्वोक्तदोषः। तथाप्यत्र पक्षद्वयेऽनन्वयप्रमाविरहो वा अनन्वयप्रमाविरहप्रमा वा अनन्वयप्रतियोगितावच्छेदकधर्मशून्यत्वं वा तच्छून्यत्वप्रमा वा गुण इति फलितार्थः। स चायुक्तः। आवश्यकेन निर्दोषत्वेनैव प्रमात्वोपपत्तौ संसर्गव्याप्यस्य संसर्गाभावप्रमाविरहस्य वा तत्प्रमाया वा संसर्गाभावप्रतियोगितावच्छेदकधर्मशून्यत्वस्य वा तत्प्रमाया वा गुणत्वकल्पनेऽतिगौरवात्। न हि निर्दोषत्वे सति तयोर्वा तत्प्रमयोर्वा व्यतिरेकेण शाब्दप्रमाव्यतिरेको दृष्टः। न च शाब्दप्रमाया गुणजन्यत्वमद्यापि सिद्धम्। येन तन्निर्वाहाय तयोर्वा तत्प्रमयोर्वा गुणत्वं कल्प्यते।**

**किञ्च प्रत्यक्षादावपि विषयसत्वाविनाभूतस्य विषयासत्वप्रमाविरहादेः सत्वात्स एव गुणः स्यात्। अतीन्द्रियार्थसन्निकर्षादेर्गुणत्वोक्तिरयुक्ता स्यात्। तत्र सतोपि तस्य गुणत्वेन जनकत्वे मानं नेति चेत्समं प्रकृतेपि।**

## न्यायदीपः

॥ **अनन्वयेति** ॥ एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वस्यानन्वयरूपत्वादिति भावः ॥ **अग्नित्वादय इति** ॥ अग्नित्वमृत्वपाषाणत्वादयः। सेकानन्वयः सेकनिष्ठान्वयाभावः। अग्नि

संसर्गत्वादेः सेकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वस्याग्नित्वादिधर्मनिबन्धनत्वादग्नित्वादय इत्युक्तम्। प्रतियोगितावच्छेदका इत्यस्याधिकरणतावच्छेदका इत्यर्थ इत्यप्याहुः। ''योग्यता तत्प्रमा वा'' इति प्रागुक्तकल्पद्वयोक्त्यनुरोधादाह ॥ **अनन्वयप्रमाविरहो वेत्यादि** ॥ **आवश्यकेनेति** ॥ उक्तप्रमाविरहादेर्वाक्यगतनिर्दोषत्वेनैव सम्भवादिति भावः। संसर्गव्याप्यस्येत्येतत्प्रमाविरहस्य विशेषणम्। ननु निर्दोषत्वस्येव तयोरप्यन्वयव्यतिरेकसिद्धकारणत्वस्य त्यागायोगादित्यत आह ॥ **न हीति** ॥ **तयोरिति** ॥ उक्तरूपप्रमाविरहधर्मशून्यत्वयोरित्यर्थः। विसंवादिशुकादिवाक्येऽपि निर्दोषत्वं न सिद्धम्। भ्रान्त्यादिदोषाभावेप्यन्यस्य कस्यचित्कल्प्यत्वादिति भावः। गुणजन्यत्वान्यथानुपपत्त्यैव तत्कल्प्यत इत्यत आह ॥ **न च शाब्देति** ॥ **अद्यापीति** ॥ अनुगतगुणकल्पनवेलायामपीत्यर्थः।

स्वतन्त्रान्वयव्यतिरेकाभावेऽपि हेतुत्वकल्पनेऽतिप्रसङ्गमाह ॥ **किञ्चेति** ॥ प्रमाविरहादे-रित्यादिपदेन तत्प्रमावच्छेदकधर्मशून्यत्वतत्प्रमयोश्च ग्रहः ॥ **सन्निकर्षादेरिति** ॥ सल्लिङ्गपरामर्श आदिपदार्थः।

## तर्कताण्डवम्

**अपिचैवमप्रमायामपि विषयासत्वाविनाभूतविषया-भावप्रमा वा विषयासत्वावच्छेदकधर्मवत्वं वा तयोः प्रमा वा दोषः स्यान्न तु काचादिः। किञ्च शाब्दी संसर्गप्रमा नियमेन संसर्गव्याप्यधीजन्या चेदनुमितिः स्यात्।**

**किञ्च असंसर्गप्रमाविरहो वाऽसंसर्गप्रमाविरहप्रमा वा गुण इति मते अग्निना सिञ्चेदित्यादौ श्रोतुरन्वयप्रमाविरह-दशायां संसर्गप्रमा स्यात्।**

## न्यायदीपः

॥ **अपि चैवमिति** ॥ विषयसत्वाविनाभूतस्य गुणत्व इत्यर्थः ॥ **विषयासत्वाविनाभूतेति** ॥ विषयाभावप्रमाविशेषणम्। प्रमाविशेष्यत्वमित्यर्थः ॥ **तयोरिति** ॥ विषयाभावप्रमाविषया-सत्वावच्छेदकधर्मवत्वयोरित्यर्थः ॥ **नन्विति** ॥ तथाच भ्रमे काचादिर्दोष इति मण्याद्युक्तिरयुक्ता स्यात्। तदन्वयव्यतिरेकविरोधश्च स्यादिति भावः।

ननु विषयासत्वाविनाभूतधर्मप्रमादेर्विषयसत्वभ्रमविरोधित्वात्कथं दोषतेत्यतः संसर्गव्याप्य-प्रमा गुण इति पक्षे दोषान्तरमाह ॥ **किञ्च शाब्दी संसर्गप्रमेति** ॥ पर्वतवह्निसंसर्गादिप्रमावदिति भावः।

ननु संशयोत्तरप्रत्यक्षमिव व्याप्यधीजन्यमपि नानुमितिरूपमिति चेन्न। तत्र बलवत्प्रत्यक्ष-करणकत्वेन व्याप्यधीकरणकत्वाभावात्। इह च नियमेन व्याप्यधीजन्यत्वे तत्करणकत्वापातात्। न हि परामर्शादपि शब्दः प्रत्यक्षसामग्रीवद् बलवान्।

न च व्याप्यत्वप्रकारकज्ञानजन्यत्वेन तदजन्यत्वान्नानुमितित्वम्। नियमेन तज्जन्यत्वे तथात्वेन तज्जन्यत्वावश्यम्भावात्। अन्यथा प्रमेयत्वादिनापि ज्ञाने तत्प्रमाया गुणत्वापत्तेः। असंसर्गप्रमाविरह-प्रमात्वादिना हेतुत्वापेक्षया संसर्गव्याप्यत्वप्रमात्वस्य लघुत्वात्। अन्यत्र तेन रूपेण हेतुतायाः क्लृप्तत्वात्। असंसर्गप्रमाविरहप्रमात्वादिना हेतुत्वस्य प्रमाया गुणजन्यत्वसिद्ध्याधीनत्वेन अन्योन्याश्रयाच्चेति भावः।

संसर्गव्याप्यप्रमा गुण इति पक्षं निरस्यासंसर्गप्रमाविरहो गुण इति पक्षेपि दोषमाह ॥ **किञ्चासंसर्गेति** ॥ क्वचित्तु असंसर्गप्रमाविरहप्रमा वेत्यपि पाठः। तदा तूभयत्र दोषान्तरमाहेत्यवतार्य विरहदशायामित्यनन्तरं तत्प्रमादशायामित्यपि व्याख्येयम् ॥ **संसर्गप्रमा स्यादिति** ॥ तथाचान्वय-व्यभिचारान्नायं गुणत्वेन हेतुरिति भावः।

## तर्कताण्डवम्

**न च श्रोतुस्तद्विरहदशायामपीश्वरस्यासंसर्गप्रमास्ति सा च श्रोतुः संसर्गप्रमाप्रतिबन्धिकेति वाच्यम्। तथात्वे ईश्वरस्य वाक्यार्थप्रमा गुण इति चिरन्तनमतत्यागायोगात्।**

**किञ्चेश्वरस्यानन्वयप्रमा न तावद्विषयासत्वावेदनेन प्रतिबन्धिका। श्रोतुस्तदावेदनस्य व्यधिकरणया स्वरूप-सत्येश्वरनिष्ठप्रमया कर्तुमशक्यत्वात्। नापि लिङ्गभूतया ज्ञातया तया तत्कर्तुं शक्यम्। तथात्वे ह्यनन्वयप्रमाज्ञानस्यैव प्रतिबन्धकत्वेन तत्प्रमाया अज्ञानदशायां संसर्गप्रमा स्यात्। नापि सा विषयासत्वमनावेद्य स्वरूपेणैव विषयसत्व-**

**विरोधित्वेन विषयसत्वगर्भितप्रमाप्रतिबन्धिका। तथात्वेऽनन्वस्यैव साक्षाद्विषयसत्वविरोधित्वेन प्रमाप्रतिबन्धकत्वौचित्येन प्रमाग्रहणवैयर्थ्यात्।**

**किञ्च वस्तुगत्यानन्वयविषयाया अपि सर्वकार्यहेतुभूताया ईश्वरप्रमायाः शब्दप्रमां प्रत्यपि हेतुत्वेन कथं तत्प्रतिबन्धकत्वम्। न च प्रमाया गुणजन्यत्वमद्यापि सिद्धम्। येनेश्वरज्ञानस्योपादानापरोक्षज्ञानत्वेन हेतुत्वमनन्वयप्रमात्वेन तु प्रतिबन्धकत्वमिति कल्पेत॥**

**किञ्चानन्वयप्रतियोगितावच्छेदकधर्मशून्यत्वम् प्रमागुण इति मते अतीन्द्रियविषये वाक्ये संसर्गप्रमातः प्राक्तस्या असम्भवान्नशाब्दप्रमाहेतुता।**

## न्यायदीपः

ननु तत्र सत्यप्युक्तरूपगुणे कार्याभावः प्रतिबन्धनिमित्तौ नाऽहेतुत्वनिमित्त इति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ **चिरन्तनमतेति** ॥ ''न वैदिकप्रमाया गुण्यजन्यत्वेनेश्वरसिद्धिः''। इत्यादिमण्युक्त्या प्रतीतश्चिरन्तनमतत्यागोऽयुक्तः स्यादित्यर्थः।

ननु व्यधिकरणस्य गुणत्वायोगेनत्यागोऽपि विरोधिविषयकत्वात्प्रतिबन्धकत्वं स्यादेवेत्यतो न युक्तं तदपीत्याह ॥ **किञ्चेति** ॥ प्रतिबन्धकत्वं किं विरोधिविषयज्ञापनरूपेणोत साक्षात्। आद्येऽपि किं स्वरूपसती वा ज्ञाता सती लिङ्गतया वेति विकल्प्याद्यद्वयं क्रमेण निराह ॥ **न तावदित्यादिना** ॥ तदावेदनस्य विषयासत्वज्ञापनस्येत्यर्थः। समानाधिकरणज्ञानेनैतदावेदनस्य दृष्टचरत्वादिति भावः ॥ **लिङ्गभूतयेति** ॥ अग्निना सिञ्चेदिति वाक्येऽन्वयोऽसन् तथेश्वरप्रमाविषयत्वात्सम्मतवदित्येवं लिङ्गभूतयेत्यर्थः। अन्त्यपक्षं निराह ॥ **नापि सेति** ॥ विरोधिविषयत्वेप्ययुक्तं प्रतिबन्धकत्वमित्याह ॥ **किञ्च वस्तुगत्येति** ॥ ननु प्रमाया गुणजन्वयत्वान्यथानुपपत्त्यैव द्वैरूप्यमाकारभेदेनेश्वरप्रमायाः कल्प्यत इत्यत आह ॥ **न चेति** ॥

प्रागुक्तमतान्तरमपि प्रातिस्विकदोषेण निराह ॥ **किञ्चेति** ॥ **अतीन्द्रियेति** ॥ ''ज्योतिष्टोमेन स्वर्गकामो यजेत'' इत्यादिवाक्ये हेतुहेतुमद्भावादिरूपस्वर्गाद्यनन्वयप्रतियोगितावच्छेदकधर्मो

ज्योतिष्टोमत्वादिर्न किन्तु कृषित्वादिरेवेति ज्ञानस्य तदन्वयप्रमित्यनन्तरभावित्वेन तद्धेतुत्वमयुक्त-मित्यर्थः। योग्यताज्ञानस्य हेतुत्वोपपादनयोक्तमयोग्यतेत्यादि। साक्षादप्रतिबन्धकस्य कार्यानुकूल-किञ्चिद्विघटकत्वरूपत्वात्प्रतिबन्धकत्वस्येति भावः॥ **तद्विशेषाविति**॥ ''यत्सामान्ये यत्सामान्यं हेतुर्बाधकाभावे तद्विशेषयोरपि'' इति न्यायादिति भावः।

## तर्कताण्डवम्

**एतेनायोग्यताज्ञानेन शाब्दज्ञानप्रतिबन्धात् तद्विघटनीस्य योग्यताज्ञानस्य शाब्दधीहेतुत्वे सिद्धे तद्विशेषौ योग्यताप्रमा-भ्रमौ शाब्दप्रमाभ्रमौ प्रति जनकाविति निरस्तम्। अयोग्यताया उक्तरीत्या विषयाभावरूपत्वे बाधवद्विषया-भावव्याप्यरूपत्वे सत्प्रतिपक्षवत्साक्षात्प्रतिबन्धकत्वसम्भवे योग्यताज्ञानविघटकत्वकल्पकाभावात्। व्यभिचारज्ञाना-संसर्गग्रहाप्रामाण्यज्ञानानि तु न साक्षादनुमितिप्रवृत्ति-प्रतिबन्धकानि भिन्नविषयकत्वादित्यनुमितिप्रवृत्तिहेतुभूत-व्याप्तिज्ञानसंसर्गग्रहप्रामाण्यज्ञानविघटकानि।**

**तस्माच्छाब्दज्ञाने आकाङ्क्षाऽऽसत्ती अयोग्यतानिश्चय-विरहश्च हेतवः। ते च भ्रमसाधारणाः। प्रमाणाबाधरूपा स्वरूपसती योग्यतया तु प्रामाण्यान्तर्गतविषयसत्वा-त्मकत्वान्न गुणः। अप्रमा-सामग्रीतः प्रमासामग्र्यां विशेषस्तु निर्दोषत्वमेवेति वक्ष्यते। तस्मादनित्यप्रमात्वपक्षकानु-मानेष्विवानित्यप्रत्यक्षप्रमात्वादिपक्षकानुमानेष्वपि तदनुगतगुणाभावाद्बाधासिद्ध्यादीति।**

तदप्युक्तं ''अन्यथा'' इत्यादिना। अनुगतगुणाभावेपि जन्यप्रत्यक्षप्रमात्वादेः कार्यतावच्छेदकत्वे पूर्वोक्ताव्यवस्था-पातादित्यर्थः। एवमुत्तरात्रापि द्रष्टव्यम्॥

प्रत्यक्षादिप्रमासु प्रत्येकानुगतगुणभङ्गः॥ १३॥

## न्यायदीपः

एतेनेत्येतद्व्यनक्ति ॥ **अग्योतेति** ॥ **उक्तरीत्येति** ॥ ''योग्यता किं शब्दप्रतिपाद्यस्य संसर्गस्य सत्वं'' इत्यादिनोक्तरीत्येत्यर्थः ॥ **विषयाभावव्याप्त्येति** ॥ ''एकपदार्थसंसर्गः'' इत्यादिनोक्तरीत्येत्यनुषङ्गः ॥ **योग्यताज्ञानेत्यादि** ॥ तथाच योग्यताज्ञानस्यैव शब्दज्ञानाहेतुत्वे ''यत्सामान्य'' इति न्यायनवतारान्न योग्यताप्रमाभ्रमौ गुणदोषौ सिद्ध्यत इति भावः।

नन्वेवं व्याप्तिज्ञानमप्यनुमितिहेतुर्न स्यात्। तथा वैशिष्ट्यज्ञानं प्रमाण्यज्ञानं च प्रवृत्तिहेतुर्न स्यात्। तद्विघटकस्य व्यभिचारज्ञानादेः साक्षादेवानुमितिप्रतिबन्धकत्वसम्भवादित्यत आह ॥ **व्यभिचारेति** ॥ एवं योग्यतादेर्गुणत्वं निरस्य मणौ योग्यत्वादिकं गुण इत्यादिपदेन आकाङ्क्षाऽऽसत्त्योरप्युपादानं यत्तदप्ययुक्तमिति हेतुं वदन्नेवोपसंहरति ॥ **तस्मादिति** ॥

**अयोग्यतानिश्चयविरह इति** ॥ न तु योग्यताज्ञानमित्यर्थः। विवरिष्यते चैतद्योग्यतावाद इति भावः। भ्रमसाधारण इति हेतुगर्भम्। न गुण इत्यन्वयः। नन्वेवं गुणनिरासे कार्ये कारणवैजात्यनिमित्तत्वाज्ज्ञानसामान्यसामग्र्या अप्रमायामपि सत्वेन प्रमासामग्र्यामप्रमासामग्रीतो वैलक्षण्याभावे तत्कार्यवैलक्षण्यं न स्यादित्यत आह ॥ **अप्रमेति** ॥ **निर्दोषत्वमेवेति** ॥ यद्यपि दोषाभावोपि न प्रामाण्यहेतुरिति वक्ष्यते। तथापि भिक्षुपादप्रसारन्यायेन गुणहेतुत्वनिरासाय दोषाभावस्य प्रमानिमित्तत्वोक्तिरिति ध्येयम् ॥ **पूर्वोक्त्येति** ॥ अनित्यप्रमामात्रे अनुगतगुणभङ्गान्तेक्त्येत्यर्थः।

प्रत्यक्षादिप्रमासु प्रत्येकानुगतगुणभङ्गः ॥ १३ ॥

## स्थूलावयविप्रत्यक्षप्रमादौ भूयोऽवयवेन्द्रियसन्निकर्षादेर्हेतुत्वभङ्गः।

## तर्कताण्डवम्

**अथापि स्यात् भ्रमसामान्ये प्रत्यक्षादिभ्रमे वानुगतदोषस्याभावेपि तत्तद् भ्रमविशेषे पित्तादिरिव स्थूलावयविप्रत्यक्षप्रमायां भूयोवयवेन्द्रियसन्निकर्षः, संशयविपर्ययोत्तरप्रत्यक्षप्रमायां विशेषप्रमा, नियमेन प्रमयोरनुमितिशाब्दप्रतीत्योः सत्यलिङ्गपरामर्शवाक्यार्थज्ञाने चान्वयव्यतिरेकाभ्यां हेतू। एवं च प्रमाया अप्रमाव्यावृत्ताननुगता-**

धिकहेतुजन्यत्वात्परतस्त्वम्। त एवाननुगता हेतवः प्रमां प्रत्यसाधारणहेतुत्वेनोपाधिना गुणा इत्युच्यन्ते। तस्माद-नित्यप्रमात्वमनित्यज्ञानत्वप्रयोजकाधिकप्रयोज्यं तदन्वय-व्यतिरेकानुविधायित्वात्। अप्रमात्ववत्। अन्यथा अप्रमापि प्रमा स्यात्। न चाप्रमायामधिको दोषो हेतुरस्तीति वाच्यम्। तथात्वे भ्रमस्य प्रमात्वप्रयोजकजन्यत्वे सत्यधिकजन्यत्वेन प्रमाविशेषत्वापातादिति मम सिद्धान्तरहस्यमिति चेन्मैवम्।

भूयोवयवेन्द्रियसन्निकर्षे शङ्खत्वादिविशेषदर्शने च सत्यपि पीतः शङ्ख इत्यादिभ्रमस्य वंशेउरगभ्रमस्य बाष्पावयवे धूमावयविभ्रमेऽवयव्यंशे एव भ्रमस्य दर्शनेनान्वयव्यभिचारात्।

यदि च तत्र पित्तमण्डूकवसाञ्जनादिदोषप्रतिबन्धात् प्रमानुत्पत्तिस्तर्ह्यावश्यकत्वाद्दोषाभाव एव हेतुः मम तु दोषाभावेनाप्रमारूपविपरीतकार्यानुत्पत्तौ ज्ञानसामग्र्यैव प्रमोत्पत्तिः।

## न्यायदीपः

यत्तूक्तं मणौ "तत्तत्प्रमायां भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वम्। अन्वयव्यतिरेकात्। तत्तदप्रमायां पित्तादिलिङ्गभ्रमादीनां दोषत्ववत् प्रत्यक्षे विशेषदर्शनमपि गुणः। तदनुविधानात्" इत्यादितत्तात्पर्यमाशङ्कते ।। **अथापि स्यादित्यादिना** ।। **संशयेति** ।। संशयोत्तरविपर्ययोत्तरेत्यर्थः ।। **विशेषेति** ।। व्याप्येत्यर्थः। प्रमयोरिति प्रतीत्योर्विशेषणम्। तावता कथं प्रमात्वस्य परतस्त्वमित्यत आह ।। **एवं चेति** ।। उक्तसन्निकर्षादेः हेतुत्वे सतीत्यर्थः। गुणाजन्यत्वात्कथमेतदित्यत आह ।। **त एवेति** ।। **असाधारणेति** ।। भ्रम-व्यावृत्तेन्यर्थः।

मणिकृदभिमतमनुमानमाह ।। **तस्मादिति** ।। उक्तसन्निकर्षादेर्गुणत्वेन तज्जन्यत्वेन प्रमायाः परतस्त्वसम्भवात्प्रयोग उच्यत इत्यर्थः ।। **तदन्वयेति** ।। उक्तरूपसन्निकर्षादिलक्षणाधिककारण-परामर्शः। हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकमाह ।। **अन्यथेति** ।। अनित्यज्ञानत्वप्रयोजका-

दधिकाप्रयोज्यत्वे तन्मात्रप्रयोज्यत्व इत्यर्थः। आपादकासिद्धिमाशङ्क्याह **॥ न चेति ॥ प्रमात्वप्रयोजकेति ॥** अनित्येति योज्यम्। अनित्यज्ञानत्वप्रयोजकस्यैवानित्यप्रमात्वप्रयोजकत्वेन त्वदभिमतेरिति भावः **॥ इत्यादिभ्रमस्येति ॥** तिक्तो गुड इत्यादिरादिपदार्थः **॥ वंशेति ॥** अनुरागत्वस्य स्पर्शने दर्शने भूयोऽवयवेन्द्रियसन्निकर्षे सत्यपि मण्डूकवसाक्तनेत्रस्य मण्डूकवसादोषेण जायमानस्य वंशे उरगभ्रमस्येत्यर्थः।

तदिन्द्रियजप्रत्यक्षप्रमायां तदिन्द्रियविशेषदर्शनं हेतुरिति विशेषदर्शनस्य हेतुत्वे भवेदेवं विशेषविवक्षा। तदेवायुक्तमिति "एवं भ्रमोत्तरप्रमायामपि" इत्यादिना वक्ष्याम इति भावेन स्थलान्तरेप्युक्तसन्निकर्षस्य व्यभिचारमाह **॥ बाष्पेति ॥ धूमेति ॥** धूमरूपावयवीत्यर्थः।

यत्र स्थूलावयविप्रत्यक्षे भूयोऽवयवेन्द्रियसन्निकर्षो गुण इत्युक्तं तस्मिन्नेवेति विरोधस्फोरणायावयव्यंश एवेत्युक्तम्। अञ्जनादित्यादिपदेन सारूप्यादिग्रहः **॥ दोषाभाव एवेति ॥** यादृच्छिकसंवादिनि दोषाभावः प्रमाव्यभिचारीति तूत्तरभङ्गे निरसिष्यत इति भावः। यत्तु सन्निकर्षाद्युत्कर्षेण प्रमोत्कर्षात्सन्निकर्षादिरेव हेतुरिति। तन्न। उक्तस्थलेषु तदुत्कर्षे सत्यपि प्रमानुदयेन व्यभिचारात्।

ननु सिद्धान्ते दोषाभावस्य प्रामाण्याहेतुत्वादुक्तस्थले प्रामाण्यप्रयोजकज्ञानसामग्रीसत्त्वात्प्रमोत्पत्तिः स्यादित्यत आह **॥ मम त्विति ॥** यद्वा तावतापि सिद्धान्ते स्वतस्त्वहानिरित्यत आह **॥ मम त्विति ॥**

## तर्कताण्डवम्

**एवं भ्रमोत्तरप्रमायामपि तदनुत्तरप्रमायां या क्लृप्ता सामग्री भ्रमकाले सा न वर्तते चेत्तदभावादेव कार्याभावो न तु विशेषदर्शनाभावादिति विशेषप्रमा न हेतुः। वर्तते चेद्विशेषदर्शनाभावेपि तदनुत्तरप्रमेव तदुत्तरप्रमाप्युत्पद्येतैव। न हि कार्यवैचित्र्याभावेपि कालभेदमात्रेण विचित्रहेत्वपेक्षा। यदि तदा संशयादिदोषः प्रतिबन्धकस्तर्ह्यावश्यकत्वाद् दोषाभावादेव प्रमास्तु।**

**किञ्च करादौ चरणादिभ्रमजन्ये संशयानन्तरभाविनि**

**प्रमारूपे पुरुषसाक्षात्कारे विशेषप्रमारूपस्य वह्न्यालोके धूमभ्रमजन्यायां नियमेन प्रमायामनुमितौ यथार्थलिङ्ग-परामर्शरूपस्य भ्रान्तविप्रलम्भकवाक्यजन्यायां नियमेन प्रमायां शाब्दप्रतितौ यथार्थवाक्यार्थज्ञानरूपस्य गुणस्या अभावेपि प्रमात्वदर्शनेन व्यतिरेकव्यभिचारोपि।**

## न्यायदीपः

विशेषदर्शनपदेन विशेषदर्शनसामान्यविवक्षायां प्रागुक्तान्वयव्यभिचारलगनेप्युक्तरूपविशेष-दर्शनविवक्षायां नोक्तदोषलगनमित्यतः। अनौपाधिकभ्रमोत्तरप्रत्यक्षप्रमायामेव विशेषदर्शनं गुणोऽतो नोक्तदोषः इत्यतो विशेषदर्शनाभावे भ्रमोत्तरप्रमाभाव इति व्यतिरेकोन्यथासिद्धो न विशेषदर्शन-हेतुताकल्पक इति भावेन दोषान्तरमाह ॥ **एवं भ्रमेति** ॥ संशयविपर्ययरूपभ्रमेत्यर्थः। प्रमायामपि न विशेषप्रमाहेतुरित्यन्वयः। ननु भ्रमानुत्तरप्रत्यक्षसामग्र्या कथं तदुत्तरप्रत्यक्षप्रमा जायेतेत्यत आह ॥ **न हीति** ॥ **विचित्रेति** ॥ विशेषदर्शनरूपेत्यर्थः ॥ **संशयादीति** ॥ विपर्यय आदिपदार्थः।

ननु संशयस्य ग्राह्यसंशयपर्यवसन्नतया प्रमाणापरिपन्थित्वात्कथं प्रतिबन्धकत्वशङ्का। अन्यथा तस्मिन् सति विशेषदर्शनादपि प्रत्यक्षानापत्तेरिति चेन्न। विशेषदर्शनविरहविशिष्टसंशयादेः प्रतिबन्धकत्वेन तदभिप्रायेण संशयादिदोषः प्रतिबन्धक इत्युक्तेः।

॥ **दोषाभावादेवेति** ॥ ननु विशेषदर्शनविरहविशिष्टसंशयादिदोषाभावो हि संशयादिस्थले विशेषादर्शनरूपविशेषणाभावेनैव वाच्य इति विशेषदर्शनमेव पर्यवसन्नमिति चेन्न। तावता तस्य प्रतिबन्धकरूपदोषाभावत्वेनैव हेतुत्वप्राप्त्या तेन रूपेण हेतुत्वाऽप्राप्तेः। विशिष्टाभावसम्पादनेना-न्यथोपक्षीणत्वाच्च।

रुचिदत्तादयस्तु भ्रमस्थले विशेषादर्शनसहकृतसंशयादेः प्रतिबन्धकत्वे संशयोत्पत्तिकाले प्रत्यक्षापत्तिः। न च "यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिका" इति न्यायात्तदा संशयसामग्रीप्रतिबन्धान्न प्रत्यक्षमिति वाच्यम्। एवमपि धर्मिज्ञानकाले दैवात्पुरुषत्वादिज्ञानत्वतः पुरुषत्वादिनिश्चयापत्तेः। संशयस्य तत्सामग्र्या वा तदानीमभावात्। न च दोषस्य प्रतिबन्धकत्वान्न तदा प्रत्यक्षमिति वाच्यम्। तर्ह्यावश्यकत्वात्संशयकालेऽपि तत एव दोषात्प्रत्यक्षानुत्पत्तिरस्तु। किं संशयस्य प्रतिबन्धकत्वाभ्युगमेन। तथाच विशेषदर्शने सति विशेषादर्शनरूपदोषाभावादेव

प्रत्यक्षप्रमोत्पत्तिर्न तु निरुक्तविशिष्टाभावस्य प्रत्यक्षप्रमाहेतुत्वम्। मानाभावात्। न च विशेषादर्शनस्य दोषत्वे संशयानुत्तरप्रमानुदयापत्तिरिति शङ्क्यम्। फलबलेनैतस्य क्वचिदेव दोषत्वकल्पनादित्याहुः।

दोषाभावादेव साऽस्त्वित्यनन्तरं मम त्वित्यादिवाक्यमत्राप्यनुवर्त्य योज्यम्। भ्रमोत्तरप्रमाव्यतिरेकस्य विशेषदर्शनत्वेन विशेषदर्शनव्यतिरेकनिमित्तता नास्ति, किन्तु दोषनिमित्ततेत्यन्यथासिद्धिमुक्त्वा सत्यपि विशेषप्रमाव्यतिरेकादौ प्रमोत्पत्तेर्व्यभिचारान्न विशेषप्रमायथार्थलिङ्गपरामर्शादिः प्रमां प्रति हेतुत्वं दूरे गुणत्वेनेति भावेनाह ॥ **किञ्चेति** ॥

ननूक्तस्थले सर्वत्रेश्वरप्रमामादाय विशेषप्रमासत्यपरामर्शयथार्थवाक्यार्थ-ज्ञानानां न व्यतिरेकव्यभिचार इति चेन्न। अस्मिन्पक्षे ''न चेश्वरे सोऽस्तीति वाच्यं'' इत्यादिना दोषाणां पूर्वमेवोक्तत्वादिति भावः।

## तर्कताण्डवम्

**किञ्च दुष्टायां ज्ञानसामग्र्यां सत्यामपि गुणव्यतिरेकेण प्रमाव्यतिरेको न दृष्ट इति गुणो न हेतुः। दृष्टो विसंवादि-शुकादिवाक्ये, तत्र भ्रान्तिविप्रलम्भादिदोषाभावादिति चेन्न। तत्राप्यनित्यवाक्यदोषस्य विवक्षितार्थतत्त्वज्ञानाभावस्य वा शुकवाक्यमूलभूतवाक्यप्रयोक्तृपुंनिष्ठस्य भ्रान्त्यादेर्मूलदोषस्य वा सत्वात्। गुणव्यतिरेकेण प्रमात्वव्यतिरेके सिद्धेपि भ्रमत्वार्थं त्वयापि भ्रमत्वप्रयोजकत्वेन क्लृप्तस्य दोषस्य तत्र वक्तव्यत्वाच्च। अभावोपि हि करणापाटवविशेषादर्शना-दिरिव लोकव्यवहारात्प्रमाव्यावृत्तकारणत्वात् तत्त्वज्ञान-विरोधित्वाच्च दोष एव। अङ्गीकृतं च त्वयापि नीलं तम इति भ्रमे दोषान्तराभावेनाधिष्ठानभूतस्याभावरूपस्य तमस एव दोषत्वम्। क्वचिद्गुणसन्निधानन्तु रासभवद्यादृच्छिकं वा गन्धं प्रति क्लृप्तकारणगन्धप्रागभावसहभूतपाकजरसप्रागभाववत् प्रमां प्रति क्लृप्तप्रयोजकदोषाभावसहभूतत्वेनान्यथासिद्धं वा।**

किञ्च त्वयाप्यनन्याथासिद्धशब्दस्य यौगिकत्व आत्माश्रयाल्लोकव्यवहारानुसारेण पारिभाषिक एवार्थ उक्तः। एवं च भ्रमरूपविपरीतकार्योत्पादकदोषनिरासकस्य गुणस्य विपरीतकार्योत्पादकनिरासकत्वरूपान्यैवान्यथासिद्धिः परिभाष्यताम्। लोके घटं प्रति दण्डत्व इव कदलीकाण्डरूपविपरीतकार्योत्पादकस्य वेत्रबीजसम्बन्धिदावाग्निदाहस्य विरोधिनि पदार्थे वेत्राङ्कुरं प्रति कारणत्वाव्यवहारात्। दाहविरोधिनो हेतुत्वे क्वाप्युत्सर्गापवादाभावप्रसङ्गाच्च। यस्य हि स्वसामाग्रीवशेन प्रसक्तिस्तदौत्सर्गिकम्। सत्यामपि सामग्र्यां यद्वशात्तद्विपरीतं कार्यं भवति तत्तस्यापवादकम्। न च दाहविरोधिनो हेतुत्वे दाहस्थले वेत्राङ्कुरसामग्र्यस्ति। अन्यथा दण्डाभावाद्घटानुत्पत्तिरपि तदुत्पत्तेरपवादः स्यात्।

## न्यायदीपः

ननु गुणव्यतिरेकेण प्रमाव्यतिरेकस्यापि दर्शनादुक्तस्थलेष्वपि कश्चन गुणः कल्प्यत इत्यतो व्यतिरेकासिद्धिदोषमाह ॥ **किञ्चेति** ॥ शङ्कते ॥ **दृष्ट इति** ॥ सत्यपि दोषाभावे गुणव्यतिरेकेण प्रमाव्यतिरेक इत्यनुषङ्गः। तत्र दोषाभावसत्वमुपपादयति ॥ **तत्रेति** ॥ आदिपदेन प्रमादकरणापाटवयोर्ग्रहः। अप्रामाण्यस्य दोषजन्यत्ववादिना त्वयापि तत्र कश्चिद्दोषः कल्प्यः। अन्यथा तस्य परतस्त्वाहानेरित्याह ॥ **गुणव्यतिरेकेणेति** ॥ ननु विवक्षितार्थतत्वज्ञानाभावस्याभावरूपत्वात्कथं दोषत्वमित्यत आह ॥ **अभावोऽपि हीति** ॥ अन्वयाभावादिरादिपदार्थः ॥ **अधिष्ठानेति** ॥ नैल्यारोपाधिष्ठानभूतस्यालोकाभावरूपस्येत्यर्थः। कुत्रचिद्वा गुणानुविधानस्य का गतिरित्यत आह ॥ **क्वचिदिति** ॥ प्रमायां गुणानुविधानमभ्युपेत्यापि मण्युक्तान्यथासिद्धिमाह ॥ **गन्धमिति** ॥

ननु रसप्रागभावोन्यत्र कार्ये क्लृप्तान्वयव्यतिरेकत्वादस्त्वन्यथासिद्धः। गुणसन्निधिस्तु नान्यत्र कार्ये क्लृप्तान्वयादिः। प्रकृतकार्येण विना कार्यान्तरोपक्षीणो ह्यन्यथासिद्धिः। न हि गुणः कार्यान्तरेण सिद्धः। येनान्यथासिद्धः स्यादित्यत आह ॥ **किञ्चेति** ॥ **आत्माश्रयादिति** ॥ कारणलक्षणशरीरप्रविष्टस्यान्यथासिद्धशब्दस्य कार्यान्तरजनकत्वमिति वा अनेन विना कारणान्तरेण कार्यं सिद्धमुत्पन्न-

मिति वार्थोक्तावात्माश्रयादित्यर्थः ॥ **पारिभाषिक एवेति** ॥ ''अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं वा कारणत्वम्। अन्यथासिद्धत्वं च त्रिधा। येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तथा। घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एव यं प्रति यस्य पूर्ववर्तित्वमवगम्यते। शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतत्वम्। यथा गन्धवति गन्धानुत्पादाद्गन्धं प्रति गन्धप्रागभावस्य नियतपूर्ववर्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावानामन्यथासिद्धत्वं'' इत्यादिग्रन्थेनानुमानखण्डे कारणतावाद उक्त इत्यर्थः। अन्यैवान्यथासिद्धिरित्यनन्तरं लोकव्यवहारानुसारेणेत्यनुकर्षः। स चासिद्ध इत्याह ॥ **लोक इति** ॥ दण्डत्वे यथा कारणताऽव्यवहारस्तथा कारणत्वाव्यवहारात्। किन्त्वन्यथासिद्धत्वेनैव व्यवहारादित्यर्थः। एतेन ''किञ्चेदं गुणान्वयव्यतिरेकित्वं अन्यत्रानुपक्षीणत्वं सामान्यं वा। नाद्यः। दोषनिरासोपक्षीणत्वादि''त्यादिदेवताधिकरणटीका विवृता।

## तर्कताण्डवम्

**अत एव यत्र संशयादिरूपा दोषाः प्रतिबन्धकाः तत्रैव तन्निरासार्थं भूयोवयवेन्द्रियसन्निकर्षविशेषदर्शनादिगुणापेक्षा। अन्यथा संशयोत्तरप्रमयेव तदनुत्तरप्रमयापि विशेषदर्शनमपेक्ष्येत।**

**किञ्च दोषनिरासेऽवश्यं कारणस्य गुणस्य प्रमायामपि कारणत्वे गौरवम्। नच प्रमारूपं कार्यमनन्यथासिद्धम्। येनोभयं कल्प्येत।**

## न्यायदीपः

लौकिकव्यवहाराभावेप्यस्तु हेतुत्वमित्यतः ''औत्सर्गिकत्वात् प्रामाण्यस्य'' इति तत्त्वनिर्णयटीकोक्तं विपक्षबाधकत्वेन संयोज्य तद्व्यनक्ति ॥ **देहेत्यादिना** ॥ अस्त्वेवमुत्सर्गापवादशब्दार्थः। विरोधिनोपि हेतुत्वे तदभावप्रसङ्गः कुत इत्यत आह ॥ **न चेति** ॥ **दाहस्थल इत्यादि** ॥ तथाच ''सत्यामपि तत्सामग्र्यां'' इत्यादेरभावादुत्सर्गापवादाभावप्रसङ्गः इत्यर्थः।

एतेन तत्वनिर्णयटीकायां ज्ञप्तिस्थलेऽभिहितमिदं बाधकमुत्पत्तिस्थलेप्यनुसन्धेयमिति सूचितम्

**॥ अन्यथेति ॥** सामग्र्यभावेऽपि कार्यानुत्पत्तेरपवादत्व इत्यर्थः **॥ तदुत्पत्तेरिति ॥** घटोत्पत्तेरित्यर्थः **॥ अत एवेति ॥** दोषनिरासोपक्षीणत्वादेवेत्र्थः **॥ अन्यथेति ॥** सर्वत्र प्रमामात्रे तद्धेतुतायामित्यर्थः।

नन्वस्तु दोषनिरासकत्वं गुणस्य प्रामाण्यहेतुत्वं चास्तु। अप्रामाण्ये गुणनिरासे च दोषाणां हेतुत्वमिवेत्यतः ''न चोभयकारणत्वकल्पकमस्ति'' इति भाष्यटीकां विवृण्वन्नाह **॥ किञ्चेति ॥** प्रमायाः परतस्त्वान्यथानुपपत्तिप्रमाणसिद्धगौरवं न दोषायेत्यत आह **॥ न चेति ॥ अनन्यथेति ॥** ज्ञानसामान्यसामग्रीतो न सिद्धमिति न चेत्यर्थः।

## तर्कताण्डवम्

**एतेन अप्रमापि प्रमाविशेषः स्यादिति निरस्तम्। प्रमात्वप्रयोजिकाया अदुष्टसामग्र्या भ्रमेऽभावात्। अन्यथा दावाग्निदग्धवेत्रबीजजन्यकदल्यङ्कुरोपि वेत्राङ्कुरविशेषः स्यात्।**

**ननु तत्र दाहेन दोषेण सहजाया वेत्राङ्कुरजननशक्तेर्नाशाद् विपरीतशक्तेश्चोत्पादाद्वेत्राङ्कुरसामग्र्येव नास्तीति चेत्समं प्रकृतेपि। ममापि लोकसिद्धौत्सर्गिकापवादकसाम्यमेव प्रामाण्याप्रामाण्ययोरपेक्षितम्।**

**अन्ये तु यथा नीलरूपसामग्रीजन्यस्यापि चित्ररूपस्य न नीलरूपविशेषत्वम्। यथा च विरुद्धनिश्चयद्वयसामग्रीजन्यस्य संशयस्य न निश्चयविशेषत्वम्। यथा च पाकजरूपसामग्री-जन्यस्य रसस्पर्शादेर्न रूपविशेषत्वं तथा भ्रमस्यापि न प्रमा-विशेषत्वमित्याहुः।**

## न्यायदीपः

प्रागुक्तानुकूलतर्कं निराह **॥ एतेनेति ॥** प्रमायाः दोषाभावसहितज्ञानसामग्रीजन्यत्व-कथनेनेत्यर्थः। परमुखेनैव समाधिं वाचयति **॥ नन्विति ॥** अस्त्वेवं लोके प्रामाण्यादौ तु कथमित्यत आह **॥ ममापीति ॥** अनन्यथासिद्धशब्दार्थे तव यथा तथेत्यपेरर्थः।

प्रमायामभिमतसामग्र्यभावेनैव भ्रमस्य न प्रमाविशेषत्वमिति स्वयमेकं समाधिमुक्त्वा अन्यापदेशेन समाध्यन्तरमाह ॥ **अन्ये त्विति** ॥ **न नीलेत्यादि** ॥ किन्तु विजातीयरूपान्तरत्व-मित्यर्थः। तथैवोदयनादद्युक्तेरिति भावः ॥ **विरुद्धेति** ॥ "विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप एक एव भवति। स एव संशय" इति ज्ञप्तिप्रामाण्ये मण्युक्तेरिति भावः ॥ **यथाच पाकजेति** ॥ तेजस्संयोगदेशकालादृष्टादिसामग्र्यास्तुल्यत्वादिति भावः।

अस्मिन्पक्षे दृष्टान्तानामसत्प्रतिपत्तिर्वक्ष्यमाणदिशा प्रमासामग्र्यां दोषाभावस्यावश्यकत्वात् सामग्र्यभावादेव तद्विशेषत्वाभावोपपत्तावुक्तसमाधिरयुक्ता इत्यरुचिबीजं ध्येयम्।

## तर्कताण्डवम्

**तस्मादन्वयव्यभिचाराद्व्यतिरेकव्यभिचारादन्यथा सिद्धेश्च गुणो न प्रमाहेतुः। भ्रमप्रतिबन्दी तूद्धरिष्यते। एतद-प्युक्तं "अन्यथा" इत्यादिना। अन्वयव्यभिचारे व्यतिरेक-व्यभिचारे औत्सर्गिककार्यापवादकनिरासकत्वेन अन्यथा सिद्धौ च सत्यामपि गुणस्य हेतुत्वे रासभादेरपि हेतुत्वप्रसङ्गेन हेत्वहेतुव्यवस्थित्ययोगादित्यर्थः।**

**स्थूलवयविप्रत्यक्षप्रमादौ भूयोवयवेन्द्रियसन्निकर्षादेर्हेतुत्वभङ्गः ॥ १४ ॥**

## न्यायदीपः

तस्मादित्युक्तं व्यनक्ति ॥ **अन्वयेति** ॥ पीतः शङ्ख इत्यादिभ्रम इत्यर्थः ॥ **व्यतिरेकेति** ॥ "करादौ चरणादिभ्रमजन्य" इत्यादिनोक्तप्रमाविशेष इत्यर्थः ॥ **अन्यथेति** ॥ विरोधिनिरासोप-क्षीणत्वाच्चेत्यर्थः। उभयकारणत्वे गौरवात्कल्पकाभावादप्रमायाः प्रमाविशेषत्वापत्तिरूपबाधका-भावाच्चेत्यपि ध्येयम्।

नन्वेवं दोषस्यापि भ्रमहेतुत्वखण्डनसम्भवेन भ्रमोपि स्वत एव स्यात्। तत्र या गतिः सा प्रमायामपीत्यत आह ॥ **भ्रमेति** ॥ स्वतस्त्वानुमानोक्त्यनन्तरमुद्धरिष्यत इत्यर्थः। एतदपीत्युक्तमेवा-न्यथादिशब्दार्थविवरणेन व्यनक्ति ॥ **अन्वयेत्यादिना** ॥

स्थूलावयविप्रत्यक्षप्रमादौ भूयोवयवेन्द्रियसन्निकर्षादेर्हेतुत्वभङ्गः ॥ १४ ॥

## प्रमायां दोषाभावस्य हेतुत्वभङ्गः

### तर्कताण्डवम्

अस्तु तर्हि दोषाभावादेव प्रमा। तस्यानन्यथासिद्धान्वयव्यतिरेकित्वादिति चेन्न। कारणतावच्छेदकप्रतिबन्धकाभावादिसाधारणस्य प्रयोजकत्वमात्रस्यापादन इष्टत्वात्॥

''अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथानुमा
''आगमोऽदुष्टवाक्यं च''

इति ब्रह्मतर्के, ''निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् निर्दोषोपपत्तिरनुमा निर्दोषः शब्द आगमः'' इति प्रमाणलक्षणे; ''दोषाभावस्य कारणत्वे च नास्माकमनिष्टम् तावता वेदापौरुषेयत्वाव्याघातात्'' इति भाष्यटीकायां चोक्तेः। दोषाभावस्यापेक्षितत्वेपि प्रमाजननशक्तिस्सहजा, न तु भ्रमजननशक्तिवदाधेयेत्येतावतैव प्रामाण्यस्वतस्त्वसिद्धेश्च।

उक्तं हि सुधायां ''इन्द्रियादीनामौत्सर्गिकी शक्तिः प्रमाण्यजनने दोषापवादादप्रामाण्यमपि जनयति'' इति कारणत्वस्यापादनं त्वयुक्तम्॥

### न्यायदीपः

॥ **अस्त्विति** ॥ तथाच ज्ञानहेतुतोऽधिकजन्यत्वात्स्वतस्त्वहानिरिति भावः। प्रयोजकत्वमापाद्यते कारणत्वं वा। आद्य आह ॥ **कारणेति** ॥ प्रतिबन्धकाभावाहेतुताया वक्ष्यमाणत्वाशयेनाह ॥ **प्रतिबन्धकाभावादीति** ॥ कारणकारणादिरादिपदार्थः ॥ **प्रयोजकत्वेति** ॥ तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमात्रस्य न त्वनन्यथासिद्धस्येत्यर्थः।

इष्टत्वमेव क्रमात्सूत्रभाष्यटीकाकृतां सम्मत्या दृढयति ॥ **अदुष्टमिति** ॥ अक्षं अनुमा आगमः इति लक्ष्यनिर्देशः। तत्त्वनिर्णयोदाहृतब्रह्मतर्क इत्यर्थः। मानत्रयेपि दोषाभावापेक्षाद्योतनाय

त्रितयोदाहरणम् ॥ **टीकायां चेति** ॥ देवताधिकरणभाष्यस्य टीकायामित्यर्थः। तत्र कारणत्वे चेत्युक्तिः प्रयोजकत्वे चेत्यर्थ इत्यग्रे व्यक्तम्।

नन्वेवमपि कथं न स्वतस्त्वहानिः। ज्ञानहेत्वतिरिक्तानपेक्षत्वाभावादित्यत आह ॥ **दोषाभावस्येति** ॥ **एतावतैवेति** ॥ दोषाभावस्य कारणत्वपक्षे शक्त्याधायकत्वेपि प्रयोजकत्वपक्षे तदभावादिति भावः ॥ **उक्तं हीति** ॥ दोषेत्यादिनोक्तं प्रमेयं जिज्ञासाधिकरणसुधायामुक्तमित्यर्थः **औत्सर्गिकी** उत्सर्गः सामान्यं ज्ञानमात्रजनिकैवेत्यर्थः। दोषापवादादित्यस्य दोषाहितशक्तिरूपापवादादित्यर्थ इति भावः।

नन्वेवं गुणस्यापि प्रयोजकत्वोपपत्तौ किं तन्निरासायासेनेति चेन्न। गुणवादिनोपि दोषाभावस्य आवश्यकत्वोपपादनात्। गुणस्य दोषनिरासोपक्षीणतोपपादनाच्चेति भावः।

## तर्कताण्डवम्

**क्लृप्तकारणं चक्षुरादिकमादायैव दोषाभावस्य प्रमां प्रति नियतपूर्वभावित्वग्रहणेन दण्डत्ववत् दण्डगतदार्ढ्यवत् शक्तिः कारणतावच्छेदिकेति पक्षे शक्तित्वम् उपस्थितेष्टभेदाग्रहः प्रवर्तक इत्यत्रोपस्थितिवत् विषयत्वेन विषयजन्यं ज्ञानं प्रत्यक्षमित्यत्र विषयत्ववच्च चक्षुरादिनिष्ठकारणतावच्छेदकत्वमात्रेणान्वयव्यतिरेकयोरुपपत्तौ दोषाभावे कारणतायाः दोषाभावत्वे कारणतावच्छेदकतायाश्च कल्पने गौरवात्। उक्तरीत्या सत्यपि दोषे प्रमात्वदर्शनेन प्रमासामान्यं प्रति व्यतिरेकव्यभिचाराच्च।**

**उक्तं हि विष्णुतत्वनिर्णयटीकायां ''दोषाभावोपि न प्रामाण्यकारणम्। यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्'' इति।**

**किञ्च प्रतिबन्धकाभावे लोके कारणत्वाव्यवहारादौत्सर्गिककार्यापवादकविरोधित्वरूपान्यैवान्यथासिद्धिः**

**परिभाष्यतामित्युक्तम्। उक्तं हि सुधायां ''तर्हि दोषाभावः कारणमित्यायातमिति चेन्न। तथा सत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात् इति।**

**न चैवं भाष्यटीकायाः विष्णुतत्त्वनिर्णयटीकया सुधया च विरोध इति शङ्क्यम्। भाष्यटीकायां कारणशब्दस्यास्मदुक्तं यद्घटं प्रति कुलालपित्रापि साधारणं तद्व्यतिरेकप्रयुक्त-व्यतिरेकप्रतियोगित्वरूपं प्रयोजकत्वं तन्मात्रपरत्वात्। उक्तं हि- 'तस्माद्गुणेभ्यो दोषाणाभावस्तदभावतः अप्रमाण्यद्वया-भावस्तेनोत्सर्गोनपोदितः'' इति।**

## न्यायदीपः

द्वितीयं निराह - कारणत्वस्येति। कुत इत्यतः ''येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धं'' इति मण्युक्तान्यथासिद्धिमत्वादित्याह ।। **क्लृप्तेति** ।। **ग्रहणेनेति** ।। त्वदुक्तपारिभाषिकान्यथासिद्धत्वेन हेतुनेत्यर्थः। अस्य चक्षुरादिनिष्ठकारणतेत्यादिनान्वयः।

गुरुमतेनाह ।। **उपस्थितेति** ।। **उपस्थितं** ।। बुद्धौ विपरिवर्तमानं यदिष्टं रजतादि तेन पुरोवर्तिनो भेदाग्रह इत्यर्थः। उपस्थितेरपि पुरोवृत्तिगोचरप्रवृत्तिकारणत्वे वैशिष्ट्यज्ञानस्यापि हेतुतापत्त्या भेदाग्रहः प्रवृत्तिहेतुरिति मतहान्यापत्तेर्हेतुतावच्छेदकत्वं यथा तथेत्यर्थः। न्यायमतेनाह ।। **विषयत्वेनेति** ।। **प्रत्यक्षमित्यत्रेति** ।। इति प्रत्यक्षलक्षण इत्यर्थः। अन्यथासिद्धिमुक्त्वा व्यभिचारं चाह ।। **उक्तेति** ।। ''किञ्च करादौ चरणादिभ्रमजन्य'' इत्यदिनोक्तरीत्येर्थः।

ननु दोषस्य प्रतिबन्धकतया तदभावस्य स्वतन्त्रावेव कार्यान्वयव्यतिरेकावतो न प्रागुक्तान्यथा सिद्धिर्युक्तेत्यत आह ।। **किञ्चेति** ।। अन्यथासिद्धशब्दस्य त्वया यौगिकार्थं त्यक्त्वा लोकव्यवहारा-नुरोधेन त्रिधा पारिभाषिकार्थोक्तेरिहापि व्यवहारानुरोधेन त्वदुक्तान्यथासिद्धित्रयादन्यैवान्यथासिद्धिः परिभाष्यतामित्युक्तमतीतभङ्ग इत्यर्थः ।। **उक्तं हीति** ।। दोषाभावस्यान्यथासिद्धतया कारणत्वं नेत्येतज्जिज्ञासाधिकरणे-''प्रत्यक्षवच्च प्रामाण्यं'' इत्यादिश्लोकव्याख्यानसुधायामुक्तमित्यर्थः।

उपलक्षणमेतत् ''दोषाभावान्वयव्यतिरेकनियमात्प्रामाण्यस्य परतस्त्वं किं न स्यादिति चेन्न। यादृच्छिकसंवादिषु प्रामाण्येपि दोषाभावेन कारणत्वभङ्गात्'' इत्यादिना वादावल्यामुक्तमित्यर्थः।

उत्सर्गेत्यादेरर्थस्तु ''दाहाविरोधिनो हेतुत्व'' इत्यदिना पूर्वतनग्रन्थेनैव विवृतो ध्येयः ।। **भाष्यटीकाया इति** ।। प्रागुक्ताया इत्यर्थः ।। **सुधया चेति** ।। वादावल्या चेत्यपि ध्येयम् ।। **तद्व्यतिरेकेति** ।। दोषाभावव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं प्रामाण्यस्य यत्तद्रूपं प्रयोजकत्वमित्यर्थः। स्वविरहप्रयुक्तविरहप्रतियोगिकार्यत्वरूपं यत्प्रयोजकत्वमिति फलितोर्थः ।। **उक्तं हीति** ।। वार्तिके दोषाभावस्योक्तरूपं प्रयोजकत्वमुक्तमित्यर्थः। तदभावतः गुणाधीनदोषाभावतः। अबोधकत्वरूपं विपरीतबोधकत्वरूपं वा विपरीतबोधकत्वरूपमननुष्ठानरूपं वा यदप्रामाण्यद्वयं तदभावः। तेन दोषाभावस्याप्रामाण्यनिरासोपक्षयेण ज्ञानसामग्रीत एव प्रमा जायत इत्युसत्सर्गो न भग्न इत्यर्थः।

## तर्कताण्डवम्

**ननु कथं तर्हि दोषस्य प्रतिबन्धकत्वमपि। तत्रैव तस्मिन् सत्यपि प्रमाया दर्शनादिति चेन्न। तत्र यादृच्छिकस्य विषय-सत्वस्योत्तेजकत्वेनोत्तेजकाभावविशिष्टस्य प्रतिबन्धकस्य अभावात्। न च तर्ह्यावश्यकत्वाद्विषयसत्वमेव प्रमाप्रयोजकं न तु दोषाभावापेक्षेति वाच्यम्। शुक्तौ रूप्यभ्रमकाले शुक्तित्वादेर्विषयस्य सत्वेपि दोषरूपप्रतिबन्धेन शुक्तित्वादि-प्रमाव्यतिरेकात्।**

**यद्वा इमं मा दहेत्यादौ मन्त्रादेरुद्देश्यव्यक्तिविशेष इव लिङ्गाभासस्य यत्र विषयसत्वाभावस्तत्रैव प्रतिबन्धकत्वाद् यादृच्छिकविषयसत्वस्थले केवलस्य प्रतिबन्धकस्याभाव एवास्ति। दोषाभावस्य स्वरूपेण हेतुत्वे तु व्यतिरेकव्यभिचारो दुष्परिहर इति दोषाभावोपि न हेतुः। तस्मात्परतस्त्वे न किञ्चिन्मानम्।**

एतदप्युक्तं ''अन्यथा'' इत्यादिना। औत्सर्गिककार्याप-वादकनिरासरूपस्यापि दोषाभावस्य हेतुत्वे इदमौत्सर्गिक-मिदमापवादकमिति व्यवस्थित्ययोगादित्यर्थः।

प्रमायां दोषाभावस्य हेतुत्वभङ्गः ।। १५ ।।

### न्यायदीपः

प्रागुक्तप्रतिबन्धकविरोधित्वरूपान्यथासिद्धिरयुक्तेति भावेन शङ्कते ॥ **नन्विति** ॥ **तत्रेति** ॥ यादृच्छिकसंवादिनीत्यर्थः। तस्मिन् दोष इत्यर्थः ॥ **मा दहेतीति** ॥ अस्य साधुत्वं संशयोपपादनग्रन्थोक्तं ज्ञेयम् ॥ **व्यतिरेकव्यभिचार इति** ॥ यादृच्छिकसंवादिनीत्यर्थः ॥ **तस्मादिति** ॥ अनुगतगुणस्याभावाद्दोषाभावस्य चाहेतुत्वादित्यर्थः।

प्रमायां दोषाभावस्य हेतुत्वभङ्गः ॥ १५ ॥

## उत्पत्तौ स्वतस्त्वे अनुमानानि।

### तर्कताण्डवम्

**स्वतस्त्वे तु अनित्यप्रमामात्रानुगतो गुण इति पक्षे अनित्ययथार्थज्ञानत्वं अनित्यज्ञानत्वानवच्छिन्नकार्यतानवच्छेदकं अनित्यज्ञानावृत्तित्वरहितत्वात् ज्ञानत्ववत्। तत्समनियतधर्मघटितत्वात् यदेवं तदेवम् यथा पृथुबुध्नोदराकारघटितं घटत्वम् घटत्वानवच्छिन्नकार्यतानवच्छेदकम्। भ्रमावृत्तिकार्यतानवच्छेदकं वा भ्रमवृत्तित्वात् भ्रमत्ववत्।**

**न चैतेषां हेतुनामसिद्धिः। भ्रमेपि धर्म्यंशे प्रमात्वस्य सत्त्वात्। प्रमात्वस्य ज्ञानत्वघटितत्वाच्च। नाप्यप्रयोजकता। समनियतयोरेकस्यैव कार्यतावच्छेदकत्वे आवश्यके लाघवार्थे प्रमाणस्वरसाल्लघुनोऽनित्यज्ञानत्वस्यैव तदौचित्यात्। भ्रमे ज्ञानत्वप्रमात्वयोर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वे त्वेकसामग्रीप्रयोज्यत्वेपि त्वन्मते वेगविभागयोरिव युक्ते।**

**मन्मते तु प्रकारांशे प्रमात्वापवादकस्य दोषस्य सत्वात् तद्भावो युक्तः।**

## न्यायदीपः

॥ **स्वतस्त्वे त्विति** ॥ मानमित्यनुकर्षः। उच्यत इत्यर्थः। अननुगतगुणपक्षे सिद्धसाधनतावारणाय **'इति पक्षे'** इति विवेकायोक्तम्। अनित्यप्रमात्वं अनित्यज्ञानत्वावच्छिन्नकार्यत्वप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकं अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वादप्रमात्ववदिति मण्युक्तानुमानस्य प्रत्यनुमानमाह ॥ **अनित्येति** ॥ विशेष्यमात्रस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वेन सिद्धसाधनवारणायानित्येति पक्षविशेषणम्। यथार्थेत्युक्तिरपि तद्वारणार्थैव। साध्ये नित्यज्ञाननिष्ठकार्यतानगवच्छेदकत्वेन सिद्धसाधनवारणायानित्येति पक्षविशेषणम्। यथार्थेत्युक्तिरपि तद्वारणार्थैव। साध्येऽनित्यज्ञाननिष्ठकार्यतानवच्छेदकत्वेन सिद्धसाधननिरासायानित्येत्यादिकार्यताविशेषणम्। प्रमानिष्ठेत्यपि योज्यम्। तेन घटादिनिष्ठकार्यतानवच्छेदकत्वेन न सिद्धसाधनम्। हेताविन्द्रियत्वादिनेन्द्रियादिनिष्ठकारणताप्रतियोगिककार्यतावच्छेदके प्रत्यक्षत्वादौ व्यभिचारवारणाय नञ्द्वयम्। तत्रानित्यज्ञानवृत्तित्ववत्तदवृत्तित्वस्यापि सत्वेन तद्राहित्याभावात्। उक्तदोषनिरासायैवानित्यज्ञानेत्यप्युक्तिः। असिद्धिनिरासायानित्येति ॥ **ज्ञानत्ववदिति** ॥ तस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वादनित्यज्ञानवृत्तित्वाच्चेति भावः ॥ **तत्समेति** ॥ अनित्यप्रमात्वसमनियतो यो धर्मो अनित्यज्ञानत्वं तद्घटितत्वादित्यर्थः।

भ्रमेपि धर्म्यंशे प्रमात्वेनानित्यप्रमात्वानित्यज्ञानत्वयोरन्योन्यं व्याप्यव्यापकभावादिति भावः। अत एव तत्समनियतधर्मघटितत्वदद्योतनायैव अनित्यप्रमात्वमिति पक्षनिर्देशमकृत्वाऽनित्ययथार्थज्ञानत्वमित्युक्तम्॥ **यदेवमिति** ॥ यद्यत्समनियतधर्मघटितं तत्तदनवच्छिन्नकार्यतानवच्छेदकमित्यर्थः ॥ **पृथुबध्नेति** ॥ पृथुबुध्नोदराकारघटत्वं नाम धर्मः। स्वसमनियतघटत्वधर्मघटितत्वात् तदनवच्छिन्नकार्यता पटादिनिष्ठा तदनवच्छेदक इत्यर्थः।

प्राचीनपक्षनिर्देश एव साध्यान्तरमाह ॥ **भ्रमावृत्तीति** ॥ भ्रमावृत्तिकार्यता प्रमादिनिष्ठा कार्यता तदनवच्छेदकमित्यर्थः। अनित्ययथार्थज्ञानत्वं तादृशज्ञाननिष्ठकार्यतानवच्छेदकमित्येव साध्यकरणे अनित्यज्ञानत्वे व्यभिचारः। तस्यात्ममनःसंयोगादिहेतुनिरूपितकार्यतावच्छेदकत्वात्। भ्रमवृत्तित्वाच्च। अतो भ्रमावृत्तीत्येवमुक्तिः। अनित्यज्ञानत्वस्य च तादृशघटादिनिष्ठकार्यतानवच्छेदकत्वान्न दोषः ॥ **न चैषामिति** ॥ त्रयाणामित्यर्थः। भ्रमेपीत्यनेनाद्यन्तयोरसिद्ध्युद्धारः ॥ **प्रमात्वस्येति** ॥ अनित्यप्रमात्वस्यानित्यज्ञानत्वघटितत्वादित्यर्थः।

यद्वा प्रमात्वस्य ज्ञानत्वघटितत्वेऽनित्यप्रमात्वस्यानित्यज्ञानत्वघटितत्वमर्थसिद्धमिति

प्रमात्वस्येत्येवोक्तम् ॥ **लघुन इति** ॥ प्रमात्वस्य विषयसत्वघटितत्वेन गुरुत्वमिति भावः।

## तर्कताण्डवम्

**ननु विभागस्याव्याप्यवृत्तित्वं स्वात्यन्ताभावसामानाधिकरण्यम्। अत्यन्ताभावस्या धिकरणविशेषसम्बन्धः स्वरूपानतिरिक्त इति न हेतुसापेक्ष इति चेत्तुल्यं प्रमात्वेपि। अनित्यप्रमात्वं दोषविरोधिवृत्तिधर्मावच्छिन्नकारणत्वप्रतियोगिककार्यतानवच्छेदकं दोषजन्यवृत्तित्वात्। भ्रमत्ववत्। दोषविरोधी गुणो दोषाभावश्चेति स्वतस्त्वसिद्धिः। अनित्यप्रमात्वं न कार्यतावच्छेदकम्। तथात्वे बाधकवत्त्वात्। घटज्ञानत्ववत्। न चासिद्धिः। अनुगतकारणाभावरूपस्य बाधकस्योक्तत्वात्।**

## न्यायदीपः

अनित्यप्रमात्वप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं भ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववदिति मण्युक्तस्य प्रत्यनुमानमाह ॥ **अनित्यप्रमात्वमिति** ॥ दोषः पित्तादिः। तद्विरोधिवृत्तिधर्मो गुणत्वादिरूपः। तदवच्छिन्नेत्यर्थः। दोषजन्यवृत्तित्वादिति हेतोरसिद्ध्युद्धारः प्राग्वत्।

ननूक्तानुमानेन दोषविरोधिनो गुणस्याहेतुत्वलाभेपि दोषाभावस्य हेतुत्वानिवारणात् ज्ञानहेत्वधिकजन्यत्वात् प्रमात्वस्य ज्ञानहेतुमात्रजन्यत्वक्षतिरित्यत आह ॥ **दोषविरोधीति** ॥ विरोधित्वं च सहानवस्थायित्वं वा तन्निश्चयप्रतिबन्धकनिश्चयविषयत्वं वोभयानुगतम्। प्रतिबन्धकत्वं च तदनुत्पादव्याप्यत्वमिति भावः।

अनित्यप्रमात्वं कार्यत्वच्छेदकं बाधकं विना कार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववदिति मण्युक्तस्य प्रत्यनुमानमाह ॥ **अनित्यप्रमात्वमिति** ॥ अत्र पूर्वत्र च सिद्धसाधनताव्युदासायानित्येति प्रमात्वविशेषणम् ॥ **तथात्वे** ॥ कार्यतावच्छेदकत्व इत्यर्थः ॥ **बाधकेति** ॥ स्वावच्छिन्नकार्यताप्रतियोगिकानुगतैककारणासम्भवरूपबाधकवत्त्वादित्यर्थः ॥ **घटेति** ॥ घटज्ञानमात्रे अनुगतकारणा-

भावाद्धटज्ञानत्वं नावच्छेदकमित्युपपादितमधस्तादिति भावः ।। **उक्तत्वादिति** ।। प्रमामात्रानुगत-गुणभङ्ग इत्यर्थः ।। **इति पक्ष इति** ।। विरोध्यनुमानमुच्यत इति योज्यम्।

विषयसत्वं गुण इति पक्षमुपेत्याह ।। **न विषयेति** ।। इन्द्रियसन्निकर्षो गुण इति पक्ष आह ।। **न षड्विधेति** ।। **अन्यतरेति** ।। अन्यतमेत्यर्थः। साधुत्वं पूर्वमुक्तं ध्येयम्। प्रागुपपादितमेव स्मारयति ।। **योगिप्रत्यक्षादेरिति** ।। सामान्यप्रत्यासत्तिजप्रत्यक्षमादिपदार्थः ।। **अन्यतरेणेति** ।। अन्य-तमेनेत्यर्थः। अनुमितिशाब्दप्रमयोरपि गुणजन्यत्वे क्रमेणानुमाने आह ।। **अनुमितीत्यादिना** ।। विव-क्षितार्थतत्वज्ञानं गुण इति मत आह ।। **विवक्षितेति** ।।

## तर्कताण्डवम्

**प्रत्यक्षादिप्रमासु प्रत्येकानुगता गुणा इति पक्षे अनित्य-प्रत्यक्षप्रमात्वं न विषयजन्यतावच्छेदकं, न षड्विधसन्निकर्षा-न्यतरजन्यतावच्छेदकं वा। तदजन्यवृत्तित्वात्। घटत्ववत्। न चासिद्धिः। योगिप्रत्यक्षादेर्विषयेण षड्विधसन्निकर्षान्तरेण चाजन्यत्वात्। अनुमितिप्रमात्वं सत्यलिङ्गपरामर्शत्वाव-च्छिन्नकारणताप्रतियोगिककार्यतानवच्छेदकं असत्यलिङ्ग-परामर्शजन्यवृत्तित्वात् भ्रमत्ववत्। शाब्दप्रमात्वं विवक्षिता-र्थतत्वज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतानवच्छेदकं विवक्षितार्थतत्वज्ञानाजन्यवृत्तित्वात् भ्रमत्ववत्।।**

**न च तर्ह्यावश्यकत्वाद्विषयसत्वमेव प्रमाप्रयोजकं न तु दोषाभावापेक्षेति वाच्यम्। शुक्तौ रूप्यभ्रमकाले शुक्तित्वादेः विषयस्य सत्वेपि दोषरूपप्रतिबन्धेन शुक्तित्वादिप्रमा-व्यतिरेकात्।।**

**अनित्यप्रत्यक्षप्रमात्वानुमितिप्रमात्वशाब्दप्रमात्वानि दोषविरोधिवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतान-वच्छेदकानि दोषजन्यवृत्तित्वात् भ्रमत्ववत्।**

**नचासिद्धिः। करादौ चरणादिभ्रमजन्ये पुरुषज्ञाने प्रमात्वस्य सत्त्वात्। यथार्थयोग्यताज्ञानं च नशाब्दप्रमाजनकम्। तद्व्यतिरेकापादनप्रयोजकापादनविषयव्यतिरेकाप्रतियोगित्वात्। पाकजगन्धे रसप्रागभाववत्॥**

**न चात्रासिद्धिः। उक्तरीत्या योग्यतायां स्वरूपतः सत्यामनन्वयनिश्चयविरहेणैव शाब्दप्रमोपपत्त्या यदि यथार्थयोग्यताज्ञानं न स्यात्तर्हि शाब्दी प्रमा न स्यादित्यापादनासम्भवात्।**

## न्यायदीपः

प्रत्येकमुक्त्वा मिलित्वापि दोषाभावस्याप्यहेतुत्वलाभायाह ॥ **प्रत्यक्षेति** ॥ **दोषविरोधीति** ॥ स च गुणो दोषाभावश्चेति स्वतस्त्वसिद्धिरिति भावः ॥ **असिद्धिरिति** ॥ उक्तहेतूनामित्यर्थः। अन्त्यहेतोर्धर्म्यंश इत्यादिपूर्वग्रन्थेनासिद्ध्युद्धारप्रकारस्य द्वितीयहेतोरपि संवादिशुकादिवाक्यजन्यज्ञाने भ्रान्तप्रकारकवाक्यजन्यज्ञाने च पूर्वोक्तदिशा सत्त्वेन सिद्धत्वादाद्यस्य तं व्यनक्ति ॥ **करेति** । नच शुकादिवाक्यजज्ञानेपि तादृशेश्वरज्ञानजन्यत्वसत्त्वादसिद्धिरेवेति शङ्क्यम्। तस्य भ्रमसाधारणोपादनादिगोचरज्ञानत्वेनैव जनकतयात्राभिमतस्य विवक्षितार्थतत्त्वज्ञानत्वादिना रूपेणाजनकत्वादित्युक्तत्वात्।

योग्यताज्ञानं गुण इति मत आह ॥ **यथार्थेति** ॥ योग्यता च वाक्यार्थरूपसंसर्गसत्त्वं वा प्रागुक्तदिशा तद्व्याप्यमन्यद्वेति भावः ॥ **तदिति** ॥ शाब्दप्रमाव्यतिरेकापादने प्रयोजकं निमित्तं यदापादनं तद्विषयेत्यर्थः। आपादनप्रकारश्चाग्रे व्यक्तः ॥ **पाकजेति** ॥ तत्र यदि रसप्रागभावो न स्यात्तदा गन्धो न स्यादिति नास्ति। रसप्रागभावस्य कारणतावादे मण्युक्तदिशा क्लृप्तकारणगन्धप्रागभावसाहित्यरूपान्यथासिद्धत्वेन गन्धव्यतिरेकापादनप्रयोजकव्यतिरेकाप्रतियोगित्वमत एव तदजनकत्वं चेति भावः ॥ **उक्तरीत्येति** ॥ प्रत्यक्षादावनुगतगुणभङ्ग उक्तरीत्येत्यर्थः।

## तर्कताण्डवम्

**यज्ञपतिमते अनित्यप्रमात्वं न स्वाश्रयमात्रवृत्तिधर्मा-**

**वच्छिन्ननानावृत्तिकार्यताश्रयमात्रवृत्ति। विषयमात्रोपाधिक-धर्मत्वात्। घटज्ञानत्ववत्।**

## न्यायदीपः

**॥ यज्ञपतीति ॥** तन्मते हि स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्तित्वमेव प्रमात्वस्य परतस्त्वमित्युपेत्याननुगतगुणजन्यत्वेनाप्येतत्सिध्यतीत्युक्त्वा अनित्यप्रमात्वं स्वाश्रयमात्रवृत्ति-धर्मावच्छिन्नकार्यताश्रयमात्रवृत्तीत्याद्यनुमानमुक्तम्। तत्प्रत्यनुमनमाह **॥ अनित्येति ॥** सिद्ध-साधनतानिरासायानित्येत्युक्तिः।

**॥ स्वेति ॥** स्वस्यानित्यप्रमात्वस्य आश्रयमात्रवर्ती धर्मः प्रत्यक्षत्वादिः तदवच्छिन्ना नानावृत्तिरनेकाश्रयवृत्तिश्च या कार्यता तदाश्रयमात्रवृत्ति न भवतीत्यर्थः। अत्राद्यं मात्रपदं अनित्य-प्रमात्वस्य स्वाधिकदेशवृत्तिनाऽनित्यज्ञानत्वेनावच्छिन्ननानावृत्तिकार्यताश्रय एव वर्तनाद् बाध-निरासाय। द्वितीयमपि तन्निरासायैव। अन्यथा अनित्यप्रमात्वस्य तादृशप्रत्यक्षत्वानुमितित्व-चाक्षुषत्वादिधर्मावच्छिन्नकार्यताश्रयवृत्तितया बाधापत्तेः। अत्रानित्यप्रमात्वस्य स्वाश्रयमात्रवृत्ति-प्रत्यक्षत्वादिधर्मसमानाधिकरणकार्यताश्रय एव सत्वेन तद्वृत्तित्वाभावेन साध्यपर्यवसाने बाधात्। जन्यप्रत्यक्षप्रमात्वादेः पराभिमतावच्छेदकत्वस्याभावेनैव साध्यपर्यवसानमिति भावः। स्वपदं समभिव्याहृतपरम्। तेन अप्रमात्वे व्यभिचारवारणाय विषयमात्रोपाधिकेति हेतौ विशेषणम्। अप्रमात्वस्याननुगतपित्तादिदोषजन्यतावच्छेदकधर्मावच्छिन्ननानावृत्तिकार्यताश्रयमात्रवृत्तित्वेन विपक्षत्वेपि भ्रमाविषयतदभावघटितत्वेन हेत्वभावात्। विषयोपाधिकेत्युक्तावप्युक्तदोषतादवस्थ्यात् मात्रेत्युक्तिः। विषयोपाधिकत्वे सति तदितरानुपाधिकत्वं हि तदर्थः। तत्र ज्ञानान्यतदितरा-नुपादिकेत्यर्थो ध्येयः। तेन च प्रमात्वस्य विषयेतरज्ञानोपाधिकत्वादसिद्धिः दृष्टान्ते साधनवैकल्यमिति शङ्कानवकाशः। विषयपदं च स्वविषयपरम्। तेन घटपटान्यतरत्वे ज्ञानविषयघटपटमात्रोपाधिकहेतु-मति स्वाश्रयमात्रवृत्तिघटत्वपटत्वावच्छिन्ननानावृत्तिकार्यताश्रय एव वर्तमाने साध्यभावाद्व्यभिचार इति शङ्कानवकाशः। यद्वा विषयतयोपाधित्वविवक्षाया अग्रे स्पष्टत्वात्स्वेति न देयम्। तावतोक्तस्थले व्यभिचारनिरासात्।

**॥ घटज्ञानत्ववदिति ॥** तत्र तद्व्याप्यस्य कार्यतावच्छेदकस्य कस्यचिदभावात् स्वाश्रयमात्र-वृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्तित्वाभावरूपसाध्यमस्ति। न च तत्रापि घटप्रत्यक्षत्वं घटानु-मितित्वमित्यादिरेव तद्व्याप्योस्तीति शङ्क्यम्। घटप्रत्यक्षत्वाद्यवच्छिन्नकार्यताप्रतियोगिकानुगतैक-

कारणाभावान्न घटप्रत्यक्षत्वादिकमवच्छेदकम्। अस्तु वावच्छेदकत्वम्। अथापीश्वरज्ञानसाधारणं घटज्ञानत्वं न तन्मात्रवृत्तीति भावः।

## तर्कताण्डवम्

**तत्तत्प्रागभावनिरूपितकार्यताश्रयत्वेन बाध इति शङ्का-निरासाय नानावृत्तीत्युक्तम्। नात्रासिद्धिः। प्रमात्वस्य विषय-मात्रोपाधिकत्वात्।**

**न च विषयजनितं ज्ञानं प्रत्यक्षमिति मते प्रत्यक्षज्ञानत्वे व्यभिचार इति वाच्यम्। विषयस्य विषयतयोपाधित्वस्य विवक्षितत्वात्। प्रत्यक्षज्ञानत्वे च तस्य जनकतयोपाधित्वात्। यथावस्थितार्थविषयकत्वरूपे प्रमात्वे तु तस्य विषयतयो-पाधित्वात्। अप्रमात्वोपाधिभूतं विषयान्यथात्वं तु नाप्रमाया विषय इति नाप्रमात्वे व्यभिचारः।**

**भ्रमे पित्तादिरिव प्रमायामनुगता एव गुणाहेतव इति मते। संशयोत्तरप्रमात्वं सत्यविशेषदर्शनत्वावच्छिन्नकारणता-प्रतियोगिककार्यतानवच्छेदकं असत्यविशेषदर्शनजन्य-वृत्तित्वात् ज्ञानत्ववत्। संशयोत्तरप्रमा विशेषप्रमाजन्या न। तां विनाप्युपपन्नत्वात् भ्रमवत्। अत्रासिद्धिः प्रागेवोद्धृता।**

## न्यायदीपः

ननु साध्ये परानुक्तं नानावृत्तीति कार्यताविशेषणमधिकं किमर्थमुपात्तमित्यत आह ।। **तत्तदिति** ।। तत्तत्प्रमाव्यक्तिप्रागभावनिरूपितकार्यतावच्छेदकं तत्तत्प्रमाव्यक्तित्वम्। तदवच्छिन्न-कार्यता च तत्तद्व्यक्तिमात्रनिष्ठा न तु व्यक्तिद्वयनिष्ठा। तथाच तादृशकार्यताश्रयमात्रवृत्तित्वेन तदभावसाधने बाधः स्यात्। नानावृत्तीत्युक्त्या तदन्यकार्यतैव लभ्यत इति तदाश्रयमात्रवृत्तित्वा-भावसाधने तु न बाध इति भावः।

**॥ इति मत इति ॥** विषयजन्यत्वं प्रत्यक्षलक्षणमिति मत इत्यर्थः **॥ प्रत्यक्षेति ॥** तत्र स्वव्याप्यचाक्षुषत्वरासनत्वादिधर्मावच्छिन्ननानाधिकरणनिष्ठकार्यताश्रयवृत्तित्वस्यैव भावेनविपक्षे विषयमात्रोपाधिकधर्मत्वसत्वादिति भावः। अप्रमात्वस्य साध्याभाववत्वेपि हेतोरेवाभावान्न व्यभिचार इत्याह **॥ अप्रमात्वेति ॥**

**॥ इति मत इति ॥** विरोध्यनुमानं स्वतस्त्वसाधकमुच्यत इति योज्यम्। संशयाद्युत्तरप्रमायां विशेषप्रमा गुण इति वादिनं प्रत्याह **॥ संशयेति ॥** एतच्च सिद्धसाधनतावारणाय विशेषणम्। संशयोत्तरप्रमाविशेषदर्शनजन्या नेत्येवोक्तौ ज्ञानवदिति दृष्टान्तोक्तौ च तत्र साध्यहीनता स्यादतस्तत्र प्रमात्वमित्युक्तिः।

**॥ सत्येति ॥** यथार्थेत्यर्थः। असत्यमयथार्थं यद्विशेषदर्शनं करादौ चरणादिभ्रमरूपं तज्जन्यसंशयोत्तरप्रमावृत्तित्वादित्यर्थः।

ननु संशयोत्तरप्रमायां न सर्वत्र विशेषप्रमाहेतुः। करादौ चरणादिभ्रमजन्यसंशयोत्तरप्रमादिभिन्नस्थल एवेत्यतस्तदनुरोधेनाप्यह **॥ संशयोत्तरप्रमेति ॥ तां विनापीति ॥** दोषाभावेप्युपपन्नत्वादित्यर्थः **॥ अत्रेति ॥** हेतुद्वय इत्यर्थः **॥ प्रागिति ॥** ‘‘करादौ चरणादिभ्रमजन्य’’ इत्यादिना ‘‘एवं भ्रमोत्तरप्रमायामपि’’ इत्यादिना च ग्रन्थेनानुगतगुणभङ्ग एवेत्यर्थः।

## तर्कताण्डवम्

**भूयोऽवयवेन्द्रियसन्निकर्षो न प्रमायामसाधारणकारणम्। भ्रमजनकत्वात्। मनःसंयोगवत्। प्रमा भ्रमसाधारणकारणातिरिक्तकारणाजन्या। भ्रमधर्मिकान्योन्याभावाप्रतियोगित्वात्। अनन्यथासिद्धतदन्वयव्यतिरेकानुविधानरहितत्वाच्च। भ्रमवत्। अत्र सर्वत्रापि हेतूच्छित्तिरेव बाधिकेति नाप्रयोजकतेति दिक्।**

**एतदप्युक्तम् ‘‘अन्यथेत्यादिना’’। उक्तसाध्यानि विना उक्तहेतूनां पक्षेऽवस्थित्ययोगादित्यर्थः।**

**उत्पत्तौ स्वतस्त्वेऽनुमानानि॥ १६॥**

## न्यायदीपः

भूयोऽवयवेन्द्रियसन्निकर्षो गुण इति पक्षनिरासकमनुमानमाह ।। **भूय इति** ।। अत्राप्यसिद्धिः, पीतः शङ्ख इत्यादिभ्रमजनकत्वाद्युक्त्या प्रागेवोद्धृतेति भावः।

प्रमा ज्ञानहेत्वतिरिक्तहेतुजन्येति प्रचीनानुमानस्य प्रत्यनुमानमाह ।। **प्रमेति** ।। अतिरिक्त-कारणपदेन गुणो दोषाभावश्चाभिमतः। भ्रमधर्मिकेत्यादिहेतोरप्यसिद्धिः। "भ्रमेपि धर्म्यंशप्रमायां" इत्यादिना प्रागेवोद्धृतेति भावः।

तार्किकमतेप्यत्यन्ताभावस्याव्याप्यवृत्तित्वेन भ्रमे प्रमात्वतदत्यन्ताभावयोरंशभेदेन सत्त्वेप्य-न्योन्याभावस्याव्याप्यवृत्तित्वाभावेन प्रमान्योन्याभावस्याव्याप्यवृत्तित्वाभावेन प्रमान्योन्याभावस्य भ्रमे सर्वथैवाभावादिति भावः ।। **अनन्यथेति** ।। अत्रापि गुणानां विरोधिदोषनिरासोपयोगस्योक्तत्वा-न्नासिद्धिरिति भावः।

।। **दिगिति** ।। प्रमा गुणजन्या न भवति प्रमात्वादीशप्रमावत्। प्रमा दोषविरोधिजन्या न भवति प्रमात्वा दीशप्रमावादित्यादिरूहनीय इति भावः।

उत्पत्तौ स्वतस्त्वेऽनुमानानि ।। १६ ।।

## अप्रामाण्यस्य परतस्त्वम्।

## तर्कताण्डवम्

**अप्रमायां त्वनन्यथासिद्धान्वयव्यतिरेकित्वाद् दोषः कारणम्। क्वचित् सादृश्यादिके दोषे सत्यपि भ्रमानुत्पत्ति-रसंसर्गाग्रहादिहेत्वन्तरवैकल्यादिति नान्वयव्यभिचारः। विसंवादिशुकादिवाक्येपि दोषस्योक्तत्वान्न व्यतिरेक-व्यभिचारोऽपि।**

**न च प्रमायां गुणः प्रतिबन्धकस्य दोषस्येवाप्रमायामपि दोषः प्रतिबन्धकस्य गुणस्य दोषाभावस्य वा निरासक इत्यन्यथासिद्ध इत्यप्रामाण्यमपि स्वतः स्यादिति वाच्यम्।**

**पीतः शङ्ख इत्यादिप्रत्यक्षे भूयोऽवयवेन्द्रियसन्निकर्षे शङ्खत्वादिविशेषदर्शनादिरूपे गन्धप्रागभावावच्छिन्नो घट इत्याद्यनुमाने सत्यपरमार्शरूपे घटोस्तीति वक्तव्ये पटोस्तीति वाक्यजन्यज्ञाने विवक्षितार्थतत्वज्ञानरूपे च गुणे सत्यपि पित्तबाधप्रमादरूपेण दोषेण भ्रमोत्पादनेन दोषस्य गुण-निरासोपक्षीणत्वायोगात्। स्वाभावनिरासोपक्षीणत्वेन अन्यथासिद्धौ च सहकारिमात्रापलापप्रसङ्गात्।**

## न्यायदीपः

ननु प्रमायां गुणस्येव भ्रमेप्यन्वयव्यतिरेकव्यभिचाराद् भ्रमविरोधिगुणनिरासादावुपक्षयेन अन्यथासिद्धेश्च दोषो न हेतुरिति सोपि स्वतः स्यादित्यतः ''परतोऽप्रामाण्यम्'' इति तत्त्वनिर्णयाद्युक्तमप्रामाण्यस्य परतस्त्वं साधयितुमुक्तदोषं निरस्यन् भ्रमे दोषस्य हेतुत्वमाह **॥ अप्रमायान्विति ॥** हेतोर्विशेष्यासिद्धिम् निराह **॥ क्वचिदिति ॥** ''कारणे सत्यपि कार्यानुत्पादस्य सामग्र्यभावेनोपपत्तेः'' इति तत्त्वनिर्णयटीकां हृदि कृत्वाह **॥ असंसर्गाग्रहादीति ॥** विशेषादर्शनादिरादिपदार्थः।

एतेन यादृच्छिकसंवादिन्यपि दोषस्य व्यभिचारो निरस्तः। तत्र विषयासत्वादिसहकारि-विरहात्। **॥ उक्तत्वादिति ॥** भूयोऽवयवेन्द्रियसन्निकर्षादिहेतुत्वभङ्गे ''तत्राप्यनित्यवाक्यदोषस्य विवक्षितार्थतत्त्वज्ञानाभावस्य'' चेत्यादिनोक्तत्वादित्यर्थः। अनन्यथासिद्धेत्यादिहेतोर्विशेषणा-सिद्धिमाशङ्क्य निराह **॥ न चेति ॥ प्रतिबन्धकस्येति ॥** प्रमाप्रतिबन्धकस्य दोषस्य यथा निरासकस्तथाऽप्रमाप्रतिबन्धकस्य गुणस्येत्यर्थः।

दोषस्यान्यथासिद्धिं वदता हि गुणस्य प्रतिबन्धकत्वमुपेत्य तदभावस्य भ्रमे कारणत्वं वा प्रमायां दोषाभावस्येव प्रयोजकत्वं वा वाच्यम्। आद्ये भ्रमस्य न स्वतस्त्वापत्तिः। द्वितीये किं गुणाभाव एव प्रयोजकोऽथोत्तेजकाभावविशिष्टगुणः प्रतिबन्धकः तदभावश्च प्रयोजक इति वा नाद्यः। व्यभिचारादिति भावेनाह **॥ पीतः शङ्ख इत्यादिना ॥ विशेषदर्शनादिरूप इति ॥** पीतत्वाद्यसंसर्गग्रह आदिपदार्थः। सप्तम्यन्तरूपपदानां गुणपदेनान्वयः।

ननु क्वचित् कश्चिद्गुण इत्यननुगतगुणपक्षे पीतःशङ्ख इत्यादौ विपरीतप्रत्यक्षादिरेव कश्चिदन्यो

गुणः। स तत्र नेति वदन्तं प्रत्याह ॥ **गन्धेति** ॥ यद्वा विशेषप्रमा गुण इति मते व्यभिचारोक्तिरियमित्युपेत्य प्रत्यक्षादिभ्रमत्रयेपि गुणाभावव्यभिचारोक्तिरियमिति बोध्यम्।

॥ **पित्तेति** ॥ प्रत्यक्षे पित्तं अनुमाने बाधः शाब्दे प्रमादो दोष इति विवेकः। दोषाभावस्य वा निरासक इत्येतन्निराह ॥ **स्वभावेति** ॥ **सहकारीति** ॥ दण्डचक्रादेरपि स्वाभावनिरासोपक्षयेण मृत्पिण्ड एक एव हेतुर्न त्वन्यः कश्चिदपीति स्यादित्यतिप्रसङ्ग इत्यर्थः।

## तर्कताण्डवम्

**ननु तथाप्यौत्सर्गिकस्याप्रामाण्यस्य क्वचिद् गुणः प्रतिबन्धकः। पीतः शङ्ख इत्यादौ तु विषयासत्वमुत्तेजकम्। त्वन्मते यादृच्छिकसंवादिलिङ्गाभासादौ प्रमाप्रतिबन्धकस्य दोषस्य विषयसत्त्वमिवेति चेन्न। अयथार्थधूमज्ञानेन ज्ञापनीयस्य वह्नेर्दैवात्सत्त्ववद्गुणेन ज्ञापनीयस्य श्वैत्यादेः शङ्खे सत्त्वेन विषयासत्त्वस्याभावात्। आरोप्यपीतत्वासत्त्वस्य च दोषापगमदशायामपि सत्त्वेन तदापि भ्रमापातात्।**

**अस्तु तर्हि पित्तादिदोष उत्तेजक इति चेत्तर्हि दोषाभावविशिष्टस्य गुणस्याभावो भ्रमे प्रयोजक इत्युक्तं स्यात्। ततो वरं दोष एव प्रयोजक इति लाघवात्। दाहे तु नोत्तेजक एव हेतुः। तस्मिन्नसत्यपि दाहदर्शनात्। भ्रमस्तु नासति दोषे दृष्टः।**

**किञ्च यादृच्छिकसंवादिलिङ्गशब्दाभासादिज्ञाने प्रतिबन्धके गुणे त्वन्नयेन विद्यमाने मन्नयेनाविद्यमाने चोत्तेजकस्य दोषस्य सत्त्वेनौत्सर्गिकमप्रामाण्यं स्यात्।**

## न्यायदीपः

द्वितीयकल्पेप्युत्तेजकं किं विषयासत्वमथ पित्तादिदोषः। आद्यमाशङ्कते ॥ **नन्विति** ॥ **औत्सर्गिकस्येति** ॥ कारणगतसहजशक्तिजन्यस्येत्यर्थः ॥ **क्वचिदिति** ॥ प्रमोत्पत्तिस्थल इत्यर्थः

॥ **उत्तेजकमिति** ॥ तथाच तदभावविशिष्टगुणाभावो प्रामाण्ये प्रयोजक इत्युक्तस्थलेषु तदभावादेव प्रमाया अभावे कारणगतसहजशक्त्यैवाप्रमोत्पादो न दोषरूपहेतुबलेन। दोषस्तु तत्रावर्जनीयसन्निधि-रेवेति भावः ॥ **त्वन्मत इति** ॥ "यादृच्छिकस्य विषयसत्त्वस्योत्तेजकत्वेन" इत्यादिना दोषाभाव-हेतुत्वभङ्गे तथोक्तेरिति भावः।

विषयासत्वमित्यत्र विषयपदेन गुणेन ज्ञाप्यो विषयो अभिमतः उत भ्रमविषय इति विकल्प्याद्यं निराह ॥ **अयथार्थेति** ॥ द्वितीयं निराह ॥ **आरोप्येति** ॥ **तदापीति** ॥ प्रतिबन्धकस्य गुणस्योत्तेजकयुक्तत्वेनोत्तेजकाभावविशिष्टगुणाभावस्य सत्वादिति भावः।

द्वितीयं शङ्कते ॥ **अस्त्विति** ॥ **पित्तादिरिति** ॥ काचकामलादिरादिपदार्थः ॥ **उत्तेजक इति** ॥ औत्सर्गिकाप्रामाण्यप्रतिबन्धकगुणस्येति योज्यम् ॥ **दोष एव प्रयोजक इतीति** ॥ ननु प्रमायां दोषाभाव इव दोषो भ्रमप्रयोजकश्चेदपि नाप्रामाण्यस्य स्वतस्त्वभञ्जक इति चेन्न। तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वरूपकुलालपितृसाधारणप्रयोजकत्वे लाघवतर्केणावश्यं प्राप्ते सति प्रतिबन्धकगुणनिरासोपक्षयाभावे चोक्तदिशा सिद्धे सति प्रागुक्तानन्यथासिद्धान्वय-व्यतिरेकहेतुबलेन कारणत्वमेव दोषस्य सिद्ध्यतीति तात्पर्यात्। अत एवोत्तरवाक्ये हेतुपदप्रयोगः।

॥ **दाहदर्शनादिति** ॥ मण्याद्यभावस्थल इति भावः। अस्तु भ्रमेप्येवमित्यत आह ॥ **भ्रमस्त्विति** ॥

दोषस्यान्वयव्यभिचारादुत्तेजकतया भ्रमहेतुत्वमयुक्तमिति भावेनाह ॥ **किञ्चेति** ॥ ईश्वरज्ञानस्य सल्लिङ्गपरामर्शरूपत्वेन यथार्थवाक्यार्थज्ञानत्वेन गुणत्वाङ्गीकारात्त्वन्नयेनेत्युक्तम्। भ्रमसाधारण्येन हेतुतया गुणत्वेनाहेतुत्वान्मन्नयेनाविद्यमान इत्युक्तम् ॥ **औत्सर्गिकं** ॥ ज्ञानजननशक्तिप्रयुक्तमित्यर्थः। सिद्धान्ते तु सत्यपि दोषे भ्रमरूपकार्यानुत्पादो हेत्वन्तरवैकल्यादित्युक्तत्वान्नान्वयव्यभिचार इति भावः।

## तर्कताण्डवम्

**ननूत्तेजकस्य दोषस्य विषयसत्त्वं प्रतिबन्धकमिति चेत्तर्हि विषयसत्त्वाभावविशिष्टो यो दोषस्तदभावविशिष्टस्य गुणस्याभावो भ्रमप्रयोजक इत्युक्तं स्यात्। स च दोषापेक्षया अतिगुरुः। तस्माद् भ्रमे अर्थस्यासत्त्वेन सन्निकर्षासम्भवेन**

तत्स्थानीयस्य दोषस्यावश्यकत्वात्। पित्तादिदोषोत्कर्षेण भ्रमोत्कर्षदर्शनात्। अनन्यथासिद्धान्वयव्यतिरेकित्वाच्च अप्रामायां दोषो हेतुरित्यप्रामाण्यं परत एव ।।

उक्तं हि भगवत्पादैः। ''परतोऽप्रामाण्यं'' इति। परतः अपवादात् न तु प्रामाण्यमिव स्वतः उत्सर्गत इत्यर्थः ।।

अप्रामाण्यपरतस्त्वम् ।। १७ ।।

## न्यायदीपः

नन्वेवं सत्यप्युत्तेजके कार्यानुत्पादो हेत्वन्तरवैकल्यनिमित्तकः विषयासत्त्वरूपहेत्वन्तरसापेक्ष-जन्यत्वात्तस्येति भावेन शङ्कते ।। **नन्विति** ।। **तस्मादिति** ।। दोषस्य गुणनिरासोपक्षयाभावादित्यर्थः। तावता कथं भ्रमहेतुत्वमित्यतो हेतुत्रयमाह ।। **भ्रम इत्यादिना** ।। **उक्तं हीति** ।। विष्णुतत्वनिर्णय इत्यर्थः।

अप्रामाण्यस्य परतस्त्वम् ।। १७ ।।

## करणप्रामाण्यस्य स्वतस्त्वम्

## तर्कताण्डवम्

करणगतस्य यथार्थज्ञानसाधनत्वरूपप्रामाण्यस्य तु ज्ञानजनकत्वग्राहकमात्रग्राह्यत्वरूपं ज्ञप्तौ स्वतस्त्वम्। अयथार्थज्ञानसाधनत्वरूपाप्रामाण्यस्य तु ज्ञानजनकत्व-ग्राहकमात्राग्राह्यत्वरूपं परतस्त्वम्। दोषादिज्ञानं विना भ्रमजनकत्वस्याज्ञानात् ।।

या तु पद्धतौ ''करणप्रामाण्यज्ञप्तिस्तु परत एव। इन्द्रियलिङ्गशब्दानां यथायथमनुमानप्रत्यक्षादिवेद्यत्वात्।

**यथार्थज्ञानसाधनत्वस्य त्वनुमानवेद्यत्वात्'' इत्युक्तिः सा करणग्राहकमात्रग्राह्यत्वरूपं स्वतस्त्वं नेत्यभिप्रेत्य॥**

**अत एव सुधायां ''करणानां तु ज्ञप्तौ स्वतस्त्वं नास्त्येव'' इत्यादिना पद्धत्युक्तं पक्षमुक्त्वा ''अथवा ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वम्'' इति पक्षान्तरमुक्तम्।**

## न्यायदीपः

नन्वस्त्वेवमुक्तदिशा ज्ञानप्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वमथापि स्वतः प्रमाणैराम्नायैरित्युक्तिरयुक्ता। तत्प्रमाण्यस्योत्पत्तौ स्वतस्त्वेपि ज्ञप्तौ पद्धत्युक्तदिशा तदभावादित्यत आह ॥ **करणेति** ॥ स्वतस्त्वस्य स्पष्टत्वाय यथार्थज्ञानसाधनत्वरूपेति प्रामाण्यं विशेषितम् ॥ **ज्ञानेति** ॥ ज्ञानजनकत्वग्राहकं च रूपादिज्ञानं करणसाध्यं कार्यत्वात् च्छिदादिकार्यवदित्याद्यनुमानं वा चक्षुरादि ज्ञानजनकमित्यादिवाक्यं वा तन्मात्रग्राह्यत्वरूपमित्यर्थः। ज्ञानजननशक्तेरेव प्रमाजननशक्तित्वादिति भावः।

''अप्रामाण्यं तथान्यत'' इत्यनुव्याख्याने ''परतोप्रामाण्यम्'' इति तत्वनिर्णये चोक्तेराह ॥ **अयथार्थेति** ॥ मात्रेत्युक्त्या सूचितमधिकं ग्राहकं व्यनक्ति ॥ **दोषादीति** ॥ करणगतकाचकामलासिद्ध्यव्याप्तिभ्रमप्रमादादिदोषाणामज्ञाने विसंवादाज्ञाने च भ्रमजनकत्वाज्ञानात्। पूर्वोक्तदिशा ज्ञानजनकशक्तेः सहजत्वेपि भ्रमजननशक्तेः काचादिकरणगतदोषाहितत्वेन ज्ञानजननशक्त्यप्रमाजननशक्त्योर्भेदेन ज्ञानजननशक्तिग्राहकमात्रेण भ्रमजननशक्तेर्ग्रहणायोगात्। दोषादिज्ञानानुविधानाच्च भ्रमजननशक्तिग्रहस्येति भावः।

स्वतस्त्वोक्तेः प्रमाणपद्धतिविरोधमाशङ्क्य तदभिप्रायमाह ॥ **या त्विति** ॥ **सुधायामिति** ॥ जिज्ञासाधिकरणे प्रत्यक्षवच्च प्रामाण्यमित्यत्रेत्यर्थः।

## तर्कताण्डवम्

**उत्पत्तौ स्वतस्त्वं तु करणगतायाः यथार्थज्ञानजननशक्तेः करणगता या करणहेत्वासादिता सहजा ज्ञानजननशक्तिः**

**तद्वत्सहजत्वं वा तदभिन्नत्वं वा। अप्रमाजननशक्तिस्तु न सहजा किन्तु दोषाहितेत्यप्रामाण्यं परत इति दिक्।**

**एतदप्युक्तम्। ''परतोऽप्रामाण्यम्'' इति। तस्मात् प्रामाण्यस्य स्वतस्त्वादपौरुषेयोऽपि वेदः प्रमाणमेव।**

**करणप्रामाण्यस्य स्वतस्त्वम्॥ १८॥**

**इति श्रीब्रह्मण्यतीर्थपूज्यपादाराधकेन व्यासयतिना विरचिते तर्कताण्डवे प्रामाण्यवादः समाप्तः।**

## न्यायदीपः

''करणानां च ज्ञानजननशक्त्यैव तद्याथार्थ्यजनकत्वं स्वतस्त्वम्'' इति सुधोक्तिं द्वेधा विवृण्वन्नाह ॥ **उत्पत्ताविति** ॥ करणगतस्य प्रामाण्यस्येत्यनुकर्षः। शक्तेरित्यस्य सहजत्वमित्यादिनान्वयः॥ **करणहेत्विति** ॥ एतच्च जन्यकरणाभिप्रायम् न त्वपौरुषेयवेदाभिप्रायम्। शक्तिभेदमुपेत्य तद्वत्सहजत्वमित्युक्तिः दोषेण प्रमाशक्तिप्रतिबन्धेपि ज्ञानशक्तेरप्रतिबन्धनिर्वाहार्था। शक्तेरेकत्वेपि विषयभेदेन प्रतिबन्धाप्रतिबन्धयोरुपपत्तेः।

सुधोक्तिस्वारस्यानुरोधेनाह॥ **तदभिन्नत्वं चेति** ॥ ''वाक्यगता हि दोषास्तस्य यथार्थज्ञान-जननशक्तिं प्रतिबध्य विपरीतज्ञानजननशक्तिमाविर्भावयन्ति'' इति तत्वनिर्णयटीकायां वाक्यपदं इन्द्रियादीनामौत्सर्गिकी शक्तिः प्रामाण्यजनने दोषापवादादित्यादिसुधानुरोधादुपलक्षण-मुपेत्याह ॥ **अप्रमेति** ॥ करणगतेत्यनुकर्षः ॥ **दोषाहितेति** ॥

ननु यदि प्रमाजननशक्तिः ज्ञानजनकत्वग्राहकमात्रग्राह्या तर्हि भ्रमजननशक्तिरपि तथा स्यात् दोषादिज्ञानानुविधानात् सा परग्राह्या चेत् प्रमाजननशक्तिरपि गुणदोषाभावज्ञानानुविधानात्तथैव स्यात्। अप्रमाजनकत्वशङ्कादिरूपविरोधिनिरासोपक्षीणं तच्चेत् दोषादिज्ञानानु विधानमपि तथा स्यात्। तथा यदि भ्रमजननशक्तिर्दोषाहिता तर्हि प्रमाजननशक्तिरपि गुणाहिता स्यात्। तस्याः सहजत्वे भ्रमजननशक्तिरपि तथा स्यात्। यदि दोषान्वयव्यतिरेकबलात् भ्रमजनकशक्तिर्दोषाधीना तर्हि गुणानुविधानात्प्रमाजननशक्तिरपि गुणाधीना स्यात्। गुणानां विरोधिदोषनिरासोपक्षयेणान्यथासिद्धौ

दोषाणामपि विरोधिगुणनिरासेनान्यथासिद्धेस्साम्यात्। गुणाभावसहकृतस्य करणस्य भ्रमजनकत्वेन करणाप्रामाण्यास्य परतस्त्वे दोषाभावसहकृतस्य प्रमाजनकत्वात्प्रमाजनकत्वाप्रमाजनकत्वं परत एवेति स्यात्। दोषाभावस्य प्रयोजकत्वमेव न प्रमाजननशक्त्याधायकत्वं तर्हि गुणाभावस्याप्येवमिति सममिति चेन्न। ज्ञानप्रामाण्याप्रामाण्यस्वतस्त्वपरतस्त्वयोरुक्तसाधककलापस्याशेषस्यापि करणप्रामाण्याप्रामाण्यस्वतस्त्वपरतस्त्वयोरनुसन्धेयत्वात्। अभ्यासदशास्थले गुणाद्यनुसन्धाना-भावेपि प्रमाजनकत्वज्ञानानुभवेन व्यभिचारात्। पीतः शङ्ख इत्यादिभ्रमे विशेषदर्शनादिरूपे गुणे सत्यपि पित्तादिकरणदोषेण भ्रमोत्पादनेन दोषस्य गुणनिरासोपक्षीणत्वायोगादित्यादेरुक्तत्वादिति भावेनाह ॥ **दिगिति** ॥

तथा ह्यनुमानानि। प्रमाजननशक्तिः ज्ञानजनकशक्तिग्राहकमात्रग्राह्या तदन्याग्राह्यत्वे सति ग्राह्यत्वात् सम्मतवत्। यथार्थज्ञानजनकत्वं ज्ञानजनकत्वहेत्वन्यहेत्वधीनं न ज्ञानजनकत्वाधिकरणमात्रवृत्तित्वात् ज्ञानजनकत्ववदित्यादिरूपेण ध्येयानि। भ्रमजनकेऽपि धर्म्यंशे प्रमाजनकत्वाभावान्नासिद्धिः। भ्रमजनकत्वे च यावज्ज्ञानजनकत्वाधिकरणे वृत्त्यभावान्न व्यभिचारः ॥ **अप्रामाण्यमितीति** ॥ करणगताप्रामाण्यमित्यर्थः। स्वतस्त्वोक्तेरुपयोगं वदन्नुपसंहरति ॥ **तस्मादिति** ॥ **अपौरुषेयोऽपीति** ॥ आप्तोक्तत्वादिगुणाभावेऽपीत्यर्थः।

करणप्रामाण्यस्य स्वतस्तवम् ॥ १८॥

इति श्रीराघवेन्द्रयतिविरचिते तर्कताण्डवव्याख्याने
न्यायदीपे प्रामाण्यवादः समाप्तः।

---

## तर्कताण्डवम्

### वेदापौरुषेयत्वे अनुमानानि

**ननु कथं वेदस्यापौरुषेयत्वम्। तत्र प्रमाणाभावात्। वाक्यत्वाद्यनुमानेन "च्छन्दांसि जज्ञिरे" इत्यादिश्रुत्या "प्रतिमन्वन्तरं चैषां श्रुतिरन्या विधीयते" इत्यादिस्मृत्या च पौरुषेयत्वसिद्धेश्चेति चेदुच्यते। ज्योतिष्टोमस्य स्वर्गसाधनत्वं वेदतात्पर्यविषयो वा पौरुषेयशब्देतरप्रमाणकः पौरुषेय-शब्दाप्रमाणकत्वे सति सप्रमाणकत्वात्। यद्यदप्रमाणकत्वे सति सप्रमाणकं तत्तदितरप्रमाणकम्। यथा संमतम्। वक्ष्यमाणरीत्या पक्षधर्मताबलादपौरुषेयशब्दसिद्धिः।**

### न्यायदीपः

एवं न विलक्षणत्वादस्येति नयसिद्धं स्वतः प्रमाणैरिति श्लोकोक्तं प्रामाण्यस्वतस्त्वं समर्थ्य अधुना विलक्षणादिति हेतोरपौरुषेयत्वरूपवैलक्षण्यवत्वादित्यर्थान्तरोपगमेन ब्रह्मसूत्राभिमतमादि-वर्जितैरिति श्लोकोक्तमपौरुषेयत्वं साधयितुं मणिकृदाद्युक्तमाशङ्कते ॥ **नन्विति** ॥ वाक्यत्वादीत्यादि-पदार्थव्यक्तिरग्रे परोक्तानुमानखण्डनप्रस्तावे ज्ञेया। मण्याद्युदाहृतश्रुतिस्मृती चाह ॥ **च्छन्दांसीति** ॥

"न चापौरुषेयं वाक्यमेव नास्तीति वाच्यम्। तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः" इति। विष्णुतत्त्वनिर्णयवाक्यसूचितानां धर्माधर्मस्वर्गनरकादिकं प्रमाणोपेतं वस्तुत्वादित्यादिना जिज्ञासाधिकरणसुधोक्तसामान्यपरिशेषनिष्कर्षभूतानामुक्त्या प्रमाणाभावादिति हेतुं तावन्निराह ॥ **ज्योतिष्टोमस्येति** ॥

विशिष्यैवं पक्षनिर्देशे तद् बोधकैकवाक्यस्यापौरुषेयत्वसिद्धिर्न तु सर्वस्यापि वेदस्येत्यतः सामान्यपक्षनिर्देशमाह ॥ **वेदेति** ॥ यद्वा "यः शब्दो वक्त्रा यदिच्छया प्रयुक्तः स तत्पर इति तदिच्छया वक्तृप्रयुक्तशब्दगोचरत्वमेव शब्दतात्पर्यविषयत्वमिति वेदगततात्पर्यपर्यालोचनया तस्य पौरुषेय-त्वम्" इति मणिकृदुक्तिखण्डनाय वेदतात्पर्यविषय इति सामान्यपक्षनिर्देशः। यद्वा अस्मिन्पक्षे सप्रमाणकत्वादिति हेतुर्वस्तुत्वादिहेतुना प्रसाध्याङ्गक इति भावेनाह ॥ **वेदेति** ॥ आपातप्रतिपाद्ये

बाधवारणाय ॥ **तात्पर्येति** ॥ लौकिकशब्दतात्पर्यविषये बाधवारणाय ॥ **वेदेति** ॥

ननु कोयं वेदो नाम (१) यदि वेदपदार्थो वेदस्तर्हि इतिहासपुराणतात्पर्यविषये बाधः। ''इतिहासपुराणः पञ्चमो वेदानां वेदः'' इति तयोरपि वेदपदार्थत्वात्। (२) नापि वेदशब्दमुख्यार्थो वेदः। मुख्यत्वप्रयोजकप्रवृत्तिनिमित्तस्येतिहासादिव्यावृत्तस्यानिरूपणात्। (३) नापि शाखासमुदायो वेदः। शाखायाः वेदैकदेशत्वेनान्योन्याश्रयात्। (४) नापि सन्दिग्धकर्तृकं वाक्यं वेदः। वादिप्रतिवादिनोर्निश्चयात्। मध्यस्थसन्देहेन पक्षतावच्छेदककरणे अन्योन्याश्रयात्। वादिप्रतिवाद्यनुमानान्तरभावित्वान्मध्यस्थसन्देहस्य। (५) नापि प्रमाणशब्दो वेद इति युक्तम्। भारतादौ गतत्वात्। (६) नापि यथार्थवाक्यार्थज्ञानाजन्यप्रमाणशब्दो वेद इति। परमतेऽप्रसिद्धेः। प्रमाणशब्दमात्रस्य तादृशेश्वरज्ञानजन्यत्वात्। (७) न च जन्ययथार्थवाक्यार्थज्ञानाजन्यप्रमाणशब्दो वेद इति युक्तम्। संवादिशुकबालदिवाक्येपि गतत्वेन बाधापत्तेः। सिद्धान्तिमते नित्यज्ञानव्यासप्रणीतभारतादावपि गतत्वाच्चेति चेत्।

उच्यते। ''(८) शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्ययथार्थवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्व'' मिति मण्युक्तरीत्या वा (१०) ''क्रमविशिष्टा वर्णा वेदः'' इति सुधोक्तदिशा वा (११) वक्ष्यमाणदिशा साक्षाद्धर्मादिबोधकशब्दो वेद इति वा (१२) प्रमाकरणामूलकत्वे सति प्रमाणशब्दो वेद इति वा (१३) पूर्वतन्त्रे विधिमन्त्राधिकरणे मन्त्रपदार्थोक्तरीत्या वेद इत्यभियुक्तप्रयोगविषयो वा वेद इति तन्निरुक्त्युपपत्तेः।

आद्ये सत्यन्तमात्रस्य वेदसमानार्थस्मृतौ गतत्वाद्विशेष्यम्। वेदार्थस्य शब्दतदुपजीव्यनुमान-विषयकत्वादसम्भववारणाय शब्दतदुपजीविप्रमाणातिरिक्तेत्युक्तिरिति। तात्पर्यं च तत्प्रमितिशेषत्व-मित्यग्रे व्यक्तम्। तद्विषयो ज्योतिष्टोमादिरित्यर्थः। साध्ये बाधवारणाय पौरुषेयेत्युक्तिः। स्वतन्त्रपुरुषपूर्वकशब्देत्यर्थः। पौरुषेयेतरेत्येवोक्तौ यत्किञ्चित्प्रत्यक्षादिरूपपौरुषेयेतरप्रमाणकत्वेनापि उपपत्तेः। पौरुषेयशब्दसिद्ध्याऽर्थान्तरवारणाय शब्दपदम्। पौरुषेयशब्दार्थे व्यभिचारनिरासाय हेतौ सत्यन्तम्। अप्रयोजकतानिरासाय विशेष्यम् ॥ **यथासम्मतमिति** ॥ श्रोत्राद्यप्रमाणकत्वे सति सप्रमाणकं रूपं श्रोत्रादीतरचक्षुःप्रमाणकमित्यर्थः।

ननु प्रत्यक्षादिप्रमाणकत्वेनापि साध्योपपत्त्यार्थान्तरमित्यत आह ॥ **वक्ष्यमाणेति** ॥ न चात्र हेतुत्रयेपि विशेषणासिद्धिरित्यादौ वक्ष्यमाणदिशा प्रत्यक्षानुमानावेद्ये पक्षे उक्तरूपसप्रमाणक-त्वाख्यहेतोः पक्षनिष्ठताया अपौरुषेयप्रमाणकत्वेन विना पर्यवसानाभावादिति भावः।

## तर्कताण्डवम्

**अपौरुषेयशब्दप्रमाणकत्वं वा साध्यम्। तत्र चेन्द्रिय-लिङ्गपौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वं हेतुः। पूर्ववत्सामान्यव्याप्तिः। अप्रसिद्धविशेषणता तु व्याप्तौ सत्यां न दोषः। त्वन्मते अभावसाध्यके व्यतिरेकिणि हेत्वभावेन साध्याभावरूपस्य भावस्य व्याप्तिग्रहरूपानुमितिकरणस्येव इहापि साध्यप्रसिद्धिं विनैव सामान्यव्याप्तिग्रहरूपस्य अनुमितिकरणस्य निष्पन्नत्वात्।**

**न च तन्निष्पत्तावपि विशेषणज्ञानरूपसहकारिविरहादनु-मितिरूपविशिष्टज्ञानानुत्पत्तिरितिवाच्यम्। मन्मते तस्य विशिष्टज्ञानाहेतुत्वात्। त्वन्मतेप्यभावसाध्यकव्यतिरेकिणी-वात्राप्यादौ साध्यविशेष्यिकाया एवानुमितेः सम्भवात्।**

## न्यायदीपः

ननु पक्षधर्मताबलादपि साध्यं सिध्यत् व्यापकतावच्छेदकधर्मप्रकारेणैव सिध्यति न त्वन्यथा। अतिप्रसङ्गादसामर्थ्याच्च। अन्यथा प्रामाण्याभावसाध्यकमण्युक्तव्यतिरेकिखण्डनायोगादिति वदन्तं प्रत्याह ॥ **अपौरुषेयेति** ॥

नन्वेवं प्रागुक्तहेतोरिन्द्रियलिङ्गविषये व्यभिचार इत्यत आह ॥ **तत्र चेति** ॥ उक्तरूपसाध्य इत्यर्थः। पूर्वत्रात्र च विशेषणासिद्धिनिरासाय पौरुषेयेत्युक्तिः। ''आश्रयसाध्यव्यधिकरणासिद्ध्यो न दूषणम्'' इत्यादिप्रमाणलक्षणं हृदि कृत्वाह ॥ **न दोष इति** ॥

सा किं साध्याज्ञाने तन्निरूपितव्याप्तिग्रहायोगाद्व्याप्तिज्ञानरूपकरणविघटकत्वेन दोष उत विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेनानुमितिरूपविशिष्टज्ञानानुत्पादकत्वेन। नाद्य इत्याह ॥ **त्वन्मत इति** ॥ अयं वह्नित्वेनानुभवो वह्नित्वप्रकारकत्वे सति वह्नित्वाभाववद्विशेष्यको न समर्थप्रवृत्तिजनकत्वादिति व्यतिरेकिणीत्यर्थः। उक्तमेतत्पूर्वं परतस्त्वे प्रामाण्यानुमित्यसम्भववादे।

द्वितीयमाशङ्क्य निराह ॥ **न चेति** ॥ **तस्येति** ॥ विशेषणज्ञानस्येत्यर्थः। उपपादयिष्यते चैतन्निर्वि-

कल्पकभङ्ग इति भावः। परमतेप्यनुमित्युत्पादप्रकारमाह ॥ **त्वन्मतेपीति** ॥ विशेषणज्ञानहेतुकत्व-मतेपीत्यर्थः ॥ **अभावसाध्यकेति** ॥ प्रागुक्तव्यतिरेकिणीत्यर्थः। मणिकृता ज्ञप्तिप्रामाण्यवादे "विशेषणज्ञानं विना कथं प्रामाण्यविशिष्टानुमितिरिति चेत्। प्रथमं न कथञ्चिज्ज्ञानेऽप्रामाण्यमित्यनु-मित्यनन्तरं तेनैव तत्रैव प्रामाण्यविशिष्टानुमितिः। अभावविशेष्यकप्रतीत्यनन्तरमभाववद्भूतलमिति ज्ञानवत्" इत्युक्तेरिति भावः।

## तर्कताण्डवम्

**यद्वा वेदत्वमपौरुषेयवृत्ति। तदितरावृत्तित्वे सति वृत्तिमत्वात्। यदेवं तदेवम्। यथा सम्मतम्।**

**न चात्र हेतुत्रयेपि विशेषणासिद्धिः। वेदार्थे धर्माधर्मा-दावस्मदादिप्रत्यक्षस्याप्रवृत्तेः। ईश्वरयोगिप्रत्यक्षयोश्च धर्मादिवद्वेदं विना असिद्धेः। धर्मादिकं कस्यचित्प्रत्यक्षं वस्तुत्वाद्घटवदित्यादावद्यापि धर्माद्यसिद्ध्यान्योन्याश्रयात्। ताभ्यामस्मदादीन् प्रति धर्माद्यसिद्धेश्च। इष्टापूर्तयोः प्रेक्षावत्-प्रवृत्त्यन्यथानुपपत्त्या फलवत्त्वमात्रानुमानेप्यस्य यागहोम-दानादेरिदं फलमित्यस्यातिसूक्ष्मस्य विशेषस्यानुमाना-योग्यत्वात्।**

**फलविशेषोद्देशेन ज्योतिष्टोमादिकर्मविशेषे बहूनां प्रेक्षावतां प्रवृत्तिस्तु चैत्यवन्दनादाविवोपपन्ना। तदुक्तं भगवत्पादैः - "तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः" इति।**

## न्यायदीपः

अप्रसिद्धिदोषहीनं प्रयोगान्तरमाह ॥ **यद्वा वेदत्वमिति** ॥ पक्षनिरुक्तिः पूर्ववत्साक्षाद्धर्मबोधक-शब्दत्वादिरूपेण ध्येया। साध्यस्य गगनादिवृत्तित्वे बाधादपौरुषेयशब्दवृत्तित्वेनैव पर्यवसानमिति भावः। हेतौ तदित्यपौरुषेयपरामर्शः। सत्यन्तमात्रस्यावृत्तिमद्गगनादौ व्यभिचारनिरासाय विशेष्यम्।

घटत्वादौ तन्निरासाय सत्यन्तम्। न च सिद्धान्ते-

"एकत्राप्यनवस्थस्य सर्वत्रावस्थितिः कथम्"

इत्यादिना वैशेषिकनयानुव्याख्याने गगनादेर्वृत्तिमत्वोक्तेर्विशेष्यं व्यर्थमिति शङ्क्यम्। असति शशशृङ्गादौ स्वमते व्यभिचारवारकत्वात्। वृत्तिमत्त्वं च समवायादिवृत्त्येति ज्ञेयम्। तेन जगदाधारताप्रयोजकसम्बन्धेनेदानीं वेदत्वमिदानीं घटत्वमित्यादिप्रतीत्या कालेपि वेदत्वादेर्वृत्तिमत्त्वेनार्थान्तरत्वं हेतौ विशेष्यवैयर्थ्यमिति च शङ्कानवकाशः।

॥ **यदेवमिति** ॥ यद्यदितरावृत्तित्वे सति वृत्तिमत् तत्तद्वृत्ति। यथा घटेतरावृत्तित्वे सति वृत्तिमद्घटत्वं घटवृत्तीत्यर्थः। आद्ये हेतौ विशेषणासिद्धिं न चेत्यादिना ग्रन्थेनोद्धरिष्यन् द्वितीयहेतावुपात्तस्य इन्द्रियलिङ्गाप्रमाणकत्वरूपाधिकविशेषणस्यासिद्धिं सुधोक्तविवरणेन तावदुद्धरन्निन्द्रियपदेनाभिमतं प्रत्यक्षं किमस्मदादिप्रत्यक्षमुतेश्वरयोगिप्रत्यक्षे? इति विकल्पौ मनसि निधाय आद्ये आह ॥ **वेदार्थ इति** ॥ तस्यैव विवरणं ॥ **धर्मेत्यादि** ॥ ज्योतिष्टोमादिर्धर्मः। श्येनयागादिरधर्मः। आदिपदेन स्वर्गनरकाद्यतीन्द्रियवेदैक-वेद्यार्थग्रहः। अन्त्य आह ॥ **ईश्वरेति** ॥ **असिद्धेरिति** ॥ ईश्वरप्रत्यक्षेण योगिप्रत्यक्षेण वा धर्मादिकं सिद्धमित्यस्यास्मदाद्यप्रत्यक्षत्वेन वेदेनैव तस्यावगन्तव्यत्वात् तथा च वेदेनेश्वरादिप्रत्यक्षं विज्ञाय तेन धर्मादिस्वरूपावगत्यपेक्षया "चोदनालक्षणोऽर्थो धर्मः" इति जैमिन्युक्तदिशा वेदेनैव तन्निर्णयोस्तु किं बकबन्धप्रयासेनेति प्रत्यक्षाविषयत्वं तस्येति भावः।

अस्तु तर्ह्यनुमानेन धर्मादिगोचरेश्वरादिप्रत्यक्षसिद्धिरित्यत आह ॥ **धर्मादिकमिति** ॥ प्रमेयत्वादिहेतुरादिपदार्थः ॥ **अद्यापीति** ॥ वेदेन विना धर्मादिसिद्धिर्नेति वदन्तं प्रति धर्मादिसाधकतयोपन्यस्तेश्वरादिप्रत्यक्षसाधकानुमानोपन्यासवेलायामपि। न केवलं पूर्वमित्यर्थः ॥ **अन्योन्येति** ॥ धर्मादिसिद्धौ तत्पक्षीकारेणेश्वरादिप्रत्यक्षसाधकानुमानसिद्धिः। अनुमानसिद्धौ च तत्सिद्धप्रत्यक्षेण धर्मादिसिद्धिरित्यन्योन्याश्रयादित्यर्थः।

अस्तु वा वेदानुमानाभ्यां धर्मादिगोचरेश्वरप्रत्यक्षसिद्धिः तथाप्यस्मदादेरनुष्ठानोपयोगिधर्मादिनिश्चयो नेश्वरयोगिप्रत्यक्षाभ्यां सिध्यतीति दोषान्तरं चाह ॥ **ताभ्यामिति** ॥ तथाचास्मदादिज्ञानोपायो वेद एवैष्टव्य इति किमीश्वरादिप्रत्यक्षोपन्यासेनेति भावः।

एवमिन्द्रियाप्रमाणकत्वरूपविशेषणं समर्थ्य लिङ्गाप्रमाणकत्वरूपविशेषणासिद्धिमुद्धरति ॥ **इष्टेति** ॥ इष्टं यागः, पूर्तं तटाकादि, "अन्येभ्योपि दृश्यते" इति दीर्घविधानादिष्टापूर्तयोरिति साधु ॥ **इत्यस्यापीति** ॥ तज्ज्ञानस्यैवानुष्ठानोपयोगित्वादिति भावः।

प्रवृत्तिविशेषेणविशेषसिद्धिरस्त्वित्यत आह ।। **फलविशेषेति** ।। स्वर्गादिरूपेत्यर्थः ।। **चैत्येति** ।। यथा वेदबाह्यानामनेकेषामधर्मे च फलाहेतौ धर्मत्वादिभ्रान्त्या प्रवृत्तिस्तथान्धपरम्परयोपपन्ना। न तु धर्मादिस्वरूपं निर्णाययतीत्यर्थः ।। **तदुक्तमिति** ।। अपौरुषेयवाक्यादन्येन प्रत्यक्षेणानुमानेन वा धर्मादिसिद्धिर्नेत्येतत् तत्त्वनिर्णये उक्तमित्यर्थः। तदभावे अपौरुषेयवाक्याभाव इत्यर्थः।

एवमिन्द्रियलिङ्गाप्रमाणकत्वरूपविशेषणसमर्थनपरग्रन्थेनैवाद्यसाध्ये अपौरुषेयशब्दसिद्धिर्हेतोः पक्षधर्मताबलादित्येतदप्युपपादितं ज्ञेयम्।

## तर्कताण्डवम्

**न च पौरुषेयवाक्येन तत्सिद्धिः। पुरुषेष्वज्ञानमिथ्याज्ञानविप्रलम्भप्रमादकरणापाटवादीनां सम्भावितत्वेन अनाश्वासात्।**

**तन्निवृत्त्यर्थमीश्वरस्य नित्यसार्वज्ञ्याद्यङ्गीकारे च तदर्थं धर्मबोधके शब्द एवापौरुषेयत्वमात्रं कल्प्यताम्। अर्थापत्तेरुत्सर्गतः साक्षादुपपादकविषयत्वात्। न तु परम्परयोपपादकं वक्तरि सार्वज्ञ्यादिकम्। अन्यथा वेदस्यासर्वज्ञ्यप्रणीतत्वमङ्गीकृत्याश्वासार्थं तस्य सर्वज्ञप्रणीतशब्दान्तरमूलत्वं कल्प्यं स्यात्।**

**तदुक्तं भगवत्पादैः ''अपौरुषेयवाक्याङ्गीकारेन किञ्चित् कल्प्यम्'' इति। साक्षाद्बोधके वाक्येऽपौरुषेयत्वमात्राङ्गीकार इत्यर्थः।**

## न्यायदीपः

यदप्याद्यद्वितीयहेत्वोः पौरुषेयशब्दाप्रमाणकत्वे सतीति विशेषणं यच्च तृतीयहेतावपौरुषेयेतरावृत्तित्वे सतीति विशेषणम् तदसिद्धं ''न च पौरुषेयवाक्येन तत्सिद्धिः। अज्ञानविप्रलम्भयोः प्राप्ते''रित्यादितत्त्वनिर्णयवाक्यार्थव्यक्तीकरणेनोद्धरति ।। **न चेत्यादिना** ।। **पौरुषेयेति** ।। ईश्वरकृतेत्यर्थः। तत्सिद्धिः धर्मादिनिश्चयः ।। **अज्ञानं** ।। विवक्षितार्थतत्वज्ञानाभावः। ज्ञात्वापि परप्रतारणं

विप्रलम्भः। घटोस्तीति वाच्ये पटोस्तीत्युक्तिः प्रमादः ॥ **तन्निवृत्त्यर्थमिति** ॥ पुरुषेषु सम्भाविताज्ञानादिदोषनिमित्तकानाश्वासाभावसिद्ध्यर्थमित्यर्थः ॥ **नित्येति** ॥ दोषजन्यत्वेन भ्रमत्वनिवृत्यर्थं। नित्येति सार्वज्ञ्यविशेषणम्। शब्द एवेत्यत्र सप्तम्यन्तं शब्दपदम्। को विशेष इत्यत उक्तं ॥ **मात्रमिति** ॥ तत्र तु सार्वज्ञ्यादिकं बह्वित्यग्रे व्यक्तम्।

विशेषान्तरं चाह ॥ **अर्थापत्तेरिति** ॥ धर्मादिनिश्चयरूपस्योपपादकप्रमाणेन विनानुपपद्यमानस्य अर्थापत्तिशब्दितस्य साक्षादुपपादकं हि धर्मादिप्रमापकशब्दे अपौरुषेयत्वम्। नित्यसार्वज्ञ्यादिकं तु तत्र धर्मादिनिश्चायकत्वोपपादकम्। अज्ञानादिदोषहीनपुरुषकृतत्वं तदुपपादकम्। तदुपपादकं च सार्वज्ञ्यमिति परम्परयोपपादकं बहु च तत्कल्प्यम्। तथाचाल्पत्वात्साक्षादुपपादकत्वात्तदेव कल्प्यमिति भावः।

ननु लोके क्वापि शब्देऽपौरुषेयत्वादृष्टेः परम्परा युक्तैवेत्यत आह ॥ **अन्यथेति** ॥ एवं साक्षादुपपादके सम्भवति शब्दत्वापौरुषेयत्वयोः सहदर्शनमात्रेण परम्पराश्रयण इत्यर्थः ॥ **अङ्गीकृत्येति** ॥ शब्दमात्रेऽसर्वज्ञप्रणीतत्वस्य लोके दर्शनादिति भावः ॥ **तदुक्तमिति** ॥ अपौरुषेयत्वमात्रकल्पनं लध्वित्येतत्तत्त्वनिर्णये उक्तमित्यर्थः।

यद्वाऽभ्युपेत्योक्तमपौरुषेयत्वमात्रं कल्प्यतामिति तदपि न कल्प्यमेवेत्येतत्सम्मत्युक्तिव्याजेनाह ॥ **तदुक्तमिति** ॥ **न किञ्चिदिति** ॥ अपौरुषेयत्वमपि वेदकर्तुरप्रसिद्धेरेव सिद्धमिति भावः।

वेदकर्तृपुरुषगतदोषहीनत्वोपपादकवक्तृसार्वज्ञ्यप्रतिपादकतया परम्परया धर्मादिबोधकापौरुषेयवाक्याङ्गीकार इति भ्रान्तिनिरासाय प्रकृतोपयोगितयार्थमाह ॥ **साक्षादिति** ॥ साक्षाद्धर्मादिबोधक इत्यर्थः।

## तर्कताण्डवम्

**किञ्चाप्रामाणिकानां सार्वज्ञ्याविप्रलम्भकत्वाप्रमादकरणपाटवोपदेष्टृत्वादीनां वेदे तत्कृतत्वस्य च कल्पनीयत्वे कल्पनागौरवं स्यात्।**

**न च सार्वज्ञ्ये नैवाविप्रलम्भादिसिद्धिः। सर्वज्ञेश्वरावतारेष्वपि बुद्धादिषु विप्रलम्भादिदर्शनात्। सर्वज्ञस्य शरीरेपि**

शरीरत्वकृतकरणापाटवादेरवर्जनीयत्वात्। ज्ञानिनामप्युपदेशवैमुख्यदर्शनात्। वेदे तत्कृतत्वप्रसिद्ध्यभावेन तस्यापि कल्प्यत्वात्। कार्यत्वाद्यनुमानेनेश्वरस्य सार्वज्ञ्यसिद्धिस्तु निरसिष्यते।

न च वेदादेव तस्य सार्वज्ञ्यादिसिद्धिः। वेदप्रामाण्यस्य ईश्वरसार्वज्ञ्यादिसिद्ध्यधीनत्वेनान्योन्याश्रयात्। अन्यथा बुद्धाद्यागमात्तस्यापि सार्वज्ञ्यादिकं सिद्ध्येत्। तदुक्तं भगवत्पादैः-

> ''अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोपि च।
> कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत्'' इति।

तस्मान्न विशेषणासिद्धिः।

## न्यायदीपः

एवं स्वपक्षे लाघवोपपादनेन पौरुषेयशब्दाप्रमाणकत्वादिरूपं अपौरुषेयेतरावृत्तित्वरूपं विशेषणं च समर्थ्य परपक्षे वक्ष्यमाणानुव्याख्यानोक्तगौरवोपपादनेन च समर्थयते ॥ **किञ्चेति** ॥ यद्वा न किञ्चित्कल्प्यमित्ययुक्तं अपौरुषेयत्वस्य कल्प्यत्वादित्यतोस्तु तावदेतावत् तथापि न तवेव बह्विति भावेनाह ॥ **किञ्चेति** ॥

ननु सार्वज्ञ्यादिकं नाप्रामाणिकं कार्यत्वाद्यनुमानेन सिद्धेः। सार्वज्ञ्येनैव च सर्वदोषहीनता सिध्यति। तथाहि। धर्मादिसाक्षात्कारवतो न रागादिदोषाः सम्भवन्ति। ''अविद्याक्षेत्रत्वमुत्तरेषाम्'' इति पतञ्जल्युक्त्या तेषामज्ञानमूलत्वात्। सर्वज्ञेऽज्ञानायोगात्। रागादिरहितस्य च तत्कार्यविप्रलम्भायोगात्। एवम्भूतमहानुभावस्य करणापाटवादेरनाशङ्क्यत्वात्। ज्ञानी सन्नज्ञलोकाय कुतो नोपदिशेत्। प्रसिद्धवेदे तदुपदेशकल्पनस्य लघुत्वाच्चेत्याशङ्क्य प्रत्याह ॥ **न चेत्यादिना निरसिष्यत** इत्यन्तेन। आदिपदेन अप्रमादादिकं उपदेष्टृत्वं वेदे तत्कृतत्वं च गृह्यते ॥ **शरीरेपीति** ॥ त्वन्मते सर्वज्ञस्येश्वरस्य नास्ति शरीरं उपदेशौपयिकतया शरीरेऽङ्गीकृतेऽपीत्यर्थः ॥ **ज्ञानिनामपीति** ॥ सिद्धानामित्यर्थः। व्यक्तमेतत्सर्वं तत्त्वनिर्णयटीकायाम्।

**॥ अन्योन्येति ॥** सिद्धे सार्वज्ञ्ये तत्प्रणीतत्वेन वदेप्रामाण्यसिद्धिः तत्सिद्धौ च तेन सार्वज्ञ्यसिद्धिरित्यर्थः।

**॥ तदुक्तमिति ॥** जिज्ञासाधिकरणानुव्याख्यान इत्यर्थः। तज्ज्ञानं धर्मादिप्रमितिः। तत्कृतत्वं तेन पुरुषेण कृतत्वम्। आदिपदात्करणपाटवादिग्रहः। ज्ञापकं निश्चायकं, धर्मादेरित्यर्थः। चो यत इत्यर्थे। तत् तस्मादित्यर्थः।

## तर्कताण्डवम्

**यद्वा ईश्वरज्ञानं न प्रमेति मते वेदः कालभेदेनानियतानुपूर्वीको न दोषामूलकत्वे सति प्रमामूलकत्वरहितत्वात् गगनवत्। प्रमेति मते दोषामूलकत्वे सति प्रमाकरणामूलकत्वं हेतुः।**

**यद्यप्यानुपूर्व्यगर्भितस्वरूपे गगने शश्वदेकप्रकारानुपूर्वीकत्वमपौरुषेयत्वं नास्ति। तथाप्यनियतानुपूर्वीराहित्यरूपं तदस्त्येव।**

**यद्यपीदमनित्याद्घटादेर्न व्यावृत्तम्। तथापि पौरुषेयवाक्याद् व्यावृत्तत्वात् परोक्तं यद्बुद्धिपूर्वकाबुद्धिपूर्वकवाक्यसाधारणं पौरुषेयत्वं तदभावरूपत्वाच्च न तद् व्यतिरेकसाधनेऽर्थान्तरम्।**

## न्यायदीपः

नियतैकप्रकारत्वमपौरुषेयत्वमिति सुधोक्तिमनुरुध्याह **॥ यद्वेति ॥** हेतोरसिद्धिनिरासायोक्तम् **॥ न प्रमेति ॥ मम इति ॥** गुणजन्यस्यैव प्रमात्वेनेश्वरज्ञानस्य तदजन्यत्वान्न प्रमेतिमत इत्यर्थः। सिद्धसाधनता-निरासाय साध्ये कालभेदेनेत्युक्तिः। पूर्वोत्तरकल्पभेदेनेत्यर्थः। नियतानुपूर्विक इत्युक्तावेकप्रकारानुपूर्वीकत्वस्य साध्यत्वप्राप्तौ दृष्टान्ते साध्यवैकल्येन परस्याप्रसिद्धेः परोक्तसाध्यनिरासलाभाय च नञ्द्वयम्।

''प्रत्यक्षादिप्रमाणं वा विप्रलम्भादिकं वाऽस्य मूलं नोपलभ्यत इति प्रसिद्धिविषयत्वं वेदत्वम्'' इति तत्वनिर्णयटीकायां प्रमाणपदं प्रमित्यर्थकमुपेत्य तदर्थमेव निष्कृष्य हेतुमाह ॥ **दोषेति** ॥ विप्रलम्भादिदोषेत्यर्थः। भ्रान्तिमूलकवाक्ये प्रमितिमूलकपुंवाक्ये च व्यभिचारवारणाय क्रमेण विशेषणविशेष्ययोरुक्तिः ॥ **प्रमेतीति** ॥ गुणाजन्यत्वेपि दोषाजन्यज्ञानत्वात्तद्वति तत्प्रकारकत्वाच्च। ज्ञानत्वस्य प्रमात्वभ्रमत्वान्यतरव्याप्यतया भ्रमत्वहीनस्य प्रमात्वाभावे ज्ञानत्वाभावप्रसङ्गाच्च प्रमेति मत इत्यर्थः।

इदानीं प्रमाणपदं प्रमितिकरणार्थमुपेत्याह ॥ **प्रमाकरणेति** ॥ परमते वेदस्येश्वरज्ञानमूलकत्वेपि तस्याजन्यतया करणाभावात्स्वयमकरणत्वाच्च नासिद्धिरिति भावः।

यद्यप्येतन्मतेपि पूर्वोक्तदिशा भ्रमसाधारणोपादानादिगोचरज्ञानत्वेनैवेश्वरज्ञानस्य सर्वत्र हेतुतया प्रमात्वेनाहेतुत्वात्प्राचीनहेतूक्तावपि नासिद्धिः। तथाप्यभ्युपेत्यवादेन वा प्रमात्वेन प्रमामूलकत्व-विवक्षायाः प्रागुनुक्तेर्वा हेत्वन्तरोक्तिः।

पर्यवसितसाध्ये साध्यवैकल्यमाशङ्क्य निराह ॥ **यद्यपीति** ॥ ननूक्तरूपहेतुद्वयस्य घटादावपि सतस्तत्रानित्यत्वेनेव पक्षेप्यनित्यत्वेनैव पर्यवसानसम्भवान्न शश्वदेकप्रकारानुपूर्वीकत्वरूपसाध्य-सिद्धिः स्यात्। विशेष्याभावमात्रेण विशिष्टाभावोपपत्तेरिति भावेनाशङ्क्य निराह ॥ **यद्यपीति** ॥ **पौरुषेयेति** ॥ तथाच पुंवाक्यव्यावृत्तत्वस्यानुपूर्वीगतानैयत्याभावनिमित्तत्वस्यैव वाच्यत्वात्। प्रकृतेपि पक्षे हेतुसत्त्वस्यानुपूर्वीयुक्ते तदभावेन पर्यवसाने बाधात्। तद्गतानैयत्याभावेनैव पर्यवसान-मिति भावः ॥ **परोक्तमिति** ॥ सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं पौरुषेयत्वमिति मण्युक्त-मित्यर्थः ॥ **बुद्धीति** ॥ चैत्रादिवाक्यं बुद्धिपूर्वकं शुकबालादिवाक्यं चाबुद्धिपूर्वकम्। तदुभयसाधारणं यन्नियतानुपूर्वीकत्वाभावरूपं तत्परोक्तमित्यर्थः।

## तर्कताण्डवम्

**यद्वा स्वप्रतिपाद्यगोचरज्ञानत्वावच्छिन्नकारणताप्रति-योगिककार्यतानाश्रय इति साध्यम्। तत्र भ्रमामूलकत्वे सति प्रमाकरणामूलकत्वं हेतुः। अपौरुषेयत्वपक्षेपि वेदस्य पदावलीगोचरज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यता-श्रयत्वात् तदभावसाधने बाधः। तन्निवृत्यर्थं स्वप्रतिपाद्ये-**

**त्युक्तम्। स्वप्रतिपाद्यज्ञानजन्य इत्येवोक्ते पदावलीगोचरमेवेश्वरनिष्ठं ज्ञानं वेदप्रतिपाद्यगोचरमपि भवतीति पुनरपि बाधः। तन्निवृत्त्यर्थं ज्ञानत्वावच्छिन्नेत्याद्युक्तम्।**

**इदमपि साध्यं परोक्तस्य प्रमाप्रमामूलकवाक्यसाधारणस्य पौरुषेयत्वस्याभावरूपम्। न च शुकबालादिवाक्ये परीत्या व्यभिचारः। तस्यापि पक्षतुल्यत्वात्।**

**यद्वा स्वप्रतिपाद्यगोचरयथार्थज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतानाश्रय इति साध्यम्। तत्र च प्रमाकरणामूलकत्वमात्रं हेतुः।**

**इदमपि साध्यं परोक्तस्य प्रमाणवाक्यमात्रासाधारणपौरुषेयत्वस्याभावरूपम्। विपक्षे सर्वसमयाभिमतधर्माद्यसिद्धेरुक्तत्वादनुकूलतर्काणां च वक्ष्यमाणत्वान्नाप्रयोजकता।**

## न्यायदीपः

वाक्यार्थगोचरज्ञानजन्यत्वं पौरुषेयत्वम् इति मते तदभावसाधकमनुमानमाह ।। **यद्वा स्वेति** ।। ईश्वरज्ञानं प्रमेति मत इति ज्ञेयम्। वेद इत्यनुकर्षः। स्वेन वेदेन प्रतिपाद्यो योर्थो धर्मादिः तद्गोचरं यज्ज्ञानं तत्त्वावच्छिन्नकारणतानिरूपिता या कार्यता तदनाश्रय इत्यर्थः। गगनमेव दृष्टान्त इति भावः।

साध्यगतविशेषणयोः कृत्यं व्यनक्ति ।। **अपौरुषेयत्वेति** ।। **वेदस्येति** ।। क्रमविशेषविशिष्टवर्णानां वेदत्वात्क्रमस्य च कृतकत्वात् कार्यताश्रयत्वमस्तीति भावः ।। **इत्युक्तमिति** ।। प्रतिपाद्येत्युक्तावपि पदावलीत्यादिशब्दप्रतिपाद्यत्वं पदावल्या अप्यस्तीत्युक्तदोषनिरासायैव स्वेत्यप्युक्तिरिति भावः।

नन्वत्राप्युक्तसाध्यवतो गगनघटादितोऽव्यावृत्तोयं हेतुस्तत्रैवोक्तरूपज्ञानाजन्यत्वेनैवोपपन्नः सन् शश्वदेकप्रकारानुपूर्वीकत्वरूपविवक्षितापौरुषेयत्वं साधयतीत्यर्थान्तरमित्यत आह ।। **इदमपीति** ।। **परोक्तस्येति** ।। चिरन्तनोक्तस्येत्यर्थः ।। **पौरुषेयत्वस्येति** ।। तथाच पौरुषेयवाक्यादुक्तरूपसाध्यहीनाद् व्यावृत्तोयं हेतुस्तादृशज्ञानाजन्यत्वरूपसाध्यमादाय पर्यवस्यन्नपि पराभिमतपौरुषेयत्वाभावरूपत्वात्तस्य नार्थान्तरम्। शश्वदेकप्रकारानुपूर्वीकत्वमिवेदमपि पारिभाषिकं किञ्चिदपौरुषेयत्व-

मिति भावः। एवमग्रेपि।॥ **परीत्येति** ॥ तन्मते वाक्यमात्रस्येश्वरज्ञानजन्यतयोक्तरूपसाध्याभावेपि तत्र हेतुसत्त्वादिति भावः ॥ **पक्षेति** ॥ तस्येशज्ञानजन्यत्वेपि घटादिसाधारणोपादानादिगोचर-ज्ञानत्वेनैव तज्जन्यतया स्वप्रतिपाद्यगोचरज्ञानत्वावच्छिन्नेत्यादिरूपसाध्यस्यापि सत्त्वेन तदभावा-सम्मतेरिति भावः।

''वेदाः शब्दजन्यवाक्यार्थगोचरयथार्थज्ञानजन्याः प्रमाणशब्दत्वात्'' इति मण्युक्तसाध्यस्य अभावसाधकमाह ॥ **यद्वा स्वेति** ॥ वेद इत्यनुकर्षोऽत्रापि ध्येयः। प्रागुक्तमेव साध्यपदकृत्यं ध्येयम्।

भ्रान्तवाक्ये उक्तरूपसाध्यस्यापि सत्वेन विशेष्यमात्रस्याव्यभिचाराद्दोषमूलकत्वविशेषणस्य व्यर्थत्वमुपेत्याह ॥ **तत्र चेति** ॥ निरुक्तसाध्य इत्यर्थः। पूर्ववदर्थान्तरताव्युदासायाह ॥ **इदमपीति** ॥ उक्तहेतूनामपौरुषेयत्वं विनाप्युपपत्तिमाशङ्क्याह ॥ **विपक्ष इति** ॥

## तर्कताण्डवम्

**एतेन वेदस्यानादित्वरूपमपौरुषेयत्वं बाधितं सिद्धान्त-विरुद्धश्च। क्रमविशेषविशिष्टानां वर्णानां वेदत्वान्नित्यानां सर्वगतानां च तेषां स्वतः क्रमस्यायोगेनाभिव्यक्तिगतस्यैव तस्य वक्तव्यत्वादभिव्यक्तेश्च जन्यत्वेन तद्गतस्य क्रमस्यापि जन्यत्वात् टीकायां ''क्रमस्य कृतकत्वेपि'' इत्युक्तेश्चेति निरस्तम्। क्रमस्य कृतकत्वेप्याधुनिकाध्यापकेन स्वबुद्धिस्थ-पूर्वपूर्वदिवसीयक्रमानुसारेणैवोत्तरदिवसेष्विव ईश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वपूर्वकल्पीय क्रमानुसारेणैवोत्तरो-त्तरकल्पेष्वपि वेदस्योच्चरितत्वेन स्वातन्त्र्याभावेनानियता-नुपूर्वीरहितत्वादिरूपोक्तत्रिविधापौरुषेयत्वे बाधाद्यभावात्।**

**उक्तश्च सुधायाम् ''नियतैकप्रकारत्वमपौरुषेयत्वम्'' इति। एतदप्युक्तं ''गौरवदोषेण'' इति। क्रमाकृतकत्वस्या-प्यपौरुषेयत्वप्रवेशे गौरवदोषेणेत्यर्थः।**

**यद्वा वेद आप्ताप्रणीतः प्रमाकरणामूलकत्वात्। गगनवत्**

**शुकादिवाक्यवद् वा। अत्र च पक्षतावच्छेदकं वेदत्वं प्रमाकरणामूलकत्वे सति प्रमाणशब्दत्वं न तु हेतुमात्रम्। प्रत्यक्षाभासादिमूलकशब्दाभासेऽति व्याप्तेः। येन पक्षतावच्छेदकस्यैव हेतुत्वे तत्समानाधिकरणसाध्यप्रतीतिरूपस्य अनुमानफलस्य व्याप्तिग्रहकाल एव सिद्धत्वादनुमानवैयर्थ्यमिति शङ्क्येत।**

## न्यायदीपः

॥ **एतेनेति** ॥ यद्वेश्वरज्ञानमित्यादिनोक्तपक्षत्रयेणेत्यर्थः। प्रतिज्ञातं द्वयमपि क्रमेण व्यनक्ति ॥ **क्रमेत्यादिना** ॥ **टीकायामिति** ॥ तत्वनिर्णयटीकायामित्यर्थः। एतेनेत्युक्तं व्यनक्ति ॥ **क्रमस्येति** ॥ **उक्तश्चेति** ॥ जिज्ञासानये "न मानमपि वेदानाम्" इत्यत्र। प्रकृतोपयोगितया अर्थमाह ॥ **क्रमाकृतकत्वस्येति** ॥

"वेदः आप्तप्रणीतः वेदत्वाद्व्यतिरेकेण लौकिकवाक्यवत्" इति परोक्तस्य प्रत्यनुमानमाह ॥ **यद्वा वेद इति** ॥ वाक्यार्थप्रमावत्वे सति विप्रलम्भादिदोषहीनो ह्याप्तः। तदप्रणीत इत्यर्थः। भ्रन्ताप्रणीतत्वेनार्थान्तरतानिरासायाप्तेत्युक्तिः ॥ **प्रमाकरणेति** ॥ परमते वेदस्येश्वरप्रमामूलकत्वेपि तत्करणमूलकत्वस्य नासिद्धिरिति भावः।

अन्तरङ्गदृष्टान्तमाह ॥ **शुकादीति** ॥ शुकबालादिवाक्यवदित्यर्थः। प्रणीतत्वस्योच्चारणघटितत्वेन वा वाक्यार्थप्रमात्वेन रूपेण आप्तप्रमामूलकत्वेन वा विवक्षितत्वाच्छुकादिवाक्येपीश्वरप्रणीतत्वं नेति न साध्यवैकल्यम्। परमतेपि तत्रेश्वरज्ञानस्य भ्रमसाधारण्येनैव हेतुत्वस्य प्रागुपपादनादिति भावः।

पक्षतावच्छेदकहेत्वोरैक्यमाशङ्क्य निराह ॥ **अत्र चेति** ॥ अकर्तृकत्वप्रसिद्धिमत्वं वेदत्वम्। अकर्तृकप्रसिद्धिमत्वं नाम प्रत्यक्षादिप्रमाणं वा विप्रलम्भादिकं वाऽस्य मूलं नोपलभ्यत इति प्रसिद्धिविषयत्वम्" इति तत्वनिर्णयटीकोक्तस्य निष्कृष्टार्थमाह ॥ **प्रमेति** ॥

ननु न हेतुमात्रमित्ययुक्तं तथात्वेपि दोषाभावात्किमधिकप्रवेशेनेत्यत आह ॥ **प्रत्यक्षेति** ॥ तथाच वेदपदेन शब्दाभासस्यापि पक्षतापत्तावंशे सिद्धसाधनता स्यादिति भावः। दोषान्तरञ्चाह ॥ **येनेति** ॥ तन्मात्रस्य पक्षताच्छेदकीकरणेनेत्यर्थः ॥ **तदिति** ॥ पक्षतावच्छेदकसमानाधिकरणं यत्साध्यं

तत्प्रतीतिरूपस्येत्यर्थः। यत्र प्रमाकरणमूलकत्वं तत्राप्ताप्रणीतत्वमिति गगनादौ व्याप्तिग्रहदशायामेव हेतुसामानाधिकरण्येन तत्साध्यज्ञानस्य जातत्वात्। हेतोरेव पक्षतावच्छेदकत्वेनानुमानफलस्य सिद्धत्वादित्यर्थः।

यद्यपि साध्यविशेष्यकप्रतीतेर्व्याप्तिग्रहणदशायां जातत्वेपि साध्यविशेषणकप्रतीतेरुद्देश्या-यास्त'दानीमभावेन नानुमानेवैयर्थ्यम्। तथाप्यतिशयाभावेन तादृशप्रतीतेरुद्देश्यत्वस्यैवायोगात् यत्प्रमाकरणामूलकत्ववत् तदाप्ताप्रणीतत्ववदित्यपि व्याप्तिग्रहसम्भवाच्चैवमुक्तमिति ज्ञेयम्।

## तर्कताण्डवम्

**यद्वा वेदानुपूर्वीनिष्ठादृष्टादिकारणता केनचिदवच्छिन्न-कारणतात्मकत्वात् दण्डगतकरणतावत्।**

**न च क्लृप्तमानुपूर्वीगतनियततत्तद्वर्णपदादिनिरूप्यत्वं विनान्यदवच्छेदकमस्ति। न चेश्वरविरचितत्वमेव तदव-च्छेदकम्। तस्य वेदानुपूर्वीमात्रसाधारण्येन सूक्तविशेष-जपादिना फलविशषानुपपत्तेरिति नियतानुपूर्वीकत्वरूपा-पौरुषेयत्वसिद्धिः।**

**अन्यथैतत्कल्पेऽनर्थहेतुभूताया अन्यादृश्या आनुपूर्व्याः कल्पान्तरे श्रेयःसाधनत्वम् एतत्कल्पेऽनर्थहेतोर्ज्योतिष्टोमा-द्यङ्गव्युत्क्रमस्य ब्रह्महत्यादेश्च कल्पान्तरे श्रेयःसाधनत्वम् एतत्कल्पे दाहकत्वादिस्वभावस्य वह्न्यादेः कल्पान्तरेष्व-दाहकत्वादिकं च कल्प्यं स्यात्। एतदप्युक्तम् ''गौरव-दोषेणे''ति।**

## न्यायदीपः

सामान्यपरिशेषाभ्यामप्यपौरुषेयत्वं साधयति॥ **यद्वा वेदेति**॥ आनुपूर्वी नाम वर्णानां क्रमविशेषः स च नित्यसर्वगतानां वर्णानामुच्चारणघटितो वा बुद्धिघटितो वा वाच्यः। न तु स्वतः। तथाच तादृशानुपूर्वी दृष्टरूपार्थज्ञानार्थापि नियमादृष्टार्था। जपेन चादृष्टार्था सर्ववादिसम्मतेत्यदृष्टजनिका

भवतीति तत्र विद्यमानादृष्टकारणतापक्ष इत्यर्थः। आदिपदेनार्थज्ञानकारणताग्रहः।

एवं सामान्यतः कारणतावच्छेदकसिद्धौ प्रसक्तमीश्वररचितत्वं निरसिष्यन् स्वाभिमतमवच्छेदकमाह ॥ **न च क्लृप्तमिति** ॥ पक्षान्तरं निराह ॥ **न चेश्वरेति** ॥ **सूक्तविशेषेति** ॥ पवमानसूक्तपुरुषसूक्तादिजपेन पठनादिना च श्रुतफलविशेषो न स्यादित्यर्थः। श्रूयते च फलविशेषः।

"यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत्।
जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि"।

इत्यादिना आनुपूर्वीगतेत्यादिनोक्तमेवावच्छेदकम्। न त्वीश्वररचितत्वमित्येतदेवानेकविपक्षबाधकोक्त्या द्रढयति ॥ **अन्यथेति** ॥ **एतदप्युक्तमिति** ॥ अन्यथेत्यादिनोक्तमित्यर्थः।

## तर्कताण्डवम्

**यद्वा प्रत्यक्षन्यायामूलमन्वादिस्मृतिः प्रमाणमूला प्रमाणभूतस्मृतित्वात्। न्यायमूलस्मृतिवत्। जन्या धर्मादिप्रमा करणजन्या जन्यज्ञानत्वात् सम्मतवत् धर्मादिकं प्रमाणोपेतं वस्तुत्वात् घटवदित्यादिनापौरुषेयवाक्यसिद्धिः।**

**धर्मादावुक्तरीत्या प्रत्यक्षानुमानप्रामाण्यस्य बाधितत्वादनन्तकल्पेषु भिन्नानन्तपौरुषेयवाक्याङ्गीकारे च गौरवात् कार्यत्वहेतोर्नित्यज्ञान इव कर्त्रैक्य इव चास्यापि सामान्यतो दृष्टस्यापौरुषेयवाक्ये तत्राप्यन्येषां सकर्तृकत्वप्रसिद्धेर्वेदे च तदभावाद्वेदापौरुषेयत्वे पर्यवसानात्। एतदप्युक्तं "गौरवदोषेण" इति।**

**वेदापौरुषेयत्वेऽनुमानानि ॥ १९ ॥**

## न्यायदीपः

रीत्यन्तरमाश्रित्य सामान्यपरिशेषाभ्यामपौरुषेयवाक्यसिद्धिं वदन् "धर्मादिकं प्रमाणोपेतं वस्तुत्वात्" इति सुधोक्तसमान्यानुमानमुपलक्षणं मत्वा त्रेधा सामान्यानुमानमाह ॥ **यद्वा प्रत्यक्षेति** ॥

प्रत्यक्षादिमूलान्तरेणार्थान्तरवारणाय प्रत्यक्षन्यायामूलेत्युक्तिः। प्रत्यक्षामूला न्यायामूला चेत्यर्थः। प्रत्यक्षतोऽर्थमुपलभ्य रचितस्मृतिः प्रत्यक्षमूला। यथा आद्यभारतपुराणादिरूपा। तस्याः सर्वज्ञव्यासप्रत्यक्षमूलत्वात्। युक्तिबलादर्थं विज्ञाय रचिता स्मृतिर्न्यायमूला। यथा अथातो धर्मजिज्ञासेत्यादिमीमांसासूत्रादिरूपा स्मृतिः। अतादृशी या स्मृतिरित्यर्थः।

न च न्यायमते वाक्यमात्रस्येश्वरनिष्ठप्रत्यक्षप्रमाजन्यत्वात्प्रत्यक्षामूलस्मृतिरप्रसिद्धेति वाच्यम्। वाक्यार्थप्रमात्वेन तज्जन्यत्वस्यैव तन्मूलत्वेनेहाभिप्रेतत्वात्।

प्रत्यक्षप्रमाकरणं वा प्रत्यक्षपदार्थो ध्येयः। नैय्यायिकानां न्याय एवातिविश्वासान्न्यायमूलस्मृतिवदित्युक्तम्। ईश्वरप्रमांशे बाधवारणाय जन्येति प्रमाविशेषणम्॥ **सम्मतवदिति**॥ चाक्षुषादिज्ञानवदित्यर्थः।

नन्वेतावता प्रमाणसामान्यसिद्धावपि कथमपौरुषेयवाक्यरूपप्रमाणविशेषसिद्धिरित्यतः परिशेषप्रमाणमाह॥ **धर्मादावुक्तरीत्येत्यादिना पर्यवसानादित्यन्तेन**॥ न चात्र हेतुत्रयेपि विशेषणासिद्धिरित्यादिग्रन्थेनोक्तरीत्येत्यर्थः॥ **एतदपीति**॥ अनन्तकल्पेष्वित्यादिनोक्तमपीत्यर्थः।

एवं प्रसक्तं प्रत्यक्षानुमानपुंवाक्यरूपपक्षत्रयं प्रतिक्षिप्य विवक्षितसाध्यपर्यवसनमाह॥ **कार्यत्वेति**॥ नित्यज्ञानादिसिद्धिप्रकारोऽग्रे कार्यत्वादिहेतुभङ्गे व्यक्तः।

वेदापौरुषेयत्वेऽनुमानानि॥ १९॥

## तर्कताण्डवम्

## अपौरुषेयत्वे अनुकूलतर्कः।

**नचोक्तहेतूनामप्रयोजकता। यदि वेदः पौरुषेयः स्यात् तर्हि-**

**"यतस्ता हरिणा दृष्टाः श्रुता एवाखिलैर्जनैः।**
**श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः।**

**इत्यादिस्मृतिष्वीश्वरेणापि दृष्टत्वस्यैवोक्तिर्न स्यात्। वेदाध्येतृणां तत्र कर्तृविशेषस्मृतिश्च स्यात्। मुक्तकश्लोकादौ**

**तन्नियमाभावेप्यनेककर्तृकाविच्छिन्नाध्ययनधारणादिमत्युरुतर-प्रबन्धात्मके भारतादौ तन्नियमात्। एतेन कर्तृस्मरणस्या-विध्यर्थत्वादिति निरस्तम्।**

**वेदे प्रतिकल्पमनियतान्यनेकानुपूर्व्याणि तेषां यथावद-ध्ययनानि चाभ्युदयकारणानि, अन्यथाध्ययनानि च वाग्वज्रतयानर्थकारणानि, अभ्युदयादीनि च विजातीय-कारणजन्यत्वात्तार्णाद्यग्निवद्विजातीयानीति कल्प्यत्वात् कल्पनागौरवं च स्यात्। अन्यथेश्वर एकस्मिन्नेव कल्प एकस्मा एकयानुपूर्व्या विशिष्टवेदमुपदिश्यान्यस्मा अन्ययानुपूर्व्या विशिष्ट मुपदिशतीति स्यात्। एककल्पीयायाः पूर्वस्या आनुपूर्व्या अपि स्मरणान्न तत्त्याग इति चेत्तत्किमीश्वरः कल्पान्तरीयां पूर्वामानुपूर्वीं व्यस्मार्षीत्।**

**धर्मादिसिद्धिश्च न स्यात्। प्रकारान्तरेण तदसिद्धे-रुक्तत्वात्। वेदस्य पौरुषेयत्वे ईश्वरस्य बुद्धजिनादिना वेदस्य च बुद्धाद्यागमादिना तुल्यताया अपरिहार्यत्वेन वेदप्रामाण्यं च न स्यात्।**

## न्यायदीपः

पौरुषेयत्वरूपविपक्षे बाधकानि विवक्षुस्तत्त्वनिर्णयोदाहृतब्रह्माण्डस्मृतौ दृष्टत्वोक्तिविरोधं तावदाह ॥ **यदीत्यादिना** ॥ **पौरुषेय इति** ॥ स्वतन्त्रपुरुषेणेश्वरेण प्रणीतो यदीत्यर्थः। श्रुता एव न तु कृता इत्यर्थः। दृष्टा एवेत्यप्येवकारान्वयमुपेत्याह ॥ **दृष्टत्वस्यैवेति** ॥ "वेदकर्तुरप्रसिद्धेः" इति तत्त्वनिर्णयवाक्यसूचितं बाधकमाह ॥ **वेदेति** ॥ यदीत्याद्यापादकानुवृत्तिः सर्वत्र ज्ञेया।

मुक्तकश्लोका नाम तत्र तत्र नानाग्रन्थस्थाः ततस्तत उद्धृता इति वा, प्रबन्धेष्वनिबद्धा एव तेन तेन पुरुषेण कृताः सुभाषितश्लोका इत्याहुः।

॥ **अनेकेति** ॥ अनेककर्तृकं यदविच्छिन्नमध्ययनं यच्च तादृशं धारणं अविस्मरणेनानुसन्धानं

आदिपदोक्तप्रवचनादिकं तद्वतीत्यर्थः। तथाचाल्पप्रबन्धे तदभावेपि भारतादाविवोक्तविशेषणवत्युरुतरप्रबन्धे वेदे स्यादेव कर्तृस्मृतिरध्यापकानाम्। न च सास्तीति भावः।

एतेन गूढकर्तृकवाक्ये सत्यपि पौरुषेयत्वे कर्तृस्मृतिर्नेति व्यभिचार इति प्रत्युक्तम्। उक्तविशेषणवत्युत्तरप्रबन्धे तस्यावश्यकत्वादिति।

एतेन "कपिलकणादगौतमैस्तच्छिष्यैश्चाद्य पर्यन्तं वेदे सकर्तृकत्वस्मृतिरस्ति" इति मणिकुसुमाञ्जल्यादावुक्तं निरस्तम्। अध्यापकानां स्मृतेरसिद्धेः।

यत्तु सुधायां "किञ्चेश्वरः सर्गादौ यं वेदं निर्मायैकस्मै शिष्यायोपादिशति तमेवान्यस्मा उपदिशति वेदान्तरं वा" इत्यादिनोक्तं तदपि बाधकं स्पष्टं विवृण्वन्नाह ॥ **वेद इत्यादिना** ॥ आनुपूर्व्याणीत्यस्य कारणान्यनर्थकारणानीत्यनयोश्च इति कल्प्यत्वादित्यनेन प्रत्येकमन्वयः ॥ **यथावदिति** ॥ तस्मिंस्तस्मिन्कल्प इत्यर्थः ॥ **वाग्वज्रतयेति** ॥ वाग्रूपवज्रतयेत्यर्थः।

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्"। इत्यादेरिति भावः

॥ **अभ्युदयादीनि चेति** ॥ प्रतिकल्पं जायमानानि स्वर्गादीनीत्यर्थः ॥ **विजातीयेति** ॥ भिन्नभिन्नानुपूर्वीरूपत्वाद्विजातीयकारणेत्यर्थः ॥ **तार्णेति** ॥ तृणजन्याग्नावरणिजन्याग्नितो वैजात्यम् आरणेयाग्नौ च तार्णाद्यग्नितो वैजात्यं यथा त्वन्मते तथेत्यर्थः। एतच्चाग्रे तृणादीनामेकशक्तिसाधनवादे द्वितीयपरिच्छेदे व्यक्तम्।

ननूक्तकल्पनाचतुष्टयमपि न दोषायेत्यतः प्रागुक्तापाद्यस्यानिष्टत्वद्योतनाय विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ उक्तकल्पनाचतुष्टयस्य गौरवतया दोषत्वानभ्युपगम इत्यर्थः ॥ **इति स्यादिति** ॥ गौरवस्य तवादोषत्वादिति भावः। वैलक्षण्यमाशङ्क्य समं प्रकृतेपीति भावेनाह ॥ **एकेत्यादिना** ॥

"न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित्।"

इत्यनुभाष्याद्युक्तबाधकञ्चाह ॥ **धर्मादीति** ॥ यदि वेदः पौरुषेयः स्यादित्यनुवृत्तिः ॥ **उक्तत्वादिति** ॥ न च हेतुत्रयेपि विशेषणासिद्धिरित्यादिग्रन्थेनेत्यर्थः। अन्यत्रादृष्टस्य सर्वज्ञत्वस्य कल्पनमित्यत्र तत्त्वनिर्णयटीकायां तर्हि जिनादावपि तत् स्यादित्यापादितं साम्यमीश्वरवादेपि सममिति भावेनाह ॥ **वेदस्य पौरुषेयत्व इति** ॥ ईश्वरकृतत्व इत्यर्थः ॥ **बुद्धजिनादिनेति** ॥ ईश्वरसार्वज्ञ्यवद् बुद्धादावपि तद्भावस्यापादनसम्भवादिति भावः।

## तर्कताण्डवम्

न च बौद्धागमाद्वेदे महाजनपरिग्रहो विशेषः। महत्त्वस्य पूज्यत्वरूपत्वे वेदपरिग्रहीतॄणां पूज्यत्वस्याद्याप्यसिद्धेः। सङ्ख्याधिक्यरूपत्वे सन्धिग्धासिद्धेः। तुरुष्कागमादौ व्यभिचाराच्च। सप्तघटिकाभ्यन्तरभोजनादिरूपजीविकादि-हेतुदर्शनशून्यत्वरूपत्वे वैदिकेष्वपि केषुचिज्जीविकादि हेतोर्दर्शनात्। बौद्धादिष्वपि केषुचित्तददर्शनाच्च।

नापि सर्वसम्मतवैद्यशास्त्रपरिगृहीतार्थकत्वं महाजन-परिगृहीतत्वम्, वैद्यशास्त्रे रोगशान्त्यर्थं वैदिककर्मविशेष-विधानादिति वाच्यम्। बौद्धानुसारिवैद्यशास्त्रे तच्छान्त्यर्थं बौद्धागमोक्तकर्मणोऽपि विधानात्।

नापि सर्वसम्मतव्याकरणपरिपालनीयत्वम्। जैन-व्याकरणपरिपालनीयत्वस्य जैनागमेऽपि सत्त्वात्। न च सर्व-दर्शनानुमतार्थकत्वम् वेदोक्तसत्यभाषणादीनां धर्मत्वस्य सर्वदर्शनानुमतत्वादिति वाच्यम्। बौद्धोक्ताहिंसाधर्मत्वस्यापि सर्वैः स्वीकारात्। साङ्ख्यैर्वैदिकहिंसाया अधर्मत्वस्वीकाराच्च।

न च मन्त्रायुर्वेदादौ संवादित्वम्। एकदेशसंवादित्वस्य बौद्धोक्ताग्निस्तम्भादिकर्मस्वपि दर्शनात्। विसंवादाभावस्य च वेदेऽप्यभावात्।

तस्मादपौरुषेयवेदपरिग्रहादेव वैदिकानां पूज्यत्वम्। न तु तत्परिग्रहाद्वेदस्य प्रामाण्यम्। एतदप्युक्तं ''गौरवदोषेण'' इति। बुद्धाद्यागमतुल्यत्वेन विपरीतलक्षणया लाघवदोषेण इत्यर्थः। तस्मात्पौरुषेयत्वे वेदस्य बौद्धागमतौल्यमेवेति सुस्थ एवानुकूलतर्कः॥

## न्यायदीपः

"वेदस्य प्रामाण्यं महाजनपरिग्रहादवधार्यते" इति मण्युक्तमाशङ्क्य निराह **॥ न चेति ॥** "अपौरुषेयत्वाद्वेदस्य" इत्येतद्व्याख्यावसरे तत्त्वनिर्णयटीकोक्तखण्डनरीतिमनुसृत्य महत्त्वं विकल्प्य निराह **॥ महत्वस्येति ॥**

**॥ अद्यापीति ॥** पौरुषेयतया वेदप्रामाण्यविवादवेलायमेव न किन्तु महाजनपरिग्रहात् प्रामाण्य-मित्युक्तिदशायामपीत्यर्थः **॥ सन्दिग्धेति ॥** बौद्धेषु वा वैदिकेषु वा सङ्ख्याप्रकर्षस्यानिर्णयादिति भावः।

यत्तु कुसमाञ्जलौ द्वितीयपरिच्छेदे "हेतुदर्शनशून्यैर्ग्रहणाध्ययनधारणार्थानुष्ठानादिरेव महाजन-परिग्रहः" इत्युक्त्वा सप्तघटिकान्तभोजनादिरूपजीविकारूपो हेतुर्बौद्धेष्वस्ति न वैदिकेष्वित्युक्तम् तदाशङ्क्य निराह **॥ सप्तेति ॥** सप्तघटिकाभ्यन्तरे सप्तघटिकामध्ये प्रातः काले भोजनाभ्यञ्जनादि-रूपजीविकाहेतुर्येषु न दृश्यते ते महान्त इत्यर्थः। जीविकादीत्यादिपदेन रागकुहकवञ्चनादि-रूपकुसुमाञ्जल्युक्तहेत्वन्तरग्रहः **॥ दर्शनादिति ॥** तथाच भागसिद्धिरिति भावः। व्यभिचारश्चाह **॥ बौद्धेति ॥**

महत्वं निरस्य तत्परिगृहीतत्वं विकल्प्य निराह **॥ नापीति ॥** वैद्यशास्त्रपरिगृहीतार्थकत्वं व्यनक्ति **॥ वैद्यशास्त्र इति ॥** धान्वन्तरमन्त्रैरयुतहोमजपादिरूपवैदिककर्मेत्यर्थः **॥ बौद्धागमोक्तेति ॥** ज्वरादिशान्त्यर्थं बुद्धार्चनादिकर्मण इत्यर्थः **॥ जैनेति ॥**

"इन्द्रश्चन्द्रः काशकृत्स्नः पिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥"

इति कविकल्पद्रुमोक्तेस्तस्यापि व्याकरणकर्तृत्वप्रसिद्धेरिति भावः। व्यभिचारासिद्धी क्रमेणाह **॥ बौद्धेति ॥ साङ्ख्यैरिति ॥ एतदपीति ॥** बौद्धाद्यागमसाम्यमित्येतदपीत्यर्थः। लाघवदोषेण अप्रयोजकतापत्तिरूपदोषेणेत्यर्थः। तत्र हेतुः बौद्धाद्यागमतुल्यत्वेनेति।

## तर्कताण्डवम्

**किञ्च "वाचा विरूपनित्यया" "श्रुतिर्वा व नित्या अनित्या वा व स्मृतयो याश्चान्या वाचः" इत्यादिश्रुत्या,**

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।"

"नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः"

इत्यादिस्मृत्या च विरोधः।

न चेदं वाक्यं श्रुतीनां बहुकालीनत्वादुपचरितार्थम्। वा वेत्यवधारणात्। तादृशीनामपि स्मृतीनामनित्यत्वोक्तेश्च। स्मृतौ वाक्यशेषे-

"सर्गेसर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च।
तत्क्रमेणैव तैर्वर्णैः तैः स्वरैरेव नान्यथा"

इति क्रमाद्यव्यत्यासोक्तेश्च।

"तदुत्पत्तिवचश्चैव भवेद् व्यक्तिमपेक्ष्य तु"

इति वेदोत्पत्तिवाक्यगतिकीर्तनाच्च।

"विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः।
अनादिनित्या सा तच्च विना तां न स गम्यते"

इति श्रुत्यन्तरस्थाऽनादिनित्यशब्दयोर्ब्रह्मणि मुख्यवृत्तिः वेदे त्वमुख्येति वृत्तिद्वयापाताच्च।

"यावद्ब्रह्म विष्ठितं तावती वाक्"

इति श्रुत्यन्तरे ब्रह्मतुल्यत्वेन सर्वदेशकालव्याप्ततयावस्थित्युक्तेश्च। एतदप्युक्तं "गौरवदोषेण" इति। श्रुत्यादिविरुद्धक्रमवैजात्यरूपगौरवेणेत्यर्थः।

अपौरुषेयत्वे अनुकूलतर्कः ॥२०॥

### न्यायदीपः

वेदस्य पौरुषेयत्वे तत्त्वनिर्णयाद्युक्तश्रुत्यादिविरोधं च बाधकमाह ॥ **किञ्चेति** ॥

"तस्मै नूनमभिद्यवे वाचा विरूपनित्यया। वृष्णे चोदस्व सुष्टुतिं"

इति मन्त्रस्यायमर्थः। अभितो द्यौः प्रकाशो यस्यासावभिद्युः तस्मा अभिद्यवे वृष्णे वर्षित्रे नूनं निश्चितम् हे विरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनां स्तुतिं चोदस्व चोदयस्व प्रेरय कुर्विति विरुपमृषिं प्रत्युच्यते।

वाक्छब्दो वागिन्द्रियेपि प्रसिद्ध इति स्पष्टां वेदविषयां श्रुतिमाह ।। **श्रुतिरिति** ।। आदिपदेन।

"विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः।
अनादिनित्या सा तच्च"

इत्यादि ग्रहः। उक्तश्रुतिद्वयेनानादित्वानुक्तेर्देवताधिकरणभाष्योक्तस्मृतिं चाह ।। **अनादीति** ।। आदिनिधनवर्जितत्वेन नित्येत्यर्थः।

ननु विधिः प्रेरणा नियोग इत्यनर्थान्तरत्वाद्विध्युद्देशानां लौकिकवत् स्वतन्त्रवक्तृकत्वमेवेत्यादि-चोद्यनिरासाय तत्त्वनिर्णयोक्तं ब्रह्माण्डपुराणवाक्यं चाह ।। **नित्या वेदाः समस्ताश्चेति** ।। समस्तपदेन विधिभागस्यापि गृहीतेरिति भावः ।। **विरोध इति** ।। वदेस्य पौरुषेयत्व इत्यापादकानुवृत्तिर्ज्ञेया। तादृशीनां बहुकालीनानामित्यर्थः ।। **स्मृताविति** ।। नित्या वेदा इति स्मृतावित्यर्थः ।। **तदुत्पत्तीति** ।। स्मृतौ वाक्यशेषे इत्यनुकृष्यते। नोपचरितार्थमिति साध्येन पञ्चम्यन्तानामन्वयः। तच्च ब्रह्म चानादिनित्यमित्यर्थः। न स गम्यत इति तच्छब्दस्य ब्रह्मशब्दोक्तः परमात्मेत्यर्थः ।। **यावदिति** ।।

"सहस्रधा महिमानः सहस्रं यावद् ब्रह्म"

इति श्रुतौ यस्य सहस्रं अपरिमिता महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः। तद् ब्रह्म यावत् देशकालव्यापितया विष्टितं विशेषेण स्थितं वाक् वेदवागपि तावद्देशकालव्यापिनीत्युक्तेरित्यर्थः ।। **एतदपीति** ।। पौरुषेयत्वे श्रुत्यादिविरोध इत्येतदपीत्यर्थः। तद्व्यनक्ति ।। **श्रुत्यादीति** ।।

अपौरुषेयत्वे अनुकूलतर्कः ।। २० ।।

## तर्कताण्डवम्

## पौरुषेयत्वानुमानादिभङ्गः

**न चोक्तानुमानानां सत्प्रतिपक्षत्वं शङ्क्यम्। वेदः पौरुषेयो वाक्यत्वाल्लौकिकवाक्यवदित्यत्र पुरुषाधीनोत्पत्तिकत्वरूपे**

सकर्तृकत्वे साध्ये उक्तरीत्या क्रमस्य कृतकत्वेन सिद्ध-साधनात्। अर्थमुपलभ्य रचितत्वरूपे विप्रतिपन्ने पौरुषेयत्वे साध्ये च अबुद्धिपूर्वकत्वेपि रेखाविशेषवत्त्वेनैव पिपीलिकादिलिपेर्लिपित्ववत्, गुणाजन्ययोः साक्षिज्ञानेश्वर-ज्ञानयोर्याथार्थ्यवत्, आकाङ्क्षादिमत्त्वेनैव आकाङ्क्षादि-मत्स्वप्नादिवाक्यस्य वाक्यत्ववच्च वेदस्यापि वाक्यत्वस्य उपपत्त्या गौरवेणोक्तसाध्यं प्रत्यप्रयोजकत्वात्।

अन्यथा वेदो ज्ञानकरणेनार्थमुपलभ्य रचितो वाक्यत्वा-दित्यपि स्यात्। अर्थानभिज्ञोच्चारिते आधुनिके वेदे विसंवा-दिनि शुकादिवाक्ये च व्यभिचाराच्च। उक्तश्रुत्यादिबाधप्रति-कूलतर्कपराहत्यादिसाधारणदोषाच्च।

अत्रोक्तं मणौ वेदः सजातीयोच्चारणानपेक्षोच्चरित-जातीयो वाक्यत्वात् सम्मतवत्। अत्र साध्ये सजातीयपदं शब्दमूलकशब्दे व्यभिचारपरिहारार्थम्। शब्दस्यार्थैक्यमात्रेण मूलत्वोपपत्त्योच्चारणसाजात्यस्यानपेक्षितत्वात्। जातीयपदं त्वाधुनिकवेदे बाधनिरासार्थम्।

तत्र च न सिद्धसाधनम्। अपौरुषेयत्वपक्षे सर्वस्यापि वेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वेन सजातीयोच्चारणसापेक्ष-त्वात्। न चाप्रयोजकता। उक्तसाध्ये वेदातिरिक्तवाक्यत्वा-पेक्षया लघुत्वेन वाक्यत्वस्यैव प्रयोजकत्वादिति मैवम्।

मीमांसकं प्रति सिद्धसधनाभावेपि मां प्रति सर्गादावीश्वरेण स्वबुद्धिस्थपूर्वपूर्वकल्पक्रमेणोच्चारणेपि तस्योच्चारणन्तरानपेक्षत्वेन सिद्धसाधनात्। व्याप्य इव व्यापकेप्यवच्छेदकलाघवस्यादरणीयत्वेनोच्चरितत्वस्यैव

**व्यापकतया हेतोरुक्तसाध्यं प्रति गौरवेणाप्रयोजकत्वाच्च। आकाङ्क्षादिमत्त्वं तु त्वयाप्याहर्तव्यम्। स्वयम्प्रतिभातानां वेदवाक्यानां सजातीयोच्चारणानपेक्षत्वेनांशे सिद्धसाधनाच्च।**

## न्यायदीपः

पञ्चमस्तबके कुसुमाञ्जल्याद्युक्तमनुमानमाशङ्क्य प्रतिज्ञादोषेण निराह ॥ **वेद इति** ॥ प्रमाकरणामूलकत्वे सति प्रमाणशब्दरूपो वेद इत्यर्थः ॥ **उक्तरीत्येति** ॥ वेदापौरुषेयत्वानुमानवादे क्रमविशेषविशिष्टानां वर्णनामित्यादिनोक्तरीत्येत्यर्थः। ''न च लौकिकवाक्यवत्सकर्तृकत्वम्। तस्याकर्तृकत्वप्रसिध्यभावात्'' इत्यादिना तत्त्वनिर्णय तट्टीकयोरभिमतमप्रयोजकत्वं व्यनक्ति ॥ **अर्थमुपलभ्येत्यादिना** ॥ **विप्रतिपन्न इति** ॥ तथाच न सिद्धसाधनतादोष इति भावः। अबुद्धिपूर्वकत्वेपीत्यस्य वाक्यत्वस्योपपत्त्येत्यनेनान्वयः। तत्र दृष्टान्तत्रयोक्तिः ॥ **रेखेत्यादि** ॥ स्वमतेनोक्तिः ॥ **साक्षीति** ॥ शुकादिवाक्येपीश्वररचितत्वेन साध्यसत्त्वनिरासाय ॥ **विसंवादिनीति** ॥ विशेषणोक्तिः।

''तर्कपराहतं च वाक्यत्वानुमानं श्रुतिपुराणविरुद्धं चे''ति तत्त्वनिर्णयटीकोक्तमाह ॥ **उक्तेति** ॥ एतच्च प्रतिकूलतर्कपदेनाप्यन्वेति। वेदापौरुषेयत्वानुमाने येऽनुकलूतर्का उक्तास्ते सर्वे पौरुषेयत्वे प्रतिकूलतर्का इत्यर्थः। आदिपदेनानुकूलतर्कराहित्यग्रहः ॥ **साधारणेति** ॥ पौरुषेयत्वानुमान-मात्रसाधारणेत्यर्थः ॥ **अत्रेति** ॥ वाक्यत्वहेतुदूषणविषये तत्परिहारार्थमन्यथानुमानमुक्तं शब्दखण्डे वेदपौरुषेयत्ववाद इत्यर्थः। वेदः पौरुषेयो वाक्यत्वादित्यत्र सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं पौरुषेयत्वमिति साध्यस्य निरुक्तत्वादेवं प्रयोग उक्तः सजातीयपदं समानजातीयानुपूर्वीकशब्दपरम्। सजातीयोच्चारणानपेक्षया तदपेक्षां विनैवोच्चरितो यस्तज्जातीय इत्यर्थः। सर्गादावीश्वरोच्चरितत्वं पर्यवस्यतीति विवक्षितसिद्धिरिति भावः।

अस्फुटत्वात्पदकृत्यं व्यनक्ति ॥ **अत्रेति** ॥ पक्षधराद्युक्तमाह ॥ **बाधेति** ॥ तस्याध्यापकोच्चारणा-पेक्षयैवोच्चरितत्वाद् बाधः। जातीयपदे दत्ते तु तादृशादिकालीनजातीयत्वान्न बाध इति भावः।

रुचिदत्तस्तु पठ्यमानभारतादौ सम्प्रदायमते हेतुनिश्चये साध्यसन्देहे सन्दिग्धानैकान्त्यमिति जातीयपदमित्यवोचत् ॥ **मीमांसकं प्रतीति** ॥ तस्य निरीश्वरवादित्वादिति भावः।

''पौरुषेयत्वानुमानानामप्रयोजकत्वात्'' इति सुधोक्तिमनुरुध्याप्रयोजकत्वं व्यनक्ति ॥ **व्याप्य**

**इवेति ।।** यथा धूमादौ नीलधूमत्वादिकं न व्याप्यतावच्छेदकं किन्तु लाघवाद्धूमत्वादिकमित्युच्यते तथा व्यापकेपि पीतवह्नित्वादिकं न व्यापकतावच्छेदकं किन्तु वह्नित्वादिकमेव तद्वदिहापि वेदातिरिक्तवाक्यत्वापेक्षया वाक्यत्वं लघ्विितिवत् साध्ये वाक्यत्वानिरूपितव्यापकतावच्छेदकं न सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं किन्तु लाघवादुच्चरितत्वमेवेत्युक्तसाध्ये वाक्यत्वहेतु-गौरवपराहतः सन्नप्रयोजको भवतीत्यर्थः ।

## तर्कताण्डवम्

**एतेन वेदत्वं सजातीयोच्चारणानपेक्षोच्चरीतवृत्ति महाजनपरिग्रहतावच्छेदकत्वे सति वाक्यवृत्तित्वात् । स्वाधिकरणसमानानुपूर्वीकसकलवृत्तित्वाद्वा । भारतत्ववत् । अत्र च पक्षस्यैकत्वेन नांशे सिद्धासाधनम् ।**

**आद्ये हेतावेतद्वेदत्वादौ व्यभिचारपरिहाराय महाजने-त्यादिसत्यन्तं विशेषणम् । एतद्वेदत्वं तु न तदवच्छेदकम् । लाघवेन धूमत्ववद् वेदत्वस्यैव तदवच्छेदकत्वात् । यागत्वादौ व्यभिचारवारणाय वाक्यवृत्तित्वादित्युक्तम् ।**

**द्वितीये सकलपदेनैवैतद्वेदत्वादौ व्यभिचारनिरासः । एतद्वेदत्वस्य स्वाधिकरणेनैतद्वेदेन समानानुपूर्वीके पूर्ववेदे वृत्त्यभावादिति निरस्तम् । उक्तरीत्या वेदत्वस्य सजातीयोच्च-राणानपेक्षेणेश्वरेण स्वयं प्रतिभातवेदैर्वसिष्ठादिभिश्चोच्चरिते वृत्त्या सिद्धसाधनात् । वाक्यवृत्तित्वस्योच्चरितत्वेन महाजन-परिग्राह्यतावच्छेदकत्वस्य च धर्मादिप्रमापकवृत्तित्वेनैव उपपत्त्योक्तं साध्यं प्रति गौरवेणाप्रयोजकत्वाच्च ।**

**द्वितीयहेतोरपि स्वाधिकरणे सर्वत्र तुल्यानुपूर्वीप्रयो-जककण्ठताल्वादिरूपतुल्यकारणेनैवोपपत्त्या गौरवेणोक्त-साध्यं प्रत्यप्रयोजकत्वात् ।**

## न्यायदीपः

नन्वेवं वेदे आकाङ्क्षायोग्यताऽऽसत्त्यादिमत्त्वमपि न सिध्येत्। लाघवेनोच्चरितत्वमात्रेण वाक्यत्वस्योपपत्त्या गौरवेणाकाङ्क्षादिमत्त्वं प्रत्यप्रयोजकत्वादित्यत आह **।। आकाङ्क्षादीति ।। त्वयापि ।।** पौरुषेयत्ववादिनापीत्यर्थः। वाक्यत्वस्याकाङ्क्षादिमच्छब्दत्वरूपतया तदभावे वाक्यत्वस्य स्वरूपोच्छित्तेरुभयसम्मततया तत्र गौरवदोषाभावात्। इह च त्वदुक्तगुरुभूतसाध्येन विनाप्यस्तु वाक्यत्वमित्युक्तौ बाधकाभावादप्रयोजकत्वमेव वाक्यत्वस्येति भावः **।। स्वयमिति ।।** गुरुमुखोच्चारणापेक्षां विनैवेत्यर्थः।

"जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः।
मुनिनां प्रतिभास्यन्ति भागेनैव न सर्वशः"।

इति स्मृत्या जन्मान्तरेऽधीतानामस्मिञ्जन्मनि गुरुमुखोच्चारणापेक्षां विनैव कदाचित्कालविशेषे प्रतीतानां वेदवाक्यानामित्यर्थः।

यदत्रोक्तं रुचिदत्तादिना तद्भिन्नत्वेन पक्षो विशेषणीय इति तन्न। वेदः पौरुषेयो न वेति कृत्स्नवेदविषयपौरुषेयत्वविमत्यनानुगुण्येनार्थान्तरात्।

मण्युक्तप्रयोगान्तरं निराह **।। एतेनेति ।।** निरस्तमित्यन्वयः। अत्रापि साध्ये सजातीयपदं पूर्ववच्छब्दमूलकस्मृतित्वे व्यभिचारवारकं ध्येयम्। पठ्यमानवेदे बाधाप्रसक्तेर्न जातीयपदोक्तिः।

**।। महाजनेति ।।** यद्यपि मणौ प्रमाणतावच्छेदकवाक्यधर्मत्वादित्येव हेतुरुक्तस्तथापि प्रमाणातावच्छेदकत्वस्य प्रमाणमात्रवृत्तित्वरूपत्वेऽद्यतनवेदत्वे व्यभिचारात्। तदवच्छित्तिप्रत्यय-जनकत्वे जनकत्वसिद्धिः। मणिकृन्निरुक्तवेदत्वस्य गुरुत्वेनाच्छित्ति प्रत्ययाजनकत्वेन स्मृतिसाधा-रणस्यान्यस्यैव वाच्यत्वादित्यतः पक्षधराद्युक्तविवक्षानुरोधेन महाजनेत्याद्युक्तम्।

नरहर्युक्तविवक्षानुरोधेनाह **।। स्वेति ।।** स्वस्य वेदत्वस्य यदधिकरणम् सर्गादिकालीनो वाऽद्यतनैः पठ्यमानो वा वदेः तत्समानानुपूर्वीकाः सर्वैः पाठ्यमाना वेदाः तत्सकलवृत्तित्वादित्यर्थः **।। भारतत्ववदिति ।।** तस्य तादृशाद्यभारतवृत्तित्वात्साध्यवत्त्वं साधनवत्वं च व्यक्तमिति भावः **।। अंश इति ।।** स्वयम्प्रतिभातवेदांश इत्यर्थः **।। एतद्वेदत्वेति ।।** बुद्धिस्थं किञ्चित् चैत्रादिना पठ्यमानवेदत्वमेतद्वेदत्वपदेन गृह्यते। सत्यन्तेनोक्तदोषनिरासं व्यनक्ति **।। एतद्वेदत्वं त्विति ।। धूमत्ववदिति ।।** धूमत्वं यथावह्निव्याप्यत्वावच्छेदकं न त्वेतद्धूमत्वं तथेत्यर्थः। **।। द्वितीय इति ।।**

हेतावित्यर्थः। व्यभिचारनिरासं व्यनक्ति ॥ **एतद्वेदस्येति** ॥ **इतीति** ॥ मणावुक्तमेतेन निरस्तमित्यर्थः। एतेनेत्युक्तं व्यनक्ति ॥ **उक्तरीत्येति** ॥ मां प्रतीत्यादिनोक्तरीत्येत्यर्थः ॥ **स्वयम्प्रतिभातवेदैरिति** ॥ बहुव्रीहिः।

हेतौ विशेष्यविशेषणरूपांशद्वयस्याप्युक्तसाध्येन विनाऽन्यथोपपत्त्याऽप्रयोजकत्वमाह ॥ **वाक्येत्यादिना** ॥ उच्चरितवृत्तित्वेनोपपत्त्येत्यन्वयः। गौरवेणेत्युपलक्षणम्। विपक्षे बाधकाभावेन चेत्यपि ध्येयम्। श्रुत्यादिबाधादिरूपप्रागुक्तसाधारणदोषोप्यत्रानुसन्धेयः ॥ **तुल्यकारणेनेति** ॥ येन कारणेन वेदत्वाश्रयव्यक्तिषु सर्वत्र तुल्यानुपूर्वी भवति तादृशकारणेनैव हेतुरुपपन्नः। न त्वन्येन। तच्च कारणं कण्ठताल्वादिकं न तु तलताडनादिरूपम्। तथा च सजातीयोच्चारणानपेक्षोच्चरित-वृत्तित्वप्रयुक्तत्वाभावादप्रयोजकत्वं हेतोरित्यर्थः।

## तर्कताण्डवम्

**एतेन बुबोधयिषुपठितो वेदः स्वानपेक्षस्वसमान-विषयकज्ञानपूर्वकः। बुबोधयिषुवाक्यत्वात् लौकिक-वाक्यवदिति निरस्तम्। स्वसमानविषयकज्ञानपूर्वकत्व-मात्रेण बुबोधयिषुवाक्यत्वस्योपपन्नत्वेन गौरवेण स्वानपेक्ष-ज्ञानं प्रत्यप्रयोजकत्वात्। अन्यथोक्तेनैव हेतुना स्वानपेक्ष-स्वसमानविषयकज्ञानकरणसापेक्षत्वमपि सिध्येत्। मन्मते ईश्वरज्ञानस्य वेदानपेक्षत्वेन सिद्धसाधनाच्च।**

**नापि वेदो वाक्यार्थगोचरयथार्थज्ञानजन्यः। प्रमाण-शब्दत्वात्। भारतवदिति वाच्यम्। यथार्थज्ञानमात्रस्य हेतुत्वविवक्षायामर्थबुबोधयिषया पठितो आधुनिकवेदांशे सिद्धसाधनात्। तन्निरासाय शब्दाजन्यत्वेन ज्ञानस्य विशेषणे च शब्दमूलकशब्दे व्यभिचारात्।**

**सोपि पक्षतुल्य इति चेन्न। प्रामाण्यस्य स्वतस्त्वेन परतस्त्वेपि यादृच्छिकसंवादिवाक्य इवावश्यकयोग्यतादि-**

**नोपपन्नत्वेन गौरवेणोक्तसाध्यं प्रत्यप्रयोजकत्वात्। अन्यथोक्तेनैव हेतुना वाक्यार्थगोचरप्रमाकरणपूर्वकत्वमपि सिध्येत्।**

**एतेन यथार्थज्ञानत्वस्य कारणतावच्छेदकत्वं विवक्ष्यत इति निरस्तम्। प्रामाण्यस्य स्वतस्त्वेन परतस्त्वेपि नित्यत्वेन ईश्वरज्ञानस्य प्रमात्ववद्वेदस्यापि नित्यत्वेन प्रमाणशब्दत्वोपपत्तेः।**

## न्यायदीपः

॥ **बुबोधयिष्विति** ॥ शिष्यान्बोधयितुमिच्छताऽध्यापकेन पठितो वेद इत्यर्थः। इदानीन्तनाज्ञपठितवेदे बाधवारणाय बुबोधयिषुपठितेत्युक्तिः। स्वेति सन्निहितो बुबोधयिषुपठितो वेद उच्यते। तदनपेक्षं तदजन्यमित्यर्थः। तत्समानविषयकं च यद्ज्ञानं तत्पूर्वक इत्यर्थः। तादृशं च ज्ञानमीश्वरनिष्ठमिति तज्जन्यत्वेन साध्यसिद्धिरिति भावः। अज्ञोच्चरितवाक्ये वाक्यत्वस्य व्यभिचारनिरासाय बुबोधयिष्विति हेतौ विशेषणम्।

''अनुमानानामप्रयोजकत्वात्'' इति सुधोक्तिमनुरुध्याह ॥ **स्वसमानेति** ॥ मण्युक्तं प्रयोगान्तरं प्रत्याचष्टे ॥ **नापि वेद इति** ॥ मणौ वेदा इति पक्षनिर्देशेपि तत्रैव पठ्यमानवेदस्य पक्षसमत्वोक्तेः यत्किञ्चिद्वेदपक्षकत्वेपीष्टसिद्धेर्बहुवचनमविवेकमूलमिति सूचनाय वेद इत्येव पक्षनिर्देशः कृतः। अध्यापकानुपूर्व्यादिज्ञानजन्यत्वेनार्थान्तरवारणाय साध्ये वाक्यार्थगोचरेत्युक्तिः। वाक्यार्थगोचरज्ञानजन्य इत्येवोक्तौ ईश्वरे भ्रमसिद्धावपि नेष्टसिद्धिरिति तादूरूप्यसिद्धये यथार्थपदम्॥ **भारतवदिति** ॥ प्रत्यक्षमूलाद्यभारतवदित्यर्थः ॥ **मात्रस्येति** ॥ शब्दाजन्यत्वविशेषणहीनस्येत्यर्थः ॥ **हेतुत्वेति** ॥ जनकत्वेत्यर्थः।

नन्वेतद्दोषनिरासायैव शब्दाजन्येति ज्ञानविशेषणमुक्तं मणावित्यत आह ॥ **तन्निरासायेति** ॥ ''तादृशस्यापि द्विकर्तृकत्वादिति'' मण्युक्तेर्भावमाशङ्क्याह ॥ **सोपीति** ॥ प्राचीनमते पक्षसमेपि सन्दिग्धसाध्यवति हेतुनिश्चयेन व्यभिचारस्य दोषत्वेप्याधुनिकमते दोषत्वाभावस्येश्वरवादे मणावेव व्यक्तत्वादिति ॥ **प्रामाण्यस्येति** ॥ हेतौ विशेष्यस्य विशेषणस्य वोक्तरूपसाध्येन विनाऽनुपपत्त्या विशिष्टहेतुना साध्यसिद्धिर्वाच्या। तत्र विशेष्यं शब्दत्वं तावन्नानुपपन्नम्। शब्दाभासेपि तस्य सत्त्वात्।

किन्तु विशेषणस्य प्रमाजनकत्वरूपप्रामाण्यस्यैवानुपपत्त्या साध्यसिद्धिर्वाच्या। तस्याप्यन्यथोपपत्त्याऽप्रयोजकत्वमित्यर्थः। स्वतस्त्वेनेत्यस्य ज्ञानजनकत्वशक्त्यैवेत्यर्थः। उपपन्नत्वेनेत्यन्वयः ॥ **परतस्त्वेपीति** ॥ गुणप्रयुक्तत्वेपीत्यर्थः। योग्यतादीत्यादिपदेन योग्यताज्ञानदोषाभावादिग्रहः ॥ **अप्रयोजकत्वादिति** ॥ त्वदुक्तसाध्यं प्रतीत्यर्थः ॥ **विवक्षयत इति** ॥ प्रागुक्तांशतः सिद्धसाधनतानिरासायेति योज्यम्।

## तर्कताण्डवम्

**एतेन वेदस्य यथार्थज्ञानपूर्वकत्वाभावेऽन्धपरम्परा स्यादिति निरस्तम्। प्रत्यक्षवद्गुणाजन्येश्वरज्ञानवच्च तदपूर्वकत्वेप्यन्धपरम्पराभावोपपत्तेः।**

**अत एव च वेदजन्या प्रमा करणगुणपूर्विका जन्यप्रमात्वात् चाक्षुषप्रमावदिति निरस्तम्। अप्रयोजकत्वात्। नापि वेदाः सर्वज्ञप्रणीताः वेदत्वात् व्यतिरेकेण लौकिकवाक्यवदिति वाच्यम्। अप्रसिद्धविशेषणत्वात्।**

**ननु तर्ह्यसंसारिप्रणीता इति साध्यते। न चैवमप्रसिद्धविशेषणत्वम्। आत्मत्वमसंसारिनिष्ठम् जातित्वात् घटत्ववदित्यनेनासंसारिप्रणीतत्वसिद्धेरिति चेन्न। उक्तरीत्या गौरवेण वेदस्वरूपतत्प्रामाण्ययोरसंसारिप्रणीतत्वं विनाप्युपपत्त्याऽप्रयोजकत्वात्।**

**नापि वैदिकमहम्पदं स्वतन्त्रवक्तृपरं अहम्पदत्वात् सम्मतवदित्यनेन पौरुषेयत्वसिद्धिरिति वाच्यम्। तथात्वे त्वन्मते वेदे ''शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तम'' इत्यादौ स्वतन्त्रवक्तुरीश्वरस्यैव, भारतादौ च**

**''किं नो राज्येन गोविन्द'' ''शिष्यस्तेहं शाधि मां त्वां प्रपन्नम्'' इत्यादौ व्यासस्यैव, लोके च ''वाच्यस्त्वया**

**मद्वचनात्स राजा'' इत्यादौ कालिदासादेरेवाहंशब्दा-र्थत्वापातात्।**

## न्यायदीपः

वेदनित्यत्वे मण्याद्युक्तं बाधकान्तरं निराह ॥ **एतेन वेदस्येति** ॥ **अन्धपरम्परेति** ॥ तथाच वेदेऽनाश्वासः स्यादिति भावः ॥ **अत एवेति** ॥ गुणाभावेपि प्रमात्वस्योपपन्नत्वादेवेत्यर्थः। तदेव व्यनक्ति ॥ **अप्रयोजकत्वादिति** ॥

चिरन्तनानुमानान्तरमाशङ्क्य तत्त्वनिर्णयटीकोक्तदोषेण निराह ॥ **नापि वेदा इति** ॥ टीकोक्त-मुपलक्षणमुपेत्य परोक्तमन्यदप्याशङ्क्य निराह ॥ **ननु तर्हीत्यादिना** ॥ **उक्तरीत्येति** ॥ प्रत्यक्षवद् गुणाजन्येश्वरज्ञानवच्चेत्यादिनोक्तरीत्योपपत्त्येत्यन्वयः।

उदयनोक्तं प्रयोगान्तरमाशङ्क्य निराह ॥ **नापीति** ॥ ''तद् ब्रह्मावेदहं ब्रह्मास्मीति'' ''अहमेव स्वयमिदं वदामि'' इत्यादौ श्रुताहमाद्यस्मदादेशपदमित्यर्थः।

''तथात्वे सङ्कल्पप्रार्थनादिवाक्यानामनर्थकत्वप्रसङ्गात्'' इति तत्वनिर्णयटीकां विवृण्वन्नेव हेतुमाह ॥ **तथात्व इति** ॥ तैत्तिरीयोपनिषदि श्रुते प्रार्थनावाक्ये मे मम शरीरं विशिष्टाश्चर्षण्यः प्रजायस्य तत् विशिष्टप्रजायुक्तमस्तु मे मम जिह्वा मधुमत्तमा अतिशयेन स्वादुमती भवत्विति प्रार्थनाकर्तृयजमानवाचित्वेन श्रुतास्मदादेशरूपमदिति शब्दार्थत्वमीश्वरस्य स्यात्। तथा

''किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा''।

इति विषादपरगीतावाक्ये तथा-

''पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेहं''

इति शिक्षाप्रार्थनापरे अर्जुनकर्तृकवाक्ये व्यासस्यैव न इत्यहमिति च श्रुतास्मच्छब्दार्थत्वप्रसङ्गात्। तथा रघुवंशे च मद्वचनादिति सीताप्रयुक्तास्मच्छब्दार्थत्वं कालिदासस्य स्यादित्यर्थः।

## तर्कताण्डवम्

**ननु ''शरीरं मे'' इत्यादावीश्वरादेरेव स्वतन्त्रवक्तृत्वेपि**

मन्त्रलिङ्गप्रकरणादिना यजमानाद्यभिप्रायानुप्रवेशाङ्गीकारा-द्यजमानार्जुनसीतादिरेवाहंशब्दार्थ इति चेत्तर्हि वेदापौरुषेयत्वेपि "शरीरं मे" इत्यादिप्रार्थनादिमन्त्रेषु मन्त्रलिङ्गादिना यजमानेश्वराद्यभिप्रायानुप्रवेशस्य मयापि स्वीकृतत्वात्तत्र यजमान एवाहंशब्दार्थः "मामुपास्व" इत्यादौ त्वीश्वर इत्यस्तु। किञ्च मन्मते ईश्वरस्य अन्योच्चारणा-नपेक्षमेवोच्चारयितृत्वेन स्वतन्त्रवक्तृत्वमप्यस्ति।

एतेन वैदिकेन स्यामाभूमेत्याद्युत्तमपुरुषेण पौरुषेयत्व-सिद्धिः। तदभिधेयायाः सङ्ख्यायाः स्वतन्त्रवक्त्रन्वयादिति निरस्तम्। तस्याः "गृभ्णामि ते सौभगत्वाय हस्तं" इत्यादौ परतन्त्रवक्त्रन्वयस्यापि दर्शनात्। प्रत्युत त्वत्पक्ष एव "वयं स्याम पतयो रयीणां" "भूयिष्ठां ते नम उक्तिं विधेम" इत्यादौ बहुवचनादिकमयुक्तम्। स्वतन्त्रवक्तुरीश्वरस्यैकत्वात्।

एतेन वैदिकेन युष्मच्छब्देन पौरुषेयत्वसिद्धिः। तस्य स्वतन्त्रवक्तृसम्बोध्यवाचकत्वादिति निरस्तम्। "त्वां प्रपन्नं" "वाच्यस्त्वया" इत्यादौ परतन्त्रवक्तृसंबोध्येपि तत्प्रयोगात्।

एतेनैव वैदिकाभ्यां यत्तच्छब्दाभ्यां पौरुषेयत्वसिद्धिः। तयोर्यथाक्रमं स्वतन्त्रवक्तृनिष्ठबुद्धिविषये तादृशपरामर्शोपहिते च शक्तत्वादिति निरस्तम्। "योस्मान् द्वेष्टि" "स राजा" इत्यादौ चास्वतन्त्रवक्तृबुद्धिविषयादावपि प्रयोगदर्शनात्।

अन्यथा वैदिकानां किमहोबतधिगादिशब्दानामपि स्वतन्त्रवक्तृनिष्ठसंशयसुखदुःखोपहितार्थत्वाद्वेदस्य नित्य-संशयाद्याधारकृतत्वमपि स्यात्। तत्र संशयादिकमाहार्यं चेदिहापि स्वातन्त्र्यमाहार्यमस्तु। एतदप्युक्तं गौरवदोषेणेति।

## न्यायदीपः

''न हि वयं वेदे पुरषाभिप्रायप्रवेश एव नास्तीति वदामः'' इति टीकोक्तसमाधिं परमुखेनैव वाचयनन्नाह ॥ **ननु शरीरमित्यादिना** ॥ **मन्त्रलिङ्गेति** ॥ मन्त्राणामर्थप्रतिपादनसामर्थ्यं हि मन्त्रलिङ्गमिति मीमांसकादिपरिभाषा। व्यक्तमेतल्लिङ्गप्रकरणादिस्वरूपमग्रे द्वितीयपरिच्छेदे। यस्मिन्मन्त्रे यदर्थप्रतिपादनसामर्थ्यं प्रकरणस्थानादिकं वा विद्यते तदभिप्रायानुप्रवेशस्य तत्राङ्गीकारादित्यर्थः।

तर्हि ''मामुपास्व'' इत्यादावनन्यपरे स्वतन्त्रवक्तृपरता स्यादित्यतः सिद्धसाधनत्वं चाह ॥ **किञ्चेति** ॥ **स्यामेति** ॥ ''वयं स्याम पतयो रयीणां, अपाम सोमममृता अभूम, अभूमानागसो वयं'' इत्यादौ श्रुतोत्तमपुरुषस्य ''द्व्येकयोर्द्विवचनैकवचने'' ''बहुषु बहुवचनं'' इत्युक्तवचनरूपतया सङ्ख्यावाचित्वात्तदभिधेयायाः सङ्ख्याया इत्युक्तम् ॥ **तस्या इति** ॥ सङ्ख्याया इत्यर्थः। ''गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः'' इति बह्वृचवाक्ये उद्वोढृपुरुषेण ते तव हस्तं सौभाग्याय गृभ्णामि ''हृग्रहोर्भश्छन्दसि'' इति भादेशः गृह्णामीति कन्यां प्रत्युच्चार्यमाणे श्रुतोत्तमपुरुषोक्तसङ्ख्यायास्तद्वाक्यं प्रत्यस्वतन्त्रवक्त्रन्वयदर्शनादित्यर्थः। एकत्वादित्युपलक्षणम्। सर्वनम्यत्वात्प्रणामोक्तिश्च न युक्तेत्यपि ध्येयम् ॥ **इत्यादाविति** ॥ पूर्वोक्तगीतारघुवंशवाक्यादौ व्यासकालिदासादेरेव स्वतन्त्रवक्तृतयाऽर्जुनसीतादेरेतादृशवक्तृत्वात्तत्सम्बोध्येपि कृष्णादौ युष्मत्पदादेशप्रयोगदर्शनाद्व्यभिचार इत्यर्थः ॥

॥ **वैदिकाभ्यामिति** ॥ ''यश्छन्दसामृषभो विश्वरूपः च्छन्दोभ्योध्यमृतात्सम्बभूव समेन्द्रो मेधया स्पृणोतुः'' इत्यादौ श्रुताभ्यामित्यर्थः ॥ **यथाक्रममिति** ॥ स्वतन्त्रवक्तृनिष्ठबुद्धिविषये यच्छब्दः तादृशपरामर्शोपहिते विषये च तच्छब्द इत्यर्थः। पूर्ववदेव वेदे लोके च व्यभिचारमाह ॥ **य इति** ॥ ''अप्रतिष्ठो स भूयाद्योस्मान्द्वेष्टि यं च वयं द्विष्म'' इत्यत्र यो द्वेष्टि सः अप्रतिष्ठो भूयादिति ''वाच्य-स्त्वया मद्वचनात्स राजा'' इति रघुवंशे च प्रयोगदर्शनादित्यर्थः।

## तर्कताण्डवम्

**एतेनैव काठकं कालापकं इत्यादि समाख्ययेश्वरसिद्धिः। ईश्वरस्यैव कठादिकायपरिग्रहेण तत्तच्छाखानिर्मातृत्वात्। अध्ययनमात्रस्य साधरण्यादिति निरस्तम्। कठादिऋषि-धृतत्वमात्रेण काठकादिसञ्ज्ञोपपत्तेः।**

## न्यायदीपः

स्वोक्तगत्यन्तरपक्षे अनुकूलतर्कं परपक्षे बाधकं चाह ॥ **अन्यथेति** ॥ स्वतन्त्रवक्तृत्वादिकमेव अहमादिपदानामिति पक्षे इत्यर्थः। ''किं स्विद्धिमस्य भेषजं को न आत्मा किं ब्रह्म'' इत्यादौ च किं शब्दः इत्यादावहशब्दः ''अहो बतासि यमेनैव ते मनोहृदयं विदाम'' इत्यादौ बतशब्दः च्छन्दोगोपनिषदि सप्तमे ''आचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येन-माहुरित्यादौ च धिक्च्छब्दः श्रुतः। तत्र किंशब्देन संशयः अहो इति सुखं बत धिगिति दुःखं प्रतीयत इतीश्वरो वेदकर्ता नित्यज्ञानादिमानिव नित्यसंशयादिमानपि तादृशवाक्यकर्तृत्वेन स्यादित्यर्थः।

॥ **आहार्यं चेदिति** ॥ एतेन ''न च जिज्ञासादयः सर्वज्ञे विप्रतिषिद्धा इति युक्तं शिष्यबोधनाय आहार्यत्वोपपत्तेः'' इति कुसुमाञ्जल्युक्तं निरस्तम्। सुखदुःखादेरवर्जनीयत्वात् तस्याप्याहार्यारोपत्वे तद्बोधकवेदभागस्याप्रामाण्यापत्तेरिति भावः।

॥ **गौरवेति** ॥ नित्यसंशयादिमत्वरूपगौरवदोषेण पुंवाक्यं ज्ञापकं न तदित्यर्थः ॥ **एतेनैवेति** ॥ अन्यथोपपन्नत्वकथनेनैवेत्यर्थः ॥ **समाख्ययेति** ॥ ''यौगिकी सञ्ज्ञा समाख्या'' इति मीमांसकपरिभाषया कठेन कृतं काठकमित्यादियौगिकसञ्ज्ञारूपसमाख्ययेत्यर्थः। तावता कथमीशकृतत्वमित्यत आह ॥ **ईश्वरस्यैवेति** ॥ कठादिमुनिनाधीतत्वात्काठकमित्यस्त्वित्यत आह ॥ **अध्ययनमात्रस्येति** ॥ अध्येत्रन्तरसाधारण्यादित्यर्थः ॥ **कठादिऋषिधृतत्वेति** ॥ तज्जन्मन्यश्रुतानां सुप्तप्रतिबुद्धैरिव कठादिभिर्दृष्टत्वस्य तन्निबन्धनत्वोपपत्ते''रिति तत्त्वनिर्णयटीकोक्त-दिशा कठादिमुनिभिर्जन्मान्तरेऽधीतशाखाविशेषस्य प्रतिभाबलेनेदानीं स्फुरितत्वेन तद् दृष्टत्व-रूपतद्बुद्धिधृतत्वेनोपपत्तेरित्यर्थः।

## तर्कताण्डवम्

**नापि वेदस्तात्पर्यपूर्वकः प्रमाणशब्दत्वात् भारतवत्। न चाप्रयोजकता। तात्पर्यज्ञानस्य शाब्दज्ञानानियामकत्वे हि नानार्थे श्लिष्टे च विनिगमकाभावेनार्थविशेषधीर्न स्यात्। यष्टीः प्रवेशयेत्यादावन्वयानुपपत्त्यभावेन लक्षणा च न स्यादित्युक्तानुकूलतर्कसद्भावात्। तात्पर्यस्य चार्थप्रत्यायने-च्छयोच्चरितत्वरूपत्वात् पौरुषेयत्वसिद्धिः। तस्माच्छ्रुति-**

**कुमार्यास्तात्पर्यरूपो गर्भ एव पुंयोगे लिङ्गमिति वाच्यम्। तत्प्रमितिशेषत्वरूपस्य तात्पर्यस्येच्छाघटितत्वाभावात्। तद्घटितत्वेपि मन्मते सजातीयोच्चारणानपेक्षस्य ईश्वरस्य अर्थप्रत्यायनेच्छयोच्चारणोपि सर्वदाप्येकप्रकारानुपूर्विकत्व-रूपापौरुषेयत्वाहानेश्च।**

**अन्यथा त्वन्मतेप्याधुनिकेनार्थज्ञानवताध्यापकेन तदिच्छयोच्चरितस्य वेदस्य आधुनिककृतत्वं स्यात्। यादृ-च्छिकसंवादिशुकादिवाक्ये इच्छारूपतात्पर्याभावेपि शाब्द-प्रमादर्शनेन हेतोरप्रयोजकत्वाच्च।**

## न्यायदीपः

यत्तु मणौ ''तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्य''मिति तात्पर्यस्वरूपं निरूप्यान्ते ''लोके क्लृप्तत्वाद्वेदेपीदंतात्पर्यमिति पौरुषेयत्वम्'' इत्यादिनोक्तं तदाशङ्क्य निराह ।। **नापीति** ।। **तात्पर्यपूर्वक इति** ।। अर्थप्रतीतीच्छया केनचिदुच्चरित इत्यर्थः। यद्वा अर्थप्रतीतीच्छयोच्च-रितत्वरूपतात्पर्यज्ञानपूर्वक एवार्थप्रत्यायक इति साध्यार्थः। प्रमादादिदोषपूर्वकशब्दाभासे व्यभिचारनिरासाय प्रमाणेति हेतुविशेषणम्। अर्थप्रमितिजनकशब्दत्वादित्यर्थः।

मण्याद्युक्तमेवानुकूलतर्कं निष्कृष्याह ।। **तात्पर्यज्ञानस्येति** ।। **नानार्थ इति** ।। अक्षमानयेत्यादौ ।। **श्लिष्ट इति** ।। राजा कुवलयोल्लासीत्यादौ पार्थिवचन्द्ररूपार्थद्वयश्लेषयुक्त इत्यर्थः ।। **अन्वयेति** ।। गङ्गायां घोष इत्यादौ प्रवाहग्रामयोराधाराधेयभावरूपान्वयानुपपत्त्या गङ्गापदस्य तीरे लक्षणाऽश्रीयते। यष्टीः प्रवेशयेत्यादौ तु यष्टीनां गृहप्रवेशान्वयसम्भवेन लक्षणाबीजान्वयानुपपत्यभावात् यष्टिपदस्य यष्टिमत्सु लक्षणा न स्यात्। तात्पर्यज्ञानस्य हेतुत्वे तु यष्टिमत्प्रवेशतात्पर्यानुपपत्तिरूपलक्षणाबीज-सम्भवाल्लक्षणा स्यादेवेति भावः।।

तावता कथं पौरुषेयत्वमित्यत आह ।। **तात्पर्यस्य चेति श्रुतीति** ।। श्रुतिरूपकुमार्यास्तात्पर्यरूपो गर्भ इत्यर्थः। यथा कुमार्यां गर्भेण चिह्नेन पुंयोगोस्ति तस्या इति ज्ञायते तथा श्रुतेरपि तात्पर्यरूपलिङ्गेन पुरुषकृतत्वरूपपुंयोगो ज्ञायत इत्यर्थः।

अस्त्वेवं वेदस्य तात्पर्यपूर्वकत्वं तावता न पौरुषेयत्वसिद्धिरिति भावेनाह ।। **तत्प्रमिति-**

**शेषत्वेति ।।** ''शेषः परार्थत्वात्'' इति जैमिन्युक्तदिशा तत्प्रमित्येकोद्देश्यकत्वं तच्छेषत्वं तदेव तत्तात्पर्यमित्यर्थः **।। अन्यथेति ।।** तत्प्रत्यायनेच्छयोच्चरितत्वमात्रेण तत्कृतत्व इत्यर्थः। पराभिमतेच्छाघटिततात्पर्यरूपसाध्ये प्रमाणशब्दत्वहेतोरप्रयोजकत्वं चाह **।। यादृच्छिकेति ।। अबाधितेति ।।** शुकादिवाक्यं तदर्थप्रत्यायनेच्छयेश्वरेणोच्चरितं अबाधितार्थत्वादित्यबाधितार्थत्वेन हेतुना तदिच्छयेश्वरोच्चरितत्वकल्पनस्येत्यर्थः। तत्र शाब्दाबोधे। ईश्वरोच्चरितत्वरूपतात्पर्यज्ञानस्या हेतुत्वादित्यर्थः।

## तर्कताण्डवम्

**न च तत्रापीश्वरेच्छा कल्प्या। अबाधितार्थत्वेन तत्कल्पनस्य शाब्दबोधानन्तरभावित्वेन तत्राहेतुत्वात्। ईश्वराभावं निश्चितवतोपि मीमांसकस्य शुकादिवाक्येन शाब्दप्रमादर्शनाच्च। नानार्थादावपि मन्मते नेच्छारूपं तात्पर्यं नियामकम्। किन्तु तत्प्रमितिशेषत्वरूपम्। त्वन्मतेप्यावश्यकं प्रकरणादिकमेवार्थविशेषज्ञापकमस्तु। ज्ञापके च धूमालोकादाविवाननुगमोन दोषाय।**

**यद्वा त्वन्मते काशीमरणश्रवणादिजन्यतत्त्वज्ञानेष्विव प्रकारणादिजन्यशाब्दबोधेष्वपि वैजात्यं कल्प्यताम्।**

## न्यायदीपः

अप्रयोजकत्वं प्रकारान्तरेण व्यनक्ति **।। ईश्वराभावमिति ।।** यत्तु तात्पर्यज्ञानस्य शाब्दज्ञाननियामकत्वमुक्तं तत्तथैव। परन्तु न त्वदभिमततात्पर्यज्ञानं नियामकं किन्त्वन्यदेवेति भावेनाह **।। नानार्थेति ।। तत्प्रमितीति ।।** तात्पर्यं ज्ञातं सदिति शेषः। एतेन यष्टीः प्रवेशयेत्यादौ लक्षणा न स्यादिति दोषोपि नेति भावः **।। आवश्यकमिति ।।** तत्प्रत्यायनेच्छयोच्चरितत्वस्यापि प्रकरणादिनैव ज्ञातव्यत्वेन तात्पर्यज्ञानहेतुतयाप्यावश्यकमित्यर्थः।

नन्वेवं क्वचिल्लिङ्गं क्वचित्प्रकरणम् क्वचित्समाख्येत्यननुगमोऽतोऽनुगतं प्रकरणादिजन्यं तात्पर्यज्ञानमेव हेतुरित्यत आह **।। ज्ञापके चेति ।।**

ननूक्तस्थले वह्निव्याप्यज्ञानत्वेन धूमालोकादिज्ञानानामनुगमो वा धूमादिज्ञापजकजन्यानुमितौ वैजात्येन वाऽस्तु। अन्यथा व्यतिरेकव्यभिचारेणानुमितिहेतुतैव न स्यादित्यत आह **॥ यद्वेति ॥** काशीमरणेन श्रवणादिना च जन्येषु तत्त्वज्ञानेष्वित्यर्थः।

## तर्कताण्डवम्

**एतेन वैदिकानि निन्दावाक्यानि हानाभिप्रायपूर्वकाणि निन्दावाक्यत्वात् लौकिकनिन्दावाक्यवत्। एवं स्तुतिवाक्यमपि पक्षीकृत्य प्रयोक्तव्यमिति निरस्तम्। अपौरुषेयत्वेपि मन्मते ईश्वराभिप्रायपूर्वकत्वस्य मीमांसकमतेप्यनादौ संसारेऽर्थाभिज्ञाध्यापकाभिप्रायपूर्वकत्वस्य सत्त्वेन सिद्धसाधनात्। स्वतन्त्रेति विशेषणे च गौरवात्। शुकादिवाक्यवदभिप्रायपूर्वकत्वाभावेपि गुणदोषबोधकत्वेनैव निन्दादिवाक्यतोपपत्तेश्च।**

**एतदप्युक्तं ''गौरवदोषेण'' इति। तस्मात्पौरुषेयत्वे नानुमानं मानम्।**

**नापि ''च्छन्दांसि जज्ञिरे'' इत्यादिश्रुत्यादिकं तस्य-**

**''तदुत्पत्तिवचश्चैव भेवद् व्यक्तिमपेक्ष्य तु।**
**अवान्तराभिमानानां देवानां वा व्यपेक्षया।**
**नानित्यत्वात्कुतस्तेषामनित्यत्वं स्थिरात्मनाम्''।**

**इत्यादिस्मृत्यैवाभिव्यक्तिपरत्वेन सम्प्रदायप्रवर्तकपरत्वेन च व्याख्यातत्वात्। तेनेश्वराधीनोत्पत्तिकत्वस्यैवोक्त्या मानान्तरेणार्थमुपलभ्य रचितत्वरूपस्य प्रणीतत्वस्यासिद्धेश्च।**

**न ह्युक्तरीत्या क्रमविशेषघटितो वेद इदानीमप्यस्मदाद्यधीनोत्पत्तिक इति वयमपि वेदप्रणेतारः।**

## न्यायदीपः

उदयनाद्युक्तमन्यदपि निराह ।। **एतेनेति** ।। ''यदश्रुवशीय तत् रजतं हिरण्यमभवत्तस्माद्रजतं हिरण्यमदक्षिण्यमश्रुजं हि यो बर्हि र्ददाति पुरास्य संवत्सराद्गृहे रुदन्तीति'' ''यदभिघारयेद्रुद्रायास्ये पशून्निदध्यात्'' इत्यादीनि निन्दावाक्यानीत्यर्थः ।। **स्तुतीति** ।। ''वायुर्वै क्षेपिष्टा देवता वायुमेव स्वेन भागेनोपधावति'' इत्यादि वाक्यमुपादेयाभिप्रायपूर्वकं स्तुतिवाक्यत्वाल्लौकिकस्तुतिवाक्यवदिति प्रयोक्तव्यमित्यर्थः।

तत्वनिर्णयटीकोक्तमेव समाधिमाह ।। **अपौरुषेयत्वेपीति** ।। अप्रयोजकत्वं हेतोराह ।। **शुकादीति** ।। तत्रापीश्वराभिप्रायकल्पनायां पूर्वोक्तदोषो ज्ञेय इति भावः। श्रुत्यादिकमित्यादिपदेन ''प्रतिमन्वन्तरम्'' इति प्रागुक्तस्मृतिग्रहः ।। **तस्येति** ।। श्रुत्यादेरित्यर्थः। स्मृत्यैव व्याख्याततत्वादित्यन्वयः ।। **तदुत्पत्तीति** ।। श्रुत्युत्पत्तिवचश्चेत्यर्थः। तुर्विशेषार्थः। आदिकालीनां व्यक्तिन्त्विति। तेन प्रत्यहमुपाध्यायैर्व्यज्यमानत्वादुत्पत्तिव्यवहारप्रसङ्ग इति निरस्तम्। अत एवावान्तराभिमानानामित्यस्मात्पूर्वार्ध एव-

''वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया''।

इति गत्युक्तिसद्भावेपि तदनुदाहृत्य स्थलान्तरस्थमेव तदुत्पत्तीत्यर्धमुदाहृतम् ।। **देवानां वेति** ।। देहजन्मापेक्षयेत्यर्थः। मुख्याभिमानिश्रियस्तन्नेत्यतोऽवान्तराभिमानानामिति। अमुख्याभिमानवतामित्यर्थः ।। **तेषामिति** ।। वेदानमित्यर्थः ।। **स्मृत्यैवेति** ।। तत्त्वनिर्णयोक्तब्रह्माण्डपुराणवचनेनैवेत्यर्थः।।

''अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः'' इत्यदिवाक्यगत्युक्तिपरतयापि तदुत्पत्तिवचश्चेत्यर्धस्यार्थमुपेत्याह ।। **सम्प्रदायेति** ।। चिरकालविरचितस्य वेदस्य शिष्यप्रशिष्येषु प्रख्यापनं हि सम्प्रदायः। तत्कारित्वेन चेत्यर्थः। श्रुत्यादेरन्यथासिद्धिं चाह ।। **तेनेति** ।। श्रुत्यादिनेत्यर्थः। अस्तु तावतैव प्रणीतत्वमित्यत आह ।। **न ह्युक्तरीत्येति** ।। क्रमविशेषविशिष्टानां वर्णानामित्यादिनोक्तरीत्येत्यर्थः।।

च्छन्दांसीत्यादिश्रुत्यादेः क्रमोत्पत्तिपरत्वेनान्यथासिद्धिरयुक्तेति भावेन शङ्कते ।। **नन्विति** ।। **श्रुतिरिति** ।। ''अनादि नित्या सा तच्च'' इत्यादिपूर्वोक्तश्रुतिरित्यर्थः ।। **बाधादिति** ।। क्रमस्य कृतकत्वादिति भावः ।। **अन्यथात्वेति** ।।

''वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः।

आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदा''।

इति महावाराहस्मृतेरिति भावः ॥ **स्मृत्येति** ॥ प्रागुक्तयेत्यर्थः ॥ **अन्यथेति** ॥ क्रमोत्पत्तिपरत्वमनुपेत्य तदन्यथात्वपरत्वोक्तावित्यर्थः। अस्त्वित्यत आह ॥ **न चेति** ॥ **एतदपीति** ॥ एकस्मिन्वाक्ये अनेकेषां स्वतन्त्रप्रणेतृत्वं न युक्तमित्येतदित्यर्थः ॥ **गौरवेति** ॥ अनेकस्वतन्त्रप्रणेतृकत्व-कल्पनाख्यगौरवदोषेणेत्यर्थः।

## तर्कताण्डवम्

**ननु यथा वेदानादित्वश्रुतिर्न वेदस्वरूपानादित्वपरा। बाधात्। किन्त्वानुपूर्व्यनन्यथात्वपरा। तन्मात्रेणैव शब्दे अनुत्पत्तिव्यवहारात्। तथा तदुत्पत्तिश्रुतिरपि तदन्यथात्वपरेति चेन्मैवम्। ''तत्क्रमेणैव'' इत्यादिस्मृत्याऽनुत्पत्तिश्रुतेः क्रमानन्यथात्वपरत्वे स्थिते उत्पत्तिश्रुतेस्तदविरोधाय क्रमो-त्पत्तिपरत्वस्यैवोचितत्वात्।**

**अन्यथा ''ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्'' इति श्रुत्याऽसर्वज्ञस्य अग्न्यादेरपि वेदप्रणेतृत्वं स्यात्। न चैकस्मिन्वाक्येऽनेकेषां स्वतन्त्रप्रणेतृत्वं युक्तम्। युक्तं तु सम्प्रदायप्रवर्तकत्वम्। एतदप्युक्तं ''गौरवदोषेण'' इति।**

**यद्यप्यृष्यादयोपि केषुचित्पुरुषेष्वचिरविरतस्य वेदैक-देशस्य सम्प्रदायप्रवर्तकाः। तथापि नेश्वरवत्सर्वपुरुषेष्वपि प्रलये चिरतरविरतस्य कृत्स्नस्य वेदस्य प्रवर्तका इति न तेषु वेदहेतुत्वव्यवहारः। ईश्वरोपि ह्यस्मन्मते-**

**''यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै''।**

**इत्यादिश्रुत्या वेदसम्प्रदायप्रवर्तकत्वान्महोपाध्याय एव।**

**तस्माद्वेदानां पौरुषेयत्वरूपं सादित्वमयुक्तम्।**

**अनित्यत्वं त्वत्यन्तायुक्तम्। तथाहि। क्रमविशेषविशिष्टा वर्णा एव वेदाः। क्रमश्च बुद्धिनिमित्तक एव। न तु स्वत इत्युक्तम्। ततश्च सर्वेषां सर्वथा वर्णविषयविवक्षित-क्रमोपाधिभूतबुध्युपरम एव वेदे विनाशो वक्तव्यः। न तु घटादीनामिवापरः। न चेश्वरस्य तथाविधबुध्युपरमो युज्यते। तस्य सर्वदा सर्वज्ञत्वात्। पुराणादीनामप्यन्यथा रचनमेव अनित्यत्वमिति विधिप्रत्ययस्य लोकवद्वेदेप्याप्ताभिप्राय-वाचकत्वात्। वैदिकविधिप्रत्ययेनैव वेदस्य पौरुषेयत्वमिति तु विधिवादे निरसिष्यते।**

**पौरुषेयत्वानुमानादिभङ्गः ॥ २१ ॥**

**न्यायदीपः**

सम्प्रदायप्रवर्तकत्वस्य वेदहेतुत्वव्यवहारे व्यभिचारमाशङ्क्य निराह **॥ यद्यपीत्यादिना ॥** च्छन्दांसि जज्ञिरे तस्मादित्यादेः सम्प्रदायप्रवर्तकत्वेन गत्युक्तिरयुक्ता हेतोरसिद्धेरित्यत आह **॥ ईश्वरोपि हीति ॥ पौरुषेयत्वेति ॥** स्वतन्त्रपुरुषप्रणीतत्वरूपमित्यर्थः।

यत्तु-

''प्रमायाः परतन्त्रत्वात्सर्गप्रलयसम्भवात्''।

इत्यादिना कुसुमाञ्जलौ प्रलये वेदानामुत्सन्नत्वमुक्तम्। तदप्ययुक्तमित्याह **॥ अनित्यत्वं त्विति ॥** वेदानामित्यनुषङ्गः। क्रमस्योक्तदिशा कथञ्चित्पुरुषाधीनजन्मवत्वेन कृतकत्वसम्भवेप्या-नुपूर्व्युच्छेदस्तु न युक्त एवेति तु शब्दार्थः **॥ इत्युक्तमिति ॥** अपौरुषेयत्वानुमानवादे उक्तमित्यर्थः **॥ अपर इति ॥** स्वरूपध्वंसलक्षण इत्यर्थः।

तर्हि पुराणानामिति नित्यत्वं स्यात्। ईश्वरबुद्धिनिमित्तकत्वस्य कदाप्यनाशादित्यतोऽस्त्येवैवं रूपं नित्यत्वम् किन्तु क्रमव्यत्यासोपि तत्रेत्यनित्यत्वमिति भावेन तत्त्वनिर्णयोक्तमेवाह **॥ पुराणादीनामिति ॥**

“पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु
क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत्”।

इति ब्रह्माण्डपुराणोक्तेरिति भावः।

नन्वेवं वेदपुराणयोरीश्वरबुद्धिनिमित्तकत्वेन नित्यत्वे पुराणानामप्यन्यथारचनं निष्फलमिति चेन्न “भगवत्प्रवृत्तेः सर्वत्र स्वप्रयोजनहीनत्वस्य “न प्रयोजनवत्वात्” इति सूत्रकृतैवोक्तेः परप्रयोजनानामतिसूक्ष्माणामुत्प्रेक्षितुमशक्यत्वात्” इति तत्वनिर्णयटीकासुधयोरेव व्यक्तत्वात्।

नन्वेवमपि “विधिर्नियोगः प्रेरणेत्यनर्थान्तरम्। स च प्रेरकपुरुषधर्मः। अतो वैदिकानां विध्युद्देशानां लौकिकवत्स्वतन्त्रवक्तृकत्वमेवोचितम्। यस्तु पौरुषेयत्वं नोपैति तं प्रति विधिरेव। गर्भ इव श्रुतिकुमार्याः पुंयोगप्रमाणम्” इति विधिवादे मणिकृदुक्तेः। “आप्ताभिप्रायां विध्यर्थः” इत्युदयनोक्तेश्च।

“नित्या वेदाः समस्ताश्च” इति स्मृत्युक्त्या निरस्तत्वेपि विशिष्य न निरस्तमित्याशङ्कामनूद्य निरासस्थलमाह ॥ **विधीति** ॥ **विधिवेदस्येति** ॥ विभागरूपवेदस्येत्यर्थः ॥ **विधिवाद इति** ॥ द्वितीयपरिच्छेदे।

**पौरुषेयत्वानुमानादिभङ्गः ॥ २१ ॥**

## तर्कताण्डवम्

### ईश्वरवादः

**ननु यदुक्तमीश्वरस्य सार्वज्ञ्यादिकमप्रामाणिकमेव बहु कल्प्यमिति तन्न। तस्य धर्मिग्राहकमानसिद्धत्वात्।**

**तथाहि। अदृष्टाद्वारकस्वोपादानगोचरजन्यकृतिजन्य-भिन्नानि समवेतानि जन्यानि, समवेतपदस्थाने भावपदं वा प्रयोज्यम्। स्वजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगि-भिन्नोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि वा। अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभवदुपादानानि वा। समवेतत्वे सति प्रागभावप्रतियोगित्वात् भावकार्यत्वाद्वा। घटवत्।**

### न्यायदीपः

शास्त्रयोनित्वादिति ब्रह्मसूत्राभिमतमीश्वरस्यानानुमानिकत्वं साधयितुमाह ॥ **यदुक्तमिति** ॥ वेदापौरुषेयत्वानुमानोक्तिप्रस्ताव इत्यर्थः ॥ **तस्येति** ॥ सार्वज्ञ्यादेरीश्वररूपधर्मिग्राहकमानेन सिद्धेरित्यर्थः। तेन सार्वज्ञ्यमात्रसिद्धावपि तेनैव विप्रलम्भाद्यभावसिद्धेरग्रे व्यक्तत्वादेवमुक्तिरिति ज्ञेयम्। तत्र कुसुमाञ्जलौ पञ्चमे परिच्छेदे-

''कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वकृदव्ययः'' ॥

इतीश्वरे धर्मिण्यनेकमानान्युक्तानि। तत्र कार्यत्वरूपं मानमेकं मणौ प्रपञ्चितम्। तत्तावदनुवदति ॥ **अदृष्टेति** ॥ अत्र जन्यानीत्यन्तं पक्षः। स्वजन्येत्यादीनि त्रीणि साध्यानीति विवेकः। पक्षे स्वपदं जन्येति निर्दिष्टवस्तुपरम्। अदृष्टाद्वारिका या स्वोपादानगोचरा साक्षादेव स्वोपादानगोचरा या जन्या कृतिः तज्जन्यानि घटादीनि तद्भिन्नानि समवेतानि समवायवृत्त्या स्थितानि पृथिव्यादीनीत्यर्थः ॥

अत्र मणौ ''अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानी'' इत्युक्तावपि यथाश्रुत उपादान-पदस्य यत्किञ्चिदुपदानपरत्वे रूपाद्युपादानमृदङ्गगोचरास्मदादिकृतिजन्यानां शब्दादीनां पक्षतानापत्तेः

क्षित्याद्युपादानपरत्वे तद्गोचरजन्यकृत्यप्रसिध्या तदजन्यत्वाप्रसिद्धेस्तदीयव्याख्यासूक्तपरिष्कार-पूर्वकोयं स्वेत्यनुवादः। तथा जन्यकृत्यजन्यत्वं हि जन्यकृतिजन्यान्यत्वमिति मणावेवोत्तरत्रोक्तेर्जन्य-कृतिजन्यभिन्नेत्यप्यनुवाद इत्यदोषः॥

॥ **भावेति** ॥ समवेतानि जन्यानीत्यत्र भावकार्याणीति वा प्रयोज्यमित्यर्थः। अदृष्टप्रागभाव-व्याप्यप्रागभावप्रतियोगीति साध्यांशस्य परिष्कारपूर्वकमनुवादः ॥ **स्वजन्येत्यादि** ॥ स्वपदे-नोपादानगोचरज्ञानादिकमुच्यते। स्वजन्यं यददृष्टं तत्प्रागभावव्याप्यो यः प्रागभावः अदृष्टकारणीभूत-ज्ञानादिप्रागभावः तत्प्रतियोगि च यत्किञ्चिदुपादानभूतहविरादिगोचरज्ञानादि तद्भिन्नः स्वजन्यादृष्ट-जनकभिन्ना इति फलितार्थः। या उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतयः तद्वता जन्यानीत्यर्थः। अत्रापरोक्षज्ञानपदं परोक्षान्यज्ञानार्थकं न त्वपरोक्षत्वजात्याक्रान्तज्ञानपरमित्यग्रे व्यक्तम्॥

॥ **स्वजनकेति** ॥ स्वस्य कार्यस्य जनकं यददृष्टं तत उत्तरापक्षधरोक्तदिशाऽदृष्टाधिकरण-क्षणोत्तरक्षणवर्तिन्यः न तु तदुत्तरक्षणोत्पत्तिमत्यः। तेन न बाधः शङ्क्यः। तादृश्य उपादानगोचर-परोक्षान्यज्ञानचिकीर्षाकृतयस्तद्वता जन्यानीत्यर्थः। ईश्वरज्ञानादेर्नित्यतया क्षित्यादिकार्यजनकादृष्टो-त्तरत्वात् कुलालज्ञानादेरपि घटादिजनकादृष्टोत्तरत्वादिति न दृष्टान्तासिद्धिः। अपरोक्षेति बहुव्रीहिः। परोक्षान्यज्ञानचिकीर्षाप्रयत्नविषयोपादानसमवेतानीत्यर्थः। च्व्यर्थलडर्थौ तु न विवक्षितौ ज्ञेयौ ॥ **घटवदिति** ॥ स्वपदस्य समभिव्याहृतपरत्वात्तत्र साध्यहेतुसत्त्वं व्यक्तमिति भावः।

## तर्कताण्डवम्

**अत्र पक्षे जन्यानीत्येवोक्ते ध्वंसस्यापि पक्षत्वेनांशे बाधः स्यात्। तस्योपादानाभावात्। तन्निवृत्यर्थं समवेता-नीति। तावत्युक्ते घटादेरपि पक्षत्वेनांशे सिद्धसाधनं स्यात्। तन्निवृत्त्यर्थं जन्यभिन्नानीति तावत्युक्तेऽङ्कुरादेरपि जन्यत्वात् आश्रयासिद्धिः। तन्निवृत्यर्थं जन्यकृतीति॥**

**नचानीश्वरवादिनं प्रति व्यावर्त्याभावेन जन्यपदं व्यर्थम्। तन्मते प्रमेयो घट इतिवत् तदुपरक्तबुद्धेरुद्देश्यत्वात्। उभय-सिद्धप्रयोजनवत्त्वं तन्त्रम्। न त्वेकस्यैव प्रयोजनस्योभय-सिद्धिः। तावत्युक्ते शब्दफूत्कारादेः पक्षता न स्यात्। तस्य**

**शब्दादिनिमित्तभूतमृदङ्गताल्वादिगोचरास्मदादिनिष्ठजन्यकृतिजन्यत्वात्। तदर्थं स्वोपादानगोचरेति। तज्जनकास्मदादिनिष्ठकृतेर्निमित्तभूतमृदङ्गादिगोचरत्वेऽप्युपादानीभूताकाशादिगोचरत्वाभावात्। तावत्युक्ते कालीरूपादेः पक्षता न स्यात्। तस्य स्वोपादानभूतशरीरगोचरतयोक्तरूपकृतिजन्यत्वेन तद्भिन्नत्वाभावात्। भाव्यं च तस्य पक्षतया। अन्यथा पक्षातिरिक्ते तत्र साध्यसन्देहेन सन्दिग्धानैकान्तिकतापत्तेः। तदर्थमदृष्टाद्वारकेति। कालीकृतिस्त्वदृष्टद्वारैव रूपजनिकेति न दोषः।**

## न्यायदीपः

हेत्वोर्ध्वंसे गगनपरिमाणादौ च व्यभिचारवारकं विशेषणद्वयं विशेष्यद्वयं चेति व्यक्तमित्युपेत्य पक्षसाध्यगतपदकृत्यानि दूषणोक्ति सौकर्याय तदीयव्याख्यानाद्युक्तानि व्यनक्ति ॥ **अत्रेति** ॥ प्रयोग इत्यर्थः। अंशे बाध इत्युक्तं साध्याभावोपपादनेन व्यनक्ति ॥ **तस्योपादानाभावादिति** ॥ येन तद्गोचरज्ञानादिजन्यत्वं स्यादिति भावः ॥ **अंशे सिद्धसाधनमिति** ॥ अदृष्टजनकभिन्नोपादानगोचरकुलालादिनिष्ठज्ञानादिजन्यत्वात् स्वजनकादृष्टोत्तरत्वात् कुलालज्ञानचिकीर्षादेरिति भावः।

मण्युक्तमेवाह ॥ **तन्मत इति** ॥ **तदुपरक्तेति** ॥ तद्विषयकेत्यर्थः। पक्षधराद्युक्तमाह ॥ **उभयसिद्धेति** ॥ न्यायमते जन्यमात्रस्येश्वरकृतिजन्यतयाऽऽश्रयासिद्धिवारणरूपप्रयोजनवत्त्वं अनीश्वरमते च उद्देश्यसिद्ध्यादिरूपप्रयोजनवत्त्वमित्युभयसिद्धप्रयोजनवत्त्वमित्यर्थः।

एवं च शब्दफूत्कारादीनां पक्षतैवेति मण्युक्तं हृदि कृत्वाह ॥ **तावत्युक्त इति** ॥ जन्यकृतीत्यादावेवोक्त इत्यर्थः। फूत्कारो मुखवायुविशेषः। न स्यादित्युक्तं व्यनक्ति ॥ **तस्येति** ॥ **तदर्थमिति** ॥ शब्दादेः पक्षतासिद्ध्यर्थमित्यर्थः। तां व्यनक्ति ॥ **तज्जनकेति** ॥ मृदङ्गः शब्दस्य निमित्तं ताल्वादि च फूत्कारादेः।

पक्षधराद्युक्तमाह ॥ **कालीति** ॥ काली नाम काचित्तपस्विनी तपसा स्वशरीरे गौरं रूपमुत्पादितवतीति तद्रूपादेरित्यर्थः ॥ **तस्येति** ॥ कालीशरीरोत्पन्नगौररूपस्येत्यर्थः ॥ **सन्दिग्धेति** ॥ प्राचीनमतेनेदं दूषणं बोध्यम्। मणिकृन्मते उक्तरूपसन्दिग्धानैकान्त्यं न दोषायेत्यग्रे व्यक्तत्वात्।

## तर्कताण्डवम्

साध्ये यद्यपि ज्ञानचिकीर्षाकृतीनां मध्ये एकैकोक्तावपीश्वरसिद्धिः। तथापि यावदभिमतविशेषगुणवत्त्वसिद्ध्यर्थं त्रितयोक्तिः। साध्यविशेषणानामुद्देश्यसिद्धिप्रयोजनकत्वात्।

अपरोक्षपदं तूपादानज्ञानस्यापरोक्षत्वेनैव हेतुत्वाद् व्यापकतासिद्ध्यर्थम्। साक्षात्कारपदं तु नोपात्तम्। प्राभाकरं प्रति साक्षात्त्वजातेरसिद्धेः। अपरोक्षपदेन तु परोक्षान्यज्ञानस्य विवक्षितत्वाददोषः। उपादानगोचरपदं तु भाष्यकाराद्युक्तध्वंसव्यावृत्तसकर्तृकत्वसिद्ध्यर्थम्। तावत्युक्ते सिद्धसाधनम्। अङ्कुरादेरपि स्वजनकादृष्टजनकयत्किञ्चिदुपादानभूतहविरादिगोचरज्ञानादिमदस्मदादिजन्यत्वात्। तदर्थमदृष्टेत्यादिभिन्नान्तं ज्ञानादिविशेषणम्। एवं च न सिद्धसाधनम्। कारणप्रागभावस्य कार्यप्रागभावं प्रति व्याप्यत्वेनास्मदादिनिष्ठादृष्टजनकज्ञानादिप्रागभावस्य स्वजन्यादृष्टप्रागभावं प्रति व्याप्यत्वेन तद्भिन्नत्वाभावात्।

नचैवं कपालादिरूपोपादानगोचरमदृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नं च यज्ज्ञानादि तद्वतास्मदादिनार्थान्तरम्। ज्ञानेच्छाकृतीनां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वेन कपालादिगोचरज्ञानादेः क्षित्याद्यजनकत्वेन बाधात्।

अत्र यद्यप्यदृष्टजनकभिन्नेत्युक्तेप्यस्मदादिभिर्न सिद्धसाधनम्। तथापीश्वरज्ञानादेरप्यदृष्टजनकत्वाद्बाधः। स मा भूदिति वक्रोक्तिः। एवं च न बाधः। ईश्वरज्ञानादेरनादित्वेन प्रागभावप्रतियोगित्वस्यैवाभावेन तत्प्रतियोगिभिन्नत्वात्। तावत्युक्ते दृष्टान्तस्य साध्यवैकल्यम्। कुलालनिष्ठस्य घट-

**जनकज्ञानादिप्रागभावस्य तन्निष्ठविहितादिक्रियान्तरोत्पत्स्यमानादृष्टप्रागभावं प्रति व्याप्यत्वात्। तदर्थं स्वजन्यत्वेनादृष्टं विशेषितम्। एवं च न साध्यवैकल्यम्। उत्पत्स्यमानादृष्टस्य घटोपादानादिविषयकज्ञानादिजन्यत्वाभावात्। द्वितीयसाध्ये अस्मदादिभिः सिद्धसाधनवारणाय स्वजनकादृष्टोत्तरेति। तृतीये च विषयीभवदिति विशेषणम्।**

## न्यायदीपः

॥ **यावदिति** ॥ यावन्तोऽभिमता विशेषगुणास्तद्वत्त्वसिद्ध्यर्थमित्यर्थः ॥ **व्यापकतेति** ॥ गगनपरमाण्वादिज्ञानस्य शब्दादिकं प्रत्युपादानत्वेपि चिकीर्षाकृतिद्वारा शब्दाद्यहेतुत्वाद् भावकार्यत्वादिरूपहेतुव्यापकत्वसिद्ध्यर्थमपरोक्षपदोपादानमित्यर्थः।

पक्षधरोक्तमाह ॥ **सक्षात्कारेति** ॥ **असिद्धेरिति** ॥ गुणगतजातेरनङ्गीकारात्। इन्द्रियजन्यज्ञानपरत्वं तु न शङ्कार्हम्। बाधापातादिति भावः ॥ **भाष्येति** ॥ गौतमसूत्रभाष्यकारतट्टीकाकारोक्तेरित्यर्थः ॥ **अङ्कुरादेरिति** ॥ सर्वस्यापि जीवोपभोग्यतया तत्तददृष्टार्जितत्वेन यदङ्कुरादिकं यज्जीवादृष्टजन्यं तददृष्टं तावद्यज्ञादि सत्कर्मजन्यम्। तादृशादृष्टजनकं स्वगतरूपाद्युपादानभूतहविरादिगोचरं यज्ज्ञानादि तद्वदस्मदादिजीवजन्यत्वादित्यर्थः ॥ **तदर्थमिति** ॥ सिद्धसाधनतानिवृत्त्यर्थमित्यर्थः ॥ **व्याप्यत्वेनेति** ॥ यदा ज्ञानादिप्रागभावस्तदा तज्जन्यादृष्टप्रागभाव इति सम्भवादिति भावः ॥ **वक्रोक्तिरिति** ॥ अदृष्टजनकभिन्नेत्यर्थ एवादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नेत्युक्तिरित्यर्थः ॥ **ज्ञानादीति** ॥ घटाद्युपादानकपालादिगोचरज्ञानादीत्यर्थः ॥ **तन्निष्ठेति** ॥ कुलालनिष्ठेत्यर्थः ॥ **विहितादीति** ॥ निषिद्धाकरणमादिपदार्थः ॥ **क्रियान्तरेति** ॥ कपालादिक्रियातोऽन्यक्रियेत्यर्थः।

॥ **स्वजन्यत्वेनादृष्टं विशेषितमिति** ॥ यद्यपि पक्षधरादावदृष्टपदं स्वजनकादृष्टपरं स्वपदं च समभिव्याहृतपक्षदृष्टान्तरूपकार्यपरमित्युक्तं तथापि तस्मिन्पक्षे स्वपदार्थः क्वचित्पक्षः क्वचिद्दृष्टान्त इत्यननुगमः।

न चात्र ग्रन्थकृदभिमतसामान्यव्याप्तावननुगमो न दोषायेति रुचिदत्तोक्तं युक्तम्। यत्तद्भ्यां सामान्यव्याप्तिर्नानुमानाङ्गमित्यर्थापत्तौ ग्रन्थकृतैव निरासात्। तथा कुलालकृतेर्घटजनकादृष्टसमान-

जातीयागाम्यदृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वेनोक्तदोषतादवस्थ्यात्। तदर्थं ठक्कुरोक्तदिशा जनकत्वं फलोपधानरूपं विवक्षणीयमिति क्लेश इत्युत्तरसाध्यासाङ्कर्याय च स्वजन्येत्येव विवक्षणीयमिति भावः ॥ **सिद्धसाधनेति** ॥ तत्र स्वपदस्य समभिव्याहृतपक्षदृष्टान्तपरत्वात् अस्मादादिजीवकृतेः क्षित्यादिजनकत्वेप्यदृष्टद्वारैव न साक्षादिति क्षित्यादिजनकादृष्टपूर्वभावितया तदुत्तरभावित्वाभावान्न सिद्धसाधनमिति ठक्कुरादौ तु कालीरूपादावंशतः सिद्धसाधनवारणाय ॥ **स्वजनकादृष्टोत्तरेति** ॥ विशेषणमित्युक्तम् ॥ **तृतीये चेति** ॥ सिद्धसाधनवारणायेत्यनुषङ्गः ॥ **इति विशेषणमिति** ॥ तस्य ज्ञानादिविषयोपादानसमवेतानीत्यर्थत्वेन क्षित्यादेरस्मदादिज्ञानादिविषयसमवेतत्वाभावादिति भावः।

## तर्कताण्डवम्

**अत्र च भाष्यादौ सकर्तृकत्वनिरुक्तावुपादानपदप्रक्षेपाद् ध्वंसव्यावृत्तसकर्तृकत्वसिद्ध्यर्थं पक्षसाध्यहेतुषु समवेतोपादानभावपदानि प्रयुक्तानि।**

**यदा तु ध्वंससाधारणसकर्तृकत्वमात्रेणेश्वरसिद्धेस्तन्मात्रं सिषाधयिषितं तदा पक्षादौ समवेतादिपदान्यनपेक्षितान्येव। अस्मिंश्च पक्षे अस्मदादिनिष्ठघटादिजनककृतिध्वंसस्य निरुक्तरूपकृतिजन्यत्वेन तद्भिन्नत्वाभावात्तस्य पक्षता न स्यात्। तदर्थं कृतिपदस्थाने सविषयत्रितयेति वाच्यम्।**

**एवं च कृतिध्वंसस्य प्रतियोगिभूतया कृत्या विरोधिगुणभूतेनोत्तरज्ञानेन च जन्यत्वेपि चिकीर्षाजन्यत्वाभावात्। चिकीर्षाध्वंसस्य चोक्तरीत्या चिकीर्षाकृतिजन्यत्वेपि ज्ञानजन्यत्वाभावात्तयोरपि पक्षतासिद्धिः।**

## न्यायदीपः

प्रागुक्तप्रयोगे ध्वंसस्य सकर्तृकत्वानापत्त्या सकलजगन्निर्मातृकर्तृसिद्धिर्न स्यादित्यतो यद्वेत्यादिना मणावुक्तं पक्षान्तरं तत्पूर्वोक्तपक्षतात्पर्यविवरणपूर्वमनुवदति ॥ **अत्र चेत्यादिना** ॥

**मात्रेणेति ॥** उपादानादिघटितत्वेन विनेति मात्रपदार्थः **॥ पक्षादाविति ॥** पक्षसाध्यहेतुषु समवेतोपादानभावपदान्यनपेक्षितानीत्यर्थः। ''नन्वदृष्टाद्वारकजन्यकृतिजन्यभिन्नानि जन्यानीत्येव पक्षनिर्देशे सति घटजनककृतिध्वंसस्य पक्षता न स्यादित्यतो जन्येच्छाकृतिजन्यत्वं च पक्षे विवक्षितम्'' इत्युक्तं मणौ पक्षधरे चात्र ज्ञानेच्छाकृत्यजन्यत्वं च पक्षे विवक्षणीयमित्युक्त्वा कृतिध्वंसादेः पक्षत्वमुपपादितम्। तदाह **॥ अस्मिंश्चेति ॥ सविषयकेति ॥** अदृष्टाद्वारकसविषयक-त्रितयजन्याभिन्नानि जन्यानीति वाच्यमित्यर्थः **॥ विरोधीति ॥** उत्तरात्मविशेषगुणानां पूर्वपूर्वनिवर्त-कत्वादिति भावः। चिकीर्षाध्वंसस्य पक्षता न स्यात् प्रतियोगितया चिकीर्षाजन्यत्वात्। विरोधिगुण-भूतयोत्तरकृत्या जन्यत्वादित्यत आह **॥ चिकीर्षेति ॥ ज्ञानेति ॥** तस्य चिकीर्षातः पूर्वभावितया तज्जनकत्वेन तद्ध्वंसाजनकत्वादिति भावः **॥ तयोरपीति ॥** कृतिचिकीर्षाध्वंसयोरपीत्यर्थः।

## तर्कताण्डवम्

**यद्वा क्षितिरेव पक्षः। नन्वेवं पक्षादन्यत्राङ्कुरे सन्दिग्धा-नैकान्त्यम्। नच निश्चितसाध्याभाववति साधनसन्देह एव दोषो न तु सन्दिग्धसाध्ये साधननिश्चयोपीति वाच्यम्। हेतौ साध्याभाववद्गामित्वसन्देहस्य दूषकताबीजस्योभयत्रापि सत्त्वात्। नचैवं विधस्य सन्देहस्य पक्षेपि सत्त्वादनुमान-मात्रोच्छेदः। तदर्थमेव पक्षादन्यत्रेति विशेषितत्वादिति चेन्न।**

**पक्षादित्यत्र पक्षशब्देन प्रयोगविषयविवक्षायां स्वार्था-नुमानोच्छेदात्। पक्षलक्षणवद्विवक्षायां चाङ्कुरस्यापि पक्ष-त्वात्। अत एव तत्र पक्षसमव्यवहारः। अङ्कुरस्यानुपादानं तु क्षितिमात्रोपादानेपीष्टसिद्धेः।**

## न्यायदीपः

नन्वेवमपि न सर्वध्वंसस्य पक्षता। चरमघटसुखादिध्वंसस्य पक्षबहिर्भावावश्यम्भावात्। अन्यथा तस्य भोगतत्साधनेतरतया अदृष्टाजन्यत्वेन स्वजनकादृष्टाप्रसिद्ध्योक्तरूपसाध्यसम्भवेन तदंशे बाधापत्तेः। उक्तदिशा अन्योन्याभावस्य पक्षतावच्छेदकतया तस्य तन्मतेऽप्रसिद्ध्या

आश्रयासिद्धेश्चेति पक्षधरोक्तारुच्या मणौ ''क्षितिरेव वा पक्षः'' इत्यादिना पक्षान्तरमुक्त्वोपपादितं तदाह ॥ **यद्वेति** ॥ **पक्ष इति** ॥ प्रतिज्ञाविषय इत्यर्थः। सन्देहादिरूपपक्षताया अन्यत्रापि भावात्।

क्षितेरेव पक्षत्वे मण्युक्तबाधकशङ्कां तदुत्तरं च निष्कृष्याह ॥ **नन्वित्यादिनेष्टसिद्धेरित्यन्तेन** ॥ अनुमानमात्रोच्छेदभयात्पक्षादन्यत्रेत्युक्तम्। पक्षस्वरूपमग्रे विकल्पयिष्यते ॥ **पक्षलक्षणवदिति** ॥ सिषाधयिषाविरहसहकृतसाधकबाधकमानाभावादिरूपपक्षलक्षणवदित्यर्थः ॥ **अत एव** ॥ पक्ष-लक्षणसत्त्वादेव। प्रतिज्ञाविषयत्वाभावात्समपदप्रयोग इति भावः॥ **इष्टसिद्धेरिति** ॥ तावतैवेश्वरसिद्धेः इति वा घटादौ निश्चितव्याप्तिकस्य लिङ्गस्य पक्षपक्षसमयोर्दर्शनेनोभयत्राप्यनुमित्युत्पत्तेरिति वार्थः।

## तर्कताण्डवम्

**नन्वेवं सन्दिग्धोपाध्याहितः पक्ष एव व्यभिचारसन्देहोपि न दोषः स्यात्। नच तत्रानुकूलतर्काभावाद्व्याप्त्यनिश्चयः। अत्र तु कार्यत्वरूपहेतूच्छित्तेरेव बाधकत्वात्तन्निश्चय इति वैषम्यमिति वाच्यम्। पक्षे व्यभिचारसन्देहस्य दूषकत्वे तर्कस्यापि पक्षे व्यभिचारसन्देहेन प्रशिथिलमूलत्वापातादिति चेन्न।**

**विप्रतिपत्त्यादिजन्यस्य पक्षताप्रयोजकस्य संशयस्यानु-मित्यनुकूलत्वेनादोषत्वेप्युपाध्याहितस्य तस्य अतथात्वेन दोषत्वात्। नन्विदमप्रयोजकं नित्यायाः सर्वविषयायाश्च ईश्वरकृतेरिदानीं सन्दिग्धत्वेन कृतिसामान्यस्य देशतः कालतो वा व्यतिरेकानिश्चयेन कार्यसामान्यं प्रति कारणत्वाग्रहात्। वह्निधूमसामान्ययोस्तु ह्रदादौ व्यतिरेकनिश्चयोऽस्तीति चेन्न।**

**घटकुलालकृतिरूपविशेषयोरेव व्यतिरेकस्य कारणत्वस्य वा ग्रहणेनाबाधे सामान्ययोरपि हेतुत्वसिद्धेः। कथमन्यथा आकाशादेः समवायिकारणस्य नित्यत्वाद्विभुत्वाच्च सम-वायिकारणसामान्यव्यतिरेकानिश्चयात् शब्दादिसमवायि-**

**कारणत्वेनाकाशादिसिद्धिः।**

**नन्वेवमपि दृष्टान्तः साध्यविकलः, कुलालादिकृतेरेव अन्वयव्यतिरेकाभ्यां कारणत्वग्रहेण मानाभावेन कुलालस्य अहेतुत्वादिति चेन्न। प्रयत्नवदात्मसंयोगस्य चेष्टाद्वारा घटहेतुतया तद्विशेषणतया प्रयत्नस्येवात्मनोऽपि हेतुत्वात्।**

## न्यायदीपः

सन्दिग्धसाध्यवति हेतुनिश्चयो न दोष इत्यत्र बाधकं वक्ष्यमाणदूषणदार्ढ्याय स्वयमाशङ्क्य हेत्वाभासादिग्रन्थे मण्याद्युक्तसमाधिमाह ॥ **नन्वित्यादिना अदोषत्वादित्यन्तेन** ॥ **सन्दिग्धेति** ॥ स श्यामो मित्रातनयत्वादित्यष्टमगर्भस्थविषयप्रयोगे शाकपाकजत्वोपाधेः पक्षाद्व्यावृत्तिसन्देहेन आहितसाध्यसन्देहमूलो व्यभिचारसंशयोपीत्यर्थः। तत्र तस्यादोषत्वे व्याप्तिनिश्चयः स्यादिति भावः। तत्र व्याप्त्यनिश्चयोऽन्यनिमित्तक इत्याशङ्क्याह ॥ **नचेति** ॥ **तर्कस्यापीति** ॥ साध्याभावे हेतुर्न स्यादित्येवंरूपतर्कस्यापि आपाद्यापादकयोर्व्याप्तिसन्देहेनेत्यर्थः ॥ **विप्रतिपत्त्यादीति** ॥ साधारण-धर्मादिरादिपदार्थः ॥ **अतथात्वेनेति** ॥ अनुमित्यननुकूलत्वेनेत्यर्थः।

''अथ कृतिकार्ययोः नान्वयव्यतिरेकाभ्यां व्याप्तिग्रहः'' इत्यादिना मण्युक्तमेव दूष्यांशं शङ्कापूर्वमनुवदति ॥ **नन्विदमित्या-दिना** ॥ भावकार्यत्वादिरूपानुमानमित्यर्थः ॥ **इदानीमिति** ॥ अनुमानात्प्रागित्यर्थः। ईश्वरकृतिव्यतिरेकस्य न्यायमतेऽप्यभावेन प्राधन्याद्व्यतिरेकमात्र एवाक्षेप-समाध्युक्तिरिति ज्ञेयम्। अन्वयाक्षेपस्य अप्युपलक्षणं वा। एवं ह्यनुमानमात्रोच्छेद इत्यत आह ॥ **वह्नीति** ॥ **घटेति** ॥ घटरूपकुलालकृतिरूपविशेषयोरित्यर्थः ॥ **कारणत्वस्येति** ॥ कार्यकारण-भावस्येत्यर्थः। प्रमाणवाक्यत्वेन वक्तृवाक्यार्थप्रमात्वेन कार्यत्वादिकल्पनेऽपि वाक्यसामान्यवक्तृ-ज्ञानसामान्ययोस्तदभावादबाध इत्युक्तम् ॥ **आकाशादिसिद्धिरिति** ॥ तत्र घटकपालादिरूप-विशेषयोरेव व्यतिरेकादिग्रहणेनेत्युक्तरीतेरेवानुसर्तव्यत्वादिति भावः ॥ **अहेतुत्वादिति** ॥ तथाच कृतिमज्जन्यत्वरूपसाध्यं तत्र नेत्यर्थः ॥

मानाभावेनेत्यसिद्धम्। कुलालो घटहेतुः तद्धेतुसंयोगावच्छेदकत्वात् कपालवत् घटहेत्वात्म-संयोगवदेकप्रयत्नवद्वेति मानभावादिति भावेनाह ॥ **प्रयत्नेति** ॥ प्रयत्नस्येवेत्युपलक्षणम्। असमवायिकारणसंयोगाश्रयकपालादेरिवेत्यपि ध्येयम्।

## तर्कताण्डवम्

संयोगस्य हेतुत्वे मानं तु, चेष्टा प्रयत्नवदात्मसंयोगासमवायिकारणिका स्वव्यधिकरणतदीयगुणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्। यत्स्वव्यधिकरणतदीयगुणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगि तत्तदीयसंयोगासमवायिकारणकम्। यथा स्पर्शवद्वेगवत्पवनाभिघातकारणिका पर्णादिक्रिया पवनसंयोगासमवायिकारणिकेत्यनुमानम्।

गुरुत्वव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिनि गुरुत्वसमानाधिकरणे पतने गुरुत्ववद् द्रव्यसंयोगासमवायिकारणकत्वरहिते व्यभिचारनिरासाय हेतौ स्वव्यधिकरणेत्युक्तम्। अन्यथा चेष्टैव नोत्पद्येत। असमवायिकारणाभावात्। कारणप्रत्यासत्त्यभावेन प्रयत्नस्य हेतुत्वानुपपत्तेश्च।

नचैवमप्यात्मा हेतुभूतसंयोगावच्छेदक एव न हेतुरिति वाच्यम्। घटकारणीभूतसंयोगाश्रयस्य कपालस्य घटकारणत्वदर्शनात्।

## न्यायदीपः

नन्वात्मसंयोगे सति प्रयत्नं विना न चेष्टेति प्रयत्न एव हेतुर्न तु प्रयत्नवदात्मसंयोग इत्यत आह ॥ **संयोगस्येति** ॥ प्रयत्नवदात्मसंयोगस्य घटहेत्वङ्गचेष्टाहेतुत्वे मानं त्वनुमानमित्यग्रेतनेनान्वयः ॥ **चेष्टेति** ॥ शरीरस्पन्द इत्यर्थः ॥ **प्रयत्नेति** ॥ प्रयत्नवत आत्मनः शरीरस्य च यः संयोगः तदसमवायिकारणिकेत्यर्थः। अभिघातकसंयोगेनार्थान्तरनिरासायोगेनार्थान्तरनिरासाय प्रयत्नवदित्यादिविशेषणम्। हेतौ स्वेति परिस्पन्दः। स्वव्यधिकरणः स्वाधिकरणभिन्नाधिकरणकः तदीयः आत्मीयो गुणः प्रयत्नः तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादित्यर्थः। कपालरूपजन्यघटरूपे व्यभिचारनिरासाय तदीयेत्युक्तिः। आत्मीयेत्यर्थः।

यद्वोक्तप्रतियोगिक्रियात्वादिति हेतुर्द्रष्टव्यः। अतो न व्यभिचारः। हेतोरेवाभावात्। एवं च तदीयेति तच्छब्दस्य समभिव्याहृतपरत्वेपि न दोषः। स्वव्यधिकरणपदकृत्यमग्रे व्यक्तम्।

यद्यपि मणौ ''या क्रिया व्यधिकरणयदीयगुणजन्या'' इत्यादिव्याप्त्युक्त्या गुणजन्यत्वादिति हेतुर्वाच्या व्याप्तिश्च तथैव प्रदर्शनीया। तथापि क्रियाया ईश्वरगुणजन्यत्वेपि नेश्वसंयोगसमवायिकारणत्वमिति व्यभिचारनिरासाय तट्टीकार्थानुवादो गुणव्यतिरेकप्रयुक्तेत्यादिः ॥

॥ **यदिति** ॥ यत् परिस्पन्दाख्यं कर्मेत्यर्थः। मणावपि या क्रियेत्येवोक्तेः। अन्यथा कपालरूपजन्यघटरूपे व्यभिचारापत्तेः ॥ **यथेति** ॥ यथा पर्णादिक्रियेत्यन्वयः। तत्र हेतुसत्त्वव्यक्त्यर्थं स्पर्शवदिति। पर्णादिक्रिया स्वव्यधिकरणवायवीयवेगरूपगुणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिनीत्यर्थः ॥ **पतन इति** ॥ आम्रफलादिपतन इत्यर्थः। स्वव्यधिकरणयदीयव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगीत्येतावत्युक्ते आम्रादिवृक्षपतनक्रियायां व्यभिचारः। तस्यां स्वव्यधिकरणो य आम्रादिवृक्षः स्वारम्भकावयवसम्बन्धित्वादवयवी यश्च तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वेपि आम्रावयवसंयोगासमवायिकारणकत्वाभावात् अतो यदीयुगुणेत्युक्तम्। विपक्षे बाधकरूपं हेतोरनुकूलतर्कमाह ॥ **अन्यथेति** ॥ उक्तसाध्याभाव इत्यर्थः ॥ **कारणेति** ॥ अन्यथेत्यनुषङ्गः। कारणीभूतप्रत्यासत्तीत्यर्थः। अप्रत्यासन्नस्य हेतुत्वेऽतिप्रसङ्ग इति भावः। ''असमवायिकारणसंयोगाश्रयस्य तत्कार्यजनकत्वनियमाच्च'' इति मण्युक्तमेवोदाहरणनिष्ठतया व्यनक्ति ॥ **घटकारणेति** ॥

## तर्कताण्डवम्

**ननु घटादौ ज्ञानस्य कृतिद्वारैव हेतुत्वात्कृतिं च प्रतीष्टसाधनत्वानुमितेरेव हेतुत्वात्साक्षात्कारस्याहेतुत्वेन साध्यवैकल्यमिति चेन्न। कृतिर्हि सिद्धवृत्तिरसिद्धविषयिणी। तत्र साध्यांशे घटादाविष्टसाधनत्वानुमितिसत्त्वेपि सिद्धांशस्य कपालादेः साक्षात्कारव्यतिरेकेण कृतिव्यतिरेकदर्शनेनोपादानसाक्षात्कारस्यापि हेतुत्वात्॥**

**न च मनःक्रियाहेतुमनोविषयककृतौ व्यभिचारः समानाधिकरणस्य सिद्धमनोविषयक साक्षात्कारादेरभावादिति वाच्यम्। त्वगिन्द्रियगृहीतमनोवहननाडीगोचरकृत्या नाड्यां**

**क्रियोत्पत्तौ वेगवन्नाड्या संयोगविशेषरूपनोदनेन मनसि क्रियोत्पत्तेः। यद्यप्युपादानमात्रं सिद्धम्। तथाऽप्युपादेयवत्त्वेन साध्यत्वात्तत्र चिकीर्षा युक्ता॥**

**नच घटे सिद्धविषयकसाक्षात्कारजन्यत्ववदसिद्ध-विषयकपरोक्षज्ञानजन्यत्वस्यापि दर्शनादीश्वरस्य नित्य-प्रत्यक्षवन्नित्यानुमितिः स्यादिति वाच्यम्। सिद्धपरमाण्वादि-विषयकपरोक्षज्ञाने सत्यप्यपरोक्षत्वव्यतिरेकेण कृतिव्यति-रेकस्येव साध्यांशज्ञाने सत्यपि परोक्षत्वव्यतिरेकेण कृति-व्यतिरेकस्यादर्शनात्।**

## न्यायदीपः

"अथ घटकृतिसाध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः। तच्च न प्रत्यक्षम्" इत्यादिना मण्युक्तावेव प्रकारान्तरेण साध्यवैकल्यतत्समाधी निष्कृष्यानुवदति॥ **नन्वित्यादिना**॥ **साध्येति**॥ उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वादिरूपसाध्येत्यर्थः॥ **व्यभिचार इति**॥ यन्निष्ठा या कृतिः सा तद्गोचरापरोक्षपूर्विकेत्यस्य व्यभिचार इत्यर्थः। तमेव व्यनक्ति॥ **समानाधि-करणस्येति**॥ साक्षात्कारादेरित्यादिपदेन चिकीर्षाग्रहः। मनसोऽतीन्द्रियत्वादिति भावः॥ **मनो-वहनेति**॥ मनस आधारभूतेत्यर्थः॥ **मनसि क्रियोत्पत्तेरिति**॥ तथा च यत्र कृतिर्नाड्यां तत्रास्त्य-परोक्षादिपूर्वकत्वम्। यत्र मनसि नास्त्यपरोक्षज्ञानं तत्र न कृतिरिति न व्यभिचार इति भावः।

नन्वेवमपि सिद्धे करणेच्छाभावेनोपादने चिकीर्षायोगात्पुनः साध्यवैकल्यमित्याशङ्कामनूद्य निराह॥ **यद्यपीति**॥ एवमप्रयोजकत्वसाध्यवैकल्ये निरस्य "नन्वेवं घटादावनुमितिजन्यत्व-दर्शनादीश्वरे अनुमितिरपि स्यात्" इत्यादिना मण्युक्ततर्कपराहतिशङ्कोत्तरे अनुवदति॥ **नचेत्या-दिना**॥ ईश्वरे जन्यज्ञानाभावाल्लिङ्गजन्यज्ञानं कथं स्यादित्यत आह॥ **नित्येति**॥ प्रत्यक्षस्येन्द्रिय-जन्यत्वेपि नित्यप्रत्यक्षवदनुमितेर्लिङ्गजन्यत्वेपि नित्यानुमितिः स्यादित्यर्थः। अनुमितेरनित्यत्वे आदिकालीनद्व्यणुकाद्यजननात्तदविनाभूतशरीरेन्द्रियाभावपाताच्चेति भावः॥ **अपरोक्षत्वेपि**॥ तस्मिन् ज्ञान इत्यर्थः॥ **कृतीति**॥ परमाणुगोचरकृतीत्यर्थः॥ **साध्यांशेति**॥ घटपटादिरूपसाध्यां-शस्येष्टसाधनत्वेनानुमितिरूपपरोक्षज्ञाने सति तद्विषयककपालादिनिष्ठकृतेर्दर्शनवत् साध्यांशस्येष्ट-

साधनत्वेनापरोक्षज्ञाने सति साध्यविषयिण्यास्तद्धेतुनिष्ठायाः कृतेर्व्यतिरेकस्य क्वाप्यदर्शनेन साध्यांशस्येष्टसाधनत्वे ज्ञानत्वमेव तद्धेतुनिष्ठकृतौ प्रयोजकम् लाघवात् न तु तत्र साध्यांशस्येष्ट-साधनत्वज्ञाने परोक्षत्वमपि। गौरवात्। एवं चेश्वरस्यापि क्षित्यादिरूपसाध्यांशस्य स्वेष्टसाधनताज्ञान-मपरोक्षरूपमस्तीति तद्धेतूपादानपरमाण्वादिकृतिर्युक्तेति न नित्यानुमित्यापत्तिदोष इति भावः।

## तर्कताण्डवम्

**ननु द्वेषयोनिकृतिसाध्ये चिकीर्षाभावाद्व्यभिचारः। नच तत्रापि भगवतश्चिकीर्षा हेतुत्वेन कल्प्या। एवं हि द्वेषयोनिकृतिसाध्यदृष्टान्तेन क्षित्यादेरपि द्वेषवज्जन्यत्वापातेन नित्यद्वेषापत्तेरिति चेन्न। तत्रापि द्वेष्याभावस्यैवेष्टत्वेन तत्साधनत्वेन ज्ञाने चिकीर्षाया एव सम्भवेन भिन्नविषयक-द्वेषस्याहेतुत्वात्।**

**नचैवं प्रवृत्तियत्नातिरिक्तस्य क्रियाव्यतिरेकानुगुणस्य द्वेषप्रयोज्यस्य निवृत्तियत्नस्याभावाद् द्वेषे मानाभावः। द्वेष्मीत्यबाधितानुभावात्।**

## न्यायदीपः

एवं कृतेरपरोक्षज्ञानपूर्वकत्वे व्यभिचारमुद्धृत्य तत्प्रसङ्गागतमतिप्रसङ्गं च निरस्येदानीं कृतेश्चिकीर्षापूर्वकत्वे व्यभिचारचोद्योत्तरेमण्युक्ते एवाह ॥ **ननु द्वेषेति** ॥ द्वेषकारणकदुःख-निवृत्त्यनुकूलकृतिसाध्ये दुःखाभावादावित्यर्थः। तत्रेश्वरीयचिकीर्षाकल्पनेन व्यभिचाराभावेप्य-निष्टप्रसङ्गस्तु स्यादित्याह ॥ **एवं हीति** ॥ तत्र द्वेषयोनित्वमेव कृतेर्नास्ति येन तद्दृष्टान्तेन क्षित्यादावपि द्वेषवज्जन्यत्वं स्यादित्याह ॥ **तत्रापीति** ॥ दुःखाभावसाधनेपि तत्साधनत्वेन द्वेष्याभावसाधनत्वेन ज्ञाने सति साधनगोचरचिकीर्षाया एव सम्भवेनेत्यर्थः ॥ **भिन्नेति** ॥ शत्रुविषयकद्वेषस्य तद्वधसाधनगोचरकृतेश्च भिन्नविषयत्वेन द्वेष्याभावसाधनकृतौ शत्रुविषयकद्वेषस्याहेतुत्वादित्यर्थः ॥

यदि द्वेषो न कृतिहेतुस्तर्हि द्वेषोऽलीक एव भवेदित्याशङ्क्य प्रत्यक्षेणासिद्धिमाह ॥ **न चैवमिति** ॥ एवं द्वेषस्य प्रवृत्तिरूपसाधनगोचरकृतावहेतुत्वे द्वेषविषये मानाभाव इत्यन्वयः।

दुःखसाधनादौ निवृत्तिरूपप्रयत्नं प्रति भिन्नविषयस्यापि द्वेषस्यैव हेतुत्वात् द्वेषे निवृत्तिरूपकार्यमेव मानमित्यत उक्तम् ॥ **प्रवृत्तीति** ॥ प्रवृत्तिरूपप्रयत्नेत्यर्थः ॥ **क्रियेति** ॥ अङ्गचेष्टादिरूपकार्येत्यर्थः ॥ **अभावादिति** ॥ दुःखादिकार्याभावानुकूलस्य दुःखगोचरद्वेषजन्यस्य निवृत्तिरूपप्रयत्नस्य अभावादित्यर्थः। प्रवृत्तिरूपो निवृत्तिरूपश्चेति यत्नद्वैविध्यं यदि स्यात्तदा प्रवृत्तिप्रयत्नश्चिकीर्षाद्वारेष्ट-साधनताज्ञानसाध्यः। निवृत्तियत्नस्तु द्वेषसाध्य इति द्वेषः प्रामाणिकः स्यात्। न चैवम्। प्रवृत्तिरूपप्रयत्नाभावस्यैव निवृत्तित्वात्॥

न च निवृत्तिरूपयत्नाभाव एव प्रवृत्तिरिति वैपरीत्यं शङ्क्यम्। सुषुप्तिदशायां निवृत्तिविरहसत्त्वेन प्रवृत्तिसाध्यचेष्टादिकार्याद्यापत्तेः॥

न च तदा निवृत्तिविरह एव नेति युक्तम्। तदा दुःखसाधनत्वज्ञानविरहेण तन्निमित्तद्वेषस्य निवृत्तिहेतोरभावेन निवृत्तेरभावात्॥

न चैवं प्रवृत्तियत्नो रागान्निवृत्तिस्तु द्वेषादिति कुसुमाञ्जल्युक्तिविरोधः। तन्मते तथात्वेपि मणिकृन्मते तदभावात्। अन्यथा "कुतस्तर्हि द्वेषः। शत्रून् द्वेष्मीत्यबाधितप्रत्यक्षा"दिति मण्युक्तिविरोधात्॥

एतेन यत्तु कुसुमाञ्जलिवाक्यानुरोधेन कुत इत्यादिमणिवाक्यस्य पक्षधरीयं क्लेशेनार्थवर्णनं तत्तु मणिकृदभिप्रायाज्ञानमूलमिति विभावितं ध्येयम्॥

## तर्कताण्डवम्

**ननु तथापि घटादौ चेष्टाव्यापारककृतेरेव हेतुत्वाव-धारणात् क्षित्यादौ च चेष्टाया योग्यानुपलब्धिबाधितत्वात् कृतेरहेतुत्वम्। नचैकस्मिन् घटे पितापुत्रयोरिव चेष्टाकृत्योः स्वातन्त्र्येण हेतुता। घटानुकूलचेष्टाश्रयसन्निहितस्य तदनु-कूलकृतिमतो निगडनिश्चलदेहत्वेन चेष्टारहितस्यापि पुंसस्तद्धेतुत्वापत्तेरिति चेन्मैवम्।**

**चेष्टाव्यापारककृतित्वेन कारणता न तावत्कार्यमात्रे क्षित्यादौ, व्यभिचारेण त्वयापि तथानभ्युपगमात्।**

**नापि कृतिजन्यत्वावच्छिन्ने। आत्माश्रयेण कृतिजन्यत्वस्य स्वानवच्छेदकत्वात्। घटादौ कार्यविशेषे तथा कारणत्वे च सामान्यविशेषन्यायेन कार्यसामान्ये कृतित्वेनैव हेतुत्वात्।**

**अत एव चेष्टाजन्यत्वशरीरजन्यत्वादिरूपोपाधिरपि न। गौरवेण चेष्टात्वादिना रूपेणा कारणत्वेनोपाधेः अप्रयोजकत्वात्।**

## न्यायदीपः

एवं कृतेरपरोक्षज्ञानचिकीर्षापूर्वकत्वं व्यभिचारनिरासेन समर्थ्य ''स्यादेतत् घटादौ कृतिसाध्यता हस्तादिव्यापारद्वारैव न तु साक्षात्'' इत्यादिना मण्युक्तबाधशङ्कातत्समाधी आह ॥ **ननु तथापीत्यादिना** ॥ अप्रयोजकत्वसाध्यवैकल्यव्यभिचारनित्यानुमितिनित्यद्वेषापत्तिरूपतर्कपराहत्याख्यदोषाणामभावेपीत्यर्थः ॥ **चेष्टेति** ॥ अङ्गचेष्टेत्यर्थः ॥ **अहेतुत्वमिति** ॥ तथाच कृतिमज्जन्यत्वं बाधितमिति भावः।

न चेष्टाकृत्योर्द्वारद्वारिभावापन्नतया घटादौ हेतुता। किन्तु प्रत्येकमेव। न चैवं कृतिचेष्टयोः पौर्वापर्यानुपपत्तिः। पितापुत्रयोः पौर्वापर्येप्येकत्र घटे द्वयोः स्वातन्त्र्येण हेतुत्ववदुपपत्तेः। तथा च यथोक्तसाध्ये न बाध इति भावेनाशाङ्क्य निराह ॥ **न चेति** ॥

व्यभिचारान्न प्रत्येकं हेतुरित्याह ॥ **घटेति** ॥ किं कार्यमात्रे कृतिजन्यकार्यमात्रे वा घटादिकार्यविशेषे वेति हृदि विकल्प्याद्यद्वयं निरस्यान्ते त्विष्टसिद्ध्या न बाध इत्याह ॥ **चेष्टेत्यादिना** ॥**त्वयापीति** ॥ निरीश्वरवादिनापि। न केवलमशरीरेश्वरवादिना मयेत्यर्थः ॥ **अवच्छिन्न इति** ॥ कार्यमात्र इत्यनुकर्षः

॥ **सामान्येति** ॥ यद्विशेषयोः कार्यकारणभावः बाधकाभावे तत्सामान्ययोरपीति न्यायेन घटादिरूपकार्यविशेषत्वेन चेष्टाद्वारककृतित्वेन कार्यकारणभावे व्यभिचाररूपबाधकाभावेन कार्यत्वेन कृतित्वेन कार्यकारणभावकल्पनपक्षेपि केवलकृतेरेव हेतुत्वादित्यर्थः ॥ **अत एवेति** ॥ कृतित्वेन कृतिजन्यत्वस्य न्यायप्राप्तत्वादेवेत्यर्थः। अनित्यज्ञानानादिमज्जन्यत्वादिः आदिपदार्थः ॥ **नेति** ॥ न भवतीत्यर्थः ॥ **चेष्टात्वादिनेति** ॥ शरीरत्वादिरादिपदार्थः।

## तर्कताण्डवम्

नन्वथापि ज्ञानमनित्यमेव कर्ता शरीर्येवेत्यादिव्याप्तिबाध इति चेन्न। ज्ञानत्वादेरनित्यत्वादिना कार्यकारणभावादेः अभावेन व्याप्तेरेवाभावात्। कार्यकृत्योश्च कार्यकारण-भावात्। अन्यथाऽवयवो महानेवेत्यादिव्याप्त्या परमाणुरपि न सिध्येत्।

अत एवादृष्टाद्वारकानित्यज्ञानाजन्यत्वादिना सत्प्रति-पक्षत्वमपि निरस्तम्। अप्रयोजकत्वात्। अजन्यत्वस्यैव हेतुत्वसम्भवेन व्याप्तिग्रहानौपयिकविशेषणान्तरवैयर्थ्याच्च। अत एव शशशृङ्गप्रतिबन्द्यपि निरस्ता। तत्रानुकूलतर्का-भावात्। कर्त्रैक्यं तु लाघवात्।

नन्वनुमितेर्व्यापकांशे व्यापकतावच्छेदकमात्रप्रकार-कत्वादिहापि व्यापकः कर्ता व्यापकतावच्छेदककर्तृत्वेन सिध्येत्। एकत्वेन कथं सेत्स्यतीति चेन्मैवम्। अनुमितिसामग्रीमहिम्ना तथात्वेपि लाघवतर्कसहकारि रूपप्रमाणसामग्रीमहिम्नैक्यस्य प्रकारत्वोपपत्तेः। तच्च क्षित्याद्युपादानगोचरं ज्ञानादिकं लाघवादेकं नित्यं चेति विषयसङ्कोचकाभावात्कपालघटादिगतरूपगुरुत्वादावीश्वरस्यैव कर्तृत्वेन रूपाद्युपादानभूतकपालादिगोचरत्वावश्यम्भावाच्च सर्वविषयकमेवेति।

## न्यायदीपः

स्यादेतत् कर्ता शरीर्येव ज्ञानमनित्यमेवेत्यादिप्राथमिकव्याप्तिग्रहप्रत्यक्षविरोधात् इत्यादिनोक्तशङ्कोत्तरे निष्कृष्यानुवदति ॥ **नन्वित्यादिना** ॥ **अन्यथेति** ॥ व्याप्तिप्रयोजककार्य-कारणभावस्य साध्येन विना हेतोरनवस्थितत्वादेरनुकूलतर्कस्याभावेपि व्याप्त्यभ्युपगम इत्यर्थः।

द्व्यणुकं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यत्वाद्घटवदित्याद्यनुमानेन परमाणुसिद्धिर्न स्यात्। योऽवयवः स महान् यथा त्र्यणुकादिः। अवयवश्चायं परमाणुरित्यनेन बाधादिति स्यादित्यर्थः।

नन्वथापि क्षित्यादिकं नोक्तसाध्यवत् अदृष्टाद्वारकानित्यज्ञानाजन्यत्वात् आत्मवदिति सत्प्रतिपक्षत्वम्। असिद्धिनिरासाय हेत्वोरदृष्टाद्वारकेत्याद्युक्तिरित्यत आह ॥ **अत एवेति** ॥ तदेव व्यनक्ति ॥ **अप्रयोजकत्वादिति** ॥

नन्वेवमयोग्यस्य साधने शशो विषाणवान् पशुत्वाद्गोवदिति शशशृङ्गसिद्धिरपि स्यादित्यत आह ॥ **अत एवेति** ॥ अप्रयोजकत्वादेवेत्यर्थः। तदेव व्यनक्ति ॥ **अनुकूलेति** ॥

नन्वेवं कर्तृमात्रसिद्धावपि तदेकत्वं कुतः सिद्धमित्यत आह ॥ **कर्त्रैक्यं त्विति** ॥ तदेव शङ्कोत्तराभ्यां व्यनक्ति ॥ **नन्वित्यादिना** ॥ अस्तु कर्त्रैकः तद्गतज्ञानादेरेकत्वादिसिद्धिः कथमित्यत आह ॥ **तच्चेति** ॥ ज्ञानादिकमित्यन्वयः।

## तर्कताण्डवम्

**अत्रोच्यते। अनुपलब्ध प्राक्कोटिषु भूभूधरादिषु कार्यत्व-मेव कुतः। सावयत्वादिति चेत्। सावयवत्वं सांशत्वं चेद् गगनादौ व्यभिचारि गगनादेः परमाणोश्च संयोगित्वेन सांशत्वसिद्धेः। विस्तृतं चैतदन्यत्र।**

## न्यायदीपः

एवमनूदितमनुमानं दूषयितुं प्रतिजानीते ॥ **अत्रोच्यत इति** ॥ ''हेतुविरोधो द्विविधः असिद्धिरव्याप्तिश्चे''ति भगवत्पादोक्त्या हेतुदोषयोरसिद्धिव्याप्त्यभावयोर्मध्येऽसिद्धेरेव प्राथम्यात् परैरप्यसिद्धविरुद्धेत्यादिप्राचां निर्देशेनासिद्धेः प्राथम्योपगमाच्च। समवेतत्वे सतीत्यादिनाभिमत-कार्यत्वहेतोरसिद्धिं तावत् ''किञ्चानुपलब्धप्राक्कोटिषु कार्यत्वं कुतः सिद्धम्'' इत्यादिना तत्त्वनिर्णय-टीकोक्तां प्रपञ्चयति ॥ **अनुपलब्धेति** ॥ प्राक्कोटिः प्रागभावः।

ननु क्षित्यादिकं कार्यं सावयवत्वाद्घटवदित्यनुमानात्तत्सिद्धिः। न च सावयवत्वेनैव उक्तरूपकृतिमज्जन्यत्वं साध्यतां किं मध्ये कार्यत्वसाधनेनेति वाच्यम्। पूर्वोक्तरीत्या कृतिजन्यत्वे कार्यत्वस्येव सावयवत्वस्यानुकूलतर्काभावात् कृतिजन्यत्वरूपसाध्येन हेतूच्छित्यादिरूपानुकूल-

तर्काभावादिति भावेनाशङ्कते ॥ **सावयवत्वादिति चेदिति** ॥

"तर्ह्येवमाकाशादीनामपि कार्यत्वप्रसङ्गात्" इत्यादिशास्त्रयोनिसूत्रसुधोक्तिं हृदि कृत्वाह ॥ **गगनादौ व्यभिचारीति** ॥ तदेव व्यनक्ति ॥ **गगनेति** ॥ गगनादिः सांशः संयोगित्वात् घटवत्। न चाप्रयोजको हेतुः। तस्येह पक्षी नेह पक्षीत्यबाधितप्रतीत्या गगनादौ व्याप्यवृत्तित्वायोगेन स्वात्यन्ताभावसामानाधिकरण्यरूपाव्याप्यवृत्तित्वस्य चैकत्र विरोधेनैकदेशरूपांशवृत्तित्वस्यैव वाच्यत्वात्। न चांशस्यौपाधिकत्वेनोपपत्तिः। उपाधिसंयोगस्यापि गगनादौ सर्वत्र व्याप्यवृत्तित्वायोगेनैकदेशरूपांशवृत्तित्वस्यैव वाच्यत्वात्। तस्याप्यौपाधिकत्वेऽनवस्थाद्यापातेन स्वाभाविकांशव्यतिरेकेण संयोगित्वस्यैवानुपपत्तेरिति भावः।

नन्वेवं गगनकालपरमाण्वादेरपि संयोगित्वेन सांशत्वे तुल्यन्यायतयांशस्यापि संयोगित्वेन सांशत्वं तदंशस्याप्येवमिति परमाण्वंशस्याप्यानन्त्यं स्यात्। तथा च गगनपरमाण्वोः तुल्यपरिमाणतापत्तिः। किञ्च परमाणोरपि न्यूनपषरिमाणकांशस्य सत्त्वे यतः परमणुर्नास्ति स परमाणुरिति परमणुत्वव्याघातः। अपि चोपादानादिरूपावयवातिरिक्तांशसत्त्वे मानाभावात् तद्रूपांशवत्त्वस्य गगनादावप्यभ्युपगमेऽनित्यत्वापत्तेश्चेत्यत आह ॥ **विस्तृतं चैतदन्यत्रेति** ॥

"अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा।
सर्वदिक्ष्वभिसम्बन्धादविभागः पराणुता॥

इत्याद्यनुव्याख्यानसुधयोर्वैशेषिकाधिकरणे विस्तृतमित्यर्थः। सर्षपो यावन्तं देशमवष्टभ्य वर्तमानो दृश्यते तावत्येवानाधिकतदवयवपरम्परा गगनेप्येवमित्यङ्गीकारे तुल्यपरिमाणतानापत्तेः। यतः स्वावयवं विना स्वतन्त्रमनवयवरूपमपकृष्टपरिमाणं नास्ति स परमाणुरित्युक्तेर्व्याघाताभावादित्याद्युक्तेरिति भावः। तथोपादानातिरिक्तांशसत्त्वादिकं चोपाधिखण्डनटीकाभावप्रकाशिकायां विस्तृतमित्यर्थः।

## तर्कताण्डवम्

**द्रव्यारब्धद्रव्यत्वं चेत् अकार्यत्ववादिनं प्रत्यसिद्धम्। द्रव्यसमवेतद्रव्यत्वं चेत् जात्यादेरिवाकार्यत्वेनाप्युपपत्त्या अप्रयोजकता। मध्यमपरिमाणत्वं चेत्तदाप्यप्रयोजकतैव गगनप्रदेशस्येव सांशत्वेनैव तदुपपत्तेः। अवयवनैरपेक्ष्येणैव**

**मध्यमीभूतपरिमाणाश्रयत्वमात्रेण द्रव्यस्य मध्यमपरिमाणत्वोपपत्तेश्च। भूम्यादेरुपलभ्यमाना भागास्तु नारम्भकरूपा अवयवाः किन्तु गगनस्य प्रदेशभेदा इव कालस्य क्षणादय इव चांशा एव सन्तु।**

## न्यायदीपः

**।। जात्यादेरिवेति ।।** अद्रव्यस्य जातेरेकत्वसङ्ख्यापरिमाणादेर्द्रव्यसमवेतत्वेप्यकार्यत्वं यथा तथा द्रव्यसमवेतद्रव्यस्याप्यकार्यत्वमस्तु। विपक्षे बाधकाभावादिति भावः **।। गगनप्रदेशस्येवेति ।।** यथा इह पक्षीत्यादिप्रतीत्या पक्ष्याद्याधारप्रेदशस्य मध्यमपरिमाणत्वेपि तस्य प्रदेशस्याप्युक्तदिशा अनेकांशयुतत्वं तथा क्षित्यादेरवयवारब्धत्वरूपकार्यत्वाभावेपि गगनवत्पूर्वोत्तरावधिशून्यानन्तांशयुतत्वाभावेनानेकांशयुतपरमाणुतोऽनेकांशयुतत्वेन च तदुभयपरिमाणान्यपरिमाणरूपमध्यमपरिमाणत्वस्योपपत्तेरित्यर्थः।

परिमाणस्यावयवोपचयहेतुकत्वमुपेत्योक्तम्। वस्तुतस्तदेव मास्त्वित्याह **।। अवयवेति ।।** यथा परमाण्वादाववयवनैरपेक्ष्येणैवाणुपरिमाणं महात्परिमाणं च तथा मध्यमपरिमाणमस्तु। प्रदीपगुणे प्रभायां दर्शनात्। न च प्रभा न गुणोपि तु द्रव्यमिति युक्तम्। गुणाद्वाऽऽलोकवदिति सूत्रभाष्यटीकाचन्द्रिकासु तदनुविधानादिना गुणत्वसमर्थनादिति भावः।

अवयवनैरपेक्ष्येणेत्याद्युक्तप्रमेये प्रत्यक्षबाधमाशङ्क्य निराह **।। भूम्यादेरिति ।।** नन्वाकाशप्रदेशानां विनाशादृष्टेर्भूम्यवयवानां तद्दृष्टेर्वैषम्यमित्यत आह **।। कालस्येति ।।** प्रदेशभेदक्षणलवादीनां औपाधिकत्वे भूम्यवयवानामपि तथात्वमस्त्विति भावः **।। पूर्वावयवीति ।।** नोदनाभिघातादिना अवयवक्रियाद्वारा परमाणुपर्यन्तमसमवायिकारणसंयोगनाशेन पूर्वद्रव्यनाशे सति पुनरदृष्टाधीनपरमाणुसंयोगद्वारा खण्डक्षित्यादिकार्योत्पत्तेः पीलुपाकप्रक्रियासिद्धत्वात्कार्यत्वं सिद्धमित्यर्थः। न चैवं खण्डक्षित्यादौ कार्यत्वसिद्धावप्यखण्डक्षित्यादौ न सिद्धमिति भागासिद्धिरिति वाच्यम्। नाशेन तत्रापि तदनुमानादिति भावः।

## तर्कताण्डवम्

**अत एव भूमेः खननादिना पूर्वावयवविनाशेन अवयव्यन्तरोत्पत्तेः कार्यत्वं सिद्धमिति निरस्तम्। क्षणादिनाशेन**

**कालस्यापि तत्प्रसङ्गात्। खनकादेरेव भूम्यादिकर्तृत्वापत्तेश्च। प्रत्यभिज्ञाविरोधाच्च। क्षणभङ्गापाताच्च।**

**तदुक्तं भगवत्पादैः "विपर्ययेणाप्यनुमातुं शक्यत्वात्" इति। अस्मदाद्यनुपलभ्यमानप्राक्कोटित्वेन हेतुना गगनादिदृष्टान्तेनाकार्यत्वस्याप्यनुमातुं शक्यत्वादित्यर्थः।**

## न्यायदीपः

अत एवेत्युक्तं व्यनक्ति ॥ **क्षणादीति** ॥ न च क्षणादीनामौपाधिकत्वात्तत्रोपाधिनाश एवेति युक्तम्। विशेषणनाशे विशिष्टस्य नाशात्। अंशानामौपाधिकत्वस्योपाधिखण्डनादौ निरासेन स्वाभाविकत्वाच्चेति भावः। खननादिना क्षितिनाशोत्पङ्गीकारोऽयुक्त एवेति भावेनाह ॥ **खनकादेरिति** ॥ तथाचांशतः सिद्धसाधनता स्यादिति भावः। यदत्रोक्तं मणौ "तत्र क्षितिनाश एव कर्तृत्वं न तु खण्डक्षितौ" अवस्थितिसंयोगेभ्य एव तदुत्पत्तेः इति। तन्न। तथात्वे खण्डक्षितिनाशेप्यकर्तृत्वापातात्।अनुभवविरोधस्योभयत्र तुल्यत्वात्।

एकदेशनाशकर्तृत्वे त्वखण्डक्षित्युत्पत्तिरेव नेति कुतः कार्यत्वं क्षित्यादेरिति भावेनाह ॥ **प्रत्यभिज्ञेति** ॥ **क्षणेति** ॥ प्रतिक्षणं क्षित्यादौ वाय्वाद्यभिघातादिनैकैकावयवापगमेन प्रतिक्षणं तदपगमनिमित्तनाशोत्पत्त्योरुपेयत्वादिति भावः।

एवं सावयवत्वं सांशत्वादिरूपेण विकल्प्य व्यभिचारासिद्ध्यन्यथासिद्ध्य उक्ताः। अस्तु सावयवत्वं यत्किञ्चित्। अथापि तर्कपराहतिः। सावयवत्वात् क्षित्यादिकं कार्यं चेत् अनुपलब्धप्राक्कोटित्वादकार्यमपि स्याद्गगनवदिति भावेन तत्संवादोक्त्या व्यनक्ति ॥ **तदिति** ॥ क्षित्यादौ कार्यत्वानुमानं तर्कपराहतमित्येतत् "न चानुमानात्तत्सिद्धिः विपर्ययेणाप्यनुमातुं शक्यत्वात्" इति तत्त्वनिर्णये उक्तमित्यर्थः। प्रकृतोपयोगितया तद्वाक्यार्थमाह ॥ **अस्मदिति** ॥ पूर्ववाक्यस्य तु सावयवत्वानुमानात् क्षित्यादौ कार्यत्वसिद्धिरिति न च वाच्यमित्यर्थ इति भावः। एतेन कार्यत्वास्यासिद्ध्युक्तिपरटीका मूलारूढेति दर्शितम्।

## तर्कताण्डवम्

**किञ्च घटादौ दर्शनमात्रेण भूभूधरादेः सावयवत्वेन**

**कार्यत्वानुमाने रूपादौ दर्शनमात्रेण परमाण्वादेः सावयवत्व-विपर्ययेण निरवयवत्वेन कार्यत्वानुमानं किं न स्यात्। एतदप्युक्तम् ''विपर्ययेण'' इति।**

**किं च कर्त्रभावेपि कार्यत्वस्य सकारणकत्वमात्रेण उपपन्नत्वेनाप्रयोजकता। अन्यथा कर्मादिकारकविशेषा-भावेनासनशयनादिकार्यं न स्यात्।**

**कर्मादिकं न सार्वत्रिकम्। कर्ता तु सार्वत्रिक इति चेन्न। तस्यैवाद्याप्यसिद्धेः। घटादौ दर्शनं तु सकर्तृकत्वस्यैव शरीर-धर्माधर्मसुखदुःखस्वप्रयोजनापेक्षादिमज्जन्यत्वादेरप्यस्ति।**

**एतदप्युक्तं ''विपर्ययेण'' इति। परानङ्गीकृतशरीर-जन्यत्वादिनेत्यर्थः।**

## न्यायदीपः

ननु सावयवत्वकार्यत्वयोर्घटादिषु भूयः सहचारदर्शनात्प्राक्कोटिरप्यस्ति क्षित्यादेरित्यनुमीयत इत्यसिद्धो हेतुरिति चेत् तत्किमन्यथानुपपत्तिरूपानुकूलतर्कसहितं सहचारदर्शनं केवलं वा। नाद्यः। अन्यथोपपत्तेरुक्तत्वात्। नान्त्यः। अतिप्रसङ्गादित्याह ॥ **किं चेति** ॥ मूलवाक्यं विवृण्वन्नेवाह ॥ **सावयवत्वविपर्ययेणेति** ॥ फलितमाह ॥ **निरवयवत्वेनेति** ॥

न च गगनादौ व्यभिचारः शङ्क्यः। कार्यातिरिक्तस्य सर्वस्यापि विप्रतिपत्त्या पक्षत्वात्। अत एव परमाण्वादेरित्युक्तिः। न च परमाणुकालाकाशादेः कार्यत्वे कारणान्तरमपि तस्योपेयम् तस्याप्येवमित्यनवस्थापत्त्यादिदोष इति वाच्यम्। बीजङ्कुरवदुपपत्तेः। प्रलयस्य च निरीश्वरवादिनो सम्मतेः। निरवयवमध्ये कस्यचिदकार्यस्य कस्यचित्कार्यस्योपगमवत् कस्यचित्सावयवस्यैव अकार्यस्याभ्युपेयत्वाच्च। निरवयवं द्रव्यमकार्यमेवेति चेत् निरवयवं वस्तु कार्यमेव रूपादि-वदित्युपपत्तेः।

नन्ववयवाभावे तत्समवेतत्वरूपकार्यत्वं बाधितमिति चेत्। रूपादिवदेवोपपत्तेः। द्रव्यस्यायं नियम इति चेत्तस्यैव निरस्यत्वात्। समवायस्याग्रे निरसिष्यमाणत्वेन परिमाणत्वेनैव कार्यत्वोपपत्तेश्च

इत्यादिज्ञेयमिति भावः ।। **एतदपीति** ।। निरवयवत्वेन परमाण्वादेः कार्यत्वानुमानमित्यर्थः।

एवं कार्यत्वस्यासिद्धिमुक्त्वा व्याप्त्यभावोपपादनाय "कारणाभावप्रयुक्तत्वात्कार्याभावस्य" इत्यादिना टीकोक्तमनुकूलतर्काभावं प्रपञ्चयंस्तदपि मूलारूढं दर्शयति ।। **किञ्चेत्यादिना एतदप्युक्त-मित्यन्तेन** ।। **अन्यथेति** ।। कर्तृरूपकारकविशेषाभावेन कार्याभाव इत्यर्थः ।। **आसनेति** ।। आस उपवेशने आस्ते, शीङ् स्वप्ने शेते भा दीप्तौ भातीत्यादेरकर्मकत्वादासनादिकार्यं कर्मसम्प्रदानापा-दानकारकहीनमिति कार्यं न स्यादित्यर्थः।

विपर्ययेणेत्यस्य पराङ्गीकृतवैपरीत्येनेत्यर्थमुपेत्याह ।। **परानङ्गीकृतेति** ।। तथा च कार्यत्वस्य शरीरसुखदुःखादिमज्जन्यत्वादिना सह भावदर्शनेपि यथा तत्र कार्यत्वमप्रयोजकं तथा सकर्तृकत्वेपीति भावः। अस्मिन् पक्षे "न चानुमानात्तत्सिद्धिः" इति पूर्ववाक्यस्य कार्यत्वानुमानात् सकर्तृकत्व-सिद्धिरिति न चेत्यर्थो ध्येयः।

## तर्कताण्डवम्

**किञ्चास्तु कृतेः कार्यसामान्यं प्रति हेतुत्वम्। तथापि त्वदुक्तस्वजन्येत्यादिबहुविशेषणविशिष्टकृतित्वेन न। किन्तु तद्विपरीतेन लघुना कृतित्वेनैव। नचैवं कपालगोचरकृत्य-भावेपि पटगोचरकृत्या घटोत्पत्तिः शङ्क्या। घटरूपकार्य-विशेषं प्रति कपालगोचरकृतिरूपविशेषस्य हेतुतया तद्रहि-तायाः सामान्यसामग्र्याः कार्याजनकत्वात्।**

**नचैवं प्रकृतेपि क्षित्युपादानगोचरकृतिरूपकारणविशेषः कल्प्यत इति वाच्यम्। त्वया कल्प्यमानकृतिविपरीतायाः क्लृप्तायाः क्षितिजनकादृष्टजनककृतेरेवेह विशेषकारण-त्वात्।।**

## न्यायदीपः

ननु लोके सकर्मकाकर्मकादिकार्यं दृष्टमित्यस्तु कर्मादिहीनमपि कार्यम्। कर्तृहीनन्तु न दृष्टम्। किन्तु कर्तृमदेव। क्षित्यादि तु विप्रतिपन्नम्। न च शरीरादिमत्कर्तृकमपि दृष्टमित्युक्तमिति वाच्यम्।

कृतिं विना कार्यत्वानुपपत्तिव त् शरीरादिकं विना तदुपपत्तेरभावात्। कार्यत्वं हि कृतिकर्मत्वम्। ऋहलोर्ण्यदिति ण्यत्प्रत्ययान्तस्य करोतेस्तदर्थत्वात्। न च कार्यशब्दो रूढः।

"भवेतां यदि वृक्षस्य वाजिकर्णौ कथं च न।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्"।

इति प्रोक्षण्यधिकरणवार्तिकोक्तरीत्याऽवयवार्थसम्भवे समुदायशक्तिकल्पनानुपपत्तेः। अन्यथा प्रोक्षण्यादिशब्दोऽप्युदकविशेषे रूढ इति स्यादित्यतोऽस्तु नाम कार्यत्वं कर्तृजन्यत्वे प्रयोजकं तथापि त्वदुक्तविशिष्टसाध्ये त्वप्रयोजकमेवेत्याह ॥ **किञ्चेत्यादिना** ॥ ज्ञानचिकीर्षाकृतिनां प्रत्येकमेव हेतुतया साध्यत्रयोपगमेन मिलितानामहेतुत्वात्कृतेरित्येवोक्तं न तु ज्ञानादेरिति। एवमग्रेपि ॥ **तदिति** ॥ हेतुत्वमित्यर्थः।

एतदपि दूषणं मूलारूढमिति भावेन कार्यत्वानुमानात् स्वजन्यादृष्टप्रागभावव्याप्यप्रागभाव-प्रतियोगिभिन्नोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वादिसिद्धिर्न चेति पूर्ववाक्यार्थमुपेत्य विपर्ययेणेत्युत्तरवाक्यस्थविपर्ययशब्दार्थं वदन्नेवाह ॥ **तद्विपरीतेनेति** ॥ **कार्यविशेषं प्रतीति** ॥ यत्सामान्यन्यायादिति भावः।

न चानुमानात्तत्सिद्धिरिति पूर्ववाक्यस्थतत्सिद्धिशब्दार्थं विवृण्वन्नेव शङ्कामनूद्य निराह ॥ **नचैवमिति** ॥ **प्रकृतेपीति** ॥ क्षित्यादावपीत्यर्थः।

उत्तरवाक्यस्थविपर्ययशब्दार्थं वदन्नेव हेतुमाह ॥ **त्वयेत्यादिना** ॥ **क्षितिजनकादृष्टेति** ॥ हविरादिगोचरजीवकृतेरेवेत्यर्थः। अदृष्टस्य यज्ञादिसत्कर्मजन्यत्वात्।

## तर्कताण्डवम्

**नच कपालगोचरकृतिव्यतिरेकेण घटव्यतिरेक इव क्षित्युपादानगोचरकृतिव्यतिरेकेण क्षितिव्यतिरेको दृष्टः। येन साऽपि हेतुः स्यात्। घटादौ दर्शनमात्रेण तत्कल्पने च त्वदुक्त-चेष्टानिरपेक्षकृतिविपरीता चेष्टाद्वारककृतिरेव कल्प्या स्यात्।**

**एवं च कृतेः कारणतावच्छेदककृतित्वेनैव जनकता साध्यते चेदस्मदादिकृत्या सिद्धसाधनम्। तन्निवृत्त्यर्थं**

**स्वजन्येत्यादिविशेषणोपादानेऽप्रयोजकता। तेन रूपेण कृतेरकारणत्वात्।**

## न्यायदीपः

नन्वेवं घटादावपि तज्जनकादृष्टजनककृतेरेव हेतुत्वमस्तु। न तु कपालगोचरकृतेरविशेषादित्यत आह ॥ **न चेति** ॥ **येन सापीति** ॥ क्षितिजनकादृष्टजनकहविरादिगोचरजीवकृतिव्यतिरेकेण क्षित्यादिव्यतिरेकस्तु ''कार्यमात्रेऽदृष्टं हेतुः'' इति वदतस्तवापि सम्मत इति तादृशकृतिस्तु स्यादेव हेतुरिति भावः। उक्तं च सुधायाम् ''अदृष्टवतां जीवात्मनामेव कर्तृत्वोपपत्तेः'' इति शास्त्रयोनिसूत्रे।

नन्वेवं नेदं सकर्तृकत्वं तथात्वे भोजकादृष्टद्वारा भोक्तृकृतिजन्ये घटादौ भोक्तृकर्तृकत्वव्यवहारापत्तेः। उक्तं च मणौ ''अत एव घटभोक्ता न तत्कर्ता व्यवह्रियत इति'' इति चेन्न। अदृष्टद्वारकघटाद्युपादानगोचरापरोक्षज्ञनचिकीर्षाकृतिमतोपि तदनुकूलाङ्गचेष्टाहीनस्य कर्तृत्वाव्यवहारात् तदनुकूलचेष्टावत्येव तद्व्यवहारात् त्वदुक्तचेष्टानिरपेक्षकृतिमज्जन्यत्वेपि सकर्तृकत्वव्यवहारानापत्त्या सकर्तृकत्वविवादापरिहारेणार्थान्तरतापत्तेः। शरीरचेष्टादिहीनेपि क्षित्यादिकर्तरि कर्तृत्वं पारिभाषिकं चेत् अदृष्टद्वारा क्षित्यादिजनककृतिमत्यपि कर्तृत्वं पारिभाषिकमेवास्त्विति भावः।

ननु घटादावुपादानव्यतिरेकेण घटादिव्यतिरेकदृष्ट्या तादृशकृतिमति कुलाले मुख्यकर्तृत्वोपपत्तेरिहापि क्षित्याद्युपादानकृतिमान् मुख्य एव कर्ता स्यादित्यत आह ॥ **घटादाविति** ॥ न चानुमानात्तत्सिद्धिरिति पूर्ववाक्यार्थानुवादः ॥ **घटादाविति तत्कल्पने चेति** ॥ स्वोपादानगोचरकृतिकल्पने चेत्यर्थः। क्षित्यादाविति योज्यम्। उत्तरवाक्यस्थविपर्ययशब्दार्थं वदन्नेवापाद्यमाह ॥ **त्वदुक्तेति** ॥ **चेष्टाद्वारक कृतिरेवेति** ॥

ननूक्तमत्र घटादौ कार्यविशेषे चेष्टाद्वारककृतिदृष्टावपि यत्सामान्यविशेषन्यायेन कार्यसामान्ये कृतित्वेन हेतुत्वादिति चेन्न। क्लृप्तया क्षितिजनकादृष्टजनककृत्यैवोपपत्तावक्लृप्तकृतिकल्पनस्यैव बाधकत्वेन बाधकाभाव इत्यस्यासिद्धेरिति भावः।

छलोत्तरत्वनिरासायानुमानदोषं निष्कृष्याह ॥ **एवं चेति** ॥ दर्शनमात्रस्यातिप्रसञ्जकत्वे सतीत्यर्थः।

॥ **अकारणत्वादिति** ॥ घटादौदर्शनमात्रस्य शरीरचेष्टाद्यतिप्रसञ्जकत्वात् यत्सामान्यविशेषन्यायस्याक्लृप्तानेकादृष्टकल्पनाप्रसङ्गबाधितत्वेनाग्रे दूष्यत्वेन चानवतारादिति भावः।

## तर्कताण्डवम्

किञ्चोपादानशब्दो यदि यत्किञ्चिदुपादानपरस्तदा शब्दफूत्कारादौ सिद्धसाधनम्। तस्यापि यत्किञ्चित्प्रत्युपादानभूतमृदङ्गादिगोचरास्मदादिनिष्ठज्ञानादिजन्यत्वात्। यदि तु सर्वलोकसिद्धव्युत्पत्त्यनुसारेण समभिव्याहृतपरस्तदोपादानशब्दार्थीभूतसमवायिकारणे लाघवात् समवायिकारणभागत्यागेन क्षित्यादिकं प्रति त्वदुक्तविपरीतक्षित्यादिकारणगोचरकृतित्वेनैव कारणत्वग्रहात्तथाभूतकारणसाधनेपि सिद्धसाधनमेव। क्षितिजनकादृष्टजनकज्ञानदेरदृष्टद्वारा क्षितिजनकहविरादिविषयत्वात्।

नच हविरादि क्षितिं प्रति प्रयोजकमेव न तु कारणमिति वाच्यम्। तत्रापि कारणशरीरप्रविष्टानन्यथासिद्धभागत्यागेन त्वदुक्तविपरीतनियतपूर्ववर्त्तिरूपप्रयोजकगोचरकृतित्वेनैव हेतुत्वेऽतिलाघवात्।

## न्यायदीपः

नन्वस्तु तर्हि उपादानागोचरेत्याद्येव साध्यमित्यतः ''कार्य सामान्यं हि कारणसामान्यायत्तम्'' इति टीकां हृदि कृत्वा पराभिमतसाध्यं निराह ।। **किञ्चोपादानेत्यादिना** ।। **सिद्धेति** ।। अंशतः सिद्धसाधनमित्यर्थः।

न च तत्र ज्ञानेच्छयोर्न कारणत्वम्। किं तु कृतिमात्रस्यैव। मिलितानां तेषां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वादिति वाच्यम्। ज्ञानादिघटितं साध्यत्रयमेवेदमिति मणिकृदभिमतत्वेन उक्तदोषापरिहारात्। यदत्रोक्तं ठक्कुरादावुपादानगोचरत्वेन यस्य ज्ञानादेर्जनकत्वं तादृशज्ञानादिजन्यत्वं साध्यम्। तेन च रूपेण स्वविषयसमवेतकार्यं प्रत्येव जनकत्वान्न दोषः। स्वजन्यादृष्टेत्यादिविशेषणं तु कालीरूपेंऽशतः सिद्धसाधनतावारणायेति। तन्न। वक्ष्यमाणदिशा लाघवेन कारणगोचरज्ञानादित्वेन जनकतयोक्तरूपेण जनकत्वस्य क्वाप्यकल्पनात्।

॥ **यत्किञ्चिदिति** ॥ स्वगतरूपादिकं प्रतीत्यर्थः। मृदङ्गादीत्यादिपदेन ताल्वादिग्रहः ॥ **उपादानशब्दार्थीभूतेत्यादि** ॥ वेदान्तिमत इव परिणामिकारणानङ्गीकारात्समवायिकारणेत्युक्तम्। स्वोक्तदोषं मूलारूढं दर्शयितुं न चानुमानात्तत्सिद्धिरिति पूर्ववाक्यस्य क्षित्याद्युपादानगोचरज्ञानादित्वेन तज्जन्यत्वसिद्धिर्न चेत्यर्थमुपेत्योत्तरवाक्यस्थविपर्ययशब्दार्थमाह ॥ **त्वदुक्तेति** ॥ **कारणत्वग्रहादिति** ॥ घटादौ लाघवेन घटादिकारणगोचरकृतित्वेनैव कारणताग्रहात् क्षित्यादावपि तथैव कारणत्वकल्पनादित्यर्थः।

अस्तु तथैवोपादानपदं कारणमात्रपरम्। तावतापीश्वरसिद्धेरित्यत आह ॥ **तथाभूतेति** ॥ क्षित्यादिकारणगोचरकृतित्वेन रूपेण कृतिरूपकारणसाधने चेत्यर्थः। उक्तरूपज्ञानवज्जन्यं चिकीर्षावज्जन्यमित्यत्राप्येवं दोषो ध्येय इति भावेन कृतिमात्रस्य प्राग्व्यवहारेपि ज्ञानादेरित्युक्तम्। न चैतदर्थमेव स्वजन्यादृष्टेत्यादि विशेषणमुक्तमिति वाच्यम्। तत्पक्षेऽप्रयोजकत्वदोषस्य हेतावुक्तत्वादिति भावः ॥ **प्रयोजकमेवेति** ॥ घटे कुलालपितृवदिति भावः। मूलारूढताप्रदर्शनाय त्वदुक्तविपरीतेत्युक्तिः। एवमग्रेपि ॥ **प्रयोजकगोचरेति** ॥ त्वदुक्तेत्यर्थः।

## तर्कताण्डवम्

**यच्चोक्तं विशेषयोरन्वयव्यतिरेकेण वा कारणत्वेन वा सामान्ययोरपि कारणत्वमिति। तत्र न तावदाद्यः। अन्वयव्यतिरेकयोस्त्वदुक्तविपरीते स्वसमानप्रकारककार्यकारणभावग्रह एव सामर्थ्यस्य क्लृप्तत्वात्। अधिकसामर्थ्यकल्पनायां च बीजाभावात्।**

**नापि द्वितीयः विमते सामान्ये कार्यकारणभावापन्ने बाधकं विना कार्यकारणभावापन्नविशेषसम्बन्धित्वात्। धूमवह्निसामान्यवदित्यत्र व्यतिरेकावच्छेदकरूपवत्त्वस्यैव उपाधित्वात्। नच साधनव्यापकता। त्वत्पक्षे कृतित्वस्य देशतः कालतश्च व्यतिरेकरहितेश्वरकृतिवृत्तित्वेन व्यतिरेकानवच्छेदकत्वात्। नचैवमाकाशाद्यसिद्धिः। साक्षिणैव तत्सिद्धेः। शब्दादिकारणत्वेन तदसिद्धावपि गुणस्य समवे-**

**तत्वव्याप्त्या शब्दसमवायित्वेनैव तत्सिद्धेश्च। निमित्तकारणत्वादिग्रहे यत्र यदा न दण्डस्तत्र तदा न घट इति संसर्गभावरूपस्य व्यतिरेकस्य तन्त्रत्वेपि समवायिकारणत्वग्रहे यत्र समवायिकारणं तत्र न कार्यमित्यन्योन्याभावरूपव्यतिरेकस्यैव तन्त्रत्वेन शब्दसमवायिकारणत्वेनापि तत्सिद्धिसम्भवाच्च।**

## न्यायदीपः

ननु यदुक्तं क्षित्याद्युपादानगोचरकृतिव्यतिरेकेण क्षितिव्यतिरेको न दृष्टः। येन सापि हेतुरिति। तन्न। विशेषयोरन्वयादिदृष्ट्या सामान्ययोरपि तत्कल्पनादित्यत आह ॥ **यच्चोक्तमिति** ॥ नन्विदमप्रयोजकमित्यादिशङ्कोत्तररूपपूर्वग्रन्थ इत्यर्थः ॥ **त्वदुक्तविपरीत इति** ॥ घटकुलालकृत्योः अन्वयादिना कार्यसामान्यकृतिसामान्ययोः कार्यकारणभाव इति यत्त्वदुक्तं तद्विपरीते घटत्वकुलालकृतित्वरूपान्वयव्यतिरेकप्रकारसमानप्रकारककार्यकारणभाव एव सामर्थ्यमित्यस्य दण्डघटादौ निर्णीतत्वादित्यर्थः।

॥ **बीजेति** ॥ ननु बाधकाभाव एव बीजमिति चेन्न। तादृशसामर्थ्यकल्पनायामनेकादृष्टकल्पनस्यैव बाधकत्वात्। घटादावदृष्टस्य हस्तचेष्टानिरपेक्षकृतिजन्यत्वनित्यसर्वविषयज्ञानादिजन्यत्वादेरनेकस्य कल्प्यत्वात्। क्लृप्तसामर्थ्यमात्रस्वीकारे तु लाघवात्। अन्यथा तन्तुरूपपटरूपयोरन्वयव्यतिरेकाभ्यां कार्यगतरूपसामान्यं प्रति कारणगतरूपसामान्यं कार्यगतगुणमात्रं प्रति कारणगतगुणमात्रं कारणमिति वा कल्प्यं स्यात्। तत्र यद्यद्बाधकमुपनिपतति तत्सर्वमपि तदनुगुणप्राक्रियाकल्पनया परिहार्यं स्यादिति भावः।

सामान्ये इति द्विवचनान्तम्। कार्यसामान्यकृतिसामान्ये इत्यर्थः ॥ **बाधकं विनेति** ॥ सामान्ये व्यभचाररूपबाधकं विनेत्यर्थः। यद्धर्मवत्त्वेनोपस्थितयोः विशेषयोः कार्यकारणभावस्तद्धर्मालिङ्गितत्वं तत्सम्बन्धित्वं ध्येयम्। घटकुलालयोः कार्यकारणभावे कार्यसामान्यपुरुषसामान्ययोः प्रमाणवाक्यत्वेन वक्तृवाक्यार्थप्रमात्वेन कार्यत्वादिकल्पनेऽपि वाक्यसामान्यवक्तृज्ञानसामान्ययोश्च तदभावाद्व्यभिचारवारणाय बाधकं विनेति ॥ **व्यतिरेकेति** ॥ अत्र रूपशब्दो धर्मपरः। धूमसामान्यवह्निसामान्ययोः कार्यकारणभावो हि न तादृशधूमविशेषवह्निविशेषसम्बन्धित्वनिबन्धनोऽपितु यत्र

वह्न्यभावस्तत्र धूमाभाव इति व्यतिरेकं प्रत्यवच्छेदकभूतवह्नित्वधूमत्वाख्यधर्मवत्त्वनिमित्त एव। कार्यकारणभावापन्नघटदण्डादिस्थले सर्वत्र तथा दर्शनेन साध्यव्यापकत्वं व्यक्तमिति साधना-व्यापकत्वं व्यनक्ति ॥ **न चेत्यादिना** ॥

## तर्कताण्डवम्

**नच समवायिभिन्न इव त्वन्मते कृतिविषयभिन्नः प्रसिद्धः। येन कृतेरप्यन्योन्याभावरूपव्यतिरेकेण कारणता गृह्येत। सर्वस्यापीश्वरकृतिविषयत्वात्। पारिमाण्डल्यस्यापि स्वनिष्ठघटाभावसाक्षात्कारं प्रति संयुक्तसमवेतविशेषणता-रूपप्रत्यासत्त्यन्तर्भूततया हेतुत्वेन ईश्वरकृतिविषयत्वात्। नच तत्र घटाभावो न प्रत्यक्षः। अभावप्रत्यक्षत्वप्रयोजकत्वेन त्वदुक्तस्य योग्यप्रतियोगिकत्वादेस्तत्रापि सत्त्वात्। एवं च त्वदुक्तदेशकालापरिच्छिन्नकृतिजन्यत्वविपरीतपरिच्छिन्नकृति-जन्यत्वेनाप्यनुमितिः स्यात्।**

## न्यायदीपः

व्यतिरेकावच्छेदकरूपवत्त्वस्यैव कारणतायां ज्ञापकत्वे शब्दसमवायिकारणतया आकाश-सिद्धिर्न स्यात्। तथा ज्ञानादिसमवायिकारणत्वेन आत्मसिद्धिश्च न स्यात्। परत्वापरत्वकारणतया देशकालसिद्धश्च न स्यात्। तेषां नित्यविभुत्वेन व्यतिरेकावच्छेदकरूपवत्त्वाभावादित्याशङ्क्य निराह ॥ **न चैवमिति** ॥

॥ **साक्षिणैवेति** ॥ आत्मस्वरूपज्ञानरूपेण साक्षिणैवेत्यर्थः। शब्दज्ञानविधुरजाति-बधिरादेरप्याकाशप्रतीत्या शब्दकारणतयैवाकाशधीरिति नियमाभावात्साक्षिणैवेत्युक्तम्। विवृतं चैतत् -

"सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्।"

इत्याद्यानुमानिकपादीयानुव्याख्यानसुधयोर्वादावल्याञ्चेति भावः।

किञ्च "द्रव्यकारणत्ववत् समवायिकारणत्वं विशिष्टं न ग्राह्यं किन्तु समवायित्वसमाना-

धिकरणं कारणत्वमेव समवायिकारणत्वम्। तथा च ''उभयग्राहकसमाजादुभयग्रहे अर्थसमाज'' इति पक्षधराद्युक्तेः केवलसमवायित्वग्राहकोपनिपातेन तन्मात्रस्यापि ग्रहणसम्भवादिति भावेन साक्षिणि विप्रतिपन्नं प्रत्यन्यथाप्याकाशसिद्धिमाह ॥ **शब्देति** ॥ **समवायित्वेनेति** ॥ समवायवृत्त्या शब्दाश्रयत्वेनेत्यर्थः। शब्दः क्वचिदाश्रितः गुणत्वादिति सामान्यतस्तदाश्रयसिद्धौ शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यवृत्तित्वे बाधकोपपन्नत्वे सत्याश्रितत्वादिति सामान्यपरिशेषाभ्यां शब्दादिसमवायित्वेनैव सिद्धिसम्भवादिति भावः।

समवायिकारणत्वं विशिष्टमेव ग्राह्यमिति मतेपि तेन रूपेणाकाशसिद्धिप्रकारं मण्युक्तमेव दर्शयति ॥ **निमित्तेति** ॥ आदिपदेन व्याप्त्यसमवायिकारणत्वग्रहः ॥ **संसर्गाभावरूपस्येति** ॥ निमित्तकारणकार्ययोराश्रयाश्रयिभावाभावात् संसर्गाभावस्य तन्त्रत्वमिति भावः।

नन्वेवं चेदीश्वरकृतिसिद्धिरप्येवमस्तु। यन्न कृतिविषयः न तत्र कार्यमित्यन्योन्याभावरूपव्यतिरेकेणैव कृतिकार्ययोः कार्यकारणत्वग्रहसम्भवेन क्षितिरूपकार्यानुकूलकृतिसिद्धिरित्यत आह ॥ **न चेति** ॥ **सर्वस्यापीति** ॥ ईश्वरकृतेः कारणमात्रविषयकत्वात् सर्वस्यापि यत्किञ्चित्प्रति कारणत्वादिति भावः।

नन्वस्त्वात्मकालाकाशादेरपि स्वगतगुणोपादानतयेश्वरकृतिविषयत्वम्। परमाणुपरिमाणस्य पारिमाण्डल्यशब्दितस्य किञ्चित्प्रत्यप्यकारणत्वात्। तत्र यन्न कृतिविषयो न तत्र कार्यमिति व्यतिरेकग्रहः सुशक इत्यत आह ॥ **पारिमाण्डल्यस्यापीति** ॥ द्व्यणुकगतह्रस्वपरिमाणस्यापि उपलक्षणं ध्येयम् ॥ **योग्यप्रतियोगिकत्वादेरिति** ॥ अन्योन्याभावप्रत्यक्षे हि ह्यधिकरणप्रत्यक्षं तन्त्रम्। न त्वभावप्रत्यक्षमात्रे। अभावप्रत्यक्षे हि प्रतियोगियोग्यत्वं वा यत्र यत्सत्त्वमनुपलब्धिविरोधीत्युक्तदिशा प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपमनुपलब्धेर्योग्यत्वं वा तन्त्रम्। तच्च पारिमाण्डल्यादावभावग्रहेप्यस्तीति स्यादेवाभावः प्रत्यक्ष इत्यर्थः।

न द्वितीय इत्यादिनोक्तं दोषं ''विपर्ययेणाप्यनुमातुं शक्यत्वात्'' इति मूलारूढं कुर्वन्नेव निष्कृष्य दर्शयति ॥ **एवं चेति** ॥ बाधकाभावेन व्यतिरेकावच्छेदकरूपवत्त्वस्य कारणत्वे तन्त्रत्वे सतीत्यर्थ ॥ **परिच्छिन्नेति** ॥ असर्वविषयानित्येत्यर्थः। तथाच कार्यत्वहेतुरप्रयोजक इति भावः।

## तर्कताण्डवम्

**यच्चोक्तमुपादानज्ञानं साक्षात्कारत्वेनैव हेतुरिति तदपिन**

**त्वन्मते चेष्टोपादानस्य वायवीयशरीरस्याप्रत्यक्षत्वेपि तदधिष्टातुरात्मनश्चेष्टाहेतुकृतेरावश्यकत्वेन त्वदुक्तापरोक्ष-ज्ञानत्वविपरीतेन ज्ञानत्वेनैव कृतिहेतुत्वात्। परमाण्वादि-परोक्षज्ञानेन कृत्यभावस्तु न साक्षात्त्वविरहात्। किं तु कृतियोग्यताप्रयोजकदेशकालविशेषसत्त्वविषयकत्वविराहत्। अत एवान्धस्याप्तवाक्यादिना देशकालविशेषहेयोपादेयज्ञाने सति हानोपादाने युक्ते। यच्च कपालदृष्टान्तेन कारणी-भूतसंयोगाश्रयत्वेनात्मनः कारणत्वसाधनं तन्न। कपालादेः कारणत्वे त्वदुक्तविपरीतस्य लघुनः कार्याश्रयत्वस्यैव तन्त्रत्वात्।**

## न्यायदीपः

एवं पराभिमतकृतिजन्यत्वांशे कार्यत्वहेतोरप्रयोजकत्वमुक्त्वा अपरोक्षज्ञानजन्यत्वांशेऽपि अप्रयोजकत्वमिति भावेन कृतेरपरोक्षज्ञानपूर्वकत्वं प्रागुक्तं निराह ॥ **यच्चोक्तमित्यादि** ॥ **हेतुरिति** ॥ कपालादिकृतावित्यर्थः। तथाच क्षित्यादिनिष्ठकार्यत्वहेतोर्व्यापकतया क्षित्यादिजनकमपि ईश्वरज्ञानमपरोक्षमेव सिद्ध्यतीति यदुक्तमित्यर्थः ॥ **त्वन्मते चेष्टेत्यादि** ॥ वायवीयशरीरादावुपा-दानापरोक्षज्ञानाभावेपि चेष्टाहेतुतया कृतिसत्त्वेनापरोक्षत्वस्य कृतौ व्यभिचारादिति भावः।

तर्हि परमाण्वाकाशादिगोचरलिङ्गादिज्यज्ञानेनापि तद्गोचरकृतिः स्यादित्यत आह ॥ **पर-माण्वादीति** ॥ **देशेति** ॥ कपालादेरिव देशविशेषे कालविशेषे सत्त्वाभावादित्यर्थः। पर-माणोर्नित्यत्वेन कालविशेषसत्त्वं नास्ति गगनादौ तु देशविशेषसत्त्वं नेति न तत्र कृतिरिति भावः ॥ **अत एवेति** ॥ ज्ञानत्वेनैव कृतिहेतुत्वादेवेत्यर्थः ॥ **हेयेति** ॥ तत्र सर्पोस्ति अत्र रजतमस्तीति ज्ञाने सतीत्यर्थः।

नन्वस्त्वपरोक्षज्ञानत्त्वसिद्ध्यभावस्तथापि कुलालवत्कार्यहेतुतया स्यादेवेश्वरसिद्धिः। कुलाले घटहेतुत्वस्य प्रागेव साधनादित्यतः प्रागुक्तं दृष्टान्ते साध्यवैकल्योद्धारमनूद्य निराह ॥ **यच्चेति** ॥ घटकारणीभूतसंयोगाश्रयस्य कपालस्य घटकारणत्वदर्शनादिति ग्रन्थेनोक्तमित्यर्थः ॥ **लघुन इति** ॥ कार्यासमवयिकारणसंयोगाश्रयत्वापेक्षया कार्याश्रयत्वस्य लघुत्वात्। तथा चात्मनस्तदभावान्नघट-

हेतुत्वमिति दृष्टान्तः साध्यविकल एवेति भावः। न च भूतलादेरपि घटकारणत्वप्रसङ्गः। समवायवृत्त्या तदाश्रयत्वस्याभिमतत्वात्।

एतच्चाभ्युपेत्योक्तम्। वस्तुतस्तु समवायस्याग्रे निरसिष्यमाणतया

"तन्तुभ्योन्यः पटः साक्षात् कस्य दृष्टिपथं गतः"

इति स्मृत्या संयोगविशेषविशिष्टकपालद्वयातिरिक्तघटस्यैवाभावाद् दृष्टान्तासिद्धिः।

किं च संयोगस्य हेतुत्वोपगमेपि तदवच्छेदकत्वेनान्यथासिद्धत्वादात्मनो न हेतुत्वम्। न चैवं चेष्टाद्वारा घटहेतुप्रयत्नवदात्मसंयोगावच्छेदकत्वेनात्मनोन्यथासिद्धौ तत एव प्रयत्नस्याहेतुत्वमिति युक्तम्। प्रयत्नस्य स्वतन्त्रान्वयव्यतिरेकाभ्यामेव हेतुत्वेन तस्य तादृशसंयोगविशेषणत्व-निबन्धनत्वाभावात्। प्रयत्नवदात्मसंयोगस्य हेतुत्वे मानाभावाच्च। येन तदाश्रयतयाप्यात्मा हेतुः स्यात्। स्वव्यधिकरणतदीयगुणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं तु मन्त्रपाठजन्यविषचलने मन्त्ररूपशब्दगुणकाकाशसंयोगासमवायिकारणत्वहीने स्वव्यधिकरणमन्त्ररूपाकाशीयगुणव्यतिरेक-प्रयुक्तव्यतिरेकप्रतियोगित्वरूपहेतुमति व्यभिचारि। तथा तुलायामेकदिगवस्थिताधिकगुरुत्व-जन्यापरदिगवथितोन्नमनक्रियायां च व्यभिचारि। न च तत्रापि साध्यमस्तीति वाच्यम्। विप्रतिपत्तेः। न च क्रमेण स्थळद्वये व्यभिचारवारणायादृष्टाद्वारकेति प्रत्यक्षेति च गुणविशेषणम्। मन्त्रस्त्वाशु-तरविनाशित्वाददृष्टद्वारैव विषचलनहेतुः गुरुत्वगुणश्च न प्रत्यक्ष इति वाच्यम्। तथात्वे स्वव्यधिकरण-पदवैय्यर्थ्यापत्तेः। प्रत्यक्षपदेनैव प्रागुक्ततत्कृत्यलाभाददृष्टवदात्मसंयोगस्य कारणताभङ्गप्रसङ्गाच्च। चेष्टायामात्मकारणत्वप्राप्तावपि घटं प्रत्यात्मनः कारणत्वासिद्धेश्च॥

एतेन मूर्तवृत्ति यत्कार्यं यदीयगुणनिमित्तकारणकं तत्तत्संयोगजन्यमिति व्याप्त्या संयोग-कारणत्वसिद्धिः। अत्र शब्दजन्ये गगनसंयोगाजन्ये शब्दगोचरप्रत्यक्षे व्यभिचारनिरासाय मूर्तेति। तन्तुरूपजन्ये तन्तुसंयोगाजन्ये पटरूपे तन्निरासाय निमित्तेति। दण्डावयवीयदण्डनिमित्तके दण्डा-वयवसंयोगाजन्ये घटे तद्वारणाय गुणेति पदमिति रुचिदत्तोक्तं निरस्तम्। पूर्वोक्तोन्नमनक्रियायां व्यभिचारादित्यलम्।

## तर्कताण्डवम्

**यच्चोक्तं ज्ञानमनित्यमेवेत्यादि व्याप्तिरमूलेति तन्न।**
**लाघवेन कृतिजन्यत्वे जन्यत्वस्येव मनोजन्यत्वे आत्म-**

**विशेषगुणत्वस्यैव इन्द्रियजन्यत्वे साक्षात्कारत्वस्यैव ज्ञानजन्यत्वे इच्छात्वस्यैव इच्छाजन्यत्वे कृतित्वस्यैव तन्त्रत्वेन व्याप्तेः समूलत्वे त्वदुक्तविपरीतस्येश्वरज्ञानाद्यनित्यत्वस्यानुमातुं शक्यत्वात्।**

## न्यायदीपः

नन्वस्तूपादानगोचरज्ञानं ज्ञानत्वेनैव कृतिहेतुर्न त्वपरोक्षत्वेन। अस्तु च घटादौ कुलालकृत्यादेरेव हेतुतया कुलालस्याहेतुत्वेन तद्दृष्टान्तेश्वरस्य क्षित्यादिहेतुतया सिद्ध्यभावः। तथापि तादृशज्ञानं कार्यत्वहेतोः पक्षधर्मताबलान्नित्यमेव सिध्यतीति तदाश्रयतयेश्वरसिद्धिर्भवतु को दोषः। न च ज्ञानमनित्यमेव साक्षात्कारस्त्विन्द्रियजन्य एव इच्छा ज्ञानजन्यैव कृतिरिच्छाजन्यैवेत्यदिव्याप्तिबाधः। ज्ञानत्वानित्यत्वयोः कार्यकारणभावादेरभावेन व्याप्तेरमूलत्वात्। कार्यकृत्योश्च कार्यकारणभावादित्युक्तत्वादित्यतस्तन्निराह ॥ **यच्चेति** ॥ यथाहि कृतिजन्यत्वमेव प्रयोजकं लाघवात् न तु शरीरजन्यत्वादिकमित्युच्यते तथा आत्मविशेषगुणत्वादिरेव मनःप्रभृतिकारणजन्यत्वे प्रयोजक इति आत्मविशेषगुणत्वस्येश्वरीयज्ञानेच्छाकृतिषु तिसृष्वपि सत्त्वात्। साक्षात्कारत्वेच्छात्वकृतित्वरूपधर्मत्रयस्यापीश्वरीयज्ञानादौ प्रत्येकं सत्त्वेन च मनःप्रभृतिकारणजन्यत्वापत्त्या अनित्यत्वस्य दुर्वारत्वादिति भावः।

सङ्ख्यापरिमाणाद्यात्मसामान्यगुणे मनोजन्यत्वाभावाद्विशेषगुणत्वस्येत्युक्तम्। मनोजन्यत्वं च मनस्त्वेन रूपेण तज्जन्यत्वं ध्येयम्। तेन मनः क्रियायामात्ममनः संयोगादौ च मनोजन्ये नाव्याप्तिदोषः। एवं ज्ञानजन्यत्व इत्यादावपि ज्ञानत्वादिना तज्जन्यत्वं ध्येयम्।

## तर्कताण्डवम्

**नचास्या व्याप्तेरस्मदादिज्ञानादिमात्रविषयकत्वात् कार्यत्वानुमानेन च पक्षधर्मताबलादस्मदादिभिन्नकर्तृसिद्ध्या भिन्नविषयकत्वादप्रतिबन्धकतेति वाच्यम्। सामान्यप्रत्यासत्त्यभ्युपगमे समानविषयकत्वात्। तदनभ्युपगमे स्थापनानुमानव्याप्तेरप्रसिद्धकर्तृसाधकत्व इवास्या अपि व्याप्तेः तद्बाधकत्वे समानप्रकारकत्वस्यैव तन्त्रत्वात्। अन्यथा**

**बाधसत्प्रतिपक्षावप्यप्रतिबन्धकौ स्याताम्। प्रत्यक्षादिसिद्धाभावप्रतियोगि यच्छैत्यम् तदन्यस्यैव शैत्यादेः पक्षधर्मताबलात्सिद्धिरिति तत्रापि सुवचत्वात्। अदृष्टाद्वारकशरीरजन्यत्वमुपाधिश्च।**

## न्यायदीपः

"वयं तु ब्रूमः पक्षधर्मताबलान्नित्यत्वं सिध्यति" इत्यादिना मण्युक्तमेवाशङ्क्य निराह ।। **न चास्या व्याप्तेरिति** ।। ज्ञानमनित्यमेव, साक्षात्कार इन्द्रियजन्य एव, इच्छाज्ञानजन्यैव इत्यादिव्याप्तेरित्यर्थः ।। **मात्रेति** ।। पक्षधर्मताबललभ्याप्रसिद्धज्ञानाद्यविषयकत्वादित्यर्थः ।। **कर्त्रिति** ।। अपरोक्षज्ञानचिकीर्षाकृतिमत्पुरुषसिद्ध्येत्यर्थः।

किमेतद्भिन्नविषयत्वं यत्र धूमस्तत्राग्निरिति महानसादौ धूमवह्न्योर्व्याप्तिग्रहः सामान्यप्रत्यासत्त्या पर्वतादिपक्षनिष्ठधूमवह्नी अपि विषयीकरोतीति त्वन्मतरीत्योच्यते, अथ सामान्यप्रत्यासत्तेरभावात् अन्यत्र जायमानव्याप्तिग्रहः पक्षीयहेतुसाध्येनावगाहते तथापि समानप्रकारकत्वमात्रेण पक्षीयहेतुसाध्ययोर्लिङ्गलिङ्गिभावे नियामक इति मीमांसकरीत्योच्यत, इति विकल्पौ हृदि कृत्वा क्रमेण निराह ।। **सामान्येति** ।। **समानेति** ।। कार्यत्वकृतिजन्यत्वरूपसमानप्रकारकत्वस्य च ज्ञानत्वानित्यत्वरूपसमानप्रकारकत्वस्य चेत्यर्थः ।। **अन्यथेति** ।। उक्तव्याप्तेरबाधकत्व इत्यर्थः।

बाधादेरप्रतिबन्धकत्वं व्यनक्ति ।। **प्रत्यक्षेति** ।। वह्निः शीतो वस्तुत्वादित्यादौ यत्पक्षधर्मताबललभ्यं शैत्यं तदन्यस्यैव शैत्यस्याभावः पक्षीभूतवह्निव्यतिरिक्ते गृहीत इति पक्षीभूतवह्नावेव वा यदि शैत्याभावो गृहीतः तदापि त्वगिन्द्रियगृहीताभावप्रतियोगिशैत्यादन्यदेवेदं साध्यमानं शैत्यमिति वक्तुं शक्यत्वादित्यर्थः। एवं कार्यत्वानुमानेऽसिद्ध्यप्रयोजकत्वबाधानुक्त्वोपाधिश्चाह ।। **अदृष्टेति** ।। क्षित्यादेरदृष्टद्वाराऽस्मदादिशरीरजन्यत्वात्साधनाव्यापकत्वायादृष्टाद्वारकेति शरीरेति च विशेषणम्। घटादौ साध्यव्यापकत्वं व्यक्तम्।

## तर्कताण्डवम्

**नचायं पक्षमात्रव्यावर्तकविशेषणवत्त्वात् साधनघटितत्वाद् व्याप्तिग्राहकतौल्येन हेतुसमानयोगक्षेमत्वाच्चानु-**

**पाधिरिति वाच्यम्। शरीरजन्यत्वे त्वदभिमतघटत्वादेः अननुगतत्वेन तद्विपरीतस्य कर्तृजन्यत्वस्यैवावच्छेदकत्वेन साध्यव्यापकत्वात्। सति च साध्यव्यापकत्वे बाधोन्नीतस्य पक्षेतरत्वस्य वह्निना धूमसाधन आर्द्रेन्धनप्रभववह्निमत्त्व-रूपस्य साधनघटितस्य, जलस्य रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवीत्वरूपस्य हेतुसमानयोगक्षेमस्य चोपाधितादर्शनात्।**

**नच कर्तृजन्यत्वे लाघवेन जन्यत्वस्यैवावच्छेदकत्वाद्धेतोः व्याप्तिनिश्चये साध्यव्याप्यहेत्वव्यापकत्वादुपाधेः साध्याव्यापकतेति वाच्यम्। त्वदुक्तरीत्या कर्तृजन्यत्वे जन्यत्वमवच्छेदकं शरीजन्यत्वे तु घटत्वादिकं वा अथवा तद्विपर्ययेण शरीरजन्यत्वे जन्यत्वं कर्तृजन्यत्वे तु घटत्वादिकं वेति सन्देहेन सन्दिग्धोपाधेर्दुष्परिहरत्वात्।**

## न्यायदीपः

उपाध्याभासोयमित्याशङ्क्य निराह ।। **न चायं पक्षमात्रेति** ।। तादृशस्याप्युपाधित्वे पर्वतेतरत्वादेरप्युपाधितापत्त्याऽनुमानमात्रोच्छेद इति भावः ।। **साधनेति** ।। कार्यत्वापरपर्यायजन्यत्व-घटितत्वादित्यर्थः। तादृशस्याप्युपाधित्वेऽतिप्रसङ्गादिति भावः।

यद्यपि समवेतत्वे सति जन्यत्वं साधनं न तु जन्यत्वमात्रम्। तथापि साधनविशेषितवत् साधनैकदेशविशेषितोपि नोपाधिरिति भावेनेदं योज्यम्। यद्वा ध्वंससाधारणपक्षत्वे जन्यत्वमेव हेतुरिति तदभिप्रायमेतत्।

।। **व्याप्तिग्राहकेति** ।। यत्र सकर्तृकत्वं तत्र शरीरजन्यत्वमिति व्याप्तिग्राहकं भूयः सहचारदर्शनादिकं यत्र जन्यत्वं तत्र सकतृकत्वमिति व्याप्तिग्रहेपि तुल्यमिति व्याप्तिग्राहक-तौल्येनेत्यर्थः। तथाच साध्यव्यापकत्वानिश्चयान्नोपाधिरिति भावः।

शङ्काग्रन्थमण्युक्तमेव समाधिमाह ।। **शरीरजन्यत्व इत्यादिना दर्शनादित्यन्तेन** ।। अननुगतत्वेनेत्यनन्तरं अनवच्छेदकत्वादिति शेषः। मूलारूढताभिव्यक्त्यर्थं तद्विपरीतेत्युक्तम् ।। **साध्येति** ।। सकर्तृकत्वरूपसाध्येत्यर्थः ।। **पक्षेतरत्वस्येति** ।। तेजोऽनुष्णं पदार्थत्वादित्यत्र

अतेजस्त्वस्येत्यर्थः। तत्र बाधस्थले इवेहापि पक्षभूतक्षित्यादितः शरीरजन्यत्वरूपोपाधेर्व्यावृत्त्या तद्व्याप्यसाध्यभावस्यापि निर्णयादिति भावः।

॥ **वह्निनेत्यादि** ॥ ननु तत्र धूमवत्त्वे वह्निमत्त्वमात्रमप्रयोजकम्। अनुकूलतर्काभावात्। साधनघटितोपि स्यादुपाधिरिति चेत्तुल्यं प्रकृतेति त्वदभिप्रेतसकतृकत्वे कार्यत्वहेतोरप्रयोजकत्वस्य प्रागुपपादनादिति भावः।

॥ **हेतुसमानयोगक्षेमस्येति** ॥ रसवत्त्वस्य गन्धवत्त्वेन व्याप्तिः पृथिवीत्वोपहिते ग्राह्या। नत्वन्यत्र। सा च तत्र येन मानेन ग्राह्या तेनैव च गन्धवत्त्वपृथिवीत्वयोरपि सिद्ध्यतीति भावः। "लाघवेन बाधकं विना कर्तृजन्यत्वे हि जन्यत्वमवच्छेदकं न तु शरीरजन्यत्वं गौरवात्। तथाच न शरीरजन्यत्वं सकतृकत्वव्यापकम्। घटादौ त्वार्थः समाजः। घटत्वेन शरीरजन्यत्वनियमात्" इत्यादिना मण्युक्तमाशङ्क्य निराह ॥ **न च कर्त्रिति** ॥ **हेतोरिति** ॥ जन्यत्वहेतोरित्यर्थः। ध्वंस-साधारणपक्षत्वपक्षे जन्यत्वस्यैव हेतुत्वादिति भावः।

## तर्कताण्डवम्

**नच कर्तृजन्यत्वं प्रथमं ज्ञातं सच्छरीरजन्यतावच्छेदकत्वेन कल्प्यम्। तच्च कार्यत्वावच्छिन्नमेव ज्ञातमित्युपजीव्यविरोधान्न कर्तृजन्यत्वंशरीरजन्यतावच्छेदकमिति वाच्यम्। त्वदुक्तरीत्या शरीरजन्यत्ववत्तद्विपरीतकर्तृजन्यत्वस्यापि प्रथमं घटत्वाद्यवच्छेदेनैव ज्ञानसम्भवात्।**

**किञ्च कृतिकार्ययोः कार्यकारणभावग्रहेपि न ज्ञानेच्छयोः सिद्धिः। आत्मनः शरीरसम्बन्धे ज्ञानगतकार्यत्वस्येव ज्ञानादिसम्बन्धेपि त्वदुक्तकृतित्वमात्रविपरीतकृतिगतकार्यत्वस्यैव तन्त्रत्वात्।**

## न्यायदीपः

प्रथमं कर्तृजन्यत्वे जन्यत्वमवच्छेदकं क्लृप्तमिति तद्विरोधेन शरीरजन्यत्वे न सकर्तृकत्वमवच्छेदकं अत एव न सन्दिग्धोपाधित्वमित्यादि मण्युक्तमाशङ्क्य निराह ॥ **न च कर्तृजन्यत्व-**

**मिति ॥ तच्चेति ॥** कर्तृजन्यत्वमित्यर्थः। कर्तृजन्यत्वे लाघवेन जन्यत्वस्यैव अवच्छेदकत्वात्। कार्यत्वावच्छिन्नं कार्यत्वव्यापकम्। कर्तृजन्यत्वं शरीरजन्यतावच्छेदकं न सम्भवति। तस्य कार्यत्वरूपहेत्वव्यापकत्वात्। शरीरजन्यत्वं सकर्तृकत्वव्याप्यकार्यत्वाव्यापकं सकर्तृकत्वव्यापकं चेत्यस्यायोगात्। अत उपजीव्यविरोधान्न कर्तृजन्यत्वं शरीरजन्यतावच्छेदकमित्यर्थः

**॥ शरीरजन्यत्ववदिति ॥** शरीरजन्यत्वं घटत्वादिनाऽवच्छिद्यते यत्र घटत्वादिकं तत्र शरीरजन्यत्वमिति कर्तृजन्यत्वं तु कार्यत्वेन यत्र कार्यत्वं तत्र कर्तृजन्यत्वमिति एतच्च प्रथमं ज्ञायत इति यथा त्वयोच्यते, तथैव कर्तृजन्यत्वं घटत्वादिनैवावच्छिद्यते यत्र घटत्वादि तत्र कर्तृजन्यत्वमिति प्रथमं चास्य ज्ञानं सम्भवत्येव। ग्राहकसत्त्वात्।

तथा च कर्तृजन्यत्वं घटत्वादिनावच्छिन्नतया प्रथमं ज्ञातमिति तद्विरोधान्न कार्यत्वावच्छिन्नत्वेन पश्चाज्ज्ञातुं शक्यमिति कार्यत्वस्यैव कर्तृजन्यत्वाव्याप्यत्वात्तेन कथं त्वदभिमतसकर्तृकत्वानुमानम्। प्रत्युत शरीरजन्यत्वावच्छेदकत्वेनैव कार्यत्वस्यावगमात्तेन तदनुमानमेव स्यादित्यर्थः।

ननु यत्सामान्यविशेषन्यायेन कृतित्वकार्यत्वयोरवच्छेद्यावच्छेदकभावग्रहे सति कृतिजन्यत्वव्याप्यकार्यत्वाव्यापकत्वात्साध्याव्यापकत्वं शरीरजन्यत्वस्येति चेन्न। प्रागेव यत्सामान्येति न्यायलभ्यपक्षस्य खण्डनात्।

अभ्युपेत्यापि कार्यत्वेन कृतिजन्यत्वानुमानम्। ज्ञानचिकीर्षावत्त्वांशे शरीरजन्यत्वमुपाधिर्भवत्येव। न हि कृतित्वकार्यत्वयोरिव ज्ञानत्वकार्यत्वयोरिच्छात्वकार्यत्वयोर्वा व्याप्यव्यापकभावे बीजमस्ति। येन ज्ञानेच्छाजन्यत्वव्याप्यकार्यत्वाव्यापकत्वाच्छरीरजन्यत्वं साध्याव्यापकं स्यादित्यत आह **॥ किञ्चेति ॥** ग्रहेपीत्यस्य ग्रहात्कार्यत्वेन कृतिसिद्धावपीत्यर्थो ध्येयः **॥ न ज्ञानेच्छयोः सिद्धिरिति ॥** तयोः शरीरसम्बन्धनिमित्तत्वादीश्वरे च त्वया तदनङ्गीकारादिति भावः।

ननु कार्यत्वेन कृतिसिद्धावुपेतायां कृतेर्ज्ञानेच्छापूर्वकत्वस्य घटकृत्यादौ दर्शनात् कृत्यानुषङ्गिकतया तयोरपि सिद्धिः स्यादेव। न च शरीरसम्बन्धे तन्त्रयोर्ज्ञानेच्छयोर्भावात् तत्प्रयुक्तशरीरसम्बन्धसिद्धिः। तस्य जन्यज्ञानादिप्रयुक्तत्वादित्यतः तर्हि जन्यकृतावेव ज्ञानेच्छापूर्वकत्वं नत्वजन्यकृताविति कार्यत्वस्य पक्षधर्मताबलान्नित्यकृतिसिद्ध्या न ज्ञानेच्छयोः सिद्धिरिति भावेनाह **॥ आत्मन इति ॥**

## तर्कताण्डवम्

नच कृतिवज्ज्ञानेच्छयोरपि स्वातन्त्र्येण कार्यहेतुत्वात् तत्सिद्धिः। आत्मसंयोगे सत्यपि कृतिव्यतिरेकेण कृतौ सत्यां ज्ञानादिव्यतिरेकेण कार्यव्यतिरेकादर्शनात्।

नच कृतेर्विषयप्रत्यासत्त्यर्थं ज्ञानापेक्षाकृतिविषययोः ज्ञानस्यैव प्रत्यासत्तित्वादिति वाच्यम्। कृत्यजनकज्ञानस्य प्रत्यासत्तित्वेऽतिप्रसङ्गात्तज्जनकज्ञानस्य च कृतिकाले नष्टत्वेन अप्रत्यासत्तितया ज्ञाने ज्ञानस्वरूपस्येव कृतावपि कृति-स्वरूपस्यैव प्रत्यासत्तित्वात्। अन्यथा कृतिकाले ज्ञानाभावेन घटं करोमीति घटकृत्योः सम्बन्धधीर्न स्यात्। तस्मात् त्वदुक्तकृत्यादित्रयविपरीतकृतिमात्रवत्त्वेनाप्यनुमितिः स्यात्।

किञ्चास्तु कृतिप्रत्यासत्तित्वेन ज्ञानसिद्धिः। इच्छा तु कथं सिद्ध्येत्। तथा च त्वदुक्तत्रितयविपरीतद्वितयवत्त्वेनापि अनुमितिः स्यात्।

## न्यायदीपः

नन्वस्तु कार्यत्वेन कृतेरिव स्वातन्त्र्येण ज्ञानादिसिद्धिः। शरीरजन्यत्वोपाधेः साध्यव्याप्यहेत्व-व्यापकत्वेन निराससम्भवादिति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ यद्वा ज्ञानेच्छयोः सिद्धिः किं कृत्यानुषङ्गिकत्वेनोत स्वातन्त्र्येणाथ ज्ञातस्यैव कृतिविषयत्वात्कृतेः स्वतोर्थासम्बद्धत्वाद्विषयेण सह कृतेः प्रत्यासत्तित्वेन। आद्यस्योत्तरं ॥ **आत्मन इत्यादि** ॥ द्वितीयमाशङ्क्य निराह ॥ **न चेत्यादि** ॥ **आत्मसंयोग इति** ॥ आत्मनो विभुत्वेन त्वन्मते सदा संयोगादिति भावः। तृतीयमाशङ्क्य निराह ॥ **न च कृतेरिति** ॥ **अतिप्रसङ्गादिति** ॥ चैत्रकृतौ मैत्रज्ञानस्यापि तथात्वापत्तेरिति भावः।

नन्वस्त्वतिप्रसङ्गभिया जन्यकृतावन्यत्र जनकज्ञानस्य प्रत्यासत्तित्वम्। एवं च ज्ञानस्य कृतिप्रत्यासत्तित्वे क्वचित्सिद्धे सतीहागत्यानीदृशस्याप्यस्तु प्रत्यासत्तित्वमित्यतोन्यत्रापि तन्नास्तीत्याह ॥ **तज्जनकेति** ॥ अनन्यगत्यास्तु नष्टस्यापि तथात्वमित्यत आह ॥ **ज्ञान इति** ॥ उक्तं

च ''न प्रयोजनवत्त्वात्'' इत्याधिकरणसुधायाम्। ''महातात्पर्ययुक्तेश्च'' इत्येतद्व्याख्यावसरे ''प्रयत्नस्य विषयनियमार्थं बुद्धिरेष्टव्येति चेन्न बुद्धिवत्स्वतोविषयप्रवणतोपपत्तेः इति'' इति भावः ॥ **कथं सिध्येदिति** ॥ किं कृत्यानुषङ्गिकत्वेनाथ स्वातन्त्र्येणोत कृतिप्रत्यासत्तित्वेन। न पक्षत्रयमपि सम्भवति। पूर्वोक्तदोषादिति भावः।

## तर्कताण्डवम्

**किञ्चोपाधेर्व्यभिचारोन्नायकत्वपक्षे त्वदुक्तसकर्तृकत्व-विपरीताकर्तृकत्वस्य शरीराजन्यत्वेनापि अनुमातुं शक्यत्वात् सत्प्रतिपक्षता। नच कर्त्रजन्यत्वेऽजन्यत्वस्यैव तन्त्रत्वाद-प्रयोजको हेतुः। शरीरजन्यत्वे कर्तृजन्यत्वं वावच्छेदकं कर्तृजन्यत्वे कार्यत्वं वेति सन्देहस्योपापादितत्वेन स्थापना-हेतुतौल्यात्।**

## न्यायदीपः

एवं कार्यत्वहेतोः सोपाधिकत्वमुक्त्वा सत्प्रतिपक्षतां चाह ॥ **किञ्चेत्यादिना** ॥ ननु प्रमाणलक्षणे ''स एवोपाधिदोषेति'' इत्युक्तोपाधेः प्रतिपक्षत्वेनैव दोषत्वोपगमात्, प्राचीनन्यायमते तथैवाभ्युपगमाच्चोपाध्युक्त्यैव तद्व्यतिरेकरूपप्रतिपक्षस्योक्तत्वात् किञ्चेति दोषान्तरतयोक्तिः अयुक्तेत्यत आह ॥ **व्यभिचारेति** ॥ मणिकृन्मते व्यभिचारोन्नायकत्वोपगमेनोपाध्युक्त्या हेतोर्व्यभिचारबुद्धेरेवोदयेन प्रतिपक्षबुद्धेरनुदयादिति भावः ॥ **विपरीतेति** ॥ विमतं क्षित्यादि अकर्तृकं शरीराजन्यत्वाद्गगनवदित्यनुमातुं शक्यत्वादित्यर्थः। अत्र शरीराजन्यत्वमदृष्टाद्वारकशरीरजन्यत्वा-भावो ध्येयः। तेनादृष्टद्वाराऽस्मदादिशरीरजन्यत्वादसिद्धिरिति शङ्कानवकाशः ॥ **अप्रयोजक इति** ॥ अकर्तृत्वे अजन्यमात्रस्य प्रयोजकत्वादिति भावः। ''सन्देहस्येति प्रतिपक्षतानिर्वाहायोक्तम्। वस्तुस्तु कर्तृजन्यत्वे कार्यत्वं नावच्छेदकम्। तेन विनापि तस्योपपत्तेः। अन्यथा कर्मजन्यतावच्छेदकमपि कार्यत्वं स्यादित्यादिना कार्यत्वहेतोरप्रयोजकत्वस्योक्तत्वादिति ॥ **तौल्यादिति** ॥ तथा च नाप्रयोजकत्वमिति भावः।

अपि च ''शरीरजन्यत्वे व्यर्थविशेषणत्वम्। लाघवेनाजन्यत्वस्यैव व्याप्यत्वा''दित्यादिना मण्याद्युक्तं निष्कृष्यानुवदति ॥ **अथ मतमित्यादिना अत्रोच्यते इत्यन्तेन** ॥

## तर्कताण्डवम्

अथ मतं आकाशादावजन्यत्वस्यैवाकर्तृकत्वेन व्याप्तिग्रहाच्छरीरविशिष्टे तस्मिंस्तदभावाद् व्याप्यत्वासिद्धिः। तथा च विशेषणविशेष्ययोरेकैव व्याप्तिर्व्यासज्यवृत्तिरिति वा, विशिष्टव्याप्तिशब्दार्थः विशेष्यनिष्ठैव व्याप्तिर्विशेषणेन अवच्छिद्यत इति वा। तत्र व्यासज्यवृत्तित्वे केवलविशेष्यावृत्तित्वासम्भवो हेतुः। विशेषणेनावच्छेद्यत्वे तु विशेष्यतावच्छेदकस्य व्याप्यतावच्छेदकत्वासम्भवः। प्रकृते तु नोभयम्। व्याप्तौ केवलविशेष्यरूपाजन्यत्वनिष्ठतायाः विशेष्यत्वावच्छेदकावच्छिन्नतायाश्च सम्भवात्। नच व्याप्तिवत्पक्षधर्मताया अप्यनुमित्यङ्गत्वात्तत्सिद्ध्यर्थं विशेषणमिति वाच्यम्। व्याप्तिसमानाधिकरणाया एव तस्या अङ्गत्वेन अत्र विशेष्यनिष्ठव्याप्तिव्यधिकरणाया विशिष्टवृत्तिपक्षधर्मताया अनङ्गत्वात्।

नच चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकद्रव्यत्वात् इत्यादौ विशिष्टवृत्तिपक्षधर्मताविशेष्यवृत्तिव्याप्तेरङ्गं दृष्टमिति वाच्यम्। तत्राप्यवधारणमहिम्ना रूपेतरविशेषगुणाव्यञ्जकत्वे सति रूपग्राहकत्वस्य हेतुत्वेन विशेष्यमात्रस्य मनसि व्यभिचारितया व्याप्तेरपि विशिष्टनिष्ठत्वात्। नचात्र अजन्यत्वरूपस्य विशेष्यस्य व्यभिचारोस्ति।

यद्वा मनसि व्यभिचारवारकस्यावधारणस्य रूपादिष्विति विशेषणं विनाऽलब्धात्मकस्य व्यभिचारवारणाशक्त्या विशेषणस्यापि तल्लाभसम्पादनद्वारा व्यभिचारवारणप्रयोजकत्वमेव। अन्यत्वं तु शरीरविशेषणं विनापि गगनादौ लब्धात्मकम्।

## न्यायदीपः

॥ **विशिष्टव्याप्तीति** ॥ विशिष्टहेतुनिष्ठा व्याप्तिरिति शब्दार्थ इत्यर्थः ॥ **तत्रेति** ॥ कल्पद्वय इत्यर्थः ॥ **हेतुरिति** ॥ यथा शब्दो नित्यः भावकार्यत्वादित्यादौ ॥ **विशेषणेनेत्यादि** ॥ यथा कृष्णागरुवह्निमान् सुरभि धूमवत्त्वादित्यादाविति भावः ॥ **विशेष्यत्वावच्छेदकेति** ॥ अजन्यत्व-रूपावच्छेदकेत्यर्थः।

रूपादिषु पञ्चस्विति स्वरूपकथनं मत्वाह ॥ **तत्रापीति** ॥ ननु रूपस्यैवेत्यादेरेव रूपेतर-विशेषगुणेत्याद्यर्थकत्वे रूपादिषु पञ्चास्विति व्यर्थम्। अतो रूपेतराव्यञ्जकत्वमेव तदर्थो वाच्यः। तथा च चक्षुषो रूपत्वस्यापि व्यञ्जकतया हेतोरसिद्ध्यापत्त्या तन्निरासकविशेषणविशिष्ट एव पक्षधर्मता व्याप्तिस्तु विशेष्य इत्यरुचेरप्रसिद्धिवारकत्वेन सार्थक्यं मन्वान आह ॥ **यद्वेति** ॥ **अलब्धात्मकस्येति** ॥ क्वाप्यप्रसिद्धेर्मनः प्रभृते रूपत्वस्यापि ग्राहकत्वादिति भावः।

## तर्कताण्डवम्

**अथ मतम्। नीलधूमादावपि विशिष्टनिष्ठैव व्याप्तिः। तत्र व्यभिचारोपाध्योरभावात्। अन्यथा विशेषणानामव्याप्यत्वे निराश्रया व्याप्तिः स्यात्। किं तु नीलधूमत्वं न तदवच्छेदकम्। गौरवात्। अपि तु धूमत्वमेव।**

**नच व्यभिचारावारकनैल्यविशेषणवत्त्वेनाज्ञात एव व्याप्तिग्रहात्तद्वत्त्वेन ज्ञाते व्याप्तिप्रमाविरह इति वाच्यम्। सहचारदर्शने व्यभिचारादर्शने च सति द्रव्यत्वादिमत्तया ज्ञातेपि धूमेऽव्यभिचारादिरूपव्याप्तिग्रहादिति चेन्मैवम्।**

## न्यायदीपः

''नीलधूमादौ व्याप्तिरस्त्येव। अन्यथा विशेषणानामव्याप्यत्वे निराश्रया व्याप्तिः स्या''दित्यादिना मण्युक्तविशिष्टनिष्ठव्याप्तिपक्षाशङ्कामनुवदति ॥ **अथ मतमित्यादिना मैवमित्यन्तेन** ॥ **नीलधूमादावपीति** ॥ तथा च शरीराजन्यत्वेपि विशिष्टहेतौ व्याप्तिरस्त्येवेति तत्र व्याप्त्यसिद्धिव्युत्पादनमयुक्तमिति भावः।

## तर्कताण्डवम्

**अनुमितिप्रयोजकव्याप्तिविरहो हि व्याप्यत्वासिद्धिः। तत्प्रयोजिका च व्याप्तिः साध्यसामानाधिकरण्यावच्छेदक-रूपवत्त्वलक्षणा न त्वव्यभिचाररूपानौपाधिकत्वरूपा वा। गौरवात्। अपदार्थत्वेन अवाक्यार्थत्वेन चोदाहरणवाक्येन तदप्रतीतेश्च।**

**तद्विरहश्च सामानाधिकरण्याभावेन वा यथा निरधिकरणे वस्तुनि, सत्यपि तस्मिंस्तस्य साध्यनिरूपितत्वविरहाद्वा यथा विरुद्धे, सतोरपि तयोर्धर्मस्यावच्छेदकत्वविरहाद्वा यथेयं पृथिवी द्रव्यत्वादित्यत्र द्रव्यत्वे। व्यर्थविशेषणे च नीलधूमादौ सामानाधिकरण्ये तस्य साध्यनिरूपितत्वे च सत्यपि नील-धूमत्वस्य वह्निनिरूपितसामानाधिकरण्यावच्छेदकत्व-विरहाद् व्याप्तिविरहः।**

## न्यायदीपः

विशिष्टहेतोर्व्याप्तिविरहवादी अवान्तरविशिष्टनिष्ठव्याप्तिपक्षचोद्यं व्याप्तिवादे मणिकृदभिमत-व्याप्तिलक्षणमुपेत्य निराह ॥ **मैवमित्यादिना** ॥ **गौरवादिति** ॥ नञ्घटितत्वादिति भावः ॥ **उदा-हरणेति** ॥ यो यो धूमवानसावसावग्निमानित्यादिरूपवाक्येन धूमे वह्निरूपसाध्येनैकाधिकरण्यस्य तदवच्छेदकधूमत्ववत्त्वस्य च प्रतीतेरिवाव्यभिचारादेरप्रतीतेरित्यर्थः ॥ **वस्तुनीति** ॥ पर्वतोग्निमान् गगनवत्त्वादित्यत्र गगनाख्यवस्तुनीत्यर्थ ॥ **तस्मिन्निति** ॥ सामानाधिकरण्य इत्यर्थः ॥ **विरुद्ध इति** ॥ पर्वतोऽग्निमान् ह्रदत्वादित्यादावित्यर्थः।

॥ **द्रव्यत्व इति** ॥ तत्र सामानाधिकरण्यस्य तस्मिन्पृथिवीत्वरूपसाध्यनिरूपितत्वस्य चोभयस्य भावेपि द्रव्यत्वत्वं न पृथिवीत्वसामानाधिकरण्यावच्छेदकम्। द्रव्यत्वस्य पृथिवीत्वमात्रसामानाधिकरण्याभावादिति भावः। अस्तु प्रकृते किमित्यत आह ॥ **व्यर्थेति** ॥ आदिपदेन शरीराजन्यत्वादिग्रहः ॥ **अवच्छेदकत्वविरहादिति** ॥ गौरवादिति भावः। तथा च विशिष्टा हेतुर्व्याप्तिशून्य एवेति भावः।

## तर्कताण्डवम्

**नन्विहावच्छेदकत्वं न तावदवच्छित्तिप्रत्ययहेतुत्वादिकम्। आत्माश्रयात्। नाप्यवच्छेद्यान्यूनानतिरिक्तवृत्तित्वम्। वह्निसामानाधिकरण्यवत्त्यालोकादाववविद्यमाने धूमत्वादावपि तदभावात्। किन्त्वनतिरिक्तदेशकत्वम्। तच्च नीलधूमवत्त्वेप्यस्ति। नच तत्रातिव्याप्तिवारणायावच्छेद्यानतिरिक्तदेशकधर्मान्तराघटितत्वे सतीति विशेष्यते। नीलधूमत्वस्य च धूमत्वरूपतादृशधर्मान्तरघटितत्वान्न तदवच्छेदकतेति वाच्यम्। एवं सति व्याप्तिशरीरस्याभावद्वयघटितत्वेन अतिगौरवात्। उदाहरणवाक्ये तदभावाच्चेति चेन्मैवम् ।।**

## न्यायदीपः

विशिष्टनिष्ठव्याप्तिवादी व्याप्तिवादे पक्षधराद्युक्तमवच्छेदकत्वनिरुक्तिनिष्कर्षमनुवदन्नीलधूमत्वादावपि साध्यसामानाधिकरण्यावच्छेदकत्वमस्तीति शङ्कते ।। **नन्वित्यादिना मैवमित्यन्तेन** ।। आदिपदेनावच्छेद्यव्याप्यत्वावच्छेद्यसमनियतत्वादिग्रहः ।। **आत्माश्रयादिति** ।। हेतुत्वस्य नियतपूर्ववृत्तित्वरूपत्वान्नियमस्य व्याप्तितया व्याप्तिज्ञाने व्याप्तिज्ञानस्यावश्यकत्वादिति भावः

।। **अतिव्याप्तीति** ।। प्रमेयधूमत्वद्रव्यधूमत्वनीलधूमत्वैतद्धूमत्वादावपि वह्निसामानाधिकरण्यरूपावच्छेद्यानतिरिक्तदेशकत्वसत्त्वादति व्याप्तीत्यर्थः ।। **अभावद्वयेति** ।। साध्यसामानाधिकरण्यानतिरिक्तदेशकधर्मान्तराघटितत्वे सति साध्यसामानाधिकरण्यानतिरिक्तदेशकत्वमित्यत्र यद्यपि नञ्त्रयप्रवेशादभावत्रयं तथापि अनतिरिक्तेत्यस्यैव द्विरुपादानादभावद्वयेत्युक्तम्। यद्वा सत्यन्तप्रविष्टनञ्द्वयापेक्षया अभावद्वयेत्युक्तम्।

केचित्तु तादृशधर्मान्तराघटितत्वे सति साध्यसामानाधिकरण्यदेशत्वं तदर्थः। एवं चाभावद्वयमेवेत्याहुः। तच्चिन्त्यम्। प्रमेयत्वद्रव्यत्वादावतिव्याप्तेः।

## तर्कताण्डवम्

**अवच्छेदकत्वं हि विशेषणताविशेषरूपः स्वरूप-**

**सम्बन्धः । नचास्याप्युदाहरणवाक्यादप्रतीतिः । उदाहरणस्थधूमपदोपस्थापितस्य धूमत्वस्योदाहरणवाक्योपस्थापितेन धूमगतवह्निसामानाधिकरण्येन सहावच्छेदकत्वरूपसम्बन्धस्य संसर्गविधया भानात्। स च स्वरूपसम्बन्धो लघुनि धूमत्व एव कल्प्यते। न तु गुरुणि नीलधूमत्व इति नीलधूमे न व्याप्तिः।**

**नच लघुधूमत्वमपि नीलधूमेऽस्तीति वाच्यम्। हेतुतावच्छेदकस्यैव हि सामानाधिकरण्यावच्छेदकता वाच्या। उपस्थितत्वाद्धर्मान्तरकल्पने गौरवाच्च। इह तु हेतुतावच्छेदकत्वेनोपात्तस्य नीलधूमत्वस्य शरीराजन्यत्वस्य च सामानाधिकरण्यानवच्छेदकत्वेन व्याप्यत्वासिद्धेः।**

## न्यायदीपः

को विशेषणताविशेषः। विशिष्टज्ञानजनकज्ञानविषयत्वादिरूपत्वे चात्माश्रयादित्यत आह ॥ **स्वरूपसम्बन्ध इति** ॥ ननु कुत एवमिति चेत्। अवच्छेदकत्वानिरुक्तेरिति वदन्ति।

तथाहि – यदुक्तमवच्छेद्यानतिरिक्तदेशकत्वमवच्छेदकत्वमिति। तन्न। इदं सुखि आत्मत्वादित्यादावीश्वरात्मनि सुखाभावसमानाधिकरणे व्यभिचारिणि गतत्वात्। आत्मत्वस्य जीवात्मनि सुखसामानाधिकरण्येनात्मत्वत्वस्य सुखसामानाधिकरण्यानतिरिक्तवृत्तित्वात्।

न च साध्याभावसमानाधिकरणावृत्तित्वमवच्छेदकत्वम्। आत्मत्वं त्वीश्वरात्मनि सुखाभावसमानाधिकरणमेवेति वाच्यम्। केवलान्वयसाध्यकहेतावभावात्। तत्र साध्याभावाप्रसिद्धेः।

नापि साध्यासामानाधिकरण्याभावाधिकरणावृत्तित्वमवच्छेदकत्वम्। आत्मत्वं त्वीश्वरात्मवृत्तित्वावच्छेदेन सुखसामानाधिकरण्याभावाधिकरणमेवेति वाच्यम्। वृक्षः एतत्कपिसंयोगवान् एतद्वृक्षत्वादित्यादावव्याप्तेः। एतद्वृक्षत्वस्यापि मूलावच्छेदेनैतत्कपिसंयोगसामानाधिकरण्याभावाधिकरणत्वात्। यदि चैतद्वृक्षत्व एतत्कपिसंयोगसामानाधिकरण्यस्य सत्त्वात्कथं तदभाव इति। तर्ह्यात्मत्वेपि तुल्यमेतत्। विरुद्धयोरप्यवच्छेदकभेदेनाविरोध इत्येतस्यापि साम्यात्।

नापि अधिकरणैकदेशानवच्छेदेन साध्यसामानाधिकरण्याभाववदवृत्तित्वं तत्। एतद्वृक्षत्वे चाधिकरणैकदेशमूलावच्छेदेनैव साध्यसामानाधिकरण्यमिति विशिष्टव्यतिरेकस्य तत्रापि सत्त्वान्नाव्याप्तिः। आत्मत्वे तु ईश्वररूपाधिकरणवृत्तित्वावच्छेदेनैव साध्यसामानाधिकरण्याभाववत्त्वम्। न तु तदैकदेशावच्छेदेनेति न तत्रातिव्याप्तिः। केवलान्वयिनि च तादृशसाध्यसामानाधिकरण्याभाववत्त्वं गगनादौ प्रसिद्धमिति न कोपि दोष इति युक्तम्। सुखादेरव्याप्यवृत्तितया जीवात्मन्यप्यात्मत्वस्य सुखसामानाधिकरण्याभावाधिकरणतया तत्र तदेकदेशवृत्तित्वस्यैवावच्छेदकत्वादिति दिक्।

तस्मादवच्छेदकत्वानिरुक्तेः स्वरूपसम्बन्ध एवावच्छेदकत्वमिति नीलधूमेऽस्तीति। तथा च तादृशावच्छेदकधर्मवत्त्वान्नीलधूमोपि व्याप्य एवेति शङ्कितुर्भावः।

## तर्कताण्डवम्

**नचैवं विमतो निर्धूमः आर्द्रेन्धनप्रभववह्निरहितत्वात्, सुरभि धूमरहितः चन्दनप्रभववह्निरहितत्वादित्यादावपि व्याप्यत्वासिद्धिः स्यादिति वाच्यम्। तत्र कार्यकारणभावमूलकानुकूलतर्केण वह्निरहितत्व आर्द्रेन्धनप्रभववह्निरहितत्वादावपि व्याप्तिनिश्चयादिति।**

**अत्रोच्यते। व्यभिचारज्ञानस्य ह्यनुमितिप्रतिबन्धकत्वमनुभवसिद्धम्। त्वदनुमतं च। तच्च न बाधादिवत् साक्षात्साध्यविरुद्धविषयकत्वात्। किं तु करणीभूतव्याप्तिज्ञानविघटनद्वारा। तच्च व्याप्तेस्त्वदुक्तसाध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वविपरीते व्यभिचाराभावविशिष्टसहचाररूपत्व एव युक्तम्। विरुद्धवत्सहचाररूपविशेष्यांशेनाविरोधेपि व्यभिचाराभावरूपविशेषणांशेन सह वैषयिकविरोधात्। न तु साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वात्मकत्वे तद्युक्तम्। परस्परविरहानात्मकत्वेन साक्षादविरोधात्।**

## न्यायदीपः

**॥ न चैवमिति ॥** गुरुधर्मस्य व्याप्यतानवच्छेदकत्वे कारणविशेषाभावेन कार्यविशेषाभावानुमानं न स्यादित्यर्थः।

एवं नीलधूमदृष्टान्तेन शरीराजन्यत्वस्य व्याप्यत्वासिद्धत्वे पूर्वपक्षिते सति न मण्युक्तं व्याप्तिस्वरूपमनुमित्यङ्गम् किन्त्वन्यदेव तच्चास्ति नीलधूमे शरीराजन्यत्वे च अतो न व्याप्तिशून्यत्वमिति भावेन सिद्धान्तयति **॥ अत्रोच्यत इत्यादिना ॥ त्वदनुमतं चेति ॥** अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति व्यभिचारादिहेत्वाभासलक्षणोक्तेरिति भावः।

अनुमितिप्रतिबन्धकत्वं हि द्वेधा। अनुमितिविषयविरोधिविषयत्वेन साक्षादेव वा, तत्करणीभूतज्ञानविषयाभावावगाहित्वेन तत्करणविघटकत्वेन वा। तत्राद्यं बाधप्रतिपक्षयोरेव। न त्वन्यस्य। द्वितीयं तु स्यादिति भावेनाह **॥ तच्चेत्यादिना ॥ व्याप्तिज्ञानेति ॥**

यद्यपि परामर्श एवानुमितिकरणम् तार्किकमते। यथाह ''लिङ्गपरामर्शोऽनुमान''मिति। तथापि करणस्य व्यापारवत्त्वनियमात्परामर्शस्य करणत्वे व्यापाराभावाव्द्याप्तिज्ञानं करणं परामर्शोऽवान्तरव्यापार इति लिङ्गकरणतावादे मणिकृदुक्तरीत्या करणीभूतव्याप्तिज्ञानेत्युक्तम् **॥ तच्चेति ॥** व्याप्तिज्ञानविघटकत्वमित्यर्थः। मूलारूढतां दर्शयितुं विपरीत इत्युक्तिः।

युक्तमित्येतद् व्यनक्ति **॥ विरुद्धवदिति ॥** साध्याभावमात्रसम्बद्धविरुद्धहेत्वाभासवदित्यर्थः **॥ वैषयिकेति ॥** भावाभावरूपविरुद्धविषयकृतेत्यर्थः **॥ तद्युक्तमिति ॥** व्याप्तिज्ञानविघटकत्वं युक्तमित्यर्थः **॥ व्यभिचारेणेति ॥** साध्याभावसम्बन्धरूपव्यभिचारेणेत्यर्थः **॥ परम्परयेति ॥** पर्वतो धूमवान् वह्निमत्त्वादित्यत्र वह्नित्वादिरूपहेतुतावच्छेदकं न साध्यसामानाधिकरण्यावच्छेदकम् साध्याभावसमानाधिकरणवृत्तित्वादिति साध्यसामानाधिकरण्यानवच्छेदकत्वानुमितिः। तथा च तादृशावच्छेदकधर्मवत्त्वरूपव्याप्तिज्ञानं नेति व्यभिचारज्ञानस्यानवच्छेदकत्वज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकत्वमित्यर्थः।

## तर्कताण्डवम्

**नच व्यभिचारेण हेतुतावच्छेदकस्य साध्यसामानाधिकरण्यानवच्छेदकत्वानुमानात्परम्परया विरोधः। व्यभिचारज्ञानानन्तरमेव व्याप्तिविरहज्ञानानुभवेन परम्पराकल्पने**

**अनुभवविरोधात्। बाधादिवत्साक्षादनुमितिप्रतिबन्धकत्वस्य असिद्ध्यादिवत्परामर्शविषयाभावत्वस्य चाभावेनोपाधिवद्धे त्वाभासत्वोपाधित्वाभावापत्तेश्च।**

**नचोदाहरणवाक्येन तदप्रतीतिः। तत्र वीप्सास्तीति मते ''नित्यवीप्सयोः'' इति सूत्रेण व्याप्तिप्रतिपादनेच्छायां सत्यामादिष्टस्यैकार्थवाचकत्वेनैकपदरूपस्य योय इत्यस्य शब्दस्यानुमित्यङ्गत्वेन निर्णीताव्यभिचार विशिष्टसहचार-रूपव्याप्तिवाचकत्वोपपत्तेः।**

**वीप्सा नास्तीति मते उदाहरणोत्पादितसहचारदर्शन-सहकृतेन मनसैवोक्तव्याप्तिज्ञानसम्भवात्। तथाच व्यभि-चाराभावविशिष्टसहचाररूपा व्याप्तिर्नीलधूमे शरीराजन्यत्वे चास्तीति कथं तयोर्व्याप्यत्वासिद्धिः।**

## न्यायदीपः

अनुभवे विवदमानं प्रत्याह ॥ **बाधादिवदिति** ॥ **हेत्वाभासत्वोपाधित्वेति** ॥ अनुमितिप्रति-बन्धकयथार्थज्ञानविषयत्वस्य हेत्वाभासतायामुपाधित्वरूपत्वात्तस्य च व्यभिचारोन्नायकोपाधाविव साध्यसामानाधिकरण्यानवच्छेदकत्वानुमापके व्यभिचारेप्यभावेनोपाधिवद्व्यभिचारोपि हेत्वाभासो न स्यादित्यर्थः ॥ **तदप्रतीतिरिति** ॥ व्यभिचाराभावविशिष्टसहचाराप्रतीतिरित्यर्थः ॥ **तत्रेति** ॥ उदाहरणवाक्य इत्यर्थः। अवयवग्रन्थे पक्षद्वयस्याप्युक्तेः। वीप्सास्तीति मते नास्तीति मत इति मतद्वयोक्तिः ॥ **सूत्रेण** ॥ व्याकरणसूत्रेणेत्यर्थः।

सूत्रस्थवीप्साशब्दार्थमाह ॥ **व्याप्तीति** ॥ आदिष्टस्य आदेशतया विहितस्य। व्याकरणेऽष्टमा-ध्यायाद्यपदे ''नित्यवीप्सयोः'' इत्यत्र ''सर्वस्य द्वे'' इत्यधिकारसूत्रस्थपदद्वयानुवर्तनेन क्रियापौनःपुन्यरूपनित्येऽर्थे वीप्सायां च वर्तमानस्य सर्वस्य वर्णसमुदायरूपपूर्वतनशब्दस्य द्वे भवत इत्यर्थः।

अत्र च पक्षद्वयं सम्भवति। पूर्वस्थितशब्दस्य स्थाने शब्दतोऽर्थतश्च समानशब्दरूपे द्वे आदेशौ

भवत इति वा, पूर्वतनशब्दस्य द्विरुच्चारणं भवतीति वा। तत्राद्यपक्षस्यैव भाष्ये मञ्जर्यां च स्थिरत्वोक्तेरादिष्टस्येत्युक्तम्। तत्र स्थानिवद्भावेनार्थवत्त्वात्प्रातिपदिकत्वम्। अर्थैक्यात्समुदायस्य एकपदत्वं चेति भावेनैकार्थ्येत्याद्युक्तिः। ।। **शब्दस्येति** ।। वाचकत्वेत्यन्वयः। वीप्सितशब्देन यावत्साधनाधिकरणोपस्थितौ तत्र साध्यवत्त्वविधानात् यावत्स्वाश्रयाश्रितसाध्यसम्बन्ध-रूपव्याप्तिप्रतीतेः तस्या एवानुमित्यङ्गत्वनिर्णयादिति भावः।

यत्तु मणावुदाहरणनिरूपणप्रस्तावे ''वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वय'' मित्युक्तम्। तदयुक्तम्। व्याप्तिप्रतिपादनेच्छायामादिष्टस्य यो य इत्यस्य यावत्साधनाधिकरणे साध्यसम्बन्धबोधनशक्तेर्व्युत्पन्नत्वेन व्यभचारशङ्कानवकाशात्।।

## तर्कताण्डवम्

**किञ्च हेतुशरीरघटकं द्विविधम्। किञ्चित्सङ्कोचकम्। यथा नीलधूमादित्यत्र नीलत्वम्। किञ्चिद्विकासकम्। यथा प्रमात्वाश्रयविषयत्वादित्यर्थकेप्रमेयत्वादित्यत्राश्रयविषयत्वम्। प्रमेयत्वादित्युक्तव्यभिचाराभावात्। तत्र सङ्कोचकविपरीतस्य अन्त्यस्य स्वेन विकासितदेशे व्याप्तिग्रहौपयिकत्वान्न व्यर्थता। अन्यथा लक्षणरूपे व्यतिरेकिणि भागासिद्धिरूपाव्याप्ति-हरणाय विशेषणं न प्रयुज्येत। शरीरपदं चाजन्यत्वस्याङ्कुरादा-वसम्भावितस्य विकासकमिति न व्यर्थम्।**

## न्यायदीपः

एवं नीलधूमादिसाधारण्येन व्याप्तिमुपपाद्येदानीं, नीलधूमादौ व्याप्त्यभावेपि शरीराजन्य-त्वेऽस्ति न च शरीरपदस्यासिद्धिवारकतया व्यभिचारावारकत्वेन व्यर्थत्वात्कथं व्यर्थविशेषणवति व्याप्तिरित्यतो व्याप्त्याश्रयविकासकतया व्याप्तिग्रहौपयिकत्वेन न व्यर्थविशेषणत्वमिति भावेन तां तत्रोपपादयति ।। **किञ्चेत्यादिना** ।। **सङ्कोचकमिति** ।। हेतुलक्षणस्य व्याप्त्यधिकरणस्याल्पत्व-सम्पादकम्। धूमादित्यनेन नीलानीलसाधारणधूमत्वाधिकरणमात्रस्य व्याप्त्याश्रयत्वं लभ्यते। नीलत्वविशेषणे तु नीलधूममात्रस्येति नीलत्वं व्याप्त्यधिकरणसङ्कोचकम्। घटोऽभिधेयः प्रमात्वाश्रयविषयत्वादित्यत्र प्रमात्वादित्युक्ते तन्मात्रस्यैव व्याप्त्याश्रयत्वलाभो नान्यस्य।

विशेष्यभागस्याप्युक्तौ तु प्रमेयत्वमात्रस्यापि तथात्वलाभाद्व्याप्त्यधिकरणविकासकमित्यर्थः ।।

ततः किमित्यत आह ।। **तत्रेति** ।। द्वयोर्हेतुशरीरघटकयोर्मध्य इत्यर्थः ।। **अन्यथेति** ।। व्याप्त्याश्रयविकासकस्येत्यर्थः। असिद्धिवारकस्यापीति शेषः ।। **अन्यथेति** ।। असिद्धिवारकत्वेनैव व्यर्थत्वे गुणाश्रयो द्रव्यमित्यत्र गुणात्यन्ताभावानधिकरणत्वरूपद्रव्यलक्षणे गुणानधिकरणत्वस्य आद्यक्षणस्थितघटादौ सत्त्वेपि द्वितीयादिक्षणस्थे तस्मिन्नभावेनाव्याप्तिवारणायात्यन्ताभावेति विशेषणं नोपादीयेत। तस्य द्रव्यमितरेभ्यो भिद्यते गुणात्यन्ताभावानधिकरणत्वात् व्यतिरेकेण गुणादिवदित्यत्र द्वितीयादिक्षणस्थघटादौ भागासिद्धिवारकत्वात्। लक्षणमपि केवलव्यति-रेकीत्युक्तत्वेन व्यावृत्तिव्यवहारयोः साधने लक्षणस्य केवलव्यतिरेकित्वादिति भावः ।।

यद्वा गुणाभावानधिकरणत्वादित्युक्तावाद्यक्षणस्थघटे भागासिद्धिवारणायात्यन्तेति विशेषणं नोपादीयेतेत्यर्थः ।।

अस्त्वेवं प्रकृते किमित्यत आह ।। **शरीरेति** ।। अजन्यत्वादित्येवोक्तावङ्कुरादावसम्भावनया हेत्वसिद्धिशङ्कायां तत्रापि हेतुसत्त्वोपपादकत्वेन हेत्वधिकरणबाहुळ्यसम्पादकत्वेन हेतुविकासकम्। तत्रादृष्टाद्वारकशरीरजन्यत्वाभावस्य प्रत्यक्षत एवावगमसम्भवात्। अतो न व्यर्थं शरीरविशेषण-मित्यर्थः।

## तर्कताण्डवम्

**अपि च शरीराजन्यत्वादित्यत्र शरीरविशिष्टोऽभावो न हेतुः। किन्तु शरीरविशिष्टस्य जन्यत्वस्याभावः। नच विशेषणविशेष्ययोरभावाभ्यां भिन्न एव। विशेषणविशेष्य-सम्बन्धो विशिष्टमिति मते पदार्थन्तरमिति मते च प्रति-योगिभेदात्। विशेषणावच्छिन्नं विशेष्यमेव विशिष्टमिति मते प्रतियोगितावच्छेदकभेदात्। तादृशविशिष्टाभावधीश्च न विशेषणज्ञानं विना युक्ता। प्रतियोगितावच्छेदकप्रकारक-प्रतियोगिज्ञानसाध्यत्वादभावज्ञानस्य। एवं च शरीरविशेषणं विशेष्याभावविपरीतव्याप्त्याश्रयीभूतविशिष्टाभावोपस्थापनौप-यिकं व्याप्तिग्रहौपयिकमेव। आश्रयज्ञानं विना व्याप्तेरग्रहात्।**

## न्यायदीपः

न केवलं हेतुविकासकत्वेन शरीरपदमर्थवत् किन्तु ''विशिष्टस्योपाधेः साध्यव्यापकत्वमस्त्येव। उपाध्यभावश्चात्र प्रतिपक्षत्वेनोक्त'' इति तत्त्वनिर्णयटीकोक्तदिशा विशिष्टाभावरूपहेतुसरूपोपस्थापकतयापि व्याप्तिग्रहौपयिकत्वेनेत्याह ॥ **अपिचेति** ॥ **अभाव इति** ॥ जन्यत्वाभाव इत्यर्थः ॥ **न हेतुरिति** ॥ तथात्वे हि जन्यत्वाभावमात्रस्य गगनादावकर्तृकत्वेन व्याप्तस्य हेतुस्वरूपस्य अजन्यत्वपदेनैवोपस्थितिसम्भवेन शरीरपदं व्यर्थं स्यात्। न चैवमित्यर्थः। स च भिन्न एवेत्यन्वयः। यदि न भिन्नस्तदा लाघवेन विशेष्याभावादेरेव व्याप्यतया विशिष्टाभावो न व्याप्यः स्यात्। न चैवमित्यर्थः।

कुत इत्यतस्तद्व्यनक्ति ॥ **विशेषणेति** ॥ प्रतिवादिमतानुरोधेनाह ॥ **पदार्थान्तरमितीति** ॥ अस्त्वतिरिक्तोऽभावस्ततः किमित्यत आह ॥ **तादृशेति** ॥ प्रतियोगिनिर्विकल्पकादभावबुद्धेः अभावाद्वास्तवमुपेत्याह ॥ **प्रतीयोगितावच्छेदकप्रकारकेति** ॥ तथा च शरीरजन्यत्वत्वेन शरीरजन्यज्ञानं न शरीरज्ञानं विना युक्तमित्यर्थः। ततः किमित्यत आह ॥ **एवं चेति** ॥

## तर्कताण्डवम्

**नच गगनादौ व्याप्तिग्रहार्थं विशिष्टाभावग्रहकाले विशेष्याभावस्यापि ग्रहनियमाल्लाघवेन तत्रैव व्याप्तिग्रहान्न विशिष्टाभावे तद्ग्रह इति वाच्यम्। विशेष्याभावाग्रहणेपि शब्दादिना विशिष्टाभावग्रहणेन नियमाभावात्। क्वचिदुपस्थितिमात्रेण लाघवादरे अयं घटो जन्यः कृतकत्वादित्यत्र लघुनि शीघ्रोपस्थितिके च घटत्वे सत्यपि कृतकत्वनिष्ठव्याप्तिग्रहं प्रतीव प्रकृतेपि लघौ विशेष्याभावे सत्यापि विशिष्टाभावनिष्ठव्याप्तिग्रहं प्रति भिन्नविषयत्वेन गौरवस्याप्रतिबन्धकत्वात्। नहि नीलधूमनिष्ठा व्याप्तिर्धूमत्वेनेव विशिष्टाभावनिष्ठा व्याप्तिर्विशेष्याभावत्वेन अवच्छेत्तुं शक्या। तत्र तदभावात्। येनावच्छेदकांशे लाघवं सहकारि स्यात्।**

## न्यायदीपः

यदत्रोक्तं मणौ ''शरीरजन्यत्वाभावो नाखण्डो हेतुः। यदि हि शरीरजन्यत्वं सकर्तृकत्वप्रयोजकं स्यात्तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्यव्याप्यता स्यात्। न चैवम्। किन्तु जन्यत्वम्। लाघवादि''त्यादि तत्तु ''अदृष्टाद्वारकशरीरजन्यत्वमुपाधिश्च'' इत्यादिनोपाधेः सकर्तृकत्वप्रयोजकत्वमुपाधिश्च'' इत्यादिनोपाधेः सकर्तृकत्वप्रयोजकत्वप्रतिपादनपरपूर्वग्रन्थेनैव निरस्तमित्यभिप्रेत्य लाघवेन विशेष्याभावस्यैव व्याप्यत्वं न विशिष्टाभावस्येति विशिष्टाभावस्य व्याप्यत्वासिद्धिचोद्यं निराह ॥ **न चेत्यादिना** ॥ सामग्रीवशेनाजन्यत्वस्यापि क्वचिदुपस्थिति-सम्भवादस्तु विशिष्टाभावस्याव्याप्यत्वमित्यत आह ॥ **क्वचिदिति** ॥ **भिन्नविषयत्वेनेति** ॥ विशिष्टाभावमध्ये विशेष्याभावस्याप्रवेशात्। अत एव पूर्वं ''विशेषणविशेष्ययोरभावाभ्यां भिन्न एव'' इत्युक्तमिति भावः ॥

नन्वखण्डस्य व्याप्यत्वेप्यखण्डनिष्ठा व्याप्तिर्जन्यत्वाभावत्वेनैवावच्छिद्यते। नीलधूम निष्ठा व्याप्तिर्धूमत्वेनव। तथा च हेतुस्वरूपपोपस्थितौ विशेष्याभावविशिष्टाभावयोर्भिन्नत्वेन लाघवासहकारेप्यवच्छेदकग्रहे लाघवं सहकारि स्यादेवेत्यत आह ॥ **न हीति** ॥ **तत्रेति** ॥ विशिष्टाभावे जन्यत्वाभावत्वाभावादित्यर्थः ॥

## तर्कताण्डवम्

**नन्वेवं वह्न्यनुमापके धूमप्रागभावादौ, पृथिव्या इतरभेदानुमापके पृथिवीत्वसमवाये च, त्वदभिमता व्यर्थविशेष्यता न स्यात्। धूमपृथिवीत्वादिनिष्ठव्याप्तितो धूमप्रागभावपृथिवीत्वसमवायनिष्ठव्याप्तेर्भिन्नत्वेन तस्याः धूमपृथिवीत्ववृत्तिधर्माभ्यामवच्छेत्तुमशक्यत्वादिति चेन्न। इष्टापत्तेः।**

## न्यायदीपः

उक्तार्थे बाधकमाशङ्क्येष्टापत्त्या निराह ॥ **नन्वित्यादिना** ॥ **वह्नीति** ॥ गिरिर्वह्निमान् धूमप्रागभाववत्त्वात्। पृथिवी इतरभिन्ना पृथिवीत्वसमवायवत्त्वादित्यादावित्यर्थः। तर्हि विशेष्यत्वं क्वापि दोषो न स्यादित्यत आह ॥ **व्यर्थेति** ॥ आदिपदेन तादृशालोकवत्त्वादिग्रहः।

## तर्कताण्डवम्

व्यर्थविशेष्योदाहरणं तु अयमभिधेयत्ववान् प्रमेयत्वे सति धूमत्वादित्यादिकम्। नीलधूमादित्यादौ विशेषणाश्रय-निष्ठव्याप्तेर्विशेष्यतावच्छेदकेन धूमत्वेनावच्छेदसम्भवरूप-व्यर्थविशेषणतादुष्टिबीजस्येव प्रकृतेपि विशेष्यतावच्छेदका-वच्छिन्ननिष्ठव्याप्तेर्विशेषणतावच्छेदकेन प्रमेयत्वेनावच्छेद-सम्भवरूपस्य व्यर्थविशेष्यतादुष्टिबीजस्य सम्भवात्।

तस्माद् व्यर्थविशेषणस्य न क्वापि व्याप्यत्वासिद्धित्वेन दूषणता। किन्तु विशिष्टस्य हेतुत्वाभिप्रायेण प्रयोगेऽधि-कत्वेन। हेतुद्वयोक्तौ द्वितीये प्रथमेन कृतकार्यत्वस्येव विशिष्टेऽपि विशेष्येण कृतकार्यत्वस्य दुष्टिबीजस्य सत्त्वात्। विशेष्यस्यैव हेतुत्वाभिप्राये त्वर्थान्तरत्वेन। प्रकृते तु विशिष्टाभावरूपहेतुकार्यस्यान्येनाकरणान्नाधिकत्वम्॥

नच विशिष्टाभावकार्यं विशेष्याभावेन कर्तुं शक्यम्। विशिष्टोपस्थितौ विशेष्यस्योपस्थितिनियमवत्, विशिष्टस्य हेतुत्वे विशेषणस्य हेतुत्वनियमवच्च, विशिष्टाभावोपस्थितौ विशेष्याभावोपस्थितिनियमस्य, तस्य हेतुत्वान्वये विशेष्या-भावस्य हेतुत्वान्वयनियमस्य चाभावात्॥

नाप्यर्थान्तरम्। असिद्धिवारकत्वेन प्रकृतोपयोगात्। एतदेवाभिप्रेत्योक्तं टीकाकारैः ''पक्षधर्मतासिद्ध्यर्थत्वात्'' इति। तस्मात्सत्प्रतिपक्षत्वं दुष्परिहरम्।

## न्यायदीपः

नन्वत्राप्यखण्डं विशेष्यमात्रादन्यदेव व्याप्तमिति सुवचनमित्यतो व्यर्थविशेषणस्थल इवात्रापि दूषकताबीजप्रदर्शनेन व्यर्थविशेष्यतां व्यनक्ति ॥ **नीलेति** ॥ **विशेषणाश्रयनिष्ठेति** ॥

नैल्यरूपविशेषणयुक्तधूमनिष्ठेत्यर्थः। विशिष्टस्य पदार्थान्तरत्वाभावमतेनैवमुक्तिः। विशेष्यतावच्छेदकेन धूमत्वेनेत्यर्थः ॥ **सम्भवेति** ॥ व्यभिचाराभावादिति भावः ॥ **दुष्टीति** ॥ विशेषणस्य दुष्टताबीजस्येत्यर्थः। प्रकृतेपि प्रमेयवत्त्वे सति धूमवत्त्वादित्यादावित्यर्थः ॥ **सम्भवरूपस्येति** ॥ प्रमेयवत्त्वादित्युक्तेपि व्यभिचाराभावादिति भावः।

व्यर्थविशेषणस्य दूषणताबीजं निर्धारयन्नेव शरीराजन्यत्वे तन्नास्तीत्युपपादयति ॥ **तस्मादिति** ॥ नीलधूमादेरपि व्याप्यताया उपपादनादित्यर्थः ॥ **अधिकत्वेनेति** ॥ दूषणतेत्यनुषङ्गः। आधिक्यरूपनिग्रहस्थानत्वेन हेतुनेत्यर्थः।

अन्वितोपयुक्तापुनरुक्तकृतकार्यप्रयोगस्याधिकत्वात्कथमत्रान्येन कृतकार्यत्वमित्यत आह ॥ **हेतुद्वयेति** ॥ धूमवत्त्वादालोकवत्त्वाच्चेत्येवंरूपेणेति भावः ॥ **अर्थान्तरत्वेनेति** ॥ प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरमित्युक्तार्थान्तररूपनिग्रहस्थानत्वेनेत्यर्थः। अत्रापि दूषणता व्यर्थविशेषणस्य इत्यनुषङ्गः ॥ **एतदेवाभप्रेत्योक्तमिति** ॥ विमतं विकर्तृकं अस्मत्सम्मतकर्तृरहितत्वादिति तत्त्वनिर्णयटीकायामुक्तमित्यर्थः। शरीरेति विशेषणस्येति शेषः।

## तर्कताण्डवम्

**तदेवं कार्यत्वहेतोर्दुष्टतया प्रमित्यनुन्मुखत्वाल्लाघवतर्कानुगृहीतेन तेन कर्त्रैक्यसिद्धिरिति निरस्तम्। कार्यसामान्यस्य कर्तृमात्रसापेक्षत्वेपि तद्विशेषस्य घटस्य कुलालरूपकर्तृसापेक्षत्ववत्, वेदस्य शरीरसहकृतेश्वरसापेक्षत्ववच्च गुरुतरकार्यस्य सजातीयकारकसहितकर्तृसापेक्षत्वदर्शनेन त्वदुक्तैककर्तृकत्वविपरीतानेककर्तृकत्वेनाप्यनुमातुं शक्यत्वाच्च ॥**

**वैदिकेश्वरस्य तु वेदेनैव सर्वं सिद्धम्। तस्मान्न कार्यत्वहेतुनेश्वरसिद्धिः।**

## न्यायदीपः

यदपि मणौ ''ननु क्षित्यादावेक कर्तृसिद्धिः कुतः'' इत्यादिना ''उच्यते'' इत्यन्तेनैककर्तृ-

सिद्धिमाक्षिप्य ''यत्र प्रमाणे लाघवगुरुविषयते'' त्यादिना समाधानमुक्तं तदपि निराह ॥ **तदेवमिति** ॥ **तद्विशेषस्येति** ॥ कार्यविशेषस्येत्यर्थः ॥ **शरीरेति** ॥ ''सर्गादावदृष्टभेदात् मीनशरीरोत्पत्तावदृष्ट-वदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञान-विवक्षासहकृतान्मीन-कण्ठताल्वादिक्रियातज्जन्यसंयोगाद्वेदोत्पत्तिः'' इति मण्युक्तेरिति भावः ॥ **गुरुतरेति** ॥ प्रासादादि-रूपेत्यर्थः ॥ **सजातीयकारकेति** ॥ कर्त्रन्तरादिरूपेत्यर्थः। मूलारूढत्वायाह ॥ **त्वदुक्तेत्यादि** ॥ विमतमनेककर्तृकं गुरुतरकार्यत्वात्प्रासादादिकार्यवदित्यनुमातुं शक्यत्वादित्यर्थः।

नन्वेवं त्वन्मतेपीश्वरसिद्धिः कर्त्रैक्यसिद्धिः नित्यज्ञानादिसिद्धिश्च न स्यात्। अनुमानस्य त्वया दूषितत्वादित्यतः ''वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते'' इति भाष्यवाक्यं हृदि कृत्वाह ॥ **वैदिकेति** ॥ वेदैकसमधिगम्येत्यर्थः ॥ **वेदेनेति** ॥ ''द्यावा भूमी जनयन् देव एकः, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, यदात्मको भगवांस्तदात्मिका व्यक्तिः'' इत्यादिभाष्याद्युक्तवेदेनेत्यर्थः।

## तर्कताण्डवम्

**एतेन अस्तु तर्हि परमाण्वोर्द्रव्यारम्भकसंयोगहेतुक्रिया-रूपकार्यायोजनेनेश्वरसिद्धिः। विमतं परमाण्वादि चेतनाधिष्ठितं स्पन्दते जडत्वात् शरीरवदित्यनुमानात्। अन्यथा जडत्वहानेरिति निरस्तम्।**

**उक्तरीत्या त्वदुक्तविपरीतस्यास्मदादीनामेवादृष्टद्वाराप्य-धिष्ठातृत्वस्य सम्भवेन सिद्धसाधनात्। अदृष्टाद्वारकेति विशेषणेऽप्रयोजकत्वात्। अनेनेश्वरसार्वज्ञ्यासिद्धेश्च। इद-मुत्तरानुमानेष्वपि द्रष्टव्यम्।**

## न्यायदीपः

एवं-

''कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्सङ्ख्याविशेषाच्च''

इति कुसुमाञ्जलिसङ्गृहीतेश्वरसाधकहेतूनां मध्ये मण्युक्तकार्यत्वहेतुप्रपञ्चनं निरस्येदानीं "अनयैव दिशा सर्वाणि जगत्कारणमात्रसाधनानि स्वतन्त्रानुमानानि निरसनीयानि" इति शास्त्रयोनिसूत्रसुधोक्तिं विवृण्वानः कुसुमाञ्जल्युक्तहेत्वन्तराण्यपि क्रमेण निराह ॥ **एतेनेत्यादिना** ॥ **कार्यायोजनेति** ॥ यद्यपि कुसुमाञ्जलौ "आयोजना खल्वपि" इत्यादिना आयोजनमेव हेतुरुपात्तः। कार्येति कार्यत्वं हेतुः। तथापि "युज्यते संयुज्यते अन्योन्यं द्रव्यमनेनेत्यायोजनं द्व्यणुकारम्भकसंयोगजनकं सर्गाद्यकालीनपरमाणुकर्म" इति वर्धमानोक्त्या कार्यपदेन द्व्यणुकादिकार्या योजनमित्यप्यन्वयमुपेत्य कार्यायोजनेनेत्युक्तमिति ज्ञेयम्। क्वचित्तु आयोजनेनेत्येव पाठः।

सिद्धिरित्युक्तं प्रयोगोक्त्या व्यनक्ति ॥ **विमतमिति** ॥ तत्किमित्यतः ॥ **परमाण्वादीति** ॥ आदिपदेन द्व्यणुकादिग्रहः। चेनाधिष्ठितं सदेव स्पन्दत इति साध्यार्थः। अप्रयोजकत्वं हेतोर्निराह ॥ **अन्यथेति** ॥ चेतनवत्स्वत एव स्पन्दवत्त्व इत्यर्थः। एतेनेत्युक्तं व्यनक्ति। ॥ **उक्तरीत्येति** ॥

उक्तदोषनिरासायादृष्टाद्वारकचेतनेति विशेषमाशङ्क्य निराह ॥ **अदृष्टेति** ॥ जडत्वहेतो-रदृष्टद्वारकचेतनाधिष्ठितत्वेनाप्युपपत्तेरप्रयोजको हेतुरिति भावेनाह ॥ **अप्रयोजकत्वादिति** ॥

ननु अदृष्टस्यापि केनचिदधिष्ठातृचेतनेन भाव्यमिति स एवेश्वर इति चेन्न। तत्राधिष्ठातुः कृत्याभावात्। न तावन्नोदनादिकम्। अद्रव्यत्वात्। न चातिशयाधानम्। स किं गुणोऽतीन्द्रयः कश्चिच्छक्तिविशेषः। न द्वयमपि। त्वया गुणे गुणान्तरानङ्गीकारात्। शक्त्यनभ्युपगमाच्च। नापि सहकारिसमवधानम्। अदृष्टादेव तदुपपत्तेः। नापि कार्यकारित्वम्। तस्यादृष्टस्वाभावत्वात्। एककार्योत्पत्त्यनन्तरं कार्यान्तरानुत्पादानं च प्रबलादृष्टान्तरप्रतिबन्धेनोपपत्तेरिति सुधायामेव व्यक्तत्वादिति भावेन दोषान्तरमाह ॥ **अनेनेति** ॥ उक्तानुमानेन कस्यचिच्चेतनस्यैव सिद्ध्या तत्सार्वज्ञ्यासिद्धेः। सार्वज्ञ्यस्य धर्मिग्राहकमानसिद्धत्वादितीश्वरवादोपक्रमात्पूर्वं त्वदुक्तमयुक्तमिति भावः ॥ **इदमिति** ॥ सार्वज्ञ्यासिद्धिदूषणमिर्थः।

## तर्कताण्डवम्

**ऐतेनैव विमतं ब्रह्माण्डादि धारकप्रयत्नवताधृतं गुरुत्वे सत्यपातित्वात् वियति विहङ्गमशरीरवत्। विमतं ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवदिति निरस्तम्। उक्तसिद्धसाधनाप्रयोजकत्वान्यतरानिस्तारात्।**

## न्यायदीपः

धृतिरूपं हेत्वन्तरमपि कुसुमञ्जल्युक्तदिशानूद्य निराह ॥ **एतेनेति** ॥ ब्रह्माण्डादीत्यादिपदेन पृथिव्यादिग्रहः। साध्ये व्यापकतासम्पत्तये धारकेति प्रयत्ने विशेषणम्। अन्यादृशप्रयत्नस्य अपतनाहेतुत्वात्। लघुवस्तुन्यपतनवति व्यभिचारवारणाय गुरुत्वे सतीति हेतुविशेषणम्। पतमाने गुरुत्ववति तन्निरासाय विशेष्यम् – **वियतीति**। गगने विहरत्पक्षिशरीरं यथा प्रयत्नवता चेतनेन विहगजीवेन धृतं तथा ब्रह्माण्डादिधारकः कश्चन चेतनः सिद्ध्यति। स एवेश्वर इति भावः।

धृत्यादेरित्यत्रादिपदोपात्तानुमानं व्यनक्ति ॥ **विमतमिति** ॥ **उक्तेति** ॥ एतच्चोपलक्षणम्। प्रबलादृष्टप्रतिबन्धेन गुरुत्ववतोप्यपतनोपपत्त्याप्यप्रयोजकत्वमपातित्वहेतोः। सन्दिग्धासिद्धत्वं च "पततोपि तस्य महत्त्वेन पतनानुपलम्भसम्भवात्" इति सुधोक्तमपि ध्येयम्॥

## तर्कताण्डवम्

**नच घटादिनिर्माणं स्वतन्त्रपुरुषविश्रान्तं निर्माणत्वात् इदानीन्तनापूर्ववस्तुनिर्माणवत्, घटादिशब्दव्यवहारः स्वतन्त्रपुरुषविश्रान्तः व्यवहारत्वात् डित्थादिशब्दव्यवहार-वत्, लिपिव्यवहारः स्वतन्त्र पुरुषविश्रान्तः व्यवहारत्वात् इदानीन्तननूतनलिपिव्यवहारवदित्याद्यनुमानैस्तत्सिद्धिरिति वाच्यम्।**

**लाघवेन सर्गादिभवानां सुप्तप्रबुद्धन्यायेन त्वदभिमत-विपरीतस्य कल्पान्तरीयसंस्कारोद्बोधमात्रस्य कल्पनादेव घटादिनिर्माणादेरुपपत्त्या हेतूनामप्रयोजकत्वात्। अन्यथा ईश्वरस्य, द्व्यणुकादिक्रमेणारब्धतदीयानन्तशरीरादेश्च कल्पने गौरवात्।**

## न्यायदीपः

पद्यते गम्यते व्यहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एव पदशब्देनोच्यते। ततोपीश्वरसिद्धिः। तथाहि। यदेतत्पटादिनिर्माणनैपुण्यम् कुविन्दादीनां वाग्व्यावहारश्चेत्यादिकुसुमाञ्जल्युक्तिं हृदि कृत्वा

पदादीश्वरसिद्धिरित्येतदपि निराह ॥ **नचेत्यादिना** ॥ **स्वतन्त्रेति** ॥ तज्जातीयनिर्माणानुपजीवित्वं पुरुषस्य स्वातन्त्र्यम्। द्वितीये तु तज्जातीयव्यवहारानुपजीवित्वम्। तत्र पर्यवसितत्वं तत्र विश्रान्तत्वम्। अस्मदादिपुरुषविश्रान्तत्वेन बाधवारणाय ॥ **स्वतन्त्रेति** ॥ लाघवेनेत्यस्य कल्पनादित्यन्वयः

॥ **सुप्तेति** ॥ पूर्वकालैकेति समासः। सुप्तः सन् यः पश्चात्प्रबुद्धः स यथा सुप्तेः पूर्वमनुभूतं स्मृत्वा घटनिर्माणादि करोति तथैव सृष्ट्यादावदृष्टादिवशेन लब्धदेहः सर्गाद्यकालीनकुलालादिरेव प्रळयात्पूर्वकालीनानुभवजन्यसंस्कारोद्बोधेन प्रागनुभूतं स्मृत्वा सर्गादौ घटादिनिर्माणं तद्व्यवहारं च करोतीत्युपपत्त्या त्वदभिमतस्वतन्त्रपुरुषकृतत्वासिद्धेरप्रयोजकत्वादित्यर्थः।

तर्कपराहतिं चाह ॥ **अन्यथेति** ॥ स्वतन्त्रपुरुषेणैव घटादिनानाचित्रनिर्माणानां सृष्ट्यादौ कृतत्वे कुलालकुविन्दादिनानाशरीराणां धारणेनेश्वर एव तानितानि विचित्रनिर्माणानि करोतीत्यनन्त-देहकल्पनमीश्वरस्य स्यात्। तानि च द्व्यणुकादिक्रमेण जन्यानीति कल्पनीयमित्यप्रामाणिका-नेककल्पनाद्गौरवमित्यर्थः॥

## तर्कताण्डवम्

**नच वाच्यं सर्गादौ ब्राह्मणत्वादेरधिकारस्याज्ञाने कर्मानुष्ठानासम्भवात् स्वतस्तदभिज्ञः कश्चित्स्वीकार्य इति। स्तनपानप्रवृत्तिहेत्विष्टसाधनतानुमितिहेतुव्याप्तिस्मृतिवत् सर्गादिभवानां प्राचीनकल्पानुष्ठितस्य ब्राह्मण्यादिहेतोः कर्मणः, तस्य ब्राह्मणत्वाविनाभावस्य च, स्मृतिसम्भवात्।**

## न्यायदीपः

''प्रत्ययपदेनात्राश्वासविषयः प्रामाण्यमुच्यते'' इत्यदिना ''न चासर्वज्ञो धर्माधर्मयोः स्वातन्त्र्येण प्रभवति'' इत्यन्तेन कुसुमाञ्जलिग्रन्थेनोक्तं प्रत्ययादीश्वरसिद्धिरित्येतत्प्रमेयमपि निष्कृष्यानूद्य निराह ॥ **नच वाच्यमित्यादिना** ॥

॥ **स्वतस्तदभिज्ञ इति** ॥ अन्यथाऽनाश्वासेनानुष्ठानलोपापत्तेरिति भावः ॥ **स्तनेति** ॥ स्तनपानप्रवृत्तिहेतुर्या इष्टसाधनतानुमितिः तद्धेतुव्याप्तिस्मृतिवदित्यर्थः ॥ **सर्गेति** ॥ सर्गादावुत्पन्नानां ब्राह्मणादीनामित्यर्थः ॥ **तस्येति** ॥ कर्मण इत्यर्थः।

## तर्कताण्डवम्

ननु त्र्यणुकपरिमाणं सङ्ख्याऽसमवायिकारणकं परिमाणप्रचयाजन्यजन्यपरिमाणत्वात्। एतद्घटारम्भककपालद्वयसमानपरिमाणककपालत्रयारब्धघटान्तरगतातिशयितपरिमाणवत्। नच विशेषणासिद्धिः। त्र्यणुकपरिमाणस्य द्व्यणुकपरिमाणजन्यत्वे तद्वदेवाणुत्वापत्तेः। निरवयवावयवारब्धे द्व्यणुके द्व्यणुकान्तरनिष्ठभूयोवयवासंयोगित्वे सति तत्संयोगित्वरूपस्य प्रचयस्याप्यसम्भवात्। तस्मात् त्र्यणुकपरिमाणं प्रति द्व्यणुकवृत्तित्रित्वसङ्ख्यैवासमवायिकारणम्।

एवं परमाणुपरिमाणं न परिमाणारम्भकं अणुपरिमाणत्वात् द्व्यणुकपरिमाणवत्। नचाप्रयोजकता। द्व्यणुकपरिमाणस्य परमाणुपरिमाणादणुतमत्वापत्तेः। तस्मात्परिशेषाद् द्व्यणुकपरिमाणस्य परमाणुनिष्ठद्वित्वसङ्ख्यैवासमवायिकारणम्। ते च त्रित्वद्वित्वे अपेक्षाबुद्धिजन्ये अनेकवृत्तिसङ्ख्यात्वात् घटवृत्तिद्वित्वादिवत्। अपेक्षाबुद्धिश्चास्मदादिष्वसम्भाविनी तदाधारमीश्वरं कल्पयतीति चेन्मैवम्।

## न्यायदीपः

श्रुतेरिति हेतोर्ह्ययमर्थः। वेदाः सर्वज्ञप्रणीताः वेदत्वाव्द्यतिरेकेण पामरवाक्यवदिति श्रुतिरूपकार्येण व्यतिरेकिहेतुनेश्वरसिद्धिरिति। वाक्यादित्यस्य तु वेदवाक्यानि पौरुषेयाणि वाक्यत्वादस्मदादिवाक्यवदित्यन्वयिना वाक्यत्वहेतुनेश्वरसिद्धिरिति। तदुभयमपि वेदापौरुषेयत्ववादे निरस्तमित्युपेत्य ''सङ्ख्याविशेषाच्च साध्यो विश्वकृदव्ययः'' इत्यस्य प्रपञ्चनपरेण ''सङ्ख्याविशेषात् खल्वपि'' इत्यादिना कुसुमाञ्जलिग्रन्थेनोक्तं निष्कृष्यानुवदन् शङ्कते ।। **नन्वित्यादिना** ।। द्रव्यत्वेन हेतुना त्र्यणुकस्यपरिमाणवत्त्वे सिद्धे तस्य परिमाणस्य कार्यगुणत्वेन जन्यत्वे च सति भावकार्यस्य च कारणत्रयजन्यतया त्र्यणुकस्य समवायिकारणस्यादृष्टाद्विनिर्मितस्य भावेप्यसमवायिकारणं

द्व्यणुकगतत्रित्वसङ्ख्या वाच्या त्रिभिर्द्व्यणुकैस्त्र्यणुकारम्भादिति भावेन. सङ्ख्याजन्यत्वं तावद्वर्धमानोक्तप्रयोगोक्त्या साधयति ॥ **त्र्यणुकपरिमाणमिति** ॥ तदुक्तरीत्या द्व्यणुकपरिमाणस्य पक्षतोपगमेनोक्तरूपसाध्यसाधनेपि वक्ष्यमाणदिशा परमाणुगतद्वित्वरूपसङ्ख्यानिमित्तकारणापेक्षाबुध्याश्रयत्वेनेश्वरसिद्धिरस्ति। तथापि परमाणुद्व्यणुकपरिमाणयोर्द्वयोरप्यणुपरिमाणत्वात् द्व्यणुकपरिमाणपक्षतापक्षे हेतोर्विशेषणसिद्धेर्वक्ष्यमाणदिशा परिहर्तुमशक्यत्वात् त्र्यणुकपरिमाणस्य पक्षत्वोक्तिः। हेतौ परिमाणाजन्येत्युक्त्या घटादिपरिमाणे प्रचयाजन्येत्युक्त्या तूलपिण्डपरिमाणे जन्येत्युक्त्या परमाण्वादिपरिमाणे गुणत्वादित्युक्त्वा परिमाणेत्युक्त्या घटगतरूपादौ व्यभिचारशङ्का निरस्ता। न च हेतोरप्रयोजकत्वं शङ्क्यम्। जन्यपरिमाणस्य सङ्ख्यापरिमाणप्रचयरूपत्रितयजन्यत्वात्। द्वाभ्यामजन्यत्वे सति जन्यत्वस्य सङ्ख्याजन्यत्वेन विनानुपपत्तेरिति भावः॥

वर्धमानाद्यनुक्तमपि दृष्टान्तं स्वयं दर्शयति ॥ **एतद्घटेति** ॥ कश्चिद्बुद्धिस्थो घट एतद्घटपदेन उच्यते। घटान्तरगतातिशयितपरिमाणे कपालस्थत्रित्वसङ्ख्याजन्यत्वरूपसाध्यस्योक्तरूपहेतोश्च सत्त्वं व्यक्तमिति भावः ॥ **अणुत्वापत्तेरिति** ॥ तथा च त्र्यणुकस्याप्रत्यक्षतापत्तेरिति भावः।

प्रचयस्वरूपं वदन्नेव तदजन्यत्वं व्यनक्ति ॥ **निरवयवेति** ॥ निरवयवाभ्यां परमाणुरूपावयाभ्यामारब्ध इत्यर्थः। वर्धमानोक्तप्रयोगान्तरमाह ॥ **एवमिति** ॥ सङ्ख्याया एव जनकत्वेन द्व्यणुकपरिमाणस्याजनकत्वे सतीत्यर्थः। परमाणुगतद्वित्वसङ्ख्ययैव द्व्यणुकपरिमाणजन्म न तु तत्परिमाणेनेति न बाधो द्व्यणुकपरिमाणानुत्पादो वा शङ्क्य इति भावः। अयं च प्रयोगो द्व्यणुकपरिमाणे। तत्रोक्तप्रयोगोऽत्रापि ध्येयः।

द्व्यणुकपरिमाणेऽणुत्वस्योपगमेनेष्टापत्तिनिरासायाह ॥ **अणुतमत्वेति** ॥ **तस्मादिति** ॥ परिमाणस्याजनकत्वात् प्रचयस्य च प्रागुक्तरूपस्यासम्भवादित्यर्थः। ततश्च किमीश्वरसिद्धावागतमित्यतः कुसुमाञ्जल्युक्तप्रयोगमाह ॥ **ते चेति** ॥ द्व्यणुकपरिमाणगते इत्यर्थः। एकत्वे व्यभिचारवारणाय हेतावनेकवृत्तीत्युक्तिः। संयोगादौ तद्वारणाय सङ्ख्यात्वादित्युक्तिः ॥ **तदाधारमीश्वरमिति** ॥ द्वित्वस्य निमित्तकारणभूतापेक्षाबुद्धिनाश नाश्यत्वनियमेपीश्वरबुद्धेर्नित्यतया कारणान्तरनाशप्रयुक्त एव परमाण्वादिगततद्द्वित्वादिनाश इति न तस्य नित्यत्वशङ्केति भावः।

## तर्कताण्डवम्

**सङ्ख्यायोनित्वेपि द्व्यणुकपरिमाणं प्रति त्वदुक्तपरमाणुगतद्वित्वविपरीतयोः परमाणुगतैकत्वयोः त्र्यणुकपरि-**

**माणं च प्रति द्व्यणुकनिष्ठैकत्वानामसमवायिकारणत्व-सम्भवात्। एकत्वानामनेकत्वेपि क्लृप्तत्वात्। द्वित्वत्रित्व-योस्तु प्रत्येकमेकत्वेपि कल्प्यत्वात्।**

**नच त्र्यणुकपरिमाणस्य द्व्यणुकगतानेकैकत्वा-समवायिकारणकत्वे द्व्यणुकपरिमाणवदणुत्वं स्यादिति वाच्यम्। अणुत्वरूपं विशेषं प्रति नित्यसङ्ख्यात्वेन महत्वरूपं विशेषं प्रति जन्यसङ्ख्यात्वेन हेतुत्वोपपत्तेः।**

## न्यायदीपः

आद्यहेतोरन्यथोपपत्त्या त्वदभिमतापेक्षाबुद्ध्याश्रयत्वेन नेश्वरसाधकतेत्यप्रयोजकत्वमिति भावेन सिद्धान्तयति ।। **मैवमित्यादिना** ।। **सङ्ख्यायोनित्वेपीति** ।। द्व्यणुकत्र्यणुकपरिमाणयोः परमाणुद्व्यणुकगतसङ्ख्याजन्यत्वेपीत्यर्थः। अपीत्यभ्युपगमवादः ।। **द्व्यणुकेति** ।। द्व्यणुकत्रयनिष्ठेत्यर्थः।

ननु नैवं सम्भवति। एकत्वानामनेकत्वात्। द्वित्वत्रित्वयोस्तु प्रत्येकमेकैकत्वेन लाघवात् दद्व्यणुकत्र्यणुकगतपरिमाणयोर्द्वयोरपि स्वावयवगतैकत्वसङ्ख्याजन्यत्वाविशेषेण त्र्युणुकपरि-माणस्याप्यणुत्वापत्तेश्चेत्यत आद्यं निराह ।। **एकत्वानामिति** ।। अन्त्यमाशङ्क्य निराह ।। **न चेति** ।। **नित्येति** ।। परमाणुगतैकत्वयोः नित्यत्वात्तज्जन्यं द्व्यणुकपरिमाणमणु। द्व्यणुकगतानां त्रयाणामे-कत्वानां जन्यत्वात्तज्जन्यं त्र्यणुकपरिमाणं महदित्युपपत्तेरित्यर्थः।।

यद्यपि त्रिभिरेकत्वैर्जन्यत्वादेव त्र्यणुकपरिमाणं महत् एकत्वद्वयजन्यत्वाद् द्व्यणुकपरि-माणमण्विति सुवचम्। तथापि चतुरणकादिपरिमाणस्यापि सङ्ख्यात एव जननोपपत्तेरिति वैशेषिका-धिकरणसुधोक्तदिशा सर्वकार्यपरिमाणानामप्येकरूपत्वलाभेन क्लृप्ततत्तत्समवायिकारणगताने-कैकत्वसङ्ख्याजन्यत्वमेव स्यात्। त्र्यणुकादिकार्यगतपरिमाणस्य सर्वस्यापि त्वन्मते महत्त्वेन जन्यसङ्ख्योत्पन्नत्वेनाणुपरिमाणवैलक्षण्योपपत्तेरिति भावेनैव जन्यसङ्ख्यात्वेनेत्येवमुक्तम्।

ननु काणगतैकत्वसङ्ख्यायाः कार्यगतपरिमाणं प्रति नियतपूर्ववृत्तित्वेपि द्वित्वत्रित्वादिसङ्ख्यां प्रत्यसमवायिकारणतया क्लृप्तत्वेन तन्तुरूपादेरिवान्यथासिद्धत्वान्न परिमाणकारणत्वम् कुतः तद्विशेषासमवायिकारणत्वमिति चेन्न। अन्यत्र तथात्वेपि परमाणुगतैकत्वसङ्ख्याया असम्भाविता-

पेक्षाबुद्धिजन्यपरमाण्वादिगतद्वित्वबहुत्वसङ्ख्ये प्रत्यसमवायित्वकल्पनापेक्ष या परिमाणासमवायिकारणत्वकप्लनस्यैवोचितत्वात्। तद्धेतोरेवास्तु हेतुत्वं किं तेनेति न्यायात्। अनेकत्वं तु क्लृप्तत्वात् कल्प्य द्वित्वाद्यपेक्षया लघ्वित्युक्तम्।

## तर्कताण्डवम्

**किञ्च द्रव्यारम्भकत्वेन क्लृप्तस्य त्वदुक्तसङ्ख्याविपरीतस्यैकस्य संयोगस्यैव परिमाणहेतुता कल्प्या। नियतपूर्ववृत्तित्वेन क्लृप्ते तस्मिन्ननन्यथासिद्धिमात्रकल्पने लाघवात्। न तु द्वित्वस्य। तत्स्वरूपस्यानन्यथासिद्धिनियमपूर्ववृत्तित्वानां च कल्पने गौरवात्॥**

**किञ्चेदानीन्तनब्राह्मणस्य ब्राह्मणपूर्वकत्वेपि सर्गादिकालीनस्य तस्यादृष्टविशेषोपहितभूतपूर्वकत्ववत् इदानीन्तनद्वित्वादेरपेक्षाबुद्धिजन्यत्वेप्यादिकालीनस्यादृष्टविशेषोपहितपरमाणुमात्रपूर्वकत्वमस्तु। अन्यथा नित्यापेक्षाबुद्धिवन्नित्यब्राह्मणोपि कल्प्यः स्यात्।**

## न्यायदीपः

यद्येकत्वानामेनकत्वेनापरितोषं मन्यसे तर्हि क्लृप्तत्वाद्द्रव्यारम्भकमेव परिमाणारम्भकमस्तु। किं सङ्ख्ययापीत्याह ॥ **किञ्चेति** ॥ **एकस्येति** ॥ त्र्यणुकारम्भकद्व्यणुकत्रयसंयोगस्यानेकत्वेपि द्व्यणुकारम्भकपरमाणुद्वयसंयोगस्यैकत्वादेकस्येत्युक्तम्। अत एवाग्रे "न तु द्वित्वस्ये"त्येवोक्तिः।

ननु द्रव्योत्पत्तावन्यथाद्धिस्य कथं परिमाणहेतुतेत्यत आह ॥ **नियतेति** ॥ **अनन्यथेति** ॥ अनन्यथासिद्धिश्च नियमश्च पूर्ववृत्तित्वं च तेषामिति विग्रहः। द्वित्वजन्यत्वेपि परिमाणस्य नेश्वरसिद्धिरित्याह

॥ **किञ्चेदानीन्तनेति** ॥ "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तितः" इति स्मृतेराह ॥ **ब्राह्मणस्येति** ॥ **भूतेति** ॥ पृथिव्यादिपञ्चमहाभूतेत्यर्थः। सर्गादावदृष्टोपगृहीतभूतभेदान्मीनादिशरीरोत्पत्तावित्यादिमणिकृदाद्युक्तेरिति भावः।

## तर्कताण्डवम्

युक्तं चैतत्। अन्यथा समवाय्यपेक्षाबुद्धिनाशरूपयोः परमाणुवृत्तिद्वित्वनाशहेत्वोरभावेन तन्नाशाभावापातात्। अदृष्टविशेषोपहिताया ईश्वरनिष्ठापेक्षाबुद्धेर्हेतुत्वेन तन्नाशाद् द्वित्वनाशे आवश्यकत्वाददृष्टविशेष एव हेतुरस्तु। न चैवमननुगमः। ब्राह्मणवद्वैजात्यसम्भवात्।

किञ्च द्वित्वादेरपेक्षाबुद्धिजन्यतैव न। अन्वयव्यतिरेकानुविधानस्य व्यञ्जकत्वेनाप्युपपत्तेः। न चाविनिगमः। सेनादिबुद्ध्यालम्बनस्येयत्तयाऽनिश्चितानेकैकत्वबुद्धिजन्यस्य बहुत्वस्य सत्त्वेपि इयत्तया विनिश्चितैकत्वबुद्धिरूपव्यञ्जकाभावेन शतत्वाद्यप्रतीत्या व्यञ्जकत्वस्य त्वयापि स्वीकारात्।

वस्तुतस्तु द्व्यणुकादिपरिमाणं त्वदुक्तसङ्ख्याविपरीतपरिमाणजन्यमेव। परमाणुद्व्यणुकपरिमाणं परिमाणारम्भकं द्रव्यसमवायिकारणपरिमाणत्वात् त्र्यणुकपरिमाणवदित्याद्यनुमानात्।

## न्यायदीपः

वैजात्ये समानेऽपि कोत्र पक्षे विशेष इत्यत आह ।। **युक्तं चैतदिति** ।। **अन्यथेति** ।। नित्येश्वरापेक्षाबुद्धिजन्यत्व इत्यर्थः ।। **तन्नाशेति** ।। द्वित्वनाशेत्यर्थः। ईश्वरापेक्षाबुद्धेर्नित्यत्वादविनाशेऽपि तदुत्पादितद्वित्वादेर्निमित्तान्तरनाशेन नाश इति वर्धमानोक्तमाशङ्क्य निराह ।। **अदृष्टेति** ।। **तन्नाशेति** ।। अदृष्टनाशेत्यर्थः ।। **न चैवमिति** ।। क्वचिददृष्टोपहितपरमाणुपूर्वकत्वे क्वचिदपेक्षाबुद्धिपूर्वकत्वे च सतीत्यर्थः ।। **ब्राह्मणवदिति** ।। आदिकालीनब्राह्मणस्य कारणवैजात्यवदिहापि सम्भवादित्यर्थः। यद्वा तृणारणिमणिन्यायेनादिकालीनेदानीन्तनयोर्ब्राह्मणयोर्भिन्नकारणजन्ययोः वैजात्यवदिहाप्युपपत्तेरित्यर्थः।

द्वित्वादेरपेक्षाबुद्धिजन्यत्वमभ्युपेत्योक्तम्। वस्तुतस्तदेव नास्ति। येन तदाश्रयतयेश्वरसिद्धिः

स्यादित्याह ॥ **किञ्चेति** ॥ तदन्वयाद्यनुविधानात्कथमित्यत आह ॥ **अन्वयेति** ॥ एवमुत्प्रेक्ष्य स्वयं पक्षचतुष्टयमुक्त्वा इदानीं-

"महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितम्।
तस्माच्च सदृशं कार्यं तत्कार्येषूपजायते॥

यथा तथैव ह्रस्वत्वात्पारिमाण्डल्यतोपि हि।
जायेत सदृशं कार्ये परिमाणं समत्वतः"।

इत्यादिवैशेषिकाधिकरणानुव्याख्यानोक्तसमाधिमाह ॥ **वस्तुतस्त्विति** ॥ विपर्ययेणापीत्यादि-वाक्यारूढत्वाय त्वदुक्तसङ्ख्याविपरीतेत्युक्तिः।

सुधोक्तप्रयोगमाह ॥ **परमाणुद्व्यणुकपरिमाणमिति** ॥ समुदायाभिप्रायमेकवचनम्। परिमाणे इत्यर्थः। स्वस्वकार्यद्व्यणुकत्र्यणुकगतपरिमाणारम्भके इति साध्यार्थः। द्रव्यसमवायिकारण-गतपरिमाणत्वादिति हेत्वर्थः। अत्र द्रव्येत्युक्त्या शब्दसमवायिकारणगतगगनपरिमाणे, समवायी-त्युक्त्या घटकारणदण्डादिपरिमाणे, गुणत्वादित्यनुक्त्वा परिमाणत्वादित्युक्त्या परमाण्वादिगत-रूपादौ व्यभिचारशङ्कानिरासः। आदिपदेन "द्व्यणुकत्र्यणुकपरिमाणे स्वाश्रयसमवायिकारण-गतपरिमाणारब्धे कार्यगतपरिमाणत्वात् चतुरणुकादिपरिमाणव" दित्यादिसुधोक्तग्रहः। इत्याद्यनु-मानात् परिमाणजन्यमेवानुमीयत इति पूर्वेणान्वयः।

## तर्कताण्डवम्

**नच परमाणुपरिमाणं परिमाणानारम्भकं नित्यपरि-माणत्वात् गगनपरिमाणवत्, अणुपरिमाणत्वात् मनःपरि-माणवदित्यनेन सत्प्रतिपक्षता। द्रव्यसमवायिकारणपरि-माणत्वाभावस्योपाधित्वात्।**

## न्यायदीपः

सुधोक्ते एव प्रतिपक्षशङ्कातत्समाधाने चाह ॥ **न चेत्यादिना** ॥ मृत्पिण्डादिपरिमाणे व्यभिचारवारणाय हेतौ नित्येत्युक्तिः ॥ **द्रव्येति** ॥ गगनकालादिपरिमाणे साध्यव्यापकत्वात् साधनवति पक्षेऽभावेन साधनाव्यापकत्वादिति भावः। न च पूर्वसाधनव्यतिरेकत्वान्नायमुपाधिः,

प्रतिपक्षमात्रोच्छेदापत्तेरिति वाच्यम्। प्राचीनहेतोरनुकूलतर्कवत्त्वेन साध्यव्याप्यत्वनिश्चये सति तद्व्यतिरेकस्य प्रतिपक्षानुमाने साध्यव्यापकत्वनिश्चयात्। यत्र तु स्थापनाया आभासत्वं तत्रैव विशेषादर्शनदशायां सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वम्। यथा शब्दोऽनित्यः गुणत्वादित्यत्र शब्दो नित्यो व्योमैकगुणत्वादित्यनेन सत्प्रतिपक्षे गुणत्वाभावोनोपाधिः। जलपरमाणुरूपे साध्याव्यापकत्वात्। अत्र पूर्वसाधनव्यतिरेकस्याप्युपाधित्वे न कोपि दोष इति भावेन स्थापनायां निरुपाधिसहचारकार्यकारणभावग्रहरूपानुकूलतर्कौ व्यनक्ति ॥ **न चाप्रयोजको हेतुरित्यादिना –**

## तर्कताण्डवम्

**न चाप्रयोजको हेतुः। कारणगतगुणानां कार्यगुणं प्रति सजातीयत्वेनारम्भकत्वस्यौत्सर्गिकत्वात्। परिमाणसामान्यं प्रति कारणत्वग्रहदशायां परिमाणत्वस्य नियमेनोपस्थितेश्च।**

## न्यायदीपः

॥ **औत्सर्गिकत्वादिति** ॥ जातित एव प्राप्तत्वात् अपवादाभावे तस्यापि प्रमाणत्वात्। बाधकस्य चेहाग्रे निरसिष्यमाणत्वात् अस्याप्युत्सर्गविषयत्वमेवेति भावः।

नचैवमपि तूलपिण्डादिपरिमाणस्य शिथिलभूयोऽवयवसंयोगरूपप्रचयमात्रजन्यत्वात् तूलपिण्डसमवायिकारणगतपरिमाणे व्यभिचारी स्थापनाहेतुरिति वाच्यम्। तस्यापि पक्षतुल्यत्वात्।

न चैवं सत्यंशे बाधः। प्रचयकारणताया अप्यनिवारणात्। न चोभयकारणत्वकल्पने गौरवदोषः। "द्वयोरपि क्लृप्तशक्तित्वा"दिति सुधायामेवोक्तत्वात्। न च क्लृप्तशक्तित्वं परिमाणे असिद्धम्। कारणगतेत्यादिनोक्ततर्कद्वयसिद्धत्वात्। वक्ष्यमाणदिशा प्रचयसङ्ख्ययोः परिमाण-हेतुत्वादिति भावः।

## तर्कताण्डवम्

**ननु तूलपिण्डादिपरिमाणे प्रचयाख्यसंयोगविशेषस्य समानपरिमाणाल्पसङ्ख्याकावयवारब्धापेक्षया तादृशा-धिकसङ्ख्याकावयवारब्धद्रव्यगतातिशयितपरिमाणे**

बहुत्वसङ्ख्यायाश्च कारणत्वदर्शनात् सामान्यविशेषन्यायेन परिमाणसामान्यं प्रति संयोगसामान्यस्य सङ्ख्यासामान्यस्य वा कारणत्वमस्त्विति चेन्मैवम्। औत्सर्गिकस्य नियतोपस्थितिकस्य च बाधे सत्येव तद्विपरीते प्रमाणप्रवृत्तेः।

नचैवं द्व्यणुकत्र्यणुकपरिमाणयोः परमाणुपरिमाण-साजात्यं स्यादिति वाच्यम्। गुणत्वसाक्षाद्व्याप्यजात्या साजात्यापादन इष्टापत्तेः। तद्व्याप्यव्याप्यजात्या तदापादने तन्तुपरिमाणगतस्य महत्वव्याप्यस्यापकर्षरूपजातिविशेषस्य पटपरिमाणेऽभावेन व्यभिचारात्। अन्यथा सङ्ख्यासंयोग-जन्यत्वेऽपि महत्समवेतयोस्तयोर्महत्त्वजनकत्ववदणु-समवेतयोस्तयोरणुत्वजनकत्वं स्यात्।

किञ्च द्व्यणुकादिपरिमाणस्य केवलसङ्ख्यायोनित्व एव द्वित्वादिवत्सङ्ख्यात्वेन कारणसाजात्यं स्यात्। किञ्च परसिद्धं परिमाणत्वावान्तरमणुत्वादिजातिभेदमङ्गीकृत्येदमुक्तम्।

वस्तुतस्तु यथा त्र्यणुकादिषु महत्वमेकजातीयमेव उत्कर्षापकर्षवत्, यथा चाणुत्वं परमाणुद्व्यणुकयोः एवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते। एकस्यैवोत्कर्षापकर्षौ च प्रतियोगिभेदेन सन्निकर्षविप्र-कर्षाविवाविरुद्धौ। विस्तरस्तु सुधायां द्रष्टव्यः।

तस्मादीश्वरस्य सार्वज्ञादेर्वेदनिरपेक्षानुमानेनासिद्धेः कल्पनागौरवं सुस्थम्।

ईश्वरस्यानुमानिकत्वभङ्गः ॥ २२॥

ईश्वरवादः समाप्तः।

## न्यायदीपः

कारणपरिमाणस्य कार्यपरिमाणं प्रतीव प्रचयसङ्ख्ययोरपि कारणत्वं क्लृप्तमिति इह परमाण्वादिगतसङ्ख्यापि कारणं स्यादिति शङ्कते ॥ **नन्विति** ॥ **संयोगविशेषस्येति** ॥ कारणत्वदर्शनादित्यन्वयः। प्रचयः प्रसङ्गादुपात्तः। बहुत्वस्य कारणत्वग्रहे स्थलमाह ॥ **समानेति** ॥ तुल्यपरिमाणकपालद्वयारब्धघटापेक्षया तत्तुल्यपरिमाणकपालत्रयजन्यघटगतपरिमाण इत्यर्थः ॥ **तादृशेति** ॥ पूर्वद्रव्यावयवसमानपरिमाणेत्यर्थः ॥ **सामान्येति** ॥ यद्विशेषयोः कार्यकारणभावो बाधकाभावे तत्सामान्ययोरपि कार्यकारणभाव इति न्यायेनेत्यर्थः।

कार्यगतपरिमाणं प्रति कारणगतपरिमाणमेव सर्वत्र हेतुर्न तु प्रचयादिरपीति सिद्धान्तयति ॥ **मैवमित्यादिना** ॥ यद्वा अन्यत्र सङ्ख्यायामपि क्लृप्तशक्तित्वमस्तु। प्रकृते तु उत्सर्गतः प्राप्तपरिमाणहेतुत्वमेवास्तु बाधकाभावादित्याह ॥ **मैवमित्यादिना** ॥ अस्ति परमाण्वादिपरिमाणारम्भवादेऽपि तुल्यपरिमाणापत्तिरेव बाधिकेत्याशङ्क्यनिराह ॥ **न चैवमिति** ॥ परमाण्वादिपरिमाणस्य स्वकार्यगतपरिमाणारम्भकत्व इत्येवंशब्दार्थः ॥ **साजात्यमिति** ॥ तथा चाप्रत्यक्षतापत्तिरिति भावः ॥ **साक्षाद्व्याप्येति** ॥ परिमाणत्वजात्येत्यर्थः।

॥ **तद्व्याप्यव्याप्येति** ॥ परिमाणं चतुर्विधम्। अणुत्वं, महत्त्वं, दीर्घत्वं, ह्रस्वत्वं चेति। नीलत्वपीतत्वाद्यवान्तरजातिवत्परिमाणत्वावान्तरजातिचतुष्टयमुपेत्य परमाणावेवाणुपरिमाणं द्व्यणुके ह्रस्वपरिमाणं त्र्यणुकादौ महत्त्वादीत्यभ्युपगमेन द्व्यणुकेप्यणुत्वरूपपरिमाणत्वावान्तरजातिमत्परिमाणं त्र्यणुके च ह्रस्वत्वरूपपरिमाणत्वव्याप्यजातीमत्परिमाणं स्यादित्यापादने चेत्यर्थः। यद्वा उत्कर्षापकर्षादिरूपया गुणत्वव्याप्य परिमाणत्वव्याप्यजात्येत्यर्थः।

स्वोत्प्रेक्षितपक्षैः सहोक्तानि पञ्चधा समाधानान्यपि परिणामप्रवादाननुकूलानीति मन्वानः "परमतमाश्रित्य परस्येदं दूषणाभिधानम्" इति सुधोक्तं हृदि कृत्वाह ॥ **किञ्च परसिद्धेत्यादि** ॥ **सुधायामिति** ॥ वैशेषिकाधिकरणे समयपाद इत्यर्थः।

ईश्वरस्यानुमानिकत्वभङ्गः ॥ २२ ॥

ईश्वरवादः समाप्तः।

## तर्कताण्डवम्

### वर्णवादः

**ननु तथाऽपि वर्णसमुदायरूपस्य वेदस्य न नित्यत्वम्। शान्तः कोलाहलः श्रुतपूर्वो गकारो नास्तीत्यादिप्रत्यक्षेण, वर्णोऽनित्यः भावत्वे सति कृतकत्वादित्यनुमानेन च वर्णाना-मेवानित्यत्वादिति चेदुच्यते। शान्तः कोलाहल इति धीः ध्वनिविषयैव। ध्वनिविशेषस्यैव कोलाहलत्वात्। श्रुतपूर्वो गकारो नास्तीति धीस्तु नास्त्येव। श्रुत एव गकारः पुनः श्रूयते एक एव गकारोऽसकृदुच्चारित इत्यादिप्रत्यभिज्ञाविरोधात्। किन्तूच्चारणेनोपलब्ध वर्णस्यानुपलब्धिमात्रेण श्रुतपूर्वो गकारो न श्रूयत इत्येव धीः।**

**उक्तं हि टीकाकारैः ''प्रागुच्चारणादनुपलब्धा वर्णा उच्चारणे सत्युपलभ्यन्ते इत्येवानुभवसिद्धम्। न तु तेषामुत्पत्तिर्विनाशो वा'' इति।**

### न्यायदीपः

**।। तथापीति ।।** पौरुषेयवाक्येन धर्माद्यसिद्धावपि पौरुषेयत्वे कल्पनागौरवदोषभावेपि वेद पौरुषेयत्वे मानाभावेपीत्यर्थः **।। न नित्यत्वमिति ।।** नानादिनित्यत्वमित्यर्थः।

द्वितीयस्तबके कुसुमाञ्जलावुदयनोक्तमाह **।। शान्त इति ।। श्रुतेति ।।** पूर्वं श्रुतः श्रुतपूर्व इत्यर्थः। शब्दोऽनित्य उत्पत्तिधर्मत्वादित्युदयनानुमानस्य परिष्कारपूर्वं मणावुक्तस्यायमनुवादो **।। वर्ण इत्यादि ।।** मणौ वर्णात्मकशब्द इत्युक्तावपि मणिकृन्मतेंऽशतस्सिद्धसाधनस्यादोषत्वाद् वर्णपदानर्थक्यम्। वर्ण इत्येव वा पूर्तौ शब्दपदानर्थक्यम्। रूपादिनार्थान्तरवारकं तदिति तु च्छलत्वात्तथाशङ्कैव न युक्तेति वर्णोऽनित्य इत्येवानुवादः कृतः।

वर्णानामनित्यत्वेपि न वेदनित्यत्वक्षतिः। तथाप्यभ्युपेत्य तत्समाधत्ते **।। उच्यत इत्यादिना ।।** व्यक्तं चैतद्वादान्ते ग्रन्थ एव।

॥ **ध्वनिशेषस्यैवेति** ॥ यत्तु वर्धमाने अनभिव्यक्तवर्णत्वव्याप्यजातिविशेषो वर्णसमूह एव कोलाहल इत्युक्तम्। तन्न। वर्णशून्यध्वनिविशेषेपि कोलाहलपदप्रयोगात् ॥ **प्रत्यभिज्ञेति** ॥ तद् भ्रान्तित्वं त्वग्रे निरसिष्यत इति भावः ॥ **उक्तं हीति** ॥ ''न चोच्चारणकाल एव वर्णानामुत्पत्तिरिति वाच्य''मिति तत्त्वनिर्णयवाक्यसम्बन्धिटीकायां वर्णजन्मवर्णाभावबुध्योरुच्चारणक्रियाविषयत्वम् इत्येत-दुक्तमित्यर्थः।

## तर्कताण्डवम्

**अस्तु वा सा विशेष्यमात्रनिषेधिका। तथाऽपि घटो नास्तीतिवन्न विशेष्यमात्रनिषेधिका। श्रुतपूर्वत्वविशिष्ट-निषेधस्त्वलंकृतपूर्वश्चैत्रो नास्तीतिवत्पूर्वकालावच्छिन्न-श्रवणध्वंसरूपविशेषणनिषेधेनाप्युपपन्नः।**

**अस्तु वा सा विशेष्यमात्रनिषेधिका। तथापि व्यञ्जक उच्चारणेऽव्यञ्जकत्वभ्रान्त्याऽलिङ्गेऽनुपलब्धिमात्रे योग्या-नुपलब्धिरूपलिङ्गाभिमानाद् भ्रान्तिरूपानुमितिरेव सा। न तु प्रत्यक्षा। प्रत्यासत्त्यभावात्।**

## न्यायदीपः

अनुभवे विप्रतिपन्नं प्रत्याह ॥ **अस्तु वा सेति** ॥ श्रुतपूर्वो गकारो नास्तीति धीरित्यर्थः ॥ **न विशेष्यमात्रेति** ॥ घटस्य केवलत्वादस्य च सविशेषणत्वादिति भावः ॥ **अलमिति** ॥ पूर्वमलङ्कृतोऽलङ्कृतपूर्व इत्यर्थः ॥ **विशेषणनिषेधेनेति** ॥ ''सविशेषणे हि विधिनिषेधौ विशेष्ये बाधे विशेषणमुपसङ्क्रामत'' इति न्यायादिह च विशेष्यबाधस्य प्रागुक्तप्रत्यभिज्ञाविरोधेन व्यक्तत्वा-दिति भावः।

विशेष्यबाधे विवादिनं प्रत्याह ॥ **अस्तु वा सेति** ॥ धीरित्यर्थः ॥ **तथापीति** ॥ भ्रान्तिरूपेत्या-दिनान्वयः। भ्रान्तिरूपत्वे बीजमाह ॥ **व्यञ्जक इति** ॥ वर्णो नास्ति अनुपलब्धेः स्तम्भादिवदिति लिङ्गाभासजन्यानुमितिरेव। न प्रत्यक्षरूपा। नापि प्रमितिरूपा। परमाण्वादावनुपलम्भे सत्यपि नास्तित्वाभावेन व्यभिचारितयानुपलब्धिमात्रस्यालिङ्गत्वेन तल्लिङ्गत्वस्याभिमानिकत्वात्। अलिङ्गे

च लिङ्गत्वाभिमानो योग्यानुपलब्धित्वभ्रममूलः। सोपि भ्रमः उच्चारणस्य न वर्णाभिव्यञ्जकत्वम्। किन्तूत्पादकत्वमेवेति भ्रान्तिमूल एवेत्यर्थः।

एतेन श्रुतपूर्वो गकारो नास्तीति प्रतीतिर्निरनुमानादित्यसत्। शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वम्। आकाशस्य पक्षत्वे तद्वृत्तयानुपलभ्यमानत्वहेतोरनैकान्तिकत्वम्। शब्दसद्भावकालेपि तस्य शब्दोपलब्धिरहितत्वात् बधिरवदिति चेन्न। दृष्टान्तस्य साध्यविकलत्वात् व्याहतत्वाच्चेत्यदिखण्डनं निरस्तं ध्येयम्॥

अतीतघटादौ ज्ञानविषयत्वाभावप्रतियोगित्वादिधर्मवदनुपलभ्य मानत्वधर्मस्यापि सम्भवेनासिद्ध्यादेरनापत्तेरिति ॥ **न तु प्रत्यक्षेति** ॥ तादृशबुद्धेः प्रत्यक्षत्वेपि शुक्तिरूप्यादिप्रत्यक्षवत् प्रत्यभिज्ञारूपप्रबलप्रत्यक्षबाधाद्भ्रान्तिरेवेति सुवचम्। तथाप्युदयनोक्तप्रत्यक्षत्वोपपादनखण्डनायैवमुक्तिः।

## तर्कताण्डवम्

**नचेन्द्रियविशेषणता प्रत्यासत्तिः। चक्षुषा स्वविशेषणीभूतस्य घटनिष्ठरूपप्रतियोगिकाभावस्य ग्रहप्रसङ्गात्। त्वदभिमतस्य योग्येऽधिकरणेऽनुपलब्धिरूपस्येन्द्रियसहकारिणः असत्त्वाच्च। त्वन्मते चाधिकरणस्य गगनस्यायोग्यत्वात्।**

**नचाधिकरणस्यायोग्यत्वेपि प्रतियोगिनो योग्यत्वात् तत्सहकारिणी योग्यस्यानुपलब्धिरस्तीति वाच्यम्। पार्थिवपरमाणौ जलत्वाभावस्य प्रत्यक्षत्वप्रसङ्गात्।**

## न्यायदीपः

अस्ति हि श्रोत्रशब्दाभावयोर्विशेषणविशेष्यभाव इत्यादिनोदयनोक्तमाशङ्क्य निराह ॥ **न चेन्द्रियेति** ॥ श्रोत्ररूपेन्द्रिये शब्दाभावस्य सत्त्वेन तयोः सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वरूपविशेषणताप्रत्यासत्तिरित्यर्थः। विशेषणभावेनैव समवायाभावयोर्ग्रहणादिति भावः।

॥ **चक्षुषेति** ॥ सम्बन्धिविशेषणतयैवाभावादेरिन्द्रियेण ग्रहणम्। न तु स्वविशेषणत्वेनैव। तथात्वे घटनिष्ठं यद्रूपं तत्प्रतियोगिकाभावस्य चक्षुष्यपि सत्त्वेन चक्षुषा विशेषणतारूपप्रत्यासत्त्या

मम चक्षुषि घटरूपं नेति रूपाभावग्रहणप्रसङ्ग इत्यर्थः।

ननु प्रत्यासत्तेः फलबलकल्प्यत्वाद्रूपाभावादिना विशेषणतारूपप्रत्यासत्तिकल्पकं नेत्यतो दोषान्तरमाह ॥ **योग्य इति** ॥ यद्वा स्वसम्बन्धिविशेषणतयैवाभावादेरिन्द्रियेण ग्रहणम्। चक्षुषा च घटादिरूपाभावो रूपत्वादौ रूपं नेति गृह्यत एव। प्रकृते च श्रोत्रसम्बन्ध्याकाशविशेषणतास्त्येव शब्दाभावस्येत्यतः किं योग्ये स्वसम्बन्धिनि विशेषणतयाभावग्रहः उतायोग्ये? आद्य आह ॥ **योग्य इति** ॥ **अनुपलब्धीति** ॥ प्रत्यक्षयोग्यप्रतियोगिनोऽनुपलब्धीत्यर्थः। सिद्धान्ते साक्षिप्रत्यक्षत्वादाह ॥ **त्वन्मत इति** ॥ अन्त्योऽतिप्रसङ्गदुष्ट इति भावः। ननु नातिप्रसङ्गः। प्रतियोगिनो योग्यत्वस्यातिप्रसङ्गभञ्जकत्वादिति भावेनाशङ्क्य निराह ॥ **न चेति** ॥

यद्वा अनुपलब्धिर्हि प्रत्यक्षस्याभावग्रहे सहकारिणी। सा च नानुपलब्धिमात्रम्। अतिप्रसङ्गात्। किन्तु योग्यानुपलब्धिः। सा च योग्येऽधिकरणेऽनुपलब्धिभूतानुलब्धिरूपा वा, योग्यस्य प्रतियोगिनोऽनुपलब्धिरूपा वा, योग्यरूपानुपलब्धिभूतानुपलब्धिरूपा वा? तत्रानुपलब्धेर्योग्यत्वं च किं प्रतियोगितद्व्याप्येतरेत्यादिरूपं वा, प्रतियोगिसत्त्वविरोधित्वरूपं वा, प्रतियोगिसत्त्वापादनेत्यादिरूपं वा? पक्षपञ्चकेऽपि न वर्णाभावस्य प्रत्यक्षतासिद्धिरिति भावेनाद्यं निराह ॥ **योग्य इति** ॥ द्वितीयमाशङ्क्य निराह ॥ **न चेति** ॥

## तर्कताण्डवम्

**नच प्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भकसामग्रीरूपयोग्यताविशिष्टानुपलब्धिस्तत्सहकारिणी। एवं च जातिग्रहे व्यक्तियोग्यतया अपि कारणत्वात्परमाणोश्च अयोग्यत्वान्नोक्तदोषः। विशेषगुणग्रहे त्वाश्रययोग्यता न हेतुः। अन्यथा गन्धादिग्रहो न स्यादिति। शब्दाभावग्रह उक्तरूपानुपलब्धिरस्तीत्युदयनोक्तं युक्तम्। एकस्य संयोगिनोऽपगमे सति संयोगध्वंसस्याप्रत्यक्षतापातात्। तत्र प्रतियोगिभूतात् संयोगात्तद्व्याप्यात्सन्निकर्षाच्चातिरिक्तस्य संयोगोपलम्भकस्यैकस्य संयोगिनोऽभावात्। वर्णोपलम्भकस्योच्चारणस्य अभावेनोपलम्भकसामग्र्या असत्त्वाच्च।**

**एतेन प्रतियोगिसत्त्वविरोध्यनुपलब्धिरूपा योग्यानुपलब्धिस्तत्सहकारिणी, सा च शद्बाभावे संयोगध्वंसे चास्ति, शब्दादेः सत्त्वेऽनुपलब्ध्ययोगात्, पार्थिवपरमाणुगते जलत्वाभावे तु नास्ति, व्यक्तेरयोग्यत्वेन जलत्वानुपलब्धिसम्भवादिति मण्युक्तं निरस्तम्। उक्तप्रत्यभिज्ञया शब्दस्य सत्त्वेपि व्यञ्जकाभावेनानुपलम्भसम्भवात्।**

## न्यायदीपः

उक्तदोषनिरासाय तृतीयं पक्षं कुसुमाञ्जल्युक्तमाशङ्क्य निराह ॥ **न चेति** ॥ प्रतियोगिघटादि, यच्च घटादिव्याप्यं सन्निकर्षादि, ताभ्यामितरा घटादिलक्षणप्रतियोग्युपलम्भकसामग्री सैवानुपलब्धेर्योग्यता। तद्विशिष्टानुपलब्धिरभावप्रत्यक्षे सहकारिणीत्यर्थः। घटाभावप्रत्यक्षे तथा दर्शनादिति भावः। प्रतियोगिसत्त्वेऽनुपलब्धेरेवाभावः। तद्व्याप्ये सत्यपिप्रतियोगिनः सत्त्वनियमेनानुपलब्धिर्नेति ताभ्यामितरत्वेनोपलम्भकसामग्री विशेषिता ॥ **नोक्तदोष इति** ॥ उपलम्भकसामग्रीरूपयोग्यताभावेन पार्थिवपरमाणौ जलत्वाद्यभावप्रत्यक्षतापत्तिदोषो नेत्यर्थः। नन्वेवं शब्दाभावोपि न प्रत्यक्षः स्यात् जातिग्रह इव विशेषगुणग्रहेप्याश्रययोग्यत्वस्य तन्त्रत्वात् . . . योग्यानुलब्ध्यभावादित्यत आह ॥ **विशेषगुणेति** ॥ शब्दरूपरसगन्धादिविशेषगुणेत्यर्थः। तथा च गगनलक्षणादिकरणस्य अयोग्यत्वेप्युक्तरूपयोग्यताविशिष्टशब्दानुपलब्धेर्भावेन श्रोत्रेण गगने शब्दाभावग्रहो युक्त इति भावः। कुतोप्रत्यक्षत्वापात इत्यतः यावदुपलम्भकमेलनरूपसामग्र्यभावादिति भावेनाह ॥ **तत्रेति** ॥ एकसंयोगिनोपगमस्थल इत्यर्थः। ननु संयोगाभावान्याभावप्रत्यक्षे सहकारिणीयमनुपलब्धेः योग्यतेत्यत आह ॥ **वर्णेति** ॥

सन्निकर्षग्रन्थान्ते मण्युक्तदिशा शब्दाद्यभावप्रत्यक्षत्वानुकूलं चतुर्थपक्षभूतं योग्यत्वमनूद्य निराह ॥ **एतेनेति** ॥ प्रतियोगिसत्त्वविरोधीति बहुव्रीहिः। यस्या अनुपलब्धेः प्रतियोगिसत्त्वं विरोधि सानुपलब्धिर्योग्यानुपलब्धिः। भूतले घटाद्यनुपलब्धिस्तादृशी। परमाण्वाद्यनुपलब्धिस्तु नैवम्। तत्सत्त्वेप्यनुपलब्धिसम्भवादिति भावः ॥ **तत्सहकारिणीति** ॥ अभावप्रत्यक्षसहकारिणीत्यर्थः। अस्मिन्पक्षे उदयनपक्षोक्तं दोषद्वयं नेति व्यनक्ति ॥ **सा चेति** ॥ शद्बादेरित्यादिपदेन संयोगग्रहः। पूर्वोक्तदोषश्च नेत्याह ॥ **पार्थिवेति** ॥ **उक्तेति** ॥ एक एव गकारोऽसकृदुच्चरित इति प्रगुक्तप्रत्यभिज्ञयेत्यर्थः ॥

## तर्कताण्डवम्

**एतेनैव प्रतियोगिसत्त्वासञ्जनप्रयुक्तासञ्जनविषयभूतोपलब्धेरभावरूपा योग्यानुपलब्धिस्तत्सहकारिणी। अत एव पक्षिलभाष्ये यदि स्यात्तर्ह्युपलभ्येतेति तर्कपुरस्कारमेव अभावज्ञानं व्युत्पादितम्। नचैवं घटे मनस्त्वात्यन्ताभावो वायौ रूपवदन्योन्याभावश्च प्रत्यक्षः स्यात्; यदि घटे मनस्त्वं स्यात्तर्हि योग्यव्यक्तिवृत्तित्वात् घटत्वमिवोपलभ्येत; यदि महति वायौ रूपवत्तादात्म्यं स्यात् तर्हि पृथिव्यामिव उपलभ्येतेत्यासञ्जनसम्भवादिति वाच्यम्। उक्तयोग्यानुपलब्धेः सत्त्वेनेष्टापत्तेरिति निरस्तम्। उक्तरीत्या शब्दस्य सत्त्वेप्यनुपलम्भसम्भवेन शब्दसत्त्वासञ्जनेनोपलब्ध्यासञ्जनासम्भवात्। कथं च विपर्यये पर्यवसानसहिते तर्के नियमेन सापेक्षस्याभावज्ञानस्याननुमितित्वम्। तस्मात् परीत्यापि न वर्णध्वंस ऐन्द्रियकः। पराभिमतस्य सत्तयेन्द्रियसहकारिणोऽनुपलम्भस्याभावात्।**

## न्यायदीपः

पञ्चमं पक्षमनूद्य निराह ॥ **एतेनेति** ॥ **प्रतियोगिसत्त्वासञ्जनेति** ॥ आसञ्जनं देशविशेषे वर्तमानता। तत्प्रयुक्तासञ्जनविषयत्वं यस्या उपलब्धेः तादृशोपलब्ध्यभावो योग्यानुपलब्धिः। प्रतियोगिसत्त्वासञ्जनप्रसञ्जितप्रतियोगिकत्वमनुपलब्धेर्योग्यत्वमित्यर्थः ॥ **तत्सहकारिणी** ॥ अभावप्रत्यक्षसहकारिणी ॥ **उक्तेति** ॥ व्यञ्जकाभावेनेत्युक्तरीत्येत्यर्थः। अस्मिन्पक्षेऽनुमितित्वं स्फुटमित्याह ॥ **कथमिति** ॥ यदीह शब्दः स्यादुपलभ्येत नोपलभ्यते अतो नास्ति शब्द इति विपर्यये पर्यवसानसहिते। तर्क इति विषयसप्तमी। तादृशतर्कविषयेनियमेनापेक्षासहितस्येत्यर्थः। त्वन्मते तर्कस्यानुमानानुग्राहकमात्रत्वेनानुमितेरेव तर्कसापेक्षत्वादिति भावः ॥ **पराभिमतस्येति** ॥ प्रतयोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वादिरूपयोग्यत्वस्येत्यर्थः। अनुपलम्भस्येत्यन्वयः ॥ **सत्तयेति** ॥ स्वरूपसत्तया न तु ज्ञाततयेत्यर्थः। तथात्वे ह्यनुमानरूपतया पृथङ्भानत्वेनेन्द्रियसहकारित्वाभावादिति भावः।

## तर्कताण्डवम्

**मन्मते तु नेन्द्रियस्यानुपलब्धिः सहकारिणी। तथा हि। सहकारिण्या अनुपलब्धेः प्रत्यक्षाप्रत्यक्षसाधारणोपलब्धि-सामान्याभावरूपत्वे शङ्खे शङ्खत्वेन लिङ्गेन श्वैत्येऽनुमिते श्वेतो नेत्यभावभ्रमानुदयप्रसङ्गः।**

**नचोक्तरूपानुपलब्धिरभावप्रमाहेतुरिति वाच्यम्। गुञ्जापुञ्जे चक्षुषारोपितेन वह्नित्वेनोष्णस्पर्शानुमितौ सत्यां त्वचोष्णस्पर्शाभावप्रमानुदयप्रसङ्गात्।**

**नच प्रमात्वविशेषितोक्तरूपोपलब्धिसामान्याभावः अभावप्रमाहेतुरिति वाच्यम्। शुक्तौ रूप्यभ्रमे सत्यपि रूप्य-प्रमाभावस्य सत्त्वेन रूप्याभावप्रमाप्रसङ्गात्।**

**नचोक्तरूपानुपलब्धिः प्रत्यक्षरूपोपलब्धिविशेषा-भावरूपा, ततो नोक्तदोष इति वाच्यम्। तथापि मण्डूकवसा-ञ्जनदोषेण वंशमुरगत्वेन चक्षुषा पश्यतस्त्वचोरगत्वा-भावाप्रमितिप्रसङ्गात्।**

## न्यायदीपः

ननु भवन्मते घटाभावादिग्रहे चक्षुरादेर्यादृशोऽनुपलम्भः सहकारी तादृश एव ममापि शब्दा-भावग्रहेऽस्त्वित्यत आह ।। **मन्मते त्विति** ।। चक्षुरादिना घटादेरिव तदभावस्यापि साक्षात्संयोग-सम्बन्धेनैव ग्रहणोपपत्तौ किमनुपलब्धिसहकारेणेति भावेन सहकारिताखण्डनमारभते ।। **तथा हीति** ।।

अनुपलब्धिरिन्द्रियसहकारिणीति वदन् प्रष्टव्यः अनुपलब्धिपदेन प्रत्यक्षादिसाधारणप्रति-योगिज्ञानसामान्याभावो वा प्रन्त्यक्षादिसाधारणप्रतियोगिप्रमाभावो वा प्रत्यक्षादिसाधारणप्रतियोगि-प्रमाभावो वा प्रतियोगिप्रत्यक्षाभावो वा अभावग्राहकेन्द्रियकरणकप्रतियोगिप्रत्यक्षाभावो वा विवक्षितः। आद्येति फलीभूताभावग्रहपदेनाभावज्ञानमात्रमुताभावप्रमेति।

आद्य आह ॥ **सहकारि-ण्या इति** ॥ आद्यस्य द्वितीयमाशङ्क्य निराह ॥ **न चेति** ॥ वह्नित्वेनेत्यनन्तरं लिङ्गेनेति शेषः। द्वितीयमाशङ्क्य निराह ॥ **न च प्रमात्वेति** ॥ तृतीयमनूद्य निराह ॥ **न चोक्तरूपेति** ॥ अभावग्राहकेन्द्रियसहकारिरूपेत्यर्थः।

## तर्कताण्डवम्

**प्रत्यक्षशब्देनाभावग्रहकत्वेनाभिप्रेतेन्द्रियकारणकज्ञानविवक्षायामपि कपाले घटोस्तीति चाक्षुषसाक्षात्कारस्य विनश्यदवस्थाऽऽपन्ने घटे उत्पन्नत्वाद्घटध्वंसानन्तरं चक्षुषा घटध्वंससाक्षात्कारो न स्यात्। ध्वंससाक्षात्कारोत्पत्त्यपेक्षया पूर्वक्षणरूपे ध्वंसोत्पत्तिक्षण उक्तरूपस्य घटसाक्षात्कारस्य स्थित्या तदभावरूपहेत्वभावात्।**

**तस्माद् भावसाक्षात्कारेऽभावानुपलब्धिरिवाभावसाक्षात्कारेऽपि न भावानुपलब्धिः सहकारिणी। किं त्ववर्जनीयसन्निधिः। तदुक्तं पद्धतौ अनुपलब्धिस्त्ववर्जनीयसन्निधिरेवेति। अभावप्रत्यक्षतायां त्वधिकरणयोग्यता तन्त्रम्।**

**अन्यथा परमाणौ जलत्वाभावग्रहप्रसङ्गस्यापरिहार्यत्वात्। इतरनिरूप्येषु ज्ञानेच्छादीर्घत्वपरत्वपृथक्त्वादिषु क्लृप्तत्वाच्च। अन्योन्याभावग्रहे त्वयाऽपि स्वीकृतत्वाच्च। न तु त्वदुक्तानेकविशेषणविशिष्टानुपलब्धिस्तन्त्रम्। अक्लृप्तत्वात्। विशेषणप्रयोजनस्यातिप्रसङ्गनिरासस्य दीर्घत्वादौ क्लृप्ताधिकरणयोग्यतयैव सिद्धेश्च॥**

## न्यायदीपः

अन्त्यपक्षमनूद्य निराह ॥ **प्रत्यक्षेति** ॥ **चाक्षुषसाक्षात्कारस्येति** ॥ विनश्यदवस्थापन्नघटविषये जातस्येति भावः।

तर्ह्यभावप्रत्यक्षे किं तन्त्रमित्यतः ''तत्प्रत्यक्षतायां धर्मिण एव प्रत्यक्षतोपयुज्यते'' इति पृथगधिकरणीयसुधावाक्यं हृदिकृत्वाऽऽह ।। **अभावेति** ।। **इतरेति** ।। ससम्बन्धिकपदार्थेष्वित्यर्थः ।। **अनेकेति** ।। प्रति योगिसत्त्वासञ्जनप्रसञ्जितप्रतियोगिकत्वादिरूपानेकविशेषणविशिष्टेत्यर्थः ।

नन्वनुपलब्धिमात्रस्य ग्राहकत्वे पार्थिवपरमाण्वादौ जलत्वाद्यभावः प्रत्यक्षः स्यादित्य तिप्रसङ्ग इत्यत आह ।। **विशेषणेति** ।। दीर्घत्वेति परिमाणविशेषः । आदिपदेन पृथक्त्वादिप्रागुक्त ग्रहः ।

## तर्कताण्डवम्

**नन्वभावप्रत्यक्षत्वप्रयोजकाधिकरणयोग्यता किमिन्द्रियग्राह्यत्वमात्रं किं वा प्रतियोगिग्रहाकेन्द्रियग्रह्यत्वं यद्वा अभावग्रहकेन्द्रियग्राह्यत्वम् ।**

**आद्येऽधिकरणं प्रतियोगिसमवायि चेदाश्रयनाशजन्यो भूतलनिष्ठो घटध्वंसः प्रत्यक्षो न स्यात् । आश्रयमात्रं चेच्छब्दाधिकरणमपि योग्यमेव । वने सिंहनाद इत्यादिप्रतीत्या विशेषणतारूपप्रत्यासत्त्याधिकरणस्य वनस्यापि प्रत्यक्षत्वात् ।**

**न द्वितीयः । स्तम्भजीवनिष्ठयोः पिशाचेश्वरान्योन्याभावयोरप्रत्यक्षत्वापातात् । न तृतीयः । वायुगुडपाषाणेषु रूपतिक्तरससौरभाभावानामप्रत्यक्षत्वाप तादिति चेन्न ।।**

## न्यायदीपः

अस्तूक्तरीत्याऽभावप्रत्यक्षत्वेऽधिकरणयोग्यत्वमेव त ं तावताऽपि शब्दाद्यभ क्षता सेत्स्यतीति भावेन शङ्कते ।। **नन्विति** ।। ।। **प्रत्यक्षो न स्यादि** ।। तत्राश्रयीभूतसमवा शेन ऐन्द्रियकत्वारोपाधिकरणयोग्यताभावात् । भूतलस्य चास ायित्वादिति भावः । **पि प्रत्यक्षत्वादिति** ।। तथा च तदभावस्यापि प्रत्यक्षत्वमेवेति ः ।

।। **अप्रत्यक्षत्वेति** ।। मणौ हि सन्निकर्षग्रन्थान्ते स्तम शाचता त्म्याभाव इति

प्रतीयगिसत्त्वविरोध्यनुपलब्धिरूपयोग्यानुपलब्धिरभावप्रत्यक्षनियामिकेति प्रत्यक्षे स्तम्भादौ पिशाचान्योन्याभावप्रत्यक्षत्वमुपपादितम् तन्न स्यात्। तत्र भवदभिमत प्रतियोगिग्राहके-न्द्रियग्राह्यत्वरूपाधिकरणयोग्यताया अभावात्। प्रतियोगिनस्तत्रातीन्द्रियत्वादिति भावः ॥

॥ **वायुगुडेत्यादि** ॥ तत्र यथाक्रमं रूपतिक्तरसगन्धाभावानां चक्षूरसनघ्राणेन्द्रियग्राह्यत्वात् वाय्वादीनं च क्रमेण चक्षूरसनघ्राणाविषयत्वेन तत्राभावग्राहकेन्द्रियग्राह्यत्वाभावादिति भावः ॥

## तर्कताण्डवम्

**यन्निष्ठत्वेनाभावो ज्ञायते तस्य प्रतियोगि समवायिरूपस्य वान्यरूपस्य वाऽधिकरणस्याभावग्रहकत्वेनभिमतेन्द्रिय-ग्राह्यत्वमधिकरणयोग्यतेति स्वीकारात्।**

**एवं च कपालनाशजन्यस्य भूतलनिष्ठस्य घटध्वंसस्य स्तम्भजीवनिष्ठयोः पिशाचेश्वरान्योन्याभावयोश्च प्रत्यक्षता सिद्धा भूतलस्तम्भयोर्घटध्वंसपिशाचान्योन्याभावग्रहकचक्षु-रादिग्राह्यत्वात्। जीवस्यापीश्वराद्भेदग्राहकसाक्षिग्राह्यत्वात्।**

**अत एवोक्तमनुव्याख्याने।**

**''शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते।**
**अनुभूतिविरोधेन कथमेकत्वमुच्यते'' इति।**

## न्यायदीपः

अधिकरणपदेनाभावप्रतीत्यधिकरणमात्रमित्युपेत्य अन्त्यपक्षाङ्गीकारेण समाधिमाह ॥ **यन्निष्ठत्वेनेति** ॥ पूर्वोक्तदोषं निराह ॥ **एवं चेति** ॥ तार्किकरीत्या मानसत्वभ्रमनिरासायाह ॥ **जीवस्येति** ॥ यद्वा जीवेश्वरभेदस्य द्वासुपर्णेत्याद्यागमग्राह्यतया कथमिन्द्रियग्राह्यत्वमित्यत आह ॥ **जीवस्येति** ॥ भेदान्योन्याभावयोरेकत्वाद्भेदेत्युक्तम् ॥ **साक्षीति** ॥ स्वरूपेन्द्रियग्राह्यत्वादित्यर्थः ॥ **अत एवेति** ॥ उक्तरूपेन्द्रियग्राह्यत्वरूपाधिकरणयोग्यत्वस्याभावप्रत्यक्षे तन्त्रत्वादेव। द्वितीयाध्यायतृतीयपादे ''पृथगुपदेशात्'' इत्यत्र शास्त्रैकगम्येश्वरभेदो जीवे साक्षिप्रत्यक्षसिद्ध इत्युक्तमित्यर्थः ॥ **ईयत** ॥ साक्षिणा ज्ञायत इत्यर्थः ॥

## तर्कताण्डवम्

वनादिकं च शब्दाभावग्राहकत्वेनाभिमतश्रोत्राग्राह्यमिति न शब्दाभावस्य श्रावणता। यत्तु वाय्वादौ रूपाद्यभावानामप्रत्यक्षत्वापादनं, तन्न। तन्मते नीरूपो वायुः, गुडो न तिक्तः इति वाय्वादिविशेष्यकप्रतीतीनामिव मन्मतेपि वायौ न रूपं गुडे न तिक्ततेति वाय्वादिविशेषणकप्रत्ययानामपि लैङ्गिकत्वेनेष्टापत्तेः। तत्र विशेष्ययोग्यतारूपप्रत्यक्षत्वहेत्वभावेनेव प्रकृतेपि दीर्घत्वादौ क्लृप्ताधिकरणयोग्यतारूपतद्धेत्वभावेन योग्यानुपलब्धिरूपलिङ्गाद्यनुसन्धानकल्पनात्।

नच भट्टमत इव मन्मतेऽनुपलब्धिरप्यनुमेया। येनानुपलब्धेनाप्यनुपलब्ध्यन्तरानुमेयत्वेनानवस्था स्यात्।

नचैवं वाय्वादौ रूपाद्यभावस्यानुमेयत्वे चक्षुरादिव्यापारवैयर्थ्यम्, पक्षस्य वाय्वादेश्चक्षुराद्ययोग्यत्वात्, लिङ्गीभूताया अनुपलब्धेश्च साक्षिवेद्यत्वात्, प्रतियोगिनश्च स्मरणादिति वाच्यम्। लिङ्गीभूतानुपलब्धिविशेषणयोग्यतान्तर्गतालाकोदिग्रहार्थत्वात्।

उक्तं हि प्रमाणलक्षणे ''योग्यानुपलब्धेश्च लिङ्गत्वम्'' इति। लिङ्गत्वेनोक्ता योग्यानुपलब्धिश्च ग्राहकाभावप्रयुक्ता।

## न्यायदीपः

शब्दाधिकरणमपि योग्यमेवेति प्रागुक्तं निराह ॥ **वनादिकमिति** ॥ प्रागुक्तं दोषान्तरं च निराह ॥ **यत्त्विति** ॥ ननु वाय्वादिविशेष्यकप्रतीतावधिकरणयोग्यत्वाभावाल्लैङ्गिकत्वं युक्तमित्यत आह ॥ **तत्र विशेष्येति** ॥ **प्रकृतेपीति** ॥ वाय्वादिविशेषणकरूपाद्यभावप्रतीतावित्यर्थः। स्यादित्यनन्तरं किन्तु साक्षिप्रत्यक्षेति योज्यम्। ''अस्मत्पक्षेऽनुपलब्धेः स्वप्रकाशसाक्षिसिद्धत्वान्नानवस्थे''ति प्रमाणलक्षणटीकोक्तेरिति भावः। वैयर्थ्यमित्युक्तं व्यनक्ति ॥ **पक्षस्येत्यादिना** ॥ रूपादिलक्षण-

प्रतियोगिज्ञानार्थं च नेत्याह ॥ **प्रतियोगिनश्चेति** ॥ **अनुपलब्धिविशेषणेति** ॥ अनुपलब्धिमात्रं नाभावग्राहकम् व्यभिचारात्। किन्तु योग्यानुपलब्धिरेव। योग्यता च प्रतियोग्युपलम्भसामग्र्यादि-रूपेति भावः ॥ **योग्येति** ॥ टीकोक्तरीत्या योग्यस्यानुपलब्धिः योग्यानुपलब्धिरिति विग्रहः। संसर्गाभावग्रहे प्रतियोगियोग्यताऽपि तन्त्रमित्यग्रे व्यक्तत्वात्॥

न चैवं ''अनुपलब्धिस्त्ववर्वजनीयसीन्नधि''रिति प्रागुक्तपद्धतिवाक्यविरोधः ''अभावोनुमा प्रत्यक्षं चे'' तिप्रमाणलक्षणेऽभावद्वैविध्यस्याप्युक्त्या प्रत्यक्षेणाभावग्रहेऽनुपलब्धिरवर्जनीयसन्निधिः अन्यत्र लिङ्गत्वेनेत्यविरोधात्॥

नन्वनुपलब्धिलिङ्गतास्थळेऽनुपलब्धेरूपलम्भकसामग्र्यभावानिमित्तकतया तत्साहित्यरूप-योग्यताख्यविशेषणाभावाद्धेतोरसिद्धिरित्यत आह ॥ **लिङ्गत्वेनेति** ॥

## तर्कताण्डवम्

**नचाधिकरणयोग्यतायास्तन्त्रत्वे आत्मादौ धर्माद्याभावोऽपि प्रत्यक्षः स्यादिति शङ्क्यम्। संसर्गाभावग्रहे त्वदभिमता प्रतियोगियोग्यताऽपि तन्त्रमिति मया स्वीकृत-त्वात्। दृष्टानुसारिणी हि कल्पना।**

**ध्वनिध्वंसोपि योग्यानुपलब्धिरूपलिङ्गगम्य एव। न तु प्रत्यक्षः। अत एव।**

**''क्वचिद्धटाद्यभावोपि प्रत्यक्षेणावगम्यते।''**

**इति ब्रह्मतर्के,**

**''अभावोऽनुमा प्रत्यक्षं च परामर्शापरामर्शविशेषात्''**

**इति प्रमाणलक्षणे,**

**''प्रायेणानुमानेऽन्तर्भावज्ञापनाय क्रमोल्लङ्घनम्''**

**इति प्रमाणलक्षणटीकायां च प्रत्यक्षप्रतियोगिकाभावस्यापि क्वचिदेव प्रत्यक्षत्वमुक्तम्।**

**तस्माद्वर्णानित्यत्ववादिनस्तव रीत्याऽपि वर्णध्वंसग्रहे सहकारिणोऽभावात् प्रत्यासत्त्यभावाच्च तदनित्यत्वे न प्रत्यक्षं मानम्।**

### शब्दानित्यत्वस्य प्रत्यक्षत्वभङ्गः ॥ २३ ॥

### न्यायदीपः

कुसुमाञ्जल्याद्युक्तमाशङ्कते ॥ **न चेति** ॥ **तन्त्रत्व इति** ॥ अभावप्रत्यक्षत्व इति शेषः ॥ **प्रतियोगियोग्यताऽपीति** ॥ एतेन "अधिकरणयोग्यत्वं भेदग्रहे तन्त्र"मिति सुधोक्तिः "प्रतियोगियोग्यत्वं तन्त्र"मिति लक्षणटीकोक्तिश्चाविरुद्धोपपादिता ज्ञेयाः ॥ **अत एवेति** ॥ प्रागभावादिरूपसंसर्गाभावग्रहेऽधिकरणप्रतियोगिनोर्द्वयोरपि योग्यत्वस्यापेक्षितत्वादेवेति बाहुल्येनानुमानान्तर्भावादेवेत्यर्थः। क्वचिदेव प्रत्यक्षत्वमुक्तमित्यन्वयः। तत्त्वनिर्णयोक्तब्रह्मतर्कवाक्ये इत्यर्थः ॥ **क्रमेति** ॥ अभावोऽनुमा प्रत्यक्षं चेतिमूलवाक्ये प्रत्यक्षमनुमा चेति वक्तव्ये अनुमा प्रत्यक्षश्चेति क्रमव्यत्यासो बाहुल्येनानुमानान्तर्भावद्योतनायेति टीकार्थः ॥ **सहकार्यभावादिति** ॥ योग्यानुपलब्धिरूपसहकार्यभावादित्यर्थः ॥ **प्रत्यासत्तीति** ॥ इन्द्रियविशेषणतादेर्दूषितत्वादिति भावः। "न प्रत्यक्षम्" इति पदविभागः।

वर्णानित्यत्वस्य प्रत्यक्षत्वभङ्गः ॥ २३ ॥

## वर्णानित्यत्वेऽनुमानभङ्गः

### तर्कताण्डवम्

**ननु तर्हि योग्यानुपलब्धिरूपं लिङ्गं वर्णध्वंसादौ मानमस्त्विति चेन्न। व्यञ्जकाभावेनाप्यनुपलम्भसम्भवेन विशेषणासिद्धेः।**

**एतेन वर्णः प्रयत्नोत्पाद्यः तदनभिव्यङ्ग्यत्वे सति तदनन्तरमुपलभ्यमानत्वात् घटवत् इति निरस्तम्। विशेषणस्यापाततः सन्दिग्धासिद्धेः। विमर्शे वक्ष्यमाणरीत्या**

**निश्चितासिद्धेश्च।**

## न्यायदीपः

"व्यञ्जकभावाभावाभ्यामेवोपलम्भानुपलम्भा"विति तत्त्वनिर्णयटीकां हृदि कृत्वाऽऽह ॥ **व्यञ्जकेति** ॥ ध्वनिरूपव्यञ्जकेत्यर्थः ॥ **विशेषणेति** ॥ प्रतियोग्यनुपलम्भकसहितानुपलब्धेरेव योग्यानुपलब्धित्वाद्व्यञ्जकाभावनिबन्धनानुपलब्ध्या अभावनिश्चयेऽन्धकारावृते घटवति गेहे घटाभाव-प्रमापातादिति भावः।

मणिकृदाद्यभिमतहेतूनाशङ्क्य निराह ॥ **एतेनेति** ॥ प्रयत्नाभिव्यङ्ग्ये प्रयत्नानन्तरमुपलभ्यमाने व्यभिचारनिरासाय हेतौ तदित्यादि सत्यन्तम्। गगनादौ तन्निरासाय विशेष्यम् ॥ **आपातत इति** ॥ नित्यत्वसाधकविशेषादर्शनदशायामित्यर्थः ॥ **विमर्श इति** ॥ उत्तरभङ्गे वक्ष्यमाणदिशा प्रत्यभिज्ञाविरोधादनित्यो न भवतीति विशेषदर्शने सतीत्यर्थः।

## तर्कताण्डवम्

**एतेनैव वर्णोऽनित्यः उत्पत्तिमत्त्वे सति भावत्वात्, सामान्यवत्त्वे सति अस्मदादिबहिरिन्द्रियग्राह्यत्वात् घटवत् प्रत्यक्षविशेषगुणत्वात् घटरूपवत्, उत्कर्षापकर्षवत्त्वात् मधुरादिरसवत् बहिरिन्द्रियव्यवस्थापकगुणत्वात् घटरूप-वदित्यादिमण्युक्तानुमानं तत्र मानम्। विपक्षे च शब्दध्वंस-ग्राहकप्रत्यक्षानुपपत्तिर्बाधिकेति निरस्तम्। विपक्षे बाधक-स्यैव निरासात्।**

## न्यायदीपः

॥ **एतेनैवेति** ॥ ध्वंसे व्यभिचारनिरासाय हेतौ भावत्वादिति विशेष्योक्तिः। गगनादौ तन्निरासाय सत्यन्तम्। द्वितीयहेताविन्द्रियप्रत्यक्षत्वादित्यस्येन्द्रियकरणकज्ञानविषयत्वादित्यर्थः। क्वचिदिन्द्रियग्राह्यत्वादित्येव पाठः। तत्र प्रत्यक्षत्वमात्रस्यात्मनि व्यभिचारात् बहिरिन्द्रियेत्युक्तिः। तथापि योगिबहिरिन्द्रियप्रत्यक्षत्वमादायोक्तदोषनिरासाय ॥ **अस्मदादीति** ॥ घटत्वादौ तन्निरासाय सत्यन्तम्। तन्मात्रस्यात्मन्यपि सत्त्वाद्विशेष्यम्। तृतीये च गुणत्वमात्रस्य गगनादिपरिमाणादौ,

विशेषगुणत्वस्य जलपरमाण्वादिरूपादौ, प्रत्यक्षगुणत्वमात्रस्य चात्मैकत्वादौ, सत्त्वाद्व्यभिचार-निरासाय प्रत्यक्षगुणत्वादित्युक्तिः ॥ **उत्कर्षेति** ॥ उत्कर्षवत्त्वे सत्यपकर्षवत्त्वादित्यर्थः। एकैकस्य गगनादिपरिमाणे परमाण्वादिपरिमाणे च सत्त्वादुभयोक्तिः।

तारमन्द्रत्वादिरूपोत्कर्षादिः पक्षे, दृष्टान्ते च माधुर्यातिशयादिः, तथापि जातिरूपोत्कर्षादिरुभयत्र सम इति भावः ॥ **बहिरिन्द्रियेति** ॥ शब्दज्ञानं करणसाध्यम् कार्यत्वात् इति करणसामान्यसिद्धौ चक्षुरादे रूपादिज्ञानकरणत्वादिना शब्दज्ञानाहेतुत्वात्परिशेषाच्चक्षुरादिबाह्येन्द्रियचतुष्टयादन्य-च्छोत्रेन्द्रियं सिद्ध्यतीति श्रोत्ररूपबहिरिन्द्रियव्यवस्थापकगुणत्वादित्यर्थः। गुणत्वमात्रस्य गगनादिपरिमाणादिगुणे इन्द्रियव्यवस्थापकगुणत्वस्यात्मगतैकत्वादौ बहिरिन्द्रियव्यवस्थापकत्व-मात्रस्य रूपत्वरसत्वेन व्यभिचारनिरासाय बहिरिन्द्रियव्यवस्थापकगुणत्वादित्युक्तम्। ननु चैतद् ध्वनावप्यस्तीति चेत् किं तावता। यथोक्तसाध्यस्यापि तत्र सत्त्वात् ॥ **तत्रेति** ॥ वर्णानित्यत्व इत्यर्थः। एतेनेत्युक्तं व्यनक्ति ॥ **विपक्ष इति** ॥

## तर्कताण्डवम्

**आद्ये हेतावुत्पत्तिमत्त्वस्य द्वितीये प्राभाकरं प्रति सामान्यवत्त्वस्य नैयायिकं प्रत्यपि क्षणिके शब्दे विषयजन्येन्द्रियकरणकज्ञानविषयत्वस्य तृतीयपञ्चमयोर्मां प्रति गुणत्वस्य चतुर्थे उत्कर्षवत्त्वे सत्यपकर्षवत्त्वस्य मन्द्रतमे तारतमे चासिद्धेश्च। शब्दत्वरसत्वादिना साङ्कर्यप्रसङ्गेन शब्दे रसे चैकस्या उत्कर्षादिरूपाया जातेरभावेनासिद्धिसाधन-वैकल्यान्यतरापाताच्च।**

## न्यायदीपः

प्रातिस्विकदोषं चाह ॥ **आद्य इत्यादिना** ॥ षष्ठ्यन्तानामसिद्धेश्चेत्यनेनान्वयः। उत्पन्नो गकार इति मण्युक्तप्रतीतिस्तु नास्त्येवेति भावः ॥ **प्राभाकरं प्रतीति** ॥ तस्यापि वर्णनित्यत्ववादित्वेन तं प्रत्यपि प्रयोज्यत्वात्। नित्यत्ववादे गकारादिव्यक्तेरेकत्वेन तत्र सामान्याभावात्। गुणत्वपक्षेपि तेन गुणगतजातेरनङ्गीकारादिति भावः। तं प्रति हेत्वन्तरं भविष्यतीत्यत आह ॥ **नैयायिकं प्रतीति** ॥ तन्मते कदम्बमुकलादिन्यायेन भेरीताडनोच्चारणातिदेशाच्छ्रोत्रदेशपर्यन्तं सजातीयशब्दपरम्परोत्पत्तेः।

अन्त्योपान्त्यशब्दयोः सुन्दोपसुन्दन्यायेनान्योन्यनाशस्य च स्वीकारात्। सर्वशब्दानामिवान्त्यस्यापि त्रिक्षणवत्त्वोपगमेनान्त्यशब्दस्थितिक्षणस्यैवोपान्त्यशब्दस्य विनाशक्षणत्वादन्त्यस्य तृतीयक्षणे पूर्वशब्दस्य ध्वंसेनान्त्यस्य विनाशकाभावेन नित्यतापत्तेः। क्षणिकत्वे चोपान्त्यशब्दविनाशक्षणस्यैव अन्त्यशब्दविनाशक्षणत्वेन नित्यत्वापत्तिदोषाभावात्क्षणिकत्वं स्वीकृतम्। अतस्तस्मिन्ज्ञानात् पूर्ववृत्तित्वस्याभावेन ज्ञानजनकेन्द्रियसन्निकर्षायोगात् विषयजन्यं इन्द्रियकरणकं यज्ज्ञानं तद्विषयत्वस्यासिद्धेरित्यर्थः॥

॥ **माम्प्रतीति** ॥ मन्मते वर्णस्य द्रव्यत्वादिति भावः ॥ **शब्दत्वेति** ॥ तारत्वस्य शब्दत्वपरिहारेण रसे, शब्दत्वस्यापि तारत्वपरिहारेण मन्दशब्दे, तारशब्दे च तारत्वशब्दत्वयोः उभयोरपि समावेशेन

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥"

इति कारिकोक्तसाङ्कर्यरूपजातिबाधकेन तारत्वादेर्जातित्वायोगात्। एवं रसत्वादिनापि साङ्कर्यं ध्येयम्।

न तर्हि शब्दत्वस्यैव जातित्वं त्यज्यतामिति वाच्यम्। तस्यानुगतप्रतीत्यादिना जातित्वस्य परमते सिद्धत्वादिति भावः।

## तर्कताण्डवम्

**न चोत्कर्षस्य गुणत्वव्याप्यजात्या सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वेन, अपकर्षस्य चोक्तजात्या सजातीयप्रतिबध्यसाक्षात्कारविषयतावच्छेदकत्वेनानुगम इति वाच्यम्। उक्तरूपस्योत्कर्षस्यापकर्षस्य वा परिमाणे अभावेनैकस्य हेतुत्वेऽपि परममहत्परिमाणाणुपरिमाणयोः व्यभिचाराभावेनोभयग्रहणवैयर्थ्यात्। उत्कर्षापकर्षयोः प्रत्येकं हेतुत्वे च यथोक्तमन्द्रतमतारतमयोः भागासिद्ध्यपरिहारात्। उक्तहेतुपञ्चकेपि श्रोत्रावृत्तित्वस्योपाधित्वाच्च। विपक्षाच्छ्रोत्रवृत्तिपरिमाणतो व्यावृत्तत्वान्न पक्षेतरता।**

**वर्णानित्यत्वेऽनुमानभङ्गः ॥ २४॥**

## न्यायदीपः

।। **सजातीयेति** ।। पक्षे शब्दान्तरं दृष्टान्ते रसान्तरं ध्येयम्। तारशब्दश्रवणे शब्दान्तरस्य अनुपलम्भात्।यद्यपि मणौ सजातीयेत्याद्येवोक्तम्। तथापि सुखादिसाक्षात्कारप्रतिबन्धकत्वात् तद्व्यावृत्तये तदीयटीकोक्तस्यानुवादो ।। **गुणत्वव्याप्यजात्येति** ।। प्रतिबन्धकत्वमात्रे तूक्ते फलोपधानप्राप्तौ बुभुत्सावशान्मन्देपि शब्दे गृह्यमाणे तारशब्दस्याप्रतिबन्धकतया तत्साधारणानुगत-धीसिद्ध्यर्थं तदवच्छेदकत्वेनेत्युक्तम्। तथा च तत्र बुभुत्सोत्तेजिकेति भावः ।। **उक्तेति** ।। गुणत्व-व्याप्यजात्येत्यर्थः। तारशब्दश्रवणे सत्यपकृष्टशब्दानुपलम्भादिति भावः।

किञ्चायं विशिष्ट एको हेतुरुत प्रत्येकं हेतुः? आद्ये गगनपरिमाणेऽणुपरिमाणे चाव्यभिचाराय हि विशेष्यं विशेषणं चेति वाच्यम्। न च तत्र व्यभिचारप्रसक्तिरस्ति। स्वस्य साक्षात्काराभावात्। सजातीयसाक्षात्कारप्रतिबन्धकत्वाभावाच्चेति भावेनाह ।। **उक्तरूपस्येति** ।। परिमाणे गगनादि-परिमाणे ।। **अभावेनेति** ।। तत्र साक्षात्काराप्रसक्तेरिति भावः।

अन्त्ये दोषमाह ।। **उत्कर्षेति** ।। **श्रोत्रावृत्तित्वस्येति** ।। तस्य घटादौ रूपरसादौ च साध्यव्यापकत्वात्साधनवति पक्षे शब्देऽभावेन साधनाव्यापकत्वात्। यदिन्द्रियं यद्गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति न्यायेन शब्दस्य श्रोत्रवृत्तित्वादिति भावः। न च श्रोत्रमशकसंयोगादौ साध्याव्यापकत्वम्। श्रोत्रेतरावृत्तित्वे सति श्रोत्रवृत्तित्वाभावस्य अभिमतत्वात्। न च सिद्धान्तेऽथापि दोषः। पररीत्या परस्य दोषोक्तेरिति भावः।। पक्षमात्रव्यावर्तकश्रोत्राख्यविशेषणवत्त्वात् पर्वतेतरत्वा-देरिव नोपाधित्वमस्येत्याशङ्क्याह।। **विपक्षादिति** ।। श्रोत्रस्याकाशात्मकत्वे तत्परिमाणस्याजन्य-त्वादिति भावः। एतच्चोपलक्षणम्। बाधादिस्थले पक्षेतरत्वस्याप्युपाधित्वस्वीकारात्। प्रकृते विपक्षे बाधकाभावस्येह प्राग्व्यक्तत्वेन हेतूनामप्रयोजकत्वस्य वक्ष्यमाणदिशा बाधस्य च निर्णयेन पक्षेतरत्वस्याप्युपाधित्वे दोषो नेत्यपि ध्येयम्।

वर्णानित्यत्वेनुमानभङ्गः ।। २४।।

# वर्णानित्यत्वे प्रत्यभिज्ञाविरोधः

## तर्कताण्डवम्

**किञ्च स एवायं गकार इति प्रत्यभिज्ञाबाधः। नच तानेव**

**शालीनुपभुञ्जमह इत्यादिवत्सोयं गकार इति व्यपदेशो गौण इति वाच्यम्। प्रत्यभिज्ञाबाध उक्ते व्यपदेशगौणत्वशङ्काया व्यधिकरणत्वात्। प्रत्यभिज्ञायाश्चस्थायिपदार्थान्तर इवात्राप्यनुभवसिद्धत्वात्। ते शालय इमे शालयो न भवन्तीतिवत् स गकारोऽयं गकारो न भवतीति भेदप्रत्ययाभावाच्च।**

## न्यायदीपः

"तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात्। न च सादृश्यात्प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम्। सोयं देवदत्त इत्यादेरपि तथात्वप्राप्तेः" इति तत्त्वनिर्णयतट्टीकयोरुक्तं व्यक्तीकुर्वन् उक्तहेतूनां बाधितविषयत्वं चाह ॥ **किञ्चेति** ॥ यद्यपि प्रत्यभिज्ञा न वर्णनित्यत्वं विषयीकरोति। तथापि पूर्वं गकारं श्रुतवतः पुनस्तच्छ्रवणे स एवायं गकार इति जायमाना प्रत्यभिज्ञा प्राक्तनस्येदानीन्तनेनैक्यं गोचरयन्ती तावत्कालस्थिरत्वमवगाहत इति- "तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति।" इति न्यायेन पराभिमताशुतरविनाशस्य व्यतिरेकान्नित्यत्व एव पर्यवस्यतीति मण्युक्तदिशा वा टीकोक्तदिशा पूर्वं पूर्वतरं पूर्वतममप्येवमित्यनादिनित्यतैव सिद्ध्यतीति भावेन प्रत्यभिज्ञाबाध इत्युक्तम्॥

अत्र चत्वारः पक्षाः सम्भवन्ति। ज्ञानमेवेदं नेति वा, ज्ञानत्वेप्यभिज्ञैव न प्रत्यभिज्ञेति वा, प्रत्यभिज्ञात्वेपि जात्यभेदविषयेति वा, व्यक्त्यभेदविषयत्वेपि भ्रान्तिरिति वा। तत्राद्यं कुसुमाञ्जल्याद्युक्तमाशङ्क्य निराह ॥ **न चेति** ॥ शालीन् सूक्ष्मव्रीहिविशेषान्। ज्ञानमेवेदं नेत्युच्यत इत्यत आह ॥ **प्रत्यभिज्ञाया इति** ॥ **स्थायीति** ॥ सोयं देवदत्त इत्यादाविव स एवायं गकार इति प्रत्यभिजानामीत्यनुभवसिद्धत्वादित्यर्थः। तत्राप्येवमनुभवोऽस्तीत्यतस्तत्र विपरीतदर्शनान्न प्रत्यभिज्ञानुभवस्य भावोस्ति। अस्ति चेदपि भ्रम एव। प्रकृते तु न तथेति भावेनाह ॥ **ते शालय इति** ॥

## तर्कताण्डवम्

**नचेयं प्रत्यभिज्ञा पुरोवर्तिनि गकारे गत्वेनोपस्थित-गकाराभेदविषया, सा च पुरोवृत्तिगकारस्य स्वाभेदेनाप्युप-**

**पन्ना, न तु तत्कालाद्यवच्छेदेनोपस्थितगकाराभेदविषयेति वाच्यम्। प्रत्यभिज्ञान्तरवत् सोयमिति तत्तेदन्ताधिकरणाभेदप्रतीतेः।**

**नन्वियं गत्वादिजात्यभेदविषया। नच तथात्वे तज्जातीयोयमित्याकारः स्यादिति वाच्यम्। जात्यभेदादधिकस्य जातिगतस्य जातित्वस्य प्रतीतावेव च जातित्वस्य अप्रतीतेरिति चेन्न। तारत्वादिना सांकर्यस्य वक्ष्यमाणत्वेन गत्वादिजातेरेवाभावात्। स एवायं घट इत्यादेरपि तथात्वापातेन व्यक्त्यभेदस्य क्वाप्यसिद्ध्यापत्तेश्च। क्वापि प्रत्यभिज्ञाया भ्रान्तित्वाभावापत्तेश्च। घटान्तराद्गृहीतभेदेपि घटे स एवायं घट इति प्रत्यभिज्ञाप्रसङ्गाच्च॥**

**किञ्च प्रत्यभिज्ञाजनके स एवायं गकार इति वाक्ये स इत्यस्य जातिपरत्वेऽयमित्यस्य च व्यक्तिपरत्वे जत्या सह व्यक्तेरेवाभेदः प्रतीयेत न तु जात्या सह जातेः। तथा च निरसिष्यमाणभ्रान्तित्वपक्ष एवान्तर्भावः स्यात्॥**

## न्यायदीपः

द्वितीयं पक्षमाशङ्क्य निराह ॥ **न चेयमिति** ॥ **प्रत्यभिज्ञेति** ॥ तव प्रत्यभिज्ञात्वेनाभिमतेत्यर्थः ॥ **उपपन्नेति** ॥ तथा चाभिज्ञैव जाता न तु प्रत्यभिज्ञेति भावः ॥ **तत्कालेति** ॥ अतीतकालेत्यर्थः।

तृतीयं पक्षमाशङ्कते ॥ **नन्विति** ॥ तथा सति तज्जातीयोयमिति स्यादिति मणिग्रन्थोक्तं निराह ॥ **न च तथात्व इति** ॥ तज्जातीयोयमित्यस्य तन्निष्ठजातिमानयमिति ह्यर्थः। स चाकारो जातित्वभान एव युक्तो नान्यथेति भावः। सामान्यनित्यतायाः प्रमाणविरुद्धत्वादिति स्वमतावष्टम्भेन वास्तवमुपेत्य टीकायां परिहारोक्तावपि पररीतिमनुसृत्य स्वयं परिहारमाह ॥ **तारत्वादिनेति** ॥ **क्वापीति** ॥ सोऽयं देवदत्त इत्यादावपि जातिविषयत्वस्य वक्तुं शक्यत्वादिति भावः ॥ **घटान्तरादिति** ॥ तत्राप्यनुगतजातेः सत्त्वादिति भावः। जात्यभिप्रायेण तादृशप्रत्यभिज्ञापादनमिष्टमिति मन्वानं प्रत्याह ॥ **किञ्चेति** ॥ शाब्दप्रत्यभिज्ञायां या विषयव्यवस्था सैव प्रत्यक्षप्रत्यभिज्ञायामपि भविष्यति। तथा

च तत्र सोयमिति तदिदंशब्दाभ्यां किं जातिव्यक्त्योरुक्तिरथ जातेरेव उत व्क्तेरेवेति वाच्यम्। पक्षान्तरासम्भवात्। आद्येपि व्यक्तेर्जात्यभेदोपि किं साक्षादथ परम्पराया वा। तत्राद्यं निराह ।। **प्रत्यभिज्ञाजनक इति** ।। **भ्रान्तित्वपक्ष एवेति** ।। तथा च तन्निरासेनायं पक्षो निरस्तो भविष्यतीति भावः।

## तर्कताण्डवम्

**नच जात्यभेदोपि व्यक्तौ परम्परासम्बन्धेनास्तीति न भ्रान्तित्वमिति वाच्यम्। क्वापि व्यक्त्यभेदासिद्ध्यादि-पूर्वोक्तदोषात्।**

**उभयोरपि जातिपरत्वे च व्यक्तिवाचकगकारसामाना-धिकरण्युक्तम्। उभयोरपि व्यक्तिपरत्वे तु शब्दजन्यप्रत्यभिज्ञा व्यक्त्यभेदविषयेति प्रत्यक्षप्रत्यभिज्ञापि तद्विषयैव। तयोः करणकृताभ्यां परोक्षत्वापरोक्षत्वाभ्यां भेदेपि विषयकृतभेदा-ननुभवात्।**

**नचेयं सोयं कुन्तलकलाप इत्यादिवद् भ्रान्तिः। बाधकाभावात्। नच भेदधीर्बाधिका। स गकारोयं गकारो न भवतीति विशेष्ये भेदबुद्धेरभावात्।**

**तारो गकारो मन्द्रो न भवतीति धीस्तु विशेष्याभेदज्ञानेन पाकरक्ते घटे न श्याम इतिवत्, मुण्डिते चैत्रे न शिखीतिवच्च विशिष्टभेदविषयैव। न विशेष्यभेदविषया।।**

## न्यायदीपः

अन्त्यमाशङ्क्य निराह ।। **न चेति** ।। जातेर्जात्यभेदः साक्षात् तत्समवायसम्बन्धेन व्यक्ताविति परम्परयेति भावः। द्वितीयं निराह ।। **उभयोरपि जातीति** ।। तृतीयं निराह ।। **उभयोरपि व्यक्तीति** ।।

नन्व स्त्वे वं प्रत्यभिज्ञा गकारव्यक्त्यैक्यविषया। तथापि सा भ्रान्तिरस्तु। परिलूनपुनर्जात-

कुन्तलकलापयोः सादृश्यान्निमित्तात्सोयं कुन्तलकलाप इति प्रत्यभिज्ञावदिति चतुर्थं पक्षमाशङ्कते **।। न चेति ।।** तत्र परिलूनकुन्तलसमूहस्य भूमौ पतितस्य दर्शनेन नायमसाविति बाधकज्ञानोदयवदिह तदभावादित्याह **।। बाधकेति ।।**

ननु बाधकदर्शनाद्बाधकाभावादित्यसिद्धमिति चेत्तत्किं भेदज्ञानमुतोत्पत्तिविनाशज्ञानमथ विरुद्धधर्मवत्त्वज्ञानम्, यद्वा गत्वादिव्याप्यजातिविशेषानुभवरूपज्ञानं बाधकम्। आद्यमाशङ्क्य प्रत्याह **।। न चेति ।।** न बाधिकेत्यतः सा किं विशेष्यभेदविषयाथ तारत्वादिविशिष्टभेदविषयेति विकल्प्याद्यं निराह **।। स इति ।।** द्वितीये त्विष्टापत्तिरिति भावेनाह **।। तार इति ।।** विशिष्टभेदधीर्बाधान्न विशेष्यभेदविषयिणीति भावेनोक्तम् **।। विशेष्याभेदज्ञानेनेति ।।** हेतुनेति शेषः ।।

### तर्कताण्डवम्

**इयांस्तु भेदः; तद्विशिष्टं मम पदार्थान्तरम्, तव तु विशेषणोपरक्तं विशेष्यमेव वा विशेषणविशेष्यसम्बन्ध एव वेति। उभयथापि न विशेष्याभेदहानिः।**

**नापि तारो नष्टो मन्द्र उत्पन्न इत्युत्पत्त्यादिधीर्बाधिका। पाकरक्ते श्यामो नष्ट इत्यादिवन्मन्मते विशिष्टनाशविषयत्वेन त्वन्मते तु विशेषणनाशविषयत्वेन मतद्वयेपि विशेष्यनाशाविषयत्वात्।**

**नापि तारत्वादिविरुद्धधर्मसंसर्गधीर्बाधिका। यो गकारो मन्द्रः स एव तार इति सामानाधिकरण्यानुभवेनैकस्मिन्नेव चैत्रे शिखित्वमुण्डित्ववद्घटे श्यामत्वरक्तत्ववत्, गगने शब्दतदभाववत् आत्मन्यदृष्टतदभाववच्च कालादिभेदेनाविरोधात्।**

### न्यायदीपः

ननु, विशिष्टं न विशेष्यादितोऽतिरिक्तमिति मते अस्तु विशेष्यभेदविषयेत्यत आह **।। इयांस्तु भेद इति ।।** उपरक्त- विशेष्यमेव न तु केवलमित्यर्थः। तथा च त्वन्मते स्वर्गी ध्वस्त इत्यादाविवेहापि विशेषणभेदविषयैव स्यादिति भावः। द्वितीयं बाधकं निराह **।। नापि तार इति ।।**

तृतीयं निराह ॥ **नापि तारत्वेति** ॥ स किं तारत्वादिरौपाधिको धर्मः? उत जातिरूपः? आद्य आह ॥ **यो गकार इति** ॥ **कालादिभेदेनेति** ॥ "एकस्यैव वर्णस्य कालभेदेनोच्चारयितृपुरुषभेदेन नासिकादिस्थानभेदेन विरुद्धधर्माध्यासोपपत्तेरिति" तत्त्वनिर्णयटीकोक्तेरिति भावः।

### तर्कताण्डवम्

**नचैकदैव चैत्रमैत्रोच्चारितयोर्गकारयोस्तारत्वमन्द्रत्वे दृश्येते इति वाच्यम्। एकदैव गगने विहगदेहसंयोगतदभाववत् आत्मनि सुखदुःखादिवच्च प्रदेशभेदेनाविरोधात्। स च प्रदेशभेदो मम स्वाभाविकः तव त्वौपाधिक इत्यन्यदेवैतत्।**

**नच तारत्वादीनां जातित्वान्न कालादिभेदेनाविरोध इति वाच्यम्। त्वन्मते गत्वादिना सङ्करात्सावधिकत्वाच्च। न हि जातिः सावधिका। तारेप्यन्यापेक्षया मन्द्रत्वस्य मन्द्रेप्यन्यापेक्षया तारत्वस्य सत्त्वेन तुल्यव्यक्तिकत्वाच्च। तारतमत्वादेरपि पाचकतमत्वादिवदतिशयविशिष्टौपाधिकधर्मत्वात्॥**

**नच गत्वादिव्याप्यतारत्वादीनां नानात्वादसङ्करः। सर्वत्राप्येवं सङ्करस्य सुपरिहरत्वेन तस्यादोषत्वापातात्।**

### न्यायदीपः

द्वितीयमाशङ्क्य निराह ॥ **न च तारत्वादीनामिति** ॥ गत्वपरिहारेण तारत्वस्य वर्णान्तरे तारत्वपरिहारेण गत्वस्य मन्दगकारे, तारगकारे च गत्वतारत्वे द्वे अपि स्त इति न जातित्वं तारत्वस्य। एवं मन्दत्वादेरपीति भावः ॥ **सावधिकत्वाच्चेति** ॥ तारत्वस्य मन्दापेक्षत्वान्मन्दत्वस्य तारापेक्षत्वादिति भावः ॥ **तुल्येति** ॥ यावन्तस्तारगकारास्तावन्तो मन्दाश्च भवन्तीति गत्वतारत्वमन्दत्वानां घटत्वकरीरत्वकलशत्वानामिव न जातित्वम्। किं तु गत्वादिरेव जातिः। न तु तारत्वादिरिति भावः।

ननु तारत्वादेरजातित्वे तारतमत्वादेरपि तथात्वं स्यादित्यतः स्यादेवेत्याह ॥ **तारेति** ॥ अतुल्यव्यक्तिकत्वात्तारतमत्वं जातिः स्यादित्यतो वाह ॥ **तारेति** ॥ **तस्येति** ॥ सङ्करस्य जातिबाधकत्वानापत्तेरित्यर्थः ॥

## तर्कताण्डवम्

अत एव स्वर्णत्वादिव्याप्यघटत्वादिकमपि नाना। घटत्वस्यावयवसंयोगविशेषरूपसंस्थानविशेषमानाधिकरण-द्रव्यत्वरूपौपाधिकधर्मत्वादिसम्भवात्। तारत्वादेर्नानात्वे ताराकारानुगतप्रत्ययानुपपत्तेश्च।

नच भिन्नानामपि जातीनां तारशब्दप्रवृत्तिनिमित्तत्वेन अनुगमादेकाकारप्रत्ययः। अगृहीतसमयस्य बालस्यापि ताराकारानुगतप्रत्ययात्।

नच सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदक-जातीत्वेनानुगमः। आवश्यकेनोक्तप्रतिबन्धकत्वेनैव शब्द-प्रवृत्तिव्यवहारयोरूपपत्तौ जातिकल्पनावैयर्थ्यात्।

नच यदा मन्द्रे बुभुत्सा तदा मन्द्रग्रहरूपकार्यदर्शनेन प्रतिबन्धकत्वाभावात्तारव्यवहारो न स्यात्। प्रतिबन्धकता-वच्छेदकविवक्षायां तु जातिसिद्धिः, जातितोऽन्यस्य अवच्छेदकस्याभावादिति वाच्यम्। त्वन्मतेपि प्रतिबन्ध-कतावच्छेदकावाच्छिन्ने सति मन्द्रग्रहरूपकार्यायोगात्।

## न्यायदीपः

नन्वेवं नानात्वेन साङ्कर्यस्यापरिहार्यत्वे स्वर्णघटे घटत्वं जातिर्न स्यात्। नानात्वेनैव तत्र जातिसाङ्कर्यस्य परिहार्यत्वादित्यत आह ॥ **अत एवेति** ॥ तत्र घटत्वं जातिरेव नेत्याह ॥ **घटत्वस्येति** ॥ **ताराकारेति** ॥ अयं तारोऽयं तारोऽयं तारोऽयमपि तार इत्येवं ताराकारेत्यर्थः ॥ **अगृहीतेति** ॥ तारशब्दनिमित्तत्वमजानतोप्ययं तार इत्यनुगताकारप्रत्यय दर्शनादित्यर्थः ॥ ॥ **सजातीयेति** ॥ गुणत्वव्याप्यजात्या सजातीयेत्यर्थः। पूर्ववत्पदकृत्यं बोध्यम् ॥ **उक्तेति** ॥ सजातीयसाक्षात्कारप्रतिबन्धकत्वेनेत्यर्थः ॥ **शब्देति** ॥ तारशब्देत्यर्थः।

उक्तविवक्षायां बाधकमाशङ्क्य निराह ॥ **न चेति** ॥ तारशब्दश्रवणदशायामेव बुभुत्सावशात्

मन्दशब्दग्रहेण गुणत्वव्याप्यजात्या सजातीयशब्दग्रहाप्रतिबन्धाच्छ्रूयमाणे तारशब्दे तारशब्दव्यवहारो न स्यादित्यर्थः ॥

## तर्कताण्डवम्

**यदि च बुभुत्सोत्तेजिका तर्हि मन्मतेप्युत्तेजकस्य सत्त्वेन कार्यसम्भवेपि प्रतिबन्धकस्य सत्त्वात्तारव्यवहारो युक्तः। तस्मात्प्रत्यभिज्ञायास्तारत्वादिविरुद्धधर्मसंसर्गो न बाधकः।**

**नापि शुकशारिकामनुष्यतद्विशेषरूपवक्तृविशेषानुमापकगत्वादिव्याप्य-जातिविशेषानुभवो बाधकः। वर्णाश्रवणेपि तत्तद्ध्वनिविशेषेणैव तत्तदनुमानदर्शनेन वर्णश्रवणेऽप्यावश्यकेन ध्वनिविशेषेणैव तदनुमानात्। अन्यथा यो गकारः शुकेनोच्चारितः स एव मनुष्येणापीत्यादिप्रत्यभिज्ञा न स्यात्। अत एवानुव्यवसायो ''ध्वनिविशेषेणैव दूरस्थः पुत्रो मयानुमित'' इति॥**

**नचैवं सति सैवेयं घर्घरी स एवायं ध्वनिरित्यादिप्रत्यभिज्ञया ध्वनिरपि नित्यः स्यादिति मण्युक्तं युक्तम्। ध्वनिवर्णयोर्द्वयोरपि नित्यत्वे द्वयोरपि सदोपलब्धिप्रसङ्गात्। उच्चारणवैयर्थ्याच्च॥**

## न्यायदीपः

**॥ मन्मतेपीति ॥** तारत्वं न जातिः। तेषामनेकत्वेपि सजातीयसाक्षात्कारप्रतिबन्धकत्वेनानुगम इति वादिमतेऽपि बुभुत्सारूपोत्तेजकवशेन मन्दग्रहसम्भवेपि तारव्यवहारः स्यादेव। न ह्युत्तेजकं तत्प्रतिबन्धाभावो मण्यादेः प्रतिबन्धकत्वमेव नेत्यस्य कल्पको भवति। तथात्वेऽतिप्रसङ्गादिति भावः। व्यवहितत्वात्तृतीयपक्षदोषमुक्तमुपसंहरति **॥ तस्मादिति ॥** तारत्वादेरविरोधादिति भावः।

चतुर्थं पक्षं निराह **॥ नापि शुकेति ॥ बाधक इति ॥** स एवायं गकार इति प्रत्यभिज्ञाया इत्यर्थः। गकारव्यक्तेरेकत्वे गत्वस्याजातित्वेन तद्व्याप्यजातेरयोगादिति भावः। गकारादिव्यञ्जक-

ध्वनिविशेषणैव वक्तृविशेषानुमानम्। न तु त्वदुक्तजातिविशेषेण। येन प्रत्यभिज्ञा भ्रान्तिर्भवेदित्याह ।। **वर्णाश्रवण इति** ।।

।। **एवं सतीति** ।। स एवायं गकार इत्यादिप्रत्यभिज्ञाया अभ्रान्तित्व इत्यर्थः ।। **मण्युक्तमिति** ।। शङ्वानित्यत्ववादे सिद्धान्ते मण्युक्तमित्यर्थः। प्रत्यभिज्ञाद्वयस्याभ्रान्तित्वायोगादन्यतरभ्रान्तित्वे अवश्यम्भाविनि ध्वन्यंश एव तद्युक्तमिति सयुक्तिमाह ।। **ध्वनिवर्णयोरिति** ।।

## तर्कताण्डवम्

**नचोच्चारणस्य व्यञ्जकत्वान्नोक्तदोष इति वाच्यम्। भिन्नदेशत्वात्। उच्चारणं हि वक्तृवक्त्रे। शब्दस्तु श्रोतृश्रोत्रे। भिन्नेन्द्रियग्राह्यत्वाच्च। अत एव नोच्चारणजन्यो वायुः व्यञ्जकः। अत एवातीन्द्रियस्य व्यञ्जकान्तरस्य कल्पनाप्युक्ता। घटादावपि तत्कल्पनाप्रसङ्गात्।।**

**तस्माद्द्वयोरेको नित्यः अन्यस्तु व्यञ्जक इति वक्तव्ये न तावद्ध्वनिरेव नित्यो वर्णस्तु व्यञ्जक इति युक्तम्। भेर्यादौ वर्णाभावेपि ध्वनिग्रहात्। तस्मात्परिशेषाद्वर्ण एव नित्यो ध्वनिस्तु व्यञ्जक इति युक्तम्। ध्वन्यभावे वर्णाग्रहात्।।**

## न्यायदीपः

भिन्नदेशत्वं व्यनक्ति ।। **उच्चारणं हीति** ।। ध्वनिवर्णयोर्नित्यत्वे विभुद्रव्यतया सर्वगतयोर्निरवयवयोर्वक्त्रनिष्ठेनाप्युच्चारणेनाभिव्यक्तयोः श्रोत्रेण ग्रहणमविरुद्धम्। तथाप्यन्वयव्यतिरेकाभ्यां शब्दस्थळे श्रोत्रसम्बद्धेनैव व्यञ्जकेनाभिव्यक्तस्य श्रोत्रेण ग्रहणम्। अन्यथैकवक्तृनिष्ठोच्चारणाभिव्यक्तशब्दस्य सर्वैरपि ग्रहणप्रसङ्गादिति भावः ।। **भिन्नेन्द्रियेति** ।। उच्चारणस्य चाक्षुषत्वाच्छब्दस्य श्रावणत्वादिति भावः ।।

यद्यपि गोघृतादेः कुङ्कुमगन्धादेश्च भिन्नेन्द्रियग्राह्यत्वेपि अस्ति व्यञ्जकव्यङ्ग्यभावः। तथाप्यन्वयव्यतिरेकाभ्यां शब्दस्थले एकेन्द्रियग्राह्ययोरेव तथात्वावगतेरिति भावः। घृतादावपि प्रतिनियतव्यञ्जकवङ्ग्यवादे वक्ष्यमाणदिशा घृतादिगतगन्धादिरेवाभिव्यञ्जक इति भावः। अन्ये

त्वेकेन्द्रियग्राह्यत्वं वा एकेन्द्रियग्राह्यगुणकत्वं वा व्यञ्जकत्वे तन्त्रमित्याहुः ॥

॥ **अत एवेति** ॥ वायोरतीन्द्रियत्वेन श्रोत्रेन्द्रियाग्राह्यत्वादिति भावः ॥ **अत एवेति** ॥ तद्ग्राहकेन्द्रियग्राह्यस्यैव तद्व्यञ्जकत्वादित्यर्थः ।

## तर्कताण्डवम्

**तदेवमुपपत्तिविरोधादापणे ध्वनिरुत्पन्नः स च शान्त इति ध्वनित्वेनैवोत्पत्त्याद्यनुभवविरोधाद्वर्णप्रत्यभिज्ञाया ''यावद्ब्रह्म विष्ठितं तावती वागि''त्यादिश्रुत्यनुगृहीतत्वाच्च सैवेयं घर्घरीत्यादेरेव भ्रान्तित्वादिकं युक्तम् ।**

**तदेवमुक्तरीत्या बाधकाभावेपि वर्णे सोयमिति व्यपदेश एव न तु प्रतीतिरिरिति तदपलापे वा, तदनपलापेपि तस्याः पुरोवृत्तिगकारे गत्वेनोपस्थितगकाराभेदविषयत्वेनाभिज्ञात्वे वा, प्रत्यभिज्ञात्वेपि साक्षात्परम्परया जात्यभेदविषयत्वे वा, व्यक्त्यभेदविषयत्वेपि तस्याः भ्रान्तित्वे वा, तत्तद्वादिभिः तत्तद्वस्तुनः स्थायित्वेन प्रमाणत्वेनाङ्गीकृताया अपि स एवायमित्यादिप्रत्यभिज्ञाया अपलापादिप्रसङ्गेन कस्यापि स्थायित्वं न सिद्ध्येदिति क्षणिकवादः स्यात् । न हि स्थायित्वे प्रत्यभिज्ञातोऽन्यत्प्रमाणमस्ति ॥**

## न्यायदीपः

॥ **तदेवमिति** ॥ तस्मादेवं ध्वनिवर्णयोरित्यादिनोक्तरीत्येर्थः । तत्तस्मादित्यस्य विवरणं ॥ **उपपत्तीत्यादि** ॥ **तावती वागिति** ॥ तावत्कालीनो वर्ण इत्यर्थः ।

वागित्यस्य टीकायां वेदरूपा वागिति व्याख्यानेपि सजातीयानुपूर्वीकत्वेनैव तावत्कालत्वस्य वाच्यत्वेन मुख्यार्थलाभाय वर्णरूपार्थान्तरमुपेत्य वा वेदरूपवाचस्तावत्कालीनत्वस्य वर्णानां तावत्कालीनत्वाभावेऽयोगादर्थलब्धमुपेत्य वा श्रुत्यनुगृहीतत्वाच्चेत्युक्तम् । अत एव टीकायां तावती वागिति वर्णानां व्यापकत्वस्याभ्युपगतत्वेनेत्यप्युक्तमित्यदोषः ।

एवं प्रत्यभिज्ञाया अनन्यविषयत्वं प्रसक्तबाधकनिरासेनाभ्रान्तित्वं च समर्थ्योपसंहरन् परपक्षे बाधकोक्त्याप्युक्तं समर्थयते ॥ **तदेवमित्यादिना** ॥ **अन्यत्प्रमाणमस्तीत्यन्तेन** ॥ **उक्तेति** ॥ ''न च भेदधीर्बाधिका'' इत्यादिनोक्तरीत्येत्यर्थः ॥ **तदपलापे वेति** ॥ ''न च तानेव शालीन्'' इत्यादिनोक्तरीत्या प्रतीत्यपलापे वेत्यर्थः। ''तस्या'' इत्यतः पूर्वमप्युक्तरीत्येत्यनुषञ्जनीयम्। ''न चेयं प्रत्यभिज्ञे''त्यादिनोक्तरीत्येति तत्रार्थः। एवमग्रेप्युक्तरीत्येत्यनुवर्त्य यथायोगमर्थो योज्यः।

सप्तम्यन्तोक्तापादकचतुष्टयेप्यनिष्टापादनमाह ॥ **तत्तद्वादिभिरिति** ॥ सर्वक्षणिकत्वं वदद्भिरपि बौद्धैः

''आकाशे द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्''

इत्युक्तत्वेनाकाशस्य बुद्धिपूर्वविनाशाबुद्धिपूर्वविनाशयोश्च नित्यत्वोपगमेन तेषामपीदमापादनं सममिति सूचनाय ॥ **तत्तद्वादिभिस्तत्तद्वस्तुन इत्युक्तम्** ॥ अपलापादीत्यादिपदेन प्रागुक्तापादकत्रयग्रहः।

## तर्कताण्डवम्

**तदेतदभिप्रेत्योक्तं भगवत्पादैः। ''नच सादृश्यात् प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम्। सोयं देवदत्त इत्यादेरपि तथात्वापत्ते''रिति। अत्र प्रत्यभिज्ञा भ्रान्तिरित्यस्य समस्तपदत्वेन व्यपदेशमात्रत्वपक्षे तस्मिन्व्यपदेशे प्रत्यभिज्ञात्वभ्रान्तिरिति, पुरोवृत्तिनस्तदभेदविषयकाभिज्ञात्वपक्षे तस्यास्तकालीनावच्छिन्नाभेदविषयकप्रत्यभिज्ञात्वभ्रान्तिरिति, जात्यभेदविषयकप्रत्यभिज्ञात्वपक्षे तस्यां व्यक्त्यभेदविषयकप्रत्यभिज्ञात्वभ्रान्तिरिति, व्यस्तपदत्वेन व्यक्त्यभेदविषया प्रत्यभिज्ञा भ्रान्तिरिति पक्षे व्यक्त्यभेदविषयापि प्रत्यभिज्ञा भ्रान्तिरेव न तु प्रमेति, चार्थो द्रष्टव्यः।**

## न्यायदीपः

॥ **तदेतदिति** ॥ व्यपदेशादिपक्षचतुष्टयमपि नेत्येतत्तत्त्वनिर्णय उक्तमित्यर्थः।

टीकायां चतुर्थपक्षनिरासपरत्वेन व्याख्यानेपि बह्वर्थकत्वान्मूलग्रन्थस्य स्वोक्तपक्षचतुष्टय-निरासमपि मूलारूढं दर्शयति ॥ **अत्रेति** ॥ मूलवाक्य इत्यर्थः ॥ **समस्तेति** ॥ चतुर्थपक्ष एव भिन्नपदत्वात्तदन्यपक्षत्रयेपि भावप्रधाननिर्देशेन प्रत्यभिज्ञात्वेन भ्रान्तिः प्रत्यभिज्ञाभ्रान्तिरिति समासं प्राप्तपदत्वेन हेतुनाव्यस्तपदत्वेन हेतुनेत्यर्थो द्रष्टव्य इत्यन्वयः। ''अर्थो द्रष्टव्यः'' इति पदद्वयम्। पूर्वत्र प्रत्येकं इतिशब्दत्रयान्तेपि व्यपदेशमात्रपक्ष इत्यर्थो द्रष्टव्य इत्यादिरूपेणान्वेतव्यम्॥

## तर्कताण्डवम्

**एतेन ''प्रत्यभिज्ञानन्तरमुत्पत्त्यादिप्रत्ययानां तदनन्तरं च प्रत्यभिज्ञाया दर्शनेनोभयाबाधायोत्पत्त्यादिधीर्व्यक्ति-विषयिणी अभेदधीस्तु जातिविषया; यद्वोत्पत्त्यादिप्रत्य-यानामनेकत्वात्तद्विरुद्धैका प्रत्यभिज्ञा भ्रान्तिः। बहुबाधस्य अन्याय्यत्वात्'' इति मण्युक्तं निरस्तम्। प्रत्यभिज्ञाया विशेष्यात्मकव्यक्त्यभेदविषयत्वेनोत्पत्त्यादिप्रत्ययस्य च विशिष्टविषयत्वेनोभयप्रामाण्यस्योक्तत्वात्। प्रत्यभिज्ञा व्यक्त्यभेदविषया, उत्पत्त्यादि धीस्तु ध्वनिविषयेत्यपि सुवचत्वाच्च॥**

**किं चोत्पत्तिधीः सम्मर्देऽपगतेऽवकाशो जात इत्याका-शोत्पत्तिधीवदभिव्यक्तिविषयास्तु। त्वन्मते बाधलाघवो-क्तिश्चायुक्ता। त्वदभिमतानां अयं शुकोत्पन्नो गकारः, अयं शुकोच्चारितो गकार नष्ट इत्यादीनमुत्पत्त्यादिसाक्षात्कार-रूपप्रत्ययानां; सर्वलोकसिद्धानां शुकोच्चारितो गकारोऽयं वर्तते श्रोत्रे शुकगकार इत्याद्यभिज्ञानं; यः पूर्वं गकारः श्रुतः स एवेदानीमपि, योऽन्यत्र स एवात्रापि, यश्चैत्रोच्चारितः स एव मैत्रोच्चारितः, एकोच्चारितेपि यः प्राच्येन श्रुतः स एव प्रतीच्येनापि, यो निकटस्थेन श्रुतः स एव दूरस्थेनापीत्यादि-प्रत्यभिज्ञानां च; बाधकत्वेन त्वन्मत एव बहुबाधात्॥**

**न हि त्वत्पक्षे शुकोत्पन्नस्येदन्त्वेन साक्षात्क्रियमाणत्वेन वर्तमानत्वेन श्रोत्रस्थत्वेन च सामानाधिकरण्यम्। न वा एकोच्चारितेपि कदम्बगोलकन्यायपक्षे प्राच्यप्रतीच्ययोः रेकत्वम्।**

## न्यायदीपः

मण्युक्तमन्यदपि निराह ।। **एतेनेति** ।। उत्पत्त्यादीत्यादिपदेन विनाशतारमन्दत्वादिप्रत्ययग्रहः ।। **उक्तत्वादिति** ।। ''न च भेदधीर्बाधिके'' त्यादिग्रन्थेनोक्तत्वादित्यर्थः।

ननूत्पन्नो गकारो नष्टो गकार इति प्रतीतेः कथं ध्वनिविषयतेत्यत आह ।। **किं चेति** ।। बहुबाधस्यान्याय्यत्वादित्युक्तिं च निराह ।। **त्वन्मत इति** ।। त्वदभिमताना मित्यस्य प्रत्ययानामिति षष्ठ्यन्तेनान्वयः। सर्वलोकसिद्धानामित्यस्य वक्ष्यमाणषष्ठ्यन्ताभ्यामन्वयः ।।

ननूक्तत्रिरूपप्रतीतीनां कुतो बाधो न्यायमत इत्यत आह ।। **न हीति** ।। शब्दोत्पत्तिदेशात् कदम्बगोलकन्यायेन शब्दानां दशस्वपि दिक्षु दशधा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण कर्णदेश-प्राप्त्युपगमेन कर्णदेशसम्बद्धस्य शुकमुखोत्पन्नशब्दजातीयत्वेन साक्षात्तदुत्पन्नत्वाभावात्। एवं तत्तद्दिगवस्थितपुरुषैः श्रूयमाणस्यापि दिगन्तरस्थितपुरुषान्तरश्रुतशब्दजातीयत्वेन साक्षात्तदभेदा-भावादिति भावः।

## तर्कताण्डवम्

**यद्यपि वीचीतरङ्गन्यायपक्षे तयोरैक्यम्। तथापि निकट-दूरस्थयोरैक्यं नास्त्येव। तस्माद्बहूनामबाधायोत्पत्त्यादिधीरेव भ्रान्तिरस्तु ।।**

**ननूत्पत्त्यादिधीर्न तावत्स्मर्यमाणारोपः। सदृशादर्शनात्। गृह्यमाणारोपत्वे रक्तः स्फटिक इत्यादाविवोपाधिर्वाच्यः। स च न तावत्कुङ्कुमारुणा तरुणीतिवदानुभाविकः। गकारोस्ती-त्यादावुपाधेर्ध्वनेरननुभवात्। नाप्ययो दहतीतिवदौपपत्तिकः।**

**तत्रान्वयव्यतिरेकवतोग्नेरिवेह तद्वतः कस्यचिदभावादिति चेन्न। इहापि ध्वनेः सत्त्वात्॥**

**तत्राग्नेरग्नित्वेनाननुभवेप्यारोप्येण दग्घृत्वेनानुभवोस्तीति चेदिहापि ध्वनेर्ध्वनित्वेनाननुभवेप्यारोप्येणोत्पन्नत्वादिना अनुभवोस्तीति समम्॥**

**नच प्रत्यभिज्ञारोप्ये ऐक्यसाक्षात्कारे सति कथं तद्विरुद्धोत्पत्त्यादिभ्रम इति वाच्यम्। उत्पत्त्यादेरैक्याभावानात्मकत्वेन साक्षादविरोधात्। ऐक्यव्यापकाभावप्रतियोगित्वरूपे विरोधे सत्यपि तदग्रहदशायामारोपसम्भवात्। तद्ग्रहदशायां चारोपाभावस्येष्टत्वात्।**

**तस्मात्प्रत्यभिज्ञाबाधितानि शब्दानित्यत्वानुमानानि।**

**वर्णानित्यत्वे प्रत्यभिज्ञाविरोधः॥ २५॥**

## न्यायदीपः

ननु तटाकादिमध्ये पाषाणाद्यभिघाताद्दशदिक्सम्बन्धिन्य एकैका एव वीच्यस्तरङ्गाश्च जायन्त इति न्यायेन दशदिक्सम्बन्ध्येकैकशब्दपरम्परोत्पत्तिपक्षे प्राच्यादिशब्दस्यैक्यमेवेति न तत्प्रत्यभिज्ञाबाध इत्याशङ्क्य निराह **॥ यद्यपीति ॥** वीची नाम सूक्ष्मरूपस्त्रीतरङ्गः। तरङ्गस्तु स्थूलः **॥ निकटेति ॥** शब्दोत्पत्तिदेशनिकटस्थदूरस्थयोरित्यर्थः॥

उत्पत्त्यादिधियो भ्रान्तित्वमयुक्तमिति मण्युक्तरीत्या शङ्कते **॥ नन्विति ॥ सदृशेति ॥** शुक्ताविदं रूप्यमित्यारोपे शुक्तिसदृशस्य रजतस्येवेह वर्णसदृशस्योत्पत्त्यादिमतोऽभावादित्यर्थः **॥ आनुभाविक इति ॥** कुङ्कुमेनारुणा न स्वत इति कुङ्कुमस्योपाधित्वमनुभूयमानमित्यानुभाविकः। कुङ्कुमरूप उपाधिः। एवं गकारो ध्वन्युत्पन्नो न स्वत इत्यनुभवाभावादित्यर्थः **॥ औपपत्तिक इति ॥** उपपत्तिसिद्ध इत्यर्थः। उपाधिरित्यनुषङ्गः। वह्निधर्मस्य दग्धृत्वस्यायस्यारोपाद्वह्निरूपोपाधिनैवायो दग्धृ न तु स्वत इत्यनुभवः। तत्रायसि वह्नित्वेन वह्नेरननुभवात्। किन्तु वह्निसम्बन्धे सति दग्धृत्वमन्यथा तु नेत्यन्वयव्यतिरेकगम्यं वह्नेरुपाधित्वमित्यौपपत्तिक इत्युक्तम्।

यद्यपि मणौ ''कृपाणे मुखदीर्घत्वमौपपत्तिकं कृपाणान्वयव्यतिरेकानुविधानात्'' इत्युक्तम्। तथापि तत्रानुभाविकत्वमेव कथञ्चिद्वक्तुं शक्यम्। कृपाणत्वेन तस्यानुभवादित्यरुचिं मन्वानः अयो दहतीत्युदाहरदित्यदोषः॥

॥ **तद्वतः** ॥ अन्वयव्यतिरेकवतः। उत्पत्त्यादिधर्मकस्येत्यर्थः। विशेषदर्शनसत्वेनारोपासम्भवमाशङ्क्य निराह ॥ **न च प्रत्यभिज्ञेति** ॥ किं साक्षादारोप्याभावावगाहित्वेन प्रत्यभिज्ञा विरोधिनी उतारोप्याभावं प्रति व्याप्यविषयकतया। आद्य आह ॥ **उत्पत्त्यादेरिति** ॥ अन्त्य आह ॥ **ऐक्येति** ॥ **प्रतियोगित्वेति** ॥ उत्पत्त्यादेरित्यनुषङ्गः ॥ **विरोध इति** ॥ प्रत्यभिज्ञया सहेत्यर्थः ॥ **तदग्रहेति** ॥ उक्तरूपप्रतियोगित्वाग्रहेत्यर्थः ॥ **तस्मादिति** ॥ प्रत्यभिज्ञा यागकारादिव्यक्त्यैक्यादन्यविषयकत्वभ्रान्तित्वयोरयोगादित्यर्थः।

वर्णानामनित्यत्वे प्रत्यभिज्ञाविरोधः ॥ २५ ॥

## वर्णानां नित्यत्वेऽनुमानानि

### तर्कताण्डवम्

**सत्प्रतिपक्षाणि च। तथा हि – (१) शब्दत्वं नित्यवृत्ति द्रव्यत्वव्याप्यजातिमदसमवेताद्विष्ठवृत्तित्वात् आत्मत्ववत्।**

**(२)घ्राणभिन्नबहिरिन्द्रियव्यवस्थापकतावच्छेदकत्वात् रूपत्ववत्।**

**(३)आत्मत्वमूर्तत्वासमानाधिकरणाद्विष्ठवृत्तित्वात् कालत्ववत्।**

**(४)स्वाश्रयभिन्नविशेषगुणासमानाधिकरणप्रत्यक्षवृत्तित्वात् आात्मत्ववत्।**

**(५)पृथिवीवृत्त्यवृत्तित्वे आत्मवृत्त्यवृत्तित्वे च सति सत्तासाक्षाद्व्याप्यसाक्षाद्व्याप्यत्वात् जलत्ववत्।**

**(६)व्योमेतरावृत्तिजातिमद्वृत्तित्वादात्मत्ववत्।**

**(७)सकलशब्दवृत्तित्वात् सत्तावत्।**

**(८)श्रोत्रं नित्यवृत्तिसत्ताव्याप्यव्याप्यजातिग्राहकम् अपार्थिवेन्द्रियत्वाच्चक्षुर्वत्।**

**(९)वर्णो नित्यो ध्वनिशब्दत्वव्याप्यभिन्नत्वे सति श्रावणत्वाच्छब्दत्ववत् इत्याद्यनुमानैः प्रतिरोधात्॥**

## न्यायदीपः

प्रत्यभिज्ञादोषयोर्बाधप्रतिपक्षयोः प्रबलं बाधकं पूर्वमुक्त्वा प्रतिपक्षदोषं चाह ॥ **सत्प्रतिपक्षाणि चेति** ॥ शब्दानित्यत्वानुमानानीत्यनुषङ्गः। शब्दो नित्य इत्येव प्रतिज्ञोक्तौ द्वितीयादिकतिपयहेत्वसिद्धिः। ध्वन्यंशे बाधश्च। अतः शब्दत्वं नित्यवृत्तीति प्रतिज्ञाय द्वितीयादिहेत्वनुगमाय तु वर्णत्वमित्येव न कृतम्। नित्यवृत्तित्त्वं च जगदाधारताप्रयोजकसम्बन्धभिन्नसबन्धेनेति ज्ञेयम्। स च सम्बन्धो न्यायमते समवायः। सिद्धान्ते स्वरूपसम्बन्धः। तेन कालवृत्तित्वमादाय न सिद्धसाधनतावकाशः। ध्वन्यंशे बाधाद्वर्णवृत्तित्वेन साध्यपर्यवसानमिति भावः

॥ **द्रव्यत्वेति** ॥ द्रव्यत्वव्याप्यजातयः पृथिवीत्वजलत्वादयः। तद्वत्सु पृथिव्यादिष्वसमवेतं यदद्विष्ठं अव्यासज्यवृत्तितद्वृत्तित्वादित्यर्थः। शब्दस्तु तादृशपृथिव्यप्तेजोवाय्वात्ममनः स्वसमवेतोऽद्विष्ठश्चेति तद्वृत्तिशब्दत्वे हेतुसत्त्वमिति भावः। एते च हेतवः परीत्यैव। परसिद्धैर्दूषणमित्याचार्योक्तेः। अत एव सत्प्रतिपक्षाणीत्युपक्रमः। अन्यथा नित्यत्वे मानं त्विति ब्रूयात्। सिद्धान्तेऽनुगतजातेरभावात् पञ्चीकरणप्रक्रियायां शब्दस्य पृथिव्यादिष्वपि सत्त्वेन तादृशजातिमदसमवेतत्वाभावात्। अत एव सुधायां प्रकृतिनये ''गगनादेश्च सत्यत्व'' मित्यत्र पृथिव्यादिगुणत्वेनापि शब्दस्योत्पत्तिरुक्ता। पञ्चीकरणप्रक्रियामविवक्षित्वा जातिपदस्य सदृशधर्मपरत्वमुपेत्य स्वरीत्यापि वा। तेन मन्मत इत्यग्रिमग्रन्थाविरोध इत्याहुः। विशेषणकृत्यमग्रे स्फुटम्॥ **आत्मत्ववदिति** ॥ तच्च क्वाप्यसमवेताद्विष्ठात्मवृत्तित्वाद्धेतुसाध्ययोः सत्त्वं स्पष्टम्। न्यायमते विभुत्वेन आत्मनोऽवृत्तित्वात्।

॥ **घ्राणेति** ॥ घ्राणभिन्नं यद्बहिरिन्द्रियं श्रोत्ररूपं तदस्तित्वावधारकतानियामकत्वादित्यर्थः। शब्दज्ञानं हि कार्यं स्वकारणभूतं श्रोत्राख्यमिन्द्रियस्वरूपमनुमापयति। अकारणकस्यानित्यज्ञानस्य

अनुदयात्। अन्यस्य चक्षुरादेः शब्दज्ञाने करणत्वायोगात्। शब्दस्य तादृशेन्द्रियव्यवस्थापकतायां शब्दत्वस्यावच्छेदकत्वादिति भावः। चक्षुरिन्द्रियादिव्यवस्थापके रूपत्वरसत्वादौ हेत्वनुगमाय **॥ बहिरिन्द्रियेति ॥** सामान्योक्तिः। न तु श्रोत्रेति विशिष्य **॥ रूपत्ववदिति ॥** रूपत्वरसत्वस्पर्शत्ववदित्यर्थः। बहिरिन्द्रियव्यवस्थापकतावच्छेदकानां रूपरसगन्धस्पर्शशब्दत्वानां एकस्य पक्षत्वेपि गन्धस्य पृथिवीमात्रगुणत्वेन पार्थिवपरमाणुषु गुणानां पाकजत्वेनानित्यतायां गन्धत्वस्य नित्यावृत्तित्वरूपसाध्याभावेपि जलपरमाण्वादिगतरूपरसस्पर्शानामपाकजत्वेन रूपत्वादित्रयस्य नित्यवृत्तित्वादाधिक्यदोषनिरासाय रूपत्ववदित्यत उक्तम् **॥ आत्मत्वेति ॥** आत्मत्वमूर्तत्वाभ्यां असमानाधिकरणं यदद्विष्टं तन्निष्ठत्वादित्यर्थः। मूर्तत्वं नाम इयत्तावच्छिन्नपरिमाणयोगित्वम्। पृथिव्यप्तेजोवायुमनसां धर्मः। पक्षदृष्टान्तभूतयोः शब्दत्वकालत्वयोस्तादृशशब्दकालनिष्ठत्वात् कालस्य नित्यत्वाच्च हेतुसाध्यानुगम इति भावः।

**॥ स्वेति ॥** स्वस्य शब्दत्वस्याश्रयः शब्दः, तद्भिन्नाविशेषगुणो रूपादिः, तदसमानाधिकरणम् प्रत्यक्षम् च यत्, शब्द एव, तद्वृत्तित्वादित्यर्थः। दृष्टान्ते स्वस्यात्मत्वस्य आश्रयः आत्मा। तदतिरिक्तविशेषगुणेनासमानाधिकरणं प्रत्यक्षं च अवृत्तिभूतमात्माख्यं वस्तु तद्वृत्तित्वादिति हेत्वनुगमो ध्येयः। स्वशब्दस्य समभिव्याहृतपरत्वात्। शब्दत्वमात्रपरत्वेप्यदोषात्

**॥ पृथिवीति ॥** पृथिवीवृत्ती रूपादिः। अत्मवृत्तिर्ज्ञानादिः। तदुभयावृत्तित्वे सति सत्तासाक्षाद्व्याप्यं पक्षे गुणत्वम्। दृष्टान्ते च द्रव्यत्वम्। तेन साक्षाद्व्याप्यं शब्दत्वं जलत्वं चेति पक्षदृष्टान्तयोर्हेत्वनुगमः। दृष्टान्ते साध्यानुगमश्च जलपरमाणुवृत्तित्वेन ज्ञेयः। साक्षाद्व्याप्यत्वं नाम व्याप्याव्याप्यत्वे सति व्याप्यत्वम्। गुणत्वद्रव्यत्वयोः सत्ताजातेश्च मध्ये तथा गुणत्वद्रव्यत्वयोः शब्दत्वजलत्वयोर्मध्ये च व्याप्यधर्मान्तरस्याभावात्।

**॥ व्योमेति ॥** व्योमेतरस्मिन्नविद्यमानो यो जातिमान् शब्दः आत्मा च तद्वृत्तित्वाच्छब्दत्वस्य आत्मत्वस्य चेति पक्षदृष्टान्तयोर्हेत्वनुगतिः॥

**॥ श्रोत्रमिति** पक्षः। नित्यवृत्तिर्या सत्ताव्याप्यगुणत्वव्याप्यशब्दत्वरूपा जातिः तद्ग्राहकत्वेन पक्षे, दृष्टान्ते च तादृशरूपत्वग्राहकत्वेन साध्यानुगमः। रूपत्वस्यापि नित्यं यज्जलपरमाण्वादिरूपं तद्वृत्तित्वात् **॥ अपार्थिवेति ॥** परमते घ्राणस्यैव पार्थिवत्वेन तदन्येषामपार्थिवत्वान्नासिद्ध्यादिः॥

**॥ ध्वनीति ॥** ध्वनिश्च शब्दत्वव्याप्यं तारत्वादिकं च ताभ्यां भिन्नत्वे सतीत्यर्थः **॥ प्रतीरोधादिति ॥** सत्प्रतिपक्षाणीत्यन्वयः

## तर्कताण्डवम्

अत्राद्ये हेतौ कालाकाशगतद्वित्वनिष्ठद्वित्वत्वेऽव्यभिचारायाद्विष्ठेत्युक्तम्। गन्धत्वदुःखत्वादावव्यभिचाराय असमवेतेत्युक्तम्। असमवेतवृत्तित्वस्य प्रतिवादिनं प्रत्यसिद्धि निरासाय द्रव्यत्वव्याप्यजातिमदित्युक्तम्।

द्वितीये गन्धत्वेऽव्यभिचाराय घ्राणभिन्नेति। दुःखत्वादावव्यभिचाराय बहिरिति चोक्तम्।

तृतीयेप्यद्विष्ठपदस्याद्यहेताविव प्रयोजनं द्रष्टव्यम्। दुःखत्वादौ वेगत्वादौ चाव्यभिचारायात्मत्वमूर्तत्वासमानाधिकरणेत्युक्तम्॥

चतुर्थे गन्धत्वे दुःखत्वादौ चाव्यभिचाराय विशेषगुणासमानाधिकरणेत्युक्तम्। विशेषगुणासमानाधिकरणमनोगतवेगवर्तिनि वेगत्वेऽव्यभिचाराय प्रत्यक्षेत्युक्तम्। मनोगतवेगस्त्वप्रत्यक्षः। तावत्युक्ते गकारस्यापि ककाररूपविशेषगुणसमानाधिकरणत्वात् परं प्रत्यसिद्धिः। तदर्थं स्वाश्रयभिन्नेत्युक्तम्। एवं च ककारस्यापि शब्दत्वाश्रयत्वेन तद्भिन्नत्वाभावान्नासिद्धिः॥

पञ्चमे गन्धत्वादावव्यभिचाराय पृथिवीवृत्त्यवृत्तित्वे सतीत्युक्तम्। प्रभात्वादावव्याभिचाराय सत्तेत्याद्युक्तम्॥

एवं च सत्तासाक्षद्व्याप्यं द्रव्यत्वं प्रति तेजस्त्वमेव साक्षाद्व्याप्यम् न तु प्रभात्वादिकमिति न व्यभिचारः। शब्दत्वं तु मन्मते सत्तासाक्षाद्व्याप्यं द्रव्यत्वं प्रति परमते च गुणत्वं प्रति साक्षाद्व्याप्यमिति नासिद्धिः॥

**षष्ठे ध्वनिप्रागभावत्वेऽव्यभिचाराय जातिमदित्युक्तम्।**
**गत्वत्वादावव्यभिचाराय व्योमेतरावृत्तीत्युक्तम्॥**

## न्यायदीपः

॥ **द्वित्वत्व इति** ॥ अनुमानोपनीतकालाकाशाद्यगोचरमानसापेक्षाबुद्धिजन्यस्य कालाकाशोभयगतद्वित्वस्य द्रव्यत्वव्याप्यजातिमत्सु पृथिव्यप्तेजोवाय्वात्ममनःस्वसमवेतत्वेन द्वित्वत्वे तादृशद्वित्ववृत्तित्वहेतुसत्त्वेपि नित्यवृत्तित्वाभावाद्व्यभिचारनिरासायाद्विष्ठेत्युक्तमित्यर्थः। तर्ह्यद्विष्ठवृत्तित्वादित्येवास्त्वित्यत आह ॥ **गन्धत्वेति** ॥ गन्धत्वादेः पृथिव्यात्मादिसमवेतगन्धादिवृत्तित्वादव्यभिचार इत्यर्थः। रूपत्वादिकं तु नित्यवृत्तीति गन्धत्वेत्युक्तम्। पार्थिवगुणानां पाकजत्वेन गन्धो न नित्य इति भावः॥

तर्ह्यसमेवताद्विष्ठेत्येवास्त्वित्यत आह ॥ **असमवेतेपि प्रतिवादिनं प्रतीति** ॥ तार्किकं प्रतीत्यर्थः। सत्प्रतिपक्षानुमानप्रयोक्तृदशायां सिद्धान्तिनः स्थापनावादित्वेन परस्यैव प्रतिवादित्वात् ॥ **असिद्धिनिरासायेति** ॥ न चासिद्धिनिरासकं व्यर्थम्। व्याप्तिपक्षधर्मताया अप्यनुमित्यङ्गत्वेन तत्सम्पादकस्यापि सार्थक्यात्। ''यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न परिच्छिद्यते तद्विशेषणमर्थवदिति'' न्यायेन विशिष्टहेतुनिष्ठव्याप्तेरुक्तविशेषणेन विना गृहीतुमशक्यत्वेन व्याप्तिग्रहौपयिकत्वाच्चेति भावः॥

॥ **गन्धत्व इति** ॥ पृथिवीगुणस्य पाकजत्वेन गन्धत्वे नित्यवृत्तित्वरूपसाध्याभावेपि घ्राणरूपबहिरिन्द्रियव्यवस्थापकतावच्छेदकत्वाद्घ्राणभिन्नेत्युक्त्या न दोष इत्यर्थः ॥ **दुःखत्वेति** ॥ तस्यान्तरिन्द्रियव्यवस्थापकतावच्छेदकत्वादिति भावः। आत्मत्वमूर्तत्वान्यतरासमानाधिकरणाद्विष्ठवृत्तित्वादित्युक्तावाह ॥ **दुःखत्वादाविति** ॥ मूर्तत्वासमानाधिकरणदुःखादिनिष्ठदुःखत्वादौ नित्यवृत्तित्वाभावेन तत्राव्यभिचाराय आत्मत्वासमानाधिकरणेत्यद्विष्ठविशेषणम्। आत्मत्वासमानाधिकरणं यदद्विष्ठं तद्वृत्तित्वादित्येवोक्तौ पृथिव्यप्तेजोवायुमनोधर्मवेगरूपगुणस्यात्मत्वासमानाधिकरणेत्यद्विष्ठविशेषणमित्यर्थः॥

प्रत्यक्षवृत्तित्वादित्येवोक्तौ दोषमाह ॥ **दुःखत्वादौ चेति** ॥ तर्हि प्रत्यक्षेत्यस्य बाह्यप्रत्यक्षेत्यर्थं मत्वोक्तम् ॥ **गन्धत्वेति** ॥ **परं प्रतीति** ॥ तार्किकं प्रतीत्यर्थः ॥ **नासिद्धिरिति** ॥ असिद्धिवारकस्यापि सार्थक्यं पूर्ववत्। आत्मेत्याद्युक्तौ दोषमाह ॥ **गन्धत्वादाविति** ॥ व्योमेतरावृत्तिवस्तुवृत्तित्वादित्येवोक्तौ दोषमाह ॥ **ध्वनिप्रागभावत्व इति** ॥

## तर्कताण्डवम्

**सप्तमे शब्दपदम् केवलान्वयिनो गुणत्वादेरपि सङ्ग्राहकत्वेन विकासकत्वान्न व्यर्थम्।**

**अष्टमे साध्ये नित्यवृत्तिसत्ताद्रव्यत्वयोः सत्तागुणत्वयोर्वा ग्राहकत्वेनार्थान्तरमिति शङ्कानिरासाय सत्ताव्याप्य-व्याप्येत्युक्तम्। हेतोर्घ्राणेऽव्यभिचारायापार्थिवेऽत्युक्तम्॥**

**नवमे ध्वनौ शब्दत्वव्याप्ये तारत्वादौ चाव्यभिचाराय ध्वनिशब्दत्वव्याप्याभिन्नेत्युक्तम्। अत्र विपक्षे प्रत्यभिज्ञानुपपत्तिगौरवादीनि बाधकानि। केचित्तु श्रोत्रं नित्यद्रव्यग्राहकम् निरवयवेन्द्रियत्वात् मनोवत् इत्याहुः॥**

**वर्णानां नित्यत्वेनुऽमानानि॥ २६॥**

## न्यायदीपः

ननु सप्तमे सकलवृत्तित्वादित्येवोक्तौ प्रमेयत्वादौ केवलान्वयिनिनित्यवृत्तिसाध्यस्यापि सत्त्वेन व्यभिचाराभावाच्छब्देति व्यर्थम्। स्वरूपासिद्धिवारकत्वेपि व्यर्थत्वादित्यत ईश्वरवादोक्तदिशा व्याप्त्याश्रयाणामनेकत्वसम्पादकत्वेन सार्थक्यादिति भावेनाह॥ **सप्तम इति**॥ **अकेवलान्वयिन इति**॥ शब्दनिष्ठस्येत्यपि ग्राह्यम्। न केवलं केवलान्वयिनः प्रमेयत्वादेरपीत्यपेरर्थः। आकाशसम-वेतत्वादिरादिपदार्थः॥

॥ **अष्टम इति**॥ अपार्थिवेन्द्रियत्वादिति हेतौ यत्साध्यं नित्यवृत्तीत्यादि तस्मिन्नित्यर्थः॥ **नित्यवृत्तिसत्ताद्रव्यत्वयोरिति**॥ नित्यवृत्तिसत्ताजातिग्राहकमित्युक्ते शब्दगतसत्ताग्राहकत्वेन अर्थान्तरम्। शब्दस्यानित्यत्वेप्याकाशादिनित्यवृत्तित्वात्सत्तायाः। अतो॥ **नित्यवृत्तिसत्ताव्याप्य-जातिग्राहकमिति**॥ तावत्युक्ते शब्दो द्रव्यमिति मते द्रव्यत्वस्य, गुण इति मते गुणत्वस्य ग्राहकत्वेनार्थान्तरम्। अतः सत्ताव्याप्यव्याप्येत्युक्तमित्यर्थः। सिद्धसाधनताव्युदासाय शब्दस्य नित्यत्वसिद्धये नित्यवृत्तीति जातिविशेषणमिति स्पष्टमिति भावः।

॥ **नवम इति**॥ ध्वनिशब्दत्वव्याप्यभिन्नत्वे सति श्रावणत्वादित्यत्र ध्वनिपदस्य कृत्यं

**॥ ध्वनाविति ॥** ध्वनिभिन्नत्वे सति श्रावणत्वादित्येवोक्तौ दोषः **॥ शब्दत्वव्याप्यतारत्वादाविति ॥** ध्वनिशब्दत्वव्याप्याभ्यां भिन्नत्वे सतीत्युक्तमित्यर्थः। श्रावणत्वादिति तु घटादावव्यभिचारायेति व्यक्तमिति भावः **॥ कल्पनागौरवादीति ॥** विवरिष्यते चैतदुत्तरभङ्गे व्यक्त्यानन्त्यादिकल्पना विचीतरङ्गादिन्यायेन पूर्वशब्दस्योत्तरोत्तरशब्दान्तरजनकत्वमुत्तरशब्दस्य पूर्वपर्वूशब्दनाशकत्व-मन्त्योपान्त्ययोरन्योन्यनाशकत्वमित्युत्तरत्र वक्ष्यमाणगौरवमित्यर्थः। आदिपदेन बहुबाधादिग्रहः **॥ नित्य-द्रव्येति ॥** शब्दत्वादिग्राहकत्वेनार्थान्तरपरिहाराय द्रव्यपदम्। एवं च शब्दस्य द्रव्यत्वं नित्यत्वं चादाय साध्यं पर्यवस्याति। व्योमादिनित्यद्रव्यग्राहकत्वेन पर्यवसानस्य बाधितत्वात्। इन्द्रियत्व-मात्रस्य चक्षुरादौ व्यभिचारान्निरवयवेत्युक्तिः **॥ मनोवदिति ॥** तस्यात्मग्राहकत्वादिति भावः ॥

अत्रारुचिबीजं तु, आत्मनो मानसत्वे कदाचिदहमनहं वेत्यादिसन्देहापातेन सुदृढनिर्णयरूप-साक्षिवेद्यत्वादात्मनः साध्यवैकल्यं दृष्टान्तस्य वस्तुमात्रस्येश्वरवादोक्तरीत्या संयोगित्वयुक्त्या सावयवत्वेन निरवयवत्वासिद्धेरित्यादि ध्येयम्।

वर्णनित्यत्वेऽनुमानानि ॥ २६ ॥

## वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वम्

### तर्कताण्डवम्

**ननु वर्णानां नित्यत्वे सर्वदोपलब्धिः स्यात्। नचोच्चा-रणजन्यस्य ध्वनिरूपव्यञ्जकस्य कादाचित्कत्वान्न दोष इति वाच्यम्। तस्य हि व्यञ्जकत्वं न तावदावरणापसारण-वदिन्द्रियसन्निधापकत्वेन। श्रोत्रगुणत्वपक्षे विभुत्वपक्षे च वर्णानां सर्वदेन्द्रियसम्बन्धात्। नापि चक्षुरादावञ्जनादेरिव श्रोत्रे संस्काराधायकतया। संस्कृतेन श्रोत्रेण चक्षुषेव विविच्य स्वसम्बद्धसर्ववर्णसमूहालम्बनस्यैकस्य ज्ञानस्योत्पत्त्या-पातादिति चेन्न। त्वन्मते वर्णोत्पादकानामिव मन्मते तद्व्यञ्जकानामपि नियतत्वात्॥**

**ननु वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्याः, एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वाद् घटगतैकत्वपरिमाणवत्। अत्र च साध्ये व्यञ्जकशब्देन विषयसन्निकर्षातिरिक्तो ज्ञानहेतुर्विवक्षित इति न बाधः। हेतौ भिन्नेन्द्रियग्राह्यरूपरसादौ व्यभिचारनिरासाय समानेन्द्रियेति विशेषणम्। एकेन श्येनचरणावच्छेदेन वर्तमानयोर्भिन्नसंयोगिव्यङ्ग्ययोः श्येनस्य स्थाणुतदवयवाभ्यां संयोगयोर्व्यभिचारनिरासाय समानदेशत्वे सतीति विशेषणम्। इह च समानदेशत्वमनतिरिक्तदेशत्वं विवक्षितम्। तेनोक्तयोः संयोगयोरेकस्मिन् श्येने वृत्तावपि स्थाणुसंयोगस्य अवयवसंयोगानाश्रये स्थाणावयवसंयोगस्य च स्थाणुसंयोगानाश्रयेऽवयवे वृत्त्यातिरिक्तदेशत्वान्न व्यभिचारः।**

## न्यायदीपः

"अत आकाशगुणे शब्दे व्यज्यमाना वर्णादय" इति तत्त्वनिर्णयवाक्यस्य टीकायां शङ्कितं वर्णनित्यत्वबाधकं मण्याद्युक्तमाशङ्कते ॥ **नन्विति** ॥ **श्रोत्रगुणत्वपक्ष इति** ॥ परिमाणवन्नित्यशब्देन सर्वदा श्रोत्रस्य सम्बन्धादित्यर्थः। बुभुत्सायां नियामकत्वमाशङ्क्योक्तं ॥ **चक्षुषेवेति** ॥

"सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत्।
घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते॥"

इति प्राचीनोक्तेरिति भावः ॥ **त्वन्मत इति** ॥ यथैकवर्णोत्पादकेनैव न सर्ववर्णोत्पत्तिः, तथैकवर्णव्यञ्जकेनैव न सर्ववर्णव्यक्तिरिति न सर्वोपलम्भ इत्यर्थः ॥

वर्णानित्यत्ववादे पूर्वपक्षे मणिकृताशङ्क्य निरस्तमप्यनुमानं दोषान्तरविवक्षया शङ्कते ॥ **नन्विति** ॥ **प्रतिनियतेति** ॥ अत्र प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं परस्परव्यभिचारिव्यञ्जकव्यङ्ग्यत्वं दोषाभावे परस्पराविषयकसाक्षात्कारविषयत्वमिति यावत्। तेनैकत्र द्वित्वभ्रमजनकेन परिमाणग्राहिणा परिमाणभ्रमजनकेनैकत्वग्राहिणा च न व्यभिचार इति व्याचक्षते ॥ **एकेति** ॥ कवर्णाद्ये

कावच्छेदकश्रोत्ररूपसमानदेशत्वे सति श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णानां पक्षे हेतुसत्त्वं ध्येयम्। एकावच्छेदकदेशतः कालतश्चेत्यग्रे व्यक्तम्। अन्यूनानतिरिक्तदेशकालत्वे सतीति पदद्वय-तात्पर्यमित्येके ॥ **घट गतेति** ॥ घटगतैकत्वपरिमाणयोरेकघटत्वावच्छेदेन समानदेशत्वं समानेन्द्रिय-चक्षुर्ग्राह्यत्वमिति हेत्वनुगमः। परिमाणव्यञ्जकालोकव्यङ्ग्यत्वादेकत्वस्य प्रतिनियतव्यञ्जकत्वा-भावरूपसाध्यानुगम इति भावः। ननु व्यञ्जकपदेन सन्निकर्षस्यापि ग्रहणे समवायस्यैकत्वेपि तत्तद्वर्णनिरूपितश्रोत्रसमवायस्य नियतत्त्वात्तदभावसाधने बाधो दृष्टान्ते साध्यवैकल्यं चेत्यत अह ॥ **अत्र च साध्य इति** ॥ न बाध इत्युपलक्षणम्। दृष्टान्ते साध्यवैकल्यं च नेत्यपि ध्येयम्॥

सत्यन्तमात्रं हेतुरस्त्वित्यत आह ॥ **हेताविति** ॥ रूपादेरालोकलवणादिभिन्नव्यञ्जक-व्यङ्ग्यत्वादिति भावः। समानदेशत्वे सतीत्यस्य कृत्यमभिमतं मण्युक्तं व्यनक्ति ॥ **एकेनेति** ॥ साध्याभावोपपादनायोक्तं भिन्नसंयोगिव्यङ्ग्ययोरिति। कारणाकारणसंयोगात्कर्याकार्यसंयोग इति संयोगजसंयोगपक्षे स्थाणुश्येनसंयोगस्थाने स्थाण्ववयवसंयोगस्यापि सत्त्वात् स्थाणुतदवयवाभ्यां संयोगयोरित्युक्तम्। तथाच कथं च व्यभिचार इत्यत आह ॥ **इह चेति** ॥

## तर्कताण्डवम्

**अत एव**

**''प्रदीपे व्यज्यते जातिर्न तु नीरजनीलिमा''**

**इत्युक्तत्वादुत्पलत्वव्यंजकप्रदीपाव्यङ्ग्ये नैल्ये न व्यभिचारः। उत्पलत्वस्यातिरिक्तदेशवृत्तित्वात्। कालरूपावच्छेदकभेदेन एकघटनिष्ठयो रूपतद्ध्वंसयोर्व्यभिचारनिरासायैकावच्छेदेनेति विशेषणम्। एकावच्छेदश्च न केवलं कालतः। किं तु देशतोपि। तेनावयवद्वयवृत्त्योरवयवद्वयारब्धयोरवयवि-संयोगयोर्व्यभिचारो निरस्तः। अवयविनो व्याप्यवृत्तित्वेन अवयवसंयोगस्य चाव्याप्यवृत्तित्वेन देशतोऽवच्छेदकभेदात्। अत्र च हेतुमत्सु सङ्ख्यादिसामान्यगुणेषु द्रव्यग्रहणयोग्यता-न्तर्गतयोग्यताकत्वस्य द्रव्यग्राहकबहिरिन्द्रियग्राह्यत्वस्य च सत्त्वान्न व्यभिचारशङ्का। नचोक्तहेतुनैव प्रतिनियतोत्पादका-**

**भावोपि साध्यः। भिन्नहेतुजन्ययोर्वेगकर्मणोर्व्यभिचारादिति चेन्मैवम्। तथापि त्वचा ग्राह्ययोर्घटगतस्पर्शपृथक्त्वयोः व्यभिचारात्। तत्र पृथक्त्वस्य स्पर्शाव्यञ्जकेनावधिना व्यङ्ग्यत्वात्॥**

**नच समानेन्द्रियग्राह्यपदेन परस्पराग्राहकेन्द्रियाग्राह्यत्वं विवक्षितम्, एवं च न व्यभिचारः; स्पर्शस्य पृथक्त्वग्राहक-त्वगिन्द्रियमात्रग्राह्यत्वेन तदग्राहकाग्राह्यत्वेपि पृथक्त्वस्य स्पर्शाग्राहकचक्षुर्ग्राह्यतया तदग्राह्यत्वाभावादिति वाच्यम्। भिन्नपुरुषनिष्ठापेक्षाबुद्धिभ्यां जन्ययोर्व्यङ्ग्ययोश्चैकदेश-कालयोर्द्वित्वयोर्व्यभिचारात्। त्वयापेक्षाबुद्धिर्व्यञ्जिकेत्यपि स्वीकारात्॥**

**नच प्रतिनियताप्रतिपत्तिकत्वमपि हेतुविशेषणं विव-क्षितम्, द्वित्वे तु प्रतिनियतप्रतिपत्तृके इति वाच्यम्। अवयविव्यञ्जकमात्राव्यङ्ग्येनावयवबहुत्वेनैकत्वव्यञ्जक-मात्राव्यङ्ग्येन पृथक्त्वदीर्घत्वादिना च व्यभिचारात्॥**

## न्यायदीपः

अन्यत्रापि व्यभिचारनिरासः फलमित्यत आह॥ **अत एवेति**॥ समानदेशत्वे सतीत्यस्यैवं विवक्षाकरणादेवेत्यर्थः॥ **प्रदीप इति**॥ प्रदीपे सत्येवेत्यर्थः। जातिरुत्पलत्वम्। न तु व्यज्यत इत्यन्वयः। नीरजनीलिमा तु तस्मिन्सत्येव व्यज्यत इत्युक्तत्वात्प्राचीनैरित्यर्थः॥ **अतिरिक्तेति**॥ रुक्तोत्पलेपि सत्त्वादिति भावः॥ **कालरूपेति**॥ कालाख्येत्यर्थः॥ **अवयवीति**॥ अवयवी च संयोगश्चेति द्वन्द्वः। तन्तुद्वयनिष्ठस्य पटरूपावयविनः तन्तुद्वयसंयोगस्य च यथाक्रममालोकेन तन्तुद्वयेन च व्यङ्ग्यत्वात्साध्याभावेपि हेतुरपि तत्र नेत्याह॥ **अवयविन इति**॥ **अवच्छेदकेति**॥ व्यक्त्यंशावच्छेदेन संयोगस्य, सर्वावयवावच्छेदेनावयविनो वृत्तेरिति भावः॥

नन्वेवमपि सङ्ख्यापरिमाणपृथक्त्वेषु एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वहेतोः सत्त्वाद्व्यभिचार इत्यतः साध्यस्यापि सत्त्वान्न दोष इत्याह॥ **अत्र हेतुमत्स्विति**॥ **भिन्नहेत्विति**॥

वेगस्य कर्त्रजन्यत्वात्कर्मणो नोदनादिजन्यत्वादिति भावः ।। **तथापीति** ।। उक्तस्थलेषु व्यभिचाराभावेपीत्यर्थः। हेतुसत्त्वायोक्तं ।। **त्वचा ग्राह्ययोरिति** ।। सत्यन्तांशसत्त्वं तु व्यक्तम्। साध्यसत्त्वं व्यनक्ति ।। **तत्रेति** ।। **अवधिनेति** ।। अयमस्मात्पृथगिति प्रतीत्या पञ्चम्यन्तनिर्दिष्टावधि-पदार्थेनेत्यर्थः। तावता कथं न व्यभिचार इत्यत आह ।। **स्पर्शस्येति** ।। **भिन्नेति** ।। यत्र घटपटस्थळे चैत्रनिष्ठापेक्षाबुद्ध्या मैत्रनिष्ठापेक्षाबुद्ध्या च द्वित्वद्वयमुपपन्नं तत्र द्वित्वद्वये एकावच्छेदेन समानदेशत्वे सति परस्पराग्राहकेन्द्रियाग्राह्यत्वरूपहेतोः सत्त्वात् द्वित्वत्वावच्छिन्नद्वित्वग्राहकेन्द्रियस्यैकत्वेन नानात्वाभावादित्यर्थः। साध्यसत्त्वं नेति भावेनोक्तं ।। **व्यङ्ग्ययोश्चेति** ।। उक्तरूपबुद्धिभ्यां व्यङ्ग्ययोश्चेत्यर्थः ।।

तद्व्यञ्जकत्वमसिद्धमित्यत आह ।। **त्वयेति** ।। **अवयवीति** ।। पटावयवगतबहुत्वस्य पटेन सहैकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वरूपहेतुमत्त्वेपि साध्यवत्त्वं नेत्युपपादनाय ।। **अवयविव्यञ्जकमात्राव्यङ्ग्येनेत्युक्तम्** ।। अपेक्षाबुद्ध्यापि व्यङ्ग्यत्वस्वीकारादिति भावः ।। **एकत्वेत्यादि** ।। अवधिपदार्थेनाऽपि व्यङ्ग्येनेत्यर्थः। हेतुसत्त्वं तु व्यक्तमिति साध्याभाव एवोपपादितः। तथा चैकत्वदीर्घत्वयोरेकत्वपृथक्त्वयो व्यभिचार इत्यर्थः।

## तर्कताण्डवम्

**ननु परस्परव्यभिचारिव्यञ्जकाव्यङ्ग्यत्वं साध्यम्, एवं च न व्यभिचारः। अवयव्येकत्वव्यञ्जकार्योर्बहुत्वपृथक्त्व-व्यञ्जकाभ्यां व्यभिचारेपि बहुत्वपृथक्त्वव्यञ्जकयोरव-यव्येकत्वव्यञ्जकाभ्यामव्यभिचारेण परस्परव्यभिचारि-व्यञ्जकाव्यङ्ग्यत्वरूपसाध्यस्य सत्त्वादिति मणावुक्तमिति चेन्न।**

**तथाप्यवयवबहुत्वग्रहव्यतिरेकेणावयविग्रहवदञ्चले अवयविग्रहव्यतिरेकेणावयवबहुत्वग्रहदर्शनेनानैकान्त्यात्। भिन्नप्रतियोगिव्यङ्ग्ययोर्भूतलगतयोः समवायिनाशजन्ययोः विरलावयवतया समानदेशालोकजलप्रतियोगिकयोः आलोकजलध्वंसयोर्ब्राह्मणत्वात्यन्ताभावतद्व्यञ्जका-**

**त्यन्ताभावयोश्च व्यभिचाराच्च। देशशब्देन समवायिविवक्षायामपि वर्णानां नित्यद्रव्यत्ववादिनं मां प्रत्यसिद्धेः। घटगतयोरेकत्वैकपृथक्त्वयोर्भिन्नव्यक्तिव्यङ्ग्यगोत्वाश्वत्वादौ च व्यभिचाराच्च। जातिः सर्वगतेति पक्षस्येव प्रामाणिकत्वात्। वर्णाः परस्परव्यभिचारिप्रमापकप्रमाप्याः आश्रयेण सहैकेन्द्रियग्राह्यत्वात् गन्धरसवदित्यनेन सत्प्रतिपक्षता च। द्रव्यग्रहणयोग्यतान्तर्गतयोग्यताकत्वं मूर्तवृत्तित्वं चोपाधिश्च॥**

## न्यायदीपः

कथं न व्यभिचार इत्यत उक्तस्थले साध्यसत्त्वं व्यनक्ति ॥ **अवयवीति** ॥ अवयव्येकत्वयोः ये व्यञ्जके तयोरित्यर्थः ॥ **व्यभिचारेपीति** ॥ बहुत्वव्यञ्जकापेक्षाबुद्धेरवयविव्यञ्जकत्वाभावात्। तथा पृथक्त्वव्यञ्जकावधेरेकत्वाव्यञ्जकत्वादिति भावः ॥ **अव्यभिचारेणेति** ॥ अवयव्यादेरग्रहे तन्निष्ठबहुत्वाद्यग्रहात् अवयव्यादिव्यञ्जकालोकाद्यव्यभिचार आवश्यक इति भावः ॥ **मणाविति** ॥ वर्णानित्यत्ववादे पूर्वपक्षे ॥ **अञ्चल इति** ॥ वस्त्रान्त्यभाग इत्यर्थः। तथा च परस्परव्यभिचारव्यञ्जकव्यङ्ग्यत्वमेव न तु तदभावरूपसाध्यसत्त्वमिति व्यभिचार इत्यर्थः।

ननु बहुत्वस्य पटावयवैकदेशवृत्तित्वेन पटस्य तदधिकवृत्तित्वात्। बहुत्वस्याशुविनाशिताया पटस्याधिककालत्वाच्च। एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वरूपहेत्वभावान्नानैकान्त्यमित्यन्यत्र व्यभिचारमाह ॥ **भिन्नेति** ॥ साध्याभावोपपादनाय भिन्नेत्यादि। समानदेशतोक्त्यर्थं भूतलगतयोरिति। समवायिगतत्वाद् ध्वंसस्य कथं भूतलस्थतेत्यत उक्तम्। समवायीत्यादि। ध्वंसयोरित्यन्वयः। प्रतियोगिनोः समानदेशत्वे तद् ध्वंसयोरपि तथात्वादिति भावेनाह ॥ **विरलावयवेति** ॥ पाषणादिवन्निबिडद्रव्यत्वाभावेन समानदेशे ये आलोकजले तद् ध्वंसयोरित्यर्थः। निर्मलजलान्तस्थभूतलेप्यालोकोपलम्भादिति भावः ॥ **ब्राह्मणत्वात्यन्ताभावतद्व्यञ्जकात्यन्ताभावयोरिति** ॥ भिन्नप्रतियोगिव्यङ्ग्ययोः भूतलगतयोरित्येतदत्राप्यन्वेति। ब्राह्मणत्व व्यञ्जकं ब्राह्मणमातापितृकत्वादिकम् ॥ **देशशब्देनेति** ॥ समानदेशत्वे सतीति हेतुशरीरप्रविष्टदेशशब्देनेत्यर्थः। तथा च हेत्वभावान्न तत्र व्यभिचार इति भावः। नन्वेकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वाभावादिति हेत्वर्थोस्त्वित्यत आह ॥ **घटगतयोरिति** ॥ एकपृथक्त्वस्यावधिव्यङ्ग्यत्वादेकत्वस्य तदभावाद्भिन्नव्यङ्ग्यत्वेन साध्यासत्त्वेप्युक्तहेतुसत्त्वादिति भावः।

अवध्यनभिव्यङ्ग्यत्वेनापि हेतुर्विशेष्यत इत्यत आह ॥ **भिन्नेत्यादि** ॥

ननु कथं गोत्वाश्वत्वादौ हेतुसत्त्वम्। समानदेशत्वाभावादित्यत आह ॥ **जातिः सर्वगतेतीति** ॥ गोत्वस्य देशादिव्यवहितानेकगोपिण्डगतत्वपक्षे मध्यगताश्वादिपिण्डैः असम्बन्धायोगादश्वादावपि सम्बन्धेन तत्रापि वृत्तेरङ्गीकारस्य युक्तिसिद्धत्वात्। अश्वादौ गोत्वाद्यनुपलम्भस्य गोव्यक्तिरूपव्यञ्जकाभावेनोपपत्तेः। एवमश्वत्वादिजातिर्गवादिपिण्डसम्बद्धेति जातेः सर्वगतत्वात् समानदेशत्वमिति भावः।

उक्तं हि तत्त्वनिर्णयटीकायां ''गोत्त्वाश्वत्वादीनां प्रतिनियतव्यक्तिव्याप्यत्वस्य परैरपि स्वीकृतत्वात्, गोत्वादीनां व्यक्तिसर्वगतत्वेन समानदेशत्वं नास्तीति चेन्न। प्रत्यासत्तेरवर्जनीयत्वात्। समवायाभावस्य वर्णेष्वपि सत्त्वा''दित्यादि॥

नन्वितरनिरूपणानधीननिरूपणत्वे सतीत्यपि हेतुर्विशेष्यते। पूर्वोक्तव्यभिचारस्थळानि सर्वाण्यप्यन्यनिरूपणाधीननिरूपणान्येव, अतो हेत्वभावान्न व्यभिचार इति पूर्वपक्षे मण्युक्तमेव प्रतिपक्षदोषं चाह ॥ **वर्णा इति** ॥ परस्परव्यभिचारिणः प्रमापकाः ध्वनयस्तत्प्रमाप्यत्वेन साध्यसिद्धिः ॥ **आश्रयेणेति** ॥ शद्बस्येकेन्द्रियग्राह्यत्वेपि तार्किकमते वर्णाश्रयेण गगनेन सहैकेन्द्रियाग्राह्यत्वाद्गगनस्यातीन्द्रियत्वात् आश्रयग्राहकेन्द्रियाग्राह्यत्वादिति फलितार्थत्वान्नासिद्धिः॥

न चैवमसिद्धिवारकत्वात्सहेत्यन्तं व्यर्थम्, तद्विना कृतस्यैव व्याप्यत्वादिति वाच्यम्। असिद्धिवारकस्यापि व्यभिचारवाकस्येव सार्थक्यादित्युक्तत्वात्। अखण्डाभावेऽवैयर्थ्याच्च। शरीराजन्यत्ववत्॥

न च द्व्यणुकादौ व्यभिचार इति वाच्यम्। प्रत्यक्षत्वे सतीति हेतुविशेषणादित्येके। आश्रयाग्राहकेन्द्रियग्राह्यत्वादित्यर्थ इत्यन्ये ॥ **गन्धेति** ॥ गन्धरसयोर्घ्राणरसनग्राह्यत्वात्तदाश्रयस्य चक्षुरादिग्राह्यत्वाद्भिन्नप्रमापकप्रमाप्यत्वाच्च हेतुसाध्ययोरनुगमो व्यक्तः। सत्प्रतिपक्षता चेत्युपलक्षणम्। न्यायमते वर्णानां क्रमिकोत्पादित्वेनाव्याप्यवृत्तित्वेन च तुल्यदेशकालत्वाभावात्। एकावच्छेदेनेत्यादिहेतोरसिद्धिः। किञ्च तत्तद्वर्णमात्रविषयकसाक्षात्कारसम्भवाद्बाधश्चेत्यपि ध्येयम्॥

एकावच्छेदेनेति हेतावुपधी चाह ॥ **द्रव्येति** ॥ यत्र घटगतैकत्वपरिमाणयोरेकव्यञ्जकव्यङ्ग्यत्वं तत्र द्रव्यग्रहणेत्याद्युपाधी स्त इति साध्यव्यापकत्वम्। साधनवति पक्षे वर्णे द्रव्यग्रहणेत्याद्युक्तोपाधी नस्त इति साधनाव्यापकत्वं च व्यक्तमिति भावः॥

## तर्कताण्डवम्

**किं चैवं सति वर्णाः परस्परं व्यभिचार्युत्पादकोत्पाद्या न, अपाकजत्वे सति भूतविशेषगुणत्वात्, जलगतरूप-रसवदित्याद्यनुमानेनोत्पादकानियमोपि किं न साध्यते। जन्यजलगतरूपरसादीनां कारणगुणपूर्वकत्वेन तदुत्पादकानां परस्परव्यभिचाराभावात्। यदि फलबलाच्छब्दे उत्पादक-नैयत्यं तर्हि तत एव व्यञ्जकनैयत्यमप्यस्तु॥**

**किञ्चोत्पत्तिपक्षे कदम्बगोलकन्यायेन लाघवप्रत्य-भिज्ञाभ्यामनुगृहीतेन वीचीतरङ्गन्यायेन वा प्रतिपुरुषं प्रत्यु-च्चारणं क्षणमात्रस्थितिकवर्णधारायास्तत्प्रागभावानां तद् ध्वंसानामन्यत्रादृष्टस्य पूर्वपूर्ववर्णे उत्तरोत्तरवर्णोत्पादकत्वस्य, उत्तरोत्तरवर्णे च पूर्वपूर्ववर्णनाशकत्वस्य, अन्त्योपान्त्य-वर्णयोश्च सुन्दोपसुन्दन्यायेनान्योन्यं वध्यघातकभावस्य, अन्त्यशब्दे तु स्वोत्पत्तिचरमकारणस्योपान्त्यशब्दस्यैव स्वनाशचरमकारणत्वेन स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्ति-ध्वंसप्रतियोगित्वरूपबौद्धाङ्गीकृतक्षणिकत्वस्य च कल्पन-मित्यतिगौरवम्॥**

## न्यायदीपः

प्रागुक्तहेतोरनैकान्त्योक्तेर्हेत्वन्तरमाह॥ **अपाकजत्वे सतीति**॥ गुणत्वादित्युक्तौ भिन्नोत्पा-दकोत्पाद्ये घटादिगतसङ्ख्यापरिमाणादिसामान्यगुणे व्यभिचाराद्॥ **विशेषेति**॥ आत्मगुणेषु भिन्नोत्पादकोत्पाद्येषु ज्ञानादिष्वव्यभिचाराय॥ **भूतेति**॥ पृथिवीगतरूपादिष्वव्यभिचाराय सत्यन्तम्॥ दृष्टान्ते तु साध्यानुगतिं दर्शयति॥ **जन्येति**॥ समवायिकारणसमवायिकारणमात्र-प्रत्यासन्नगुणसमवायिकरणकत्वं कारणगुणपूर्वकत्वं नाम। तथा च जलसमवायिकरणगतरूप-रसादीनां परस्परव्यभिचारे कार्ये कुले रूपादयो न स्युरिति परस्परव्यभिचार्युत्पाद्यत्वाभावोस्तीति भावः॥ **फलेति**॥ एकवर्णोत्पादकेन तन्मात्रोत्पादरूपफलबलादित्यर्थः॥ **तत एवेति**॥

एकवर्णोपलम्भरूपफलबलादेवेत्यर्थः।

विपक्षे कल्पनागौरवाच्च वर्णानां नित्यत्वमुपेत्य प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुपेयमिति भावेन कल्पनागौरवादिति पूर्वोक्तं व्यनक्ति ॥ **किञ्चेत्यादिनातिगौरवमित्यन्तेन** ॥ **लाघवेति** ॥ दशसु दिक्षु दशविधशब्दोत्पत्त्यङ्गीकारादप्येकैकस्यैकस्यैव गकारादेः दशदिक्सम्बन्धिनः कल्पनस्यैव लघुत्वाल्लाघवयुक्त्या प्राच्यप्रतीच्ययोरेकत्वप्रत्यभिज्ञया चानुगृहीतेनेत्यर्थः। षष्ठ्यन्तानां कल्पनमित्यनेनान्वयः ।

## तर्कताण्डवम्

**नचेदं गौरवं फलमुखम्। फलस्याद्याप्यसिद्धेः। वर्णस्थले ध्वनिस्तु त्वयापि स्वीकार्य एव। दूरस्थस्य ध्वनिमात्रं मया श्रुतं न तु वर्ण इत्यनुभवात्। शब्दत्वं सजातीयव्यञ्जकव्यङ्ग्यवृत्तिबहिरिन्द्रियव्यवस्थापकवृत्तिजातित्वात् रूपत्ववदित्यनुमानाच्च। दृष्टं हि घटरूपकुङ्कुमगन्धादेः आलोकरूपघृतगन्धादिव्यङ्ग्यत्वम्॥**

**नच पूर्वपूर्ववर्णस्योत्तरोत्तरवर्णव्यञ्जकत्वेन वा वर्णस्यैव ध्वनिव्यञ्जकत्वेन वार्थान्तरमिति वाच्यम्। आदावेव श्रोत्रोत्पन्नं वर्णं प्रति पूर्ववर्णाभावात्। भेर्यादिध्वनिस्थले वर्णाननुभवाच्च॥**

**तस्माद् व्यञ्जकानां प्रतिनियतत्वान्न सर्वदोपलब्धिप्रसङ्गः। तदुक्तं भगवत्पादैः –**

**'अत आकाशगुणे शब्दे व्यज्यमाना वर्णादय'' इति।**

**वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वम् ॥ २७॥**

## न्यायदीपः

॥ **फलमुखमिति** ॥ वर्णोत्पत्तिलक्षणफलमेव मुखमुपस्थितिजनकं यस्य तत्फलमुखं तेनेत्यर्थः

**।। असिद्धेरिति ।।** येन गौरवं न दोषायेति स्यादिति भावः ।।

ननु वर्णनित्यत्वपक्षे व्यञ्जकध्वनिः वर्णभिन्नः कल्पनीयः, तस्योत्पत्तिस्थानात्कर्णदेशपर्यन्तं शब्दान्तरोत्पादकत्वमाशुतरविनाशित्वमित्यादिकल्पनीयमित्यत आह **।। वर्णस्थल इति ।।** ''दूराद्वर्णाग्रहणेपि। ध्वनिग्रहणादि''ति टीकोक्तमाह। दूरस्थस्येति। टीकोक्तेरुपलक्षणत्वं मत्वा ध्वनिसत्त्वेनुमानं चाह **।। शब्दत्वमिति ।।**

यद्वा वायुविशेषसंयोग एव वर्णव्यञ्जक इति पक्षं निरसितुमाह **।। शब्दत्वं इति ।।** सजातीयं यत्र व्यञ्जकध्वनिलक्षणमेव तद्व्यङ्ग्यवृत्तीत्यर्थः। जातित्वमात्रस्य घटत्वादौ व्यभिचारादि-न्द्रियेत्यादि। तावन्मात्रस्य ज्ञानत्वेच्छात्वादावपि सत्त्वाब्दहिरित्युक्तम्। प्रमेयत्वादाव्यभिचाराय **।। जातित्वादिति ।।** न च ध्वनित्वे व्यभिचारः। तारत्वादिना साङ्कर्येण तस्याजातित्वादित्याहुः। वर्णानामेवेन्द्रियव्यवस्थापकत्वं न ध्वनेरित्यन्ये ।।

रूपादेरालोकादिव्यङ्ग्यत्वात्साध्यवैकल्यमाशङ्क्य रूपत्वादौ साध्यानुगतिं व्यनक्ति **।। दृष्टं हीति ।।** शङ्कितद्वयमपि निराह **।। आदावेवेति ।। भेर्यादीति च ।। तदुक्तमिति ।।** प्रतिनियतव्यञ्जक-व्यङ्ग्यत्वं वर्णानामित्येतत्तत्त्वनिर्णय उक्तमित्यर्थः **।। अत इति ।।** प्रत्यभिज्ञाबलादित्यर्थः। आदिपदेन वर्णधर्मग्रहः।

वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वम् ।। २७ ।।

## वर्णानां नित्यत्वेऽपि क्रमोपपादनम्

### तर्कताण्डवम्

**नच नित्यत्वे कालादिकृतक्रमाभावादुच्चारणक्रमस्य च मौनिश्लोकादावभावादभिव्यक्तिक्रमस्य च लिप्यादि-दर्शनजनितसमूहालम्बनस्मृतिविषयवर्णेष्वभावात् क्रमहीन-वर्णमात्रस्य च राजाजारेत्यादौ भिन्नार्थबोधकत्वायोगात् घसमानकालीनप्रागभावप्रतियोगित्वं टस्य टसमानकालीन-ध्वंसप्रतियोगित्वं च घस्य क्रमो वाच्य इति वर्णनित्यत्वे क्रमानुभवो बाधक इति वाच्यम्।**

**यत्र मौनिश्लोकादौ वर्णोत्पत्तिरेव न यत्र च घटेति वक्तव्ये टघेति विपरीत एवोत्पत्तिक्रमः तत्र त्वदुक्तस्यापि क्रमस्य अभावात्। दृश्यते च टघेत्युक्तेः प्रामादिकत्वं जानतो व्युत्पन्नस्यार्थधीः।**

**यदि कालान्तरीयोत्पत्तिक्रमानुसन्धानात्तत्रार्थधीस्तर्हि समूहालम्बनस्मृतिस्थलेऽपि कालन्तरीयाभिव्यक्तिक्रमानुसन्धानादर्थधीरिति समम्॥**

## न्यायदीपः

तार्किकैकदेशमतं वर्णोत्पत्तिसाधनमाशङ्क्य निराह ॥ **न चेत्यादिना** ॥ यद्यपीदं मणावेव "यत्तु श्रोत्रानुविधानात्पदं श्रुणोमीत्यबाधितानुव्यवसाया" दित्यादिनाशङ्क्य निरस्तम्। तथापि दोषान्तरविवक्षया शिष्यव्युत्पादनाय च पुनरत्रोपन्यास इत्यदोषः। नित्यत्वे विभुत्वे च वर्णानामिति योज्यम्। प्रतिपदादितिथ्यादीनामिव कालकृतपौर्वापर्यस्य, मालाभूतबलाकानामिव देशकृतपौर्वापर्यस्य चाभावादित्यर्थः ॥ **समूहालम्बनेति** ॥ तत्रापि घटाद्यर्थधीदर्शनेन घटाद्यानुपूर्व्या वाच्यत्वादिति भावः॥

मास्तु क्रमः वर्णानामेवास्तु पदत्वमित्यत आह ॥ **क्रमहीनेति** ॥ अभिव्यक्तिक्रम एव वर्णानां पदे क्रम इति भावेन तत्रोक्तदोषं प्रतिबन्द्या परिजिहीर्षुः परोक्तक्रमदोषं तावदाह ॥ **यत्रेति** ॥ **उत्पत्तिरेव नेति** ॥ वर्णानामुच्चारणजन्यत्वात्तत्र च तदभावादिति भावः। तथाच तत्र प्रागभावादिप्रतियोगित्वमप्रामाणिकमिति क्रमः। विपरीतक्रमस्थलेतुव्यक्तम्।

ननु विपरीतक्रमस्थले घटानुपूर्व्येव नास्ति कथमव्याप्तिरित्यतस्तत्र घटार्थबोधरूपकार्यबलेन घटानुपूर्व्यस्तीति वाच्यमिति भावेनाह ॥ **दृश्यते चेति** ॥ **इति सममिति** ॥ तथा च घकाराभिव्यक्तिसमानकालीनप्रागभावप्रतियोग्यभिव्यक्तित्वं टस्य टकाराभिव्यक्तिसमानकालीनध्वंसप्रतियोग्यभिव्यक्तिकत्वं घकारस्येत्यादिरूपेण घटाद्यानुपूर्वी सम्भवत्येव॥

न च समूहालम्बनस्थले घटाद्यर्थधीदर्शनेन तत्र घटाद्यानुपूर्व्यामव्याप्तिरिति वाच्यम्। तत्रापि स्मृतकालान्तर्योक्तरूपानुपूर्व्या एवार्थधीजनकत्वेनादोषत्वादिति भावः॥

## तर्कताण्डवम्

**नचैवं पदादिभावस्याभिव्यक्तिघटितत्वे इदमेकं पटमित्यादिप्रतीतिः श्रावणी न स्यात्। पदाद्युपाधेरभिव्यक्तेः अश्रावणत्वादिति वाच्यम्। मनसोपनीतस्याभिव्यक्तिक्रमस्य श्रावणत्वोपपत्तेः ॥**

**तस्माद्वर्णानां नित्यत्वेन तदनित्यत्वरूपस्य बाधकस्य अभावान्नित्य एव वेदः ॥**

**अभ्युपेत्य चेदमुदितं वर्णानित्यत्वं वेदनित्यत्वबाधकमिति। वस्तुतस्तु वर्णानामनित्यत्वेपि नियतानुपूर्वीकत्वरूपस्य नित्यत्वस्य न हानिः। वर्णनित्यत्वोक्तिस्तु वस्तुस्थितिप्रदर्शनार्था। उक्तं हि सुधायां, ''वस्तुतत्त्वविचारकं प्रति वर्णानां कूटस्थनित्यत्वमुपपादितम्'' इति।**

**वर्णानां नित्यत्वेऽपि क्रमोपपादनम् ॥ २८ ॥**

## न्यायदीपः

अभिव्यक्तेरित्युपलक्षणम्। कालस्येत्यपि ज्ञेयम् ॥ **मनसेति** ॥ पररीत्या ध्येयम्। अभिव्यक्तेः ज्ञानत्वेन तस्य परमते मानसत्वात्। कालस्य चानुमानिकत्वात्। सिद्धान्ते तु साक्षिणेति ध्येयम्। ज्ञानसामान्यसामग्रीमादायानुपनीतोपि कालो भासत इति कैश्चिदङ्गीकाराक्तालो नोक्त इत्याहुः।

''ननु तथापि वर्णसमुदायरूपस्य वेदस्य न नित्यत्वमित्या''दिनोक्तचोद्यनिरासमुपसंहरति ॥ **तस्मादिति** ॥ **उक्तं हीति** ॥ ''प्रत्यक्षः कस्यचिद्धर्म'' इत्येतत्पद्यव्याख्यावसाने वर्णनित्यत्वस्य वेदनित्यत्वानुपयोगमुक्त्वा तर्हि तत्त्वनिर्णयेवर्णनित्यत्वं किमर्थमित्यतः तत्कथनस्य कृत्यमुक्तं सुधायामित्यर्थः।

वर्णानां नित्यत्वेपि क्रमोपपादनम् ॥ २८ ॥

वर्णनित्यत्ववादः समाप्तः

# समवायवादः

## समवाये प्रमाणभङ्गः

### तर्कताण्डवम्

**यच्चोच्यते। आकाशात्मकश्रोत्रगुणा वर्णाः समवायेन सम्बन्धेन गृह्यन्त इति तन्न। वर्णानां नित्यविभुद्रव्यत्वात् समावाये मानाभावाच्च॥**

**ननु यद्यपि समवाये प्रत्यक्षं न प्रमाणम्। इमौ संयुक्तावित्यादिवदिमौ समवेताविति वाऽनयोः समवाय इति वा अननुभावात्। समवायं जानामीत्यननुव्यवसायाच्च। रूपी घट इत्यादेश्चाभाववद्भूतलमित्यादिवदुपपत्तेः॥**

### न्यायदीपः

न "न्वाकाशगुणे शब्दे व्यज्यमाना वर्णादय" इति ध्वनेरेवाकाशगुणत्वोक्तिरयुक्ता। वर्णानामप्याकाशगुत्वात्। अन्यथा श्रोत्रेण सह सम्बन्धायोगेन वर्णग्रहणानुपपत्तेः। आकाशगुणत्वे त्वाकाशात्मकश्रोत्रेण तद्गुणस्य वर्णस्य समवायेन ग्रहणोपपत्तेरित्यतः संयोगसम्बन्धेनैव तद्ग्रह इति भावेन "समवायाभ्युपगमाच्चेति" सूत्रदूषितं समवायं निरसितुमाह ॥ **यच्चेति**॥ **नित्यविभुद्रव्यत्वादिति** ॥ अन्यथानुविधानाभावादिना घटादेरिव द्रव्यत्वस्य पूर्वोक्तदिशा नित्यत्वस्य, काश्यां श्रुत एव गकारोत्रापि श्रूयत इति प्रत्यभिज्ञानात्तावती वागिति श्रुतेर्विभुत्वस्य, च सिद्धेर्गुणत्वे मानाभावाच्चेत्यर्थः।

न च शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वाद्रूपवदित्यनुमानं गुणत्वे मानमिति वाच्यम्। ध्वनिशब्देन सिद्धसाधनत्वात्। वर्णात्मक इत्युक्तावपि हेतोरप्रयोजकत्वात्। घटादीनामेकेन्द्रियाग्राह्यत्वेप्यात्मनस्तथात्ववद्द्रव्यस्यैव सतो बाह्येन्द्रियग्राह्यत्वेपि विरोधाभावात्। निरवयवद्रव्यत्वे बाह्येन्द्रियग्राह्यत्वेपि बाधकाभावेन व्याप्त्यनिश्चयादिति सुधायामेव व्यक्तत्वादिति भावः यद्यपीत्यस्य तथापीति वक्ष्यमाणेनान्वयो ध्येयः॥

समवायवादे पूर्वपक्षे मण्युक्तदिशा निराह ॥ **इमाविति** ॥ अननुभवोऽसिद्ध इत्यत आह ॥ **समवायं जानामीति** ॥

यद्वा समवायो हि विशेषणत्वेन वा विशेष्यत्वेन वा अयं घट इतिवदयं समवाय इति समवायत्व-रूपस्वरूपेण वा संसर्गविधया वा भासेत। तत्राद्य आह ॥ **इमाविति** ॥ द्वितीय आह ॥ **अनयोरिति** ॥ तृतीय आह ॥ **समवायमिति** ॥ तथा च समवायत्वेन समवाय प्रत्यक्षमसिद्धमिति भावः। चतुर्थ आह ॥ **रूपीति** ॥ संसर्गविधयैव प्रतीयमानसम्बन्धस्याभावभूतलसम्बन्धवत् समवायभिन्न-सम्बन्धत्वेनाप्युपपत्त्या समवायत्वासिद्धेरित्यर्थः। ज्ञातंमिष्टमित्यादिप्रत्यय आदिपदार्थः

## तर्कताण्डवम्

**एतेनायं तन्तुपटसम्बन्धप्रत्ययश्चाक्षुषः चक्षुरन्वयव्यतिरेकानुविधायित्वात् घटप्रत्ययवदिति समवायप्रत्यक्षत्व-साधनमप्यपास्तम्। उपादानोपादेयाभेदवादे आश्रयासिद्धेः। तद्भेदवादेपि घटाभावभूतलयोरिवेहापि स्वरूपसम्बन्धस्य चाक्षुषत्वेनार्थान्तरात्॥**

**एतेन रूपी घट इति धीर्विशेषणविशेष्यसम्बन्धविषया विशिष्टधीत्वात् दण्डीति धीवत्; इह तन्तुषु पट इत्यादिरिह प्रत्ययः आधाराधेयसम्बन्धनिमित्तकः अबाधितेहप्रत्ययत्वात्। इह कुण्डे बदरमिति धीवत्; जात्यादिगोचरो विशिष्टव्यवहारः सम्बन्धनियतः भावमात्रविषयाबाधित-विशिष्टव्यवहारत्वात् सघटं भूतलमिति व्यवहारवत्; एते तन्तवः एतत्पटसम्बद्धाः एतदाश्रयत्वात् भूतलवत्; भूतलरूपादयो भूतलसम्बद्धाः भूतलविशेषणत्वात् घटवदित्याद्यनुमानमपास्तम्। स्वरूपसम्बन्धेनार्थान्तरात्। अयं संयोगः एतदन्यसंयोगत्वरहितसम्बन्धान्यः मेयत्वादित्यादि तु स्वव्याहतम्। रूपादिरिन्द्रियसम्बद्धः प्रत्यक्षत्वात् घट-वदित्यत्र तु अभावादाविव संयुक्तविशेषणतादिरूप-**

सम्बन्धेनार्थान्तरम्॥

## न्यायदीपः

॥ **सम्बन्धप्रत्यय इति** ॥ तन्तुषु पट इति संसर्गविधया तन्तुपटसम्बन्धविषयकः प्रत्यय इत्यर्थः। विशेषणत्वादिना तत्प्रत्ययस्यासिद्धेरुक्तत्वाद्वक्ष्यमाणार्थान्तरानवकाशाच्च। स्वरीत्याह ॥ **उपादानेति** ॥ पररीत्याह ॥ **तद्भेदेति** ॥

समवायसाधकप्राचीनानुमानान्याशङ्क्य मण्युक्तदोषोक्त्या निराह ॥ **एतेनेत्यादिना** ॥ भूतले अभावप्रत्ययवदन्यथोपपत्तिकथनेनेत्यर्थः। अपास्तमित्यन्वयः। भ्रमे व्यभिचारनिरासायाबाधितेति हेतुविशेषणोक्तिः ॥ **जात्यादीति** ॥ ब्राह्मणोयं, शुक्लः पटः, चलति गौः, विशिष्टः परमाणुरित्यादि-जातिगुणक्रियाविशेषविशिष्टव्यवहार इत्यर्थः ॥ **सम्बन्धनियत इति** ॥ स्वविषयसम्बन्धव्याप्त इत्यर्थः। तेन श्रोत्रादिसम्बन्धनैयत्येन नार्थान्तरम्। जातिरित्याद्यविशिष्टव्यवहारे अव्यभिचाराय विशिष्टेति हेतुविशेषणम्। इदं रूप्यामित्यादिबाधितसम्बन्धकविशिष्टव्यवहारे अव्यभिचाराय अबाधितेति। अभाववद्भूतलमित्यादिभावाभावगोचरतादृशव्यवहारेऽव्यभिचाराय ॥ **भावमात्रेति** ॥ **सघटमिति** ॥ संयोगस्तत्रसम्बन्ध इति भावः।

॥ **भूतलवदिति** ॥ संयोगसम्बन्धेन पटाश्रयभूतल-वदित्यर्थः। पक्षे च संयोगस्य बाधात् समवाय एव सिध्यतीति भावः। रूपवद्भूतलमिति प्रतीतिमनुरुध्याह ॥ **भूतलविशेषणत्वादिति** ॥ यद्वा भूतलविशेषणत्वादित्यस्य भूतलाश्रितत्वादित्यर्थः। अत एव घटवदित्युक्तिः। अन्यथा घटवद्भूतलमिति प्रतीयमानघटवदिति व्याख्येयम्।

॥ **स्वरूपसम्बन्धेनार्थान्तरादिति** ॥ न च स्वरूपाणामनेकत्वेन गौरवापत्तेः ईश्वरानुमाने कर्तैकत्ववल्लाघवादेकः समवाय एव सिध्यतीति वाच्यम्। तथात्वे अभाववद्भूतलं ज्ञातो घटः इष्टो घट इत्यादावपि तादृशसम्बन्धाङ्गीकारापत्तेः। तत्र तादृशसम्बन्धस्य बाधात्स्वरूपाणामनेकत्वेपि क्लृप्तत्वेन गौरवस्यादोषत्वात्। स्वरूपम्बन्धेनैव विशिष्टप्रत्ययाद्युपपत्तेर्नैकसम्बन्धकल्पनेति चेत्। समं प्रकृतेपि। विवविष्यते चैतदग्रे नापि गुणक्रियेत्यादिमण्युक्तानुमानान्तरखण्डनप्रस्ताव इति भावः ॥ **अयं संयोग इति** ॥ बुद्धिस्थः कश्चिद्घटपटसंयोगः पक्षः ॥ **एतदिति** ॥ पक्षभूतसंयोगपरामर्शः। एतदन्यो यः संयोगः एतदन्यसंयोगः स्तम्भकुम्भादिसंयोगस्तस्य भावः एतदन्यसंयोगत्वम्। तद्रहितो यः सम्बन्धः पक्षीकृतसंयोगस्तदन्यः कश्चित्सम्बन्धश्च भवति। तथा च पक्षे पक्षीकृतसंयोगान्यत्वस्य

बाधात् अपूर्वसम्बन्धान्तरादन्यत्वमादाय साध्यपर्यवसानमिति समवायसिद्धिः। दृष्टान्ते च घटादौ पक्षभूतसंयोगरूपसम्बन्धान्यत्वेन साध्यानुगमो बोध्य इत्यादि तु विशिष्टव्यतिरेक्यनुमानमित्यर्थः ॥ **स्वव्याहतमिति** ॥ अद्यापि समवायरूपसम्बन्धान्तरस्यासिद्ध्या तदादाय साध्यपर्यवसाने बाधात्स्वान्यत्वेनैव साध्यपर्यवसानं वाच्यम्। तद्व्याहतमित्यर्थः ॥

यद्वा एवमेव संयोगसमवायविशेषावपि पक्षीकृत्य एतदन्यसंयोगसमवायित्वरहित सम्बन्धान्यः मेयत्वाद्धटवत्, अयं घटः एतदन्यघटत्वरहितघटान्यः मेयत्वात्पटवदित्यादिप्रयोगस्यापि सम्भवेन संयोगसमवायान्यसम्बन्धः अपूर्वघटादिश्च सिध्येदिति स्वव्याहतमित्यर्थः ॥

अन्ये त्वित्यादिना मण्युक्तमेवाशङ्क्य निराह ॥ **रूपादिरिति** ॥ क्रियाजात्यादिरादिशब्दार्थः। प्रत्यक्षत्वात्प्रत्यक्षविषयत्वादित्यर्थः। अत्र संयोगबाधे इन्द्रियसम्बन्धघटकतया समवायसिद्धेरिति भावः ॥ **अभावादाविति** ॥ यथा अभाववद्भूतलमिति गृह्यमाणे घटाभावादिः चक्षुःसंयुक्तभूतल-विशेषणतया त्वन्मते गृह्यते यथा च घटादौ रूपादिसमवायः चक्षुः संयुक्तघाटादिविशेषणतया गृह्यते अभावसमवायाभ्यां चक्षुः समवायादेरभावात्। एवमेव रूपादिरप्यस्तु। तथा च समवायासिद्ध्या अर्थान्तरमित्यर्थः।

## तर्कताण्डवम्

**तथापि मण्युक्तं गुण्यादिना सह गुणक्रियाजाति-विशिष्टयथार्थबुद्धयः सम्बन्धिभिन्नसम्बन्धविषयाः निर्विकल्पकभावमात्रविषयकविशिष्टबुद्धित्वात् इतरनिरू-पणाऽनिरूप्यविषयकविशिष्टबुद्धित्वाद्वा दण्डीति बुद्धित्वदि-त्यनुमानमिति। तन्न। काले घटरूपमित्यादिप्रतीतौ व्यभि-चारात्। त्वन्मते घटगतस्य रूपस्य कालेन सह सम्बन्धिभिन्न-सम्बन्धाभावात्।**

**तदुक्तं भगवता सूत्रकृता। ''समवायाभ्युपगमाच्च साम्यादनवस्थिते''रिति। हेतोः पक्षसपक्षयोरिव काले घटरूपमितिप्रतीतिरूपविपक्षेपि सत्त्वसाम्यात्साध्येनैव सम्बन्ध इति व्यवस्थित्यभावादित्यर्थः।**

## न्यायदीपः

नव्यास्त्वित्यादिनोक्तमाह ।। **तथापि मण्युक्तमिति** ।। **गुण्यादिनेति** ।। क्रियावदादिरादिपदार्थः । भ्रमबुद्धिषु बाधवारणाय ।। **यथार्थेति** ।। आरोपितसम्बन्धविषयत्वेन अर्थान्तरवारणाय वा यथार्थेत्युक्तिः । गुणगुण्यादिसमूहालम्बने बाधनिरासाय ।। **विशिष्टेति** ।। विशेषणत्वावगाहीत्यर्थः । स्वरूपसम्बन्धेनार्थान्तरवारणाय साध्ये सम्बन्धिभिन्नेत्युक्तिः । आद्ये हेतौ निर्विकल्पकादावव्यभिचाराय विशिष्टेति विशेषणम् । अभाववद्भूतलमिति बुद्धाव्यभिचाराय ।। **भावमात्रविषयकेति** ।। ज्ञातो घट इत्यादिबुद्धावव्यभिचाराय ।। **निर्विषयकेति** ।। भावविशेषणम् ।। **इतरेति** ।। इतरनिरूपणेनानिरूप्यः विशेष्यविशेषणविषयकबुद्धित्वादित्यर्थः । अभाववद्भूतलं ज्ञातो घट इत्यादिबुद्धावव्यभिचाराय इतरनिरूपणानिरूप्येति । निरूपणं नाम ज्ञानमभिलपनं वा ।। **इत्यादीति** ।। इदानीमाकाशः वीणायां शब्द इत्यादिप्रतीतिरादिपदार्थः ।। **व्यभिचारादिति** ।। द्वयोरपि हेत्वोरिति भावः ।

उक्तप्रतीतौ साध्याभावं व्यनक्ति ।। **त्वन्मत इति** ।। स्वमते कालेन सह सर्वस्य वस्तुमात्रस्य संयोगे बाधकाभावात् त्वन्मत इत्युक्तिः । संयोगस्य सम्बन्धिना भिन्नाभिन्नत्वेन भिन्नत्वस्यापि सत्त्वात् ।

ननु बुद्धित्वादित्यस्य प्रत्यक्षत्वादित्यर्थ इति चेत् तथापि तादृशोपनीतप्रत्यक्षबुद्धौ व्यभिचारात् । नच लौकिकप्रत्यक्षबुद्धित्वादिति तदर्थ इति वाच्यम् । सुरभिचन्दनमित्याद्यलौकिकविशिष्टबुद्धौ भागासिद्धेः । तदन्यविशिष्टबुद्धिपक्षीकारे चार्थान्तरता । विशिष्टबुद्धिमात्रस्यैव तादृशसम्बन्धविषयकत्वे विवादात् । एवं सति निर्विषयकेति विशेषणवैयर्थ्यापत्तेश्च । ज्ञातो घट इत्यादिबुद्धावुपनीतज्ञानादिविशिष्टबुद्धेरलौकिकत्वादेव व्यभिचाराप्रसक्तेः ।

न च ज्ञानसत्त्ववेलायामात्मा ज्ञात इति वर्तमानविशिष्टात्मबुद्धौ दोषवशात्समवायसम्बन्धाभानेन विषयविषयिभावमात्रभानं तत्राव्यभिचाराय निर्विषयकेत्युक्तिरिति वाच्यम् । एवमपि रूपं समवेतमित्यादि समवायविशिष्टबुद्धौ त्वन्मते व्यभिचारापरिहारात् ।।

न च समवायासिद्धिदशायां तत्प्रतिम्नाधनं नेति वाच्यम् । आपाततः प्रतीतेः सम्बन्धे व्यभिचारं पश्यतो व्याप्तिग्रहवैमुख्येन तद्ग्रहासम्भवादिति वक्ष्यमाणदोषात् । वस्तुगत्या व्यभिचारजन्यानुमितेर्भ्रमत्वावश्यम्भावाच्च । विषयाबाधस्याद्याप्यसिद्ध्या विषयाबाधात् प्रमात्वमित्यस्यापि अयोगाच्चेति भावः ।

॥ **तदुक्तमिति** ॥ समवायसाधकहेतोरनेकान्त्यमित्येतत् समयपादे वैशेषिकाधिकरणे उक्तमित्यर्थः। ननु कथमेषोऽर्थः सूत्राक्षराल्लब्ध इत्यतः पूर्वभागस्य समवायाभ्युपगमाच्च वैशेषिकमतमसमञ्जसमिति व्यक्तमित्युपेत्य सुधाद्यनुक्तमुत्तरांशस्यार्थान्तरं स्वयं व्यनक्ति ॥ **हेतोरिति** ॥ सूत्रस्य विश्वतोमुखत्वान्नानेकार्थत्वं दोषः, प्रत्युत गुण एवेति भावः।

## तर्कताण्डवम्

**किञ्च समवायसिद्ध्यनन्तरमपि समवायेतरसम्बन्धि-भिन्नसम्बन्धविषया इत्यपि सुसाधम्, एवं तत्सिद्ध्यनन्तरं तदुभयेतरसम्बन्धिभिन्नसम्बन्धविषया इत्यपि सुसाधम्, एवं तत्सिद्ध्यनन्तरं तत्रितयेतरसम्बन्धिभिन्नसम्बन्धविषया इत्यपि सुसाधमिति सम्बन्धानन्त्यप्रसङ्गः ॥**

एतदप्युक्त''मनवस्थितेरि''ति साध्ये सम्बन्धिभिन्नेतिवत्सम्बन्धिसमवायभिन्नेत्यपि विशेष्टुं शक्यत्वसाम्यात्सम्बन्धानन्त्यप्रसङ्गादित्यर्थः ॥

**अपि च त्वदभिमते पटस्तन्तुसमवेत इति विशिष्टज्ञाने व्यभिचारः। तन्तुपटयोरिव समवायिसमवाययोरपि सम्बन्धान्तराङ्गीकारे त्वनवस्था। न च समवायस्य सिद्धौ व्यभिचारः किं करिष्यति असिद्धौ क्वानैकान्त्यमिति वाच्यम्। आपाततः प्रतीते सम्बन्धे व्यभिचारं पश्यतः व्याप्तिग्रहे वैमुख्येन तद्ग्रहासम्भवात्। अन्यथा तव निर्विकल्पकसाध्यके विशिष्टप्रत्ययत्वादिति हेतौ विशिष्टपदं व्यर्थं स्यात्।**

## न्यायदीपः

बुद्धिपदं लौकिकप्रत्यक्षपरमतो न दोष इत्यतो दोषान्तरं तर्कपराहतिमनुमानस्याह ॥ **किञ्चेति** ॥ समवायसिद्ध्यसिद्धिभ्यां तर्कपराहतेरपहतिरिति त्वापातत इत्यादिग्रन्थेन निरसिष्यत इति भावः ॥ **समवायेतरेति** ॥ सम्बन्धविशेषणम् ॥ **समवायानन्त्येति** ॥ द्वित्वसमवायसिद्ध्य-

नन्तरमपि तद्भिन्नेत्यपि सुवचत्वादिति भावः।

सुधोक्तं व्यभिचारमेवाह ॥ **अपि चेति** ॥ तन्तुसमवायविशेषण कपटविशेष्यकज्ञान इत्यर्थः। सुधोक्ते एव शङ्कोत्तरे आह ॥ **न चेत्यादिना** ॥ समवायस्यान्यनिरूपणनिरूप्यत्वाद्धेतावन्यनिरूपणा-निरूप्येत्युक्तत्वात् न व्यभिचार इति चेत्। आद्यहेत्वभिप्रायेणैवैतद्ग्रन्थप्रवृत्तेः। अत एव सुधोक्तव्यभिचारस्य पश्चादुक्तिः ॥ **व्यर्थमिति** ॥ जात्यादिविशिष्टप्रत्ययो विशेषणज्ञानजन्यः विशिष्टप्रत्ययत्वादित्यत्र विशिष्टपदस्य निर्विकल्पके व्यभिचारवारणार्थत्वात्। तत्रापि निर्विकल्प-कस्य सिद्धौ व्यभिचारः किं करिष्यति, असिद्धौ तु क्वानैकान्त्यमिति सुवचत्वादिति भावः। प्रथमपक्षवदिति। काले घटरूपमिति प्रतीतिरूपेतिपदस्थाने पटस्तन्तुसमवेत इति विशिष्टज्ञानरूपेति बोध्यम्। सुधायां तु ''अनवस्थितेरिति सूत्रमस्मिन् पक्षे कथं इत्थम्। यदि व्यभिचारपरिहाराय समवायस्यापि समवायान्तरमुपेयते तदाऽनवस्थिति''रिति योजितम्।

## तर्कताण्डवम्

**किञ्चाभाववद्भूतलमित्यभावविशिष्टबुद्धिवत् ज्ञातो घट इष्टो घट इति सविषयकज्ञानादिविशिष्टबुद्धिवच्च गुणादि-विशिष्टबुद्धेरपि स्वरूपसम्बन्धेनैवोपपत्त्या अप्रयोजकत्वम्।**

**अन्यथा हि ज्ञानेच्छाद्वेषकृतीनां स्वविषयैः सह विशिष्ट-सत्यबुद्धयः, असंयुक्तयुतसिद्धानां परस्परं विशिष्टसत्यबुद्धयो वा, सम्बन्धिभिन्नसम्बन्धविषयाः युतसिद्धविषयक-विशिष्टबुद्धित्वात् दण्डीति बुद्धिवदित्यनुमानेन युतसिद्धानां ज्ञानादीनां स्वविषयैः सह दण्डस्य पुरुषेणेव सम्बन्धि-भिन्नसम्बन्धः; अयुतसिद्धानां गुणादीनां तु गुण्यादिभिः सहाभावस्य भूतलेनेव स्वरूपसम्बन्ध इति विपरीतं स्यात्।**

## न्यायदीपः

हेतुद्वयस्याप्यप्रयोजकत्वं क्रमाद्दृष्टान्तोक्तिपूर्वकमाह ॥ **किञ्चेति** ॥ गुणादिविशिष्टबुद्धेरपी-त्यपिपदस्य भावमात्रविषयकत्वेपि इतरनिरूपणानिरूप्यविशिष्टबुद्धित्वेपीत्यर्थः। अनुकूलतर्कादेः

अभावादिति भावः।

अनुकूलतर्कादेरभावेप्यभावादिविशिष्टबुद्धिव्यावर्तकविशेषणयुक्तहेतुमात्रेणोक्तरूप-साध्यसाधनं चेत्तर्हि गुणादिविशिष्टबुद्धिव्यावर्तकविशेषणयुक्तहेतुमात्रेणाप्यभावादुक्तरूप-साध्यसिद्ध्यापातेन गुणादिविशिष्टबुद्धौ स्वरूपसम्बन्धोन्यत्राभावादिविशिष्टबुद्धावतिरिक्तसम्बन्ध इति स्यादित्याह ॥ **अन्यथेति** ॥ अभावादिविशिष्टबुद्धिव्यावर्तकविशेषणुयक्तहेतुमात्रेणोक्तरूप-साध्यसिद्धावित्यर्थः। वैपरीत्यं स्यादित्यन्वयः। वैपरीत्यं व्यनक्ति ॥ **ज्ञानेति** ॥ ज्ञातो घटः, दृष्टो घटः, द्विष्टः, कृत, इति ज्ञानादिविशेषणकघटादिविशेष्यकयथार्थबुद्धयं इत्यर्थः। आरोपितसन्बन्ध-विषयकत्वेनार्थान्तरवारणाय सत्येत्युक्तिः॥

अभावादिविशिष्टबुद्धावपि पक्षनिर्देशमाह ॥ **असंयुक्तेति** ॥ **परस्परविशिष्टेति** ॥ अभाववद्भूतलं डित्थोयं ज्ञातो घट इत्यादिविशिष्टयथार्थबुद्धयो वेत्यर्थः।

॥ **ज्ञानादीनामिति** ॥ ज्ञानेच्छाद्वेषकृत्यभावनाम्नामित्यर्थः ॥ **स्वविषयैरिति** ॥ ज्ञानाद्य-पेक्षयोक्तम्। अभावादेस्तु स्वविशेष्येण सहेति ज्ञेयम्॥

## तर्कताण्डवम्

**एवमसंयुक्तविषयकसत्यविशिष्टबुद्धयः सम्बन्धिभिन्न-सम्बन्धविषयाः विशिष्टबुद्धित्वात् दण्डीति बुद्धिवदि-त्यनुमानेन गुणादीनां गुण्यादिभिर्ज्ञानादीनां ज्ञेयादिभिर-भावस्य चाधिकरणेन सह दण्डस्य पुरुषेणेव सम्बन्धिभिन्न-सम्बन्धः सिद्ध्येत्। एवं च सम्बन्धिभिन्नसम्बन्धविषयत्वे विशिष्टबुद्धित्वस्यैव तन्त्रतया लाघवे नैकरूप्यं च भवति।**

**एतदप्युक्त ''मनवस्थिते''रिति। युतसिद्धत्वसाम्येपि ज्ञानादीनां स्वविषयैः सह स्वरूपसम्बन्धः चैत्रदण्डयोस्तु संयोगः; एवमयुतसिद्धत्वसाम्येपि भूतलाभावयोः स्वरूप-सम्बन्धः गुणगुण्यादेः समवाय; इत्यादित्वदुक्तव्यवस्थिति-भङ्गादित्यर्थः॥**

## न्यायदीपः

एवं वैपरीत्यमापाद्य सर्वत्रैकरूपलक्षणमतिप्रसङ्गान्तरमप्याह ॥ **एवमिति** ॥ अन्यथेत्यनुकर्षः। यथा वैपरीत्यं तथा हेतौ विशेषमात्रानुपादानेन सर्वत्रैकरूप्यमपि स्यादित्येवंशब्दार्थः। हेतोरप्रयोजकत्वं निरस्य फलितमाह ॥ **एवं चेति** ॥

## तर्कताण्डवम्

**नापि गुणक्रियाजातिविशिष्टसत्यबुद्धयः विशेषण सम्बन्धविषयाः विशिष्टबुद्धित्वात् दण्डीति बुद्धिवत्। ज्ञातो घट इत्यादिबुद्धिरपि स्वरूपसम्बन्धविषयेति न व्यभिचारः। न चात्रापि तेनैवार्थान्तरं स्वरूपाणामनन्ततया गौरवेण लाघवादेकस्यैव सम्बन्धस्य सिद्धेरिति वाच्यम्। समवायस्वरूपस्य च तद्गतसम्बन्धत्वस्य कल्पनादपि धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन सिद्धानां गुणादिस्वरूपाणां भूतलघटाभावादौ क्लृप्तस्य सम्बन्धत्वरूपधर्ममात्रस्य कल्पने लाघवात्॥**

**अन्यथा अभावमात्रविशिष्टसत्यबुद्धिं पक्षीकृत्य सम्बन्धविषयत्वसाधने लाघवादभावमात्रानुगत एको नित्यः सम्बन्धः सिध्येत्॥**

**एवमभावावयविगुणक्रियाजातिविशिष्टसत्यबुद्धिं ज्ञातो घट इत्यादिबुद्धिं च पक्षीकृत्य सम्बन्धविषयत्वसाधने लाघवादभावे गुणगुण्यादौ ज्ञानेच्छादौ चैको नित्यः सम्बन्धः सिद्ध्येत्। एतदप्युक्तं ''अनवस्थितेः'' इति। लाघवतर्कानुग्रहस्य धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायस्य च साम्येपि अभावादौ स्वरूपसम्बन्धः गुणादौ तु तदन्य इति व्यवस्थित्ययोगादित्यर्थः।**

## न्यायदीपः

उच्यत इत्यादिना मणिकृता सिद्धान्तितमनुमानान्तरं च निराह ॥ **नापीति** ॥ पूर्ववदेव सत्यपदकृत्यं बोध्यम्। तदुक्तरीत्यैव परिष्करोति ॥ **ज्ञात इत्यादिना** ॥ **एकस्येति** ॥ सकर्तृत्वानुमाने एकस्य कर्तुरिवेति भावः। अन्यथोपपत्तावपि लाघवतर्कानुसरणे प्रतिबन्दीरूपातिप्रसङ्गं चाह ॥ **अन्यथेति** ॥ मात्रपदं प्रागभावादिसर्वाभावपरम्।

नन्वत्र विशिष्टबुद्धित्वं सम्बन्धबुद्धित्वं वा सविकल्पकबुद्धित्वं वा द्वयोरपि सम्बन्धविषय-बुद्धिपर्यवसानेन साध्याविशेष इति चेन्न विशेषणधीजन्यबुद्धित्वं वा व्यावृत्तिबुद्धिजनकबुद्धित्व-मित्युपपत्तेः। अन्यथा तव प्रयोगेप्यस्य दोषः सा मान्यात्। विशेषणधीजन्यत्वस्य अविशिष्टव्यावृत्ति-धीजनकत्वस्य च बुद्धेः सम्बन्धविषयकत्वज्ञानं विना दुर्ज्ञानत्वं चेत्तावाप्येष दोषः समान एव। विशेषणताबुद्धिगोचरबुद्धित्वेन तद्ग्रहे च उपजीव्यत्वेन तस्यैव हेतुत्वमस्त्वित्येतदपि समानमिति भावः।

## तर्कताण्डवम्

**ननु तथात्वे पटाभाववति घटवति घटाभावधीः स्यात्। अभावमात्रे वैशिष्ट्यस्यैकत्वात्। एवं घटादेः स्वविषयकज्ञानादिना नित्यसम्बन्धवत्त्वे आत्मत्वं स्यादिति चेत्। तर्हि तवापि स्पर्शवति रूपाभाववति वायौ रूपधीः स्यात्। समवायस्यैकत्वात्। एवं घटादेरप्यात्मत्वं स्यात्। घटत्वसमवायस्यैव ज्ञानसमवायत्वादिति समम्॥**

**यदि च वायौ रूपसमवायस्य सत्त्वेपि रूपेण सह विशेषणताविशेषरूपसम्बन्धाभावात् रूपाऽप्रतीतिः। तर्हि भूतले घटसत्त्वकाले घटाभाववैशिष्ट्यस्य सत्त्वेपि घटाभावेन सह विशेषणताविशेषाभावात् घटाभावाप्रतीतिरिति समम्।**

**ननु रूपसमवायवत्यपि वायौ रूपाप्रतीतिरधिकरण-स्वभावात्। न चात्रतादृशः स्वभावः कल्प्यः। घटापसरणा-नन्तरं तत्रैव घटाभावप्रतीतेः। वायौ तु न कदापि रूपप्रतीति-**

**रिति चेत्। तर्हि घटेश्यामतादशायां भविष्यद्रक्तरूपसम-वायस्य सत्त्वेन तदा रक्तरूपधीः स्यादिति समम्। न चात्र वायाविवाधिकरणस्वभावः कल्प्यः। तत्रैव कदाचिद्-रक्तरूपप्रतीतेः।**

## न्यायदीपः

प्रतिबन्दीरूपेणाभावादिविशिष्टबुद्धावप्येकनित्यसम्बन्धापादनमयुक्तम्। तत्र बाधक-सत्त्वादिति भावेन मण्युक्तमेव बाधकमाशङ्कते ॥ **नन्विति** ॥ **तथात्वे** अभावादावेकनित्य-सम्बन्धसत्त्वे इत्यर्थः। घटाभावसम्बन्धसत्त्वोपपादनायोक्तम् ॥ **पटाभाववतीति** ॥ तादृशस्थले घटाभावबुद्धेरिष्टत्वनिरासायोक्तं ॥ **घटवतीति** ॥ **आत्मत्वं स्यादिति** ॥ आत्मनीवेति भावः। अतः समवायत्याग एव युक्त इति भावेन प्रतिबन्द्या समाधत्ते ॥ **तर्हि तवापीति** ॥ गुणादावेक-नित्यसम्बन्धवादिनोपीत्यर्थः।

''वायौ रूपसमवाये सत्यपि रूपात्यन्ताभावोस्ति। न घटे। कथमेवम्। अधिकरणस्वभावा-दबाधितरूपनिरूपप्रतीतेश्चेति'' मण्युक्तमाशङ्क्य निराह ॥ **ननु रूपसमवायवत्यपीति** ॥ अयोग्यत्व-रूपाधिकरणस्वभावादित्यर्थः ॥ **न चात्रेति** ॥ घटभावाधिकरणभूतलादावित्यर्थः। तथात्वे वायौ रूपस्येव भूतले घटाभावधीः कदापि न स्यादिति भावेनाह ॥ **घटापसरणेति** ॥ **कदाचिद्रक्तरूप-प्रतीतेरिति** ॥ वायाविव तत्राप्ययोग्यातालक्षणाधिकरणस्वभावकल्पने च सा न स्यादिति भावः ॥

## तर्कताण्डवम्

**ननु तदा रक्तरूपाभावात्तदप्रतीतिः। लौकिकप्रत्यक्षे विषयस्यापि हेतुत्वात्। तव तु घटापनयनकाले सतो घटाभावस्य घटोपनयनकालेपि सत्त्वेन तत्प्रतीतिर्दुर्वारा। न हि घटसत्त्वकाले घटाभावोऽन्यत्र गतः। अमूर्तत्वात्। नापि नष्टः। नित्यत्वादिति चेन्न। मया घटोपनयापनयकाले भूतले घटसंयोगतदभावयोरेव स्वीकृतत्वेन अपनयकाले सतः संयोगाभावस्योपनयनकाले अभावात्॥**

## न्यायदीपः

ननु आमघटे श्यामतादशायां रक्तरूपधीरुपनीतप्रत्यक्षरूपापाद्यतेऽथ लौकिकप्रत्यक्षरूपा। नाद्यः। इष्टापत्तेः। अन्त्ये विषयसत्त्वस्य तत्र हेतुत्वेन तदभावादेव तत्र रक्तरूपाप्रत्यक्षतोपपत्तेरिति भावेन पक्षधराद्युक्तमाङ्क्य निराह ।। **नन्वित्यादिना** ।। मयाप्येवं वक्तुं शक्यमित्यत आह ।। **तव त्विति** ।। अभावविशिष्टबुद्धावप्येकनित्यसम्बन्धवादिन इत्यर्थः।

।। **काल इति** ।। कालयोरित्यर्थः ।। **स्वीकृतत्वेनेति** ।। "एतद्घटैतद्भूतलसंसर्गाभावस्यापि यथासम्भवं प्रागभावादिष्वन्तर्भावादिति" तत्त्वसङ्ख्यानटीकोक्तेः। तथैव वर्धमानाद्युक्तेश्च। विवृतश्चायमर्थो न्यायामृते असतो निषेधप्रतियोगित्वसमर्थनवादे इति भावः।।

।। **अभावादिति** ।। ननु उपनेष्यमाणघटसंयोगस्य पूर्वं सतोऽभावस्य प्रागभावत्वेन पश्चात् तदभावेपि प्राक्सतो घटस्यापयनकाले सतोऽभावस्य घटसंयोगध्वंसरूपत्वेन तस्य घटोपनयकालेपि सत्त्वात् कथमप्रतीतिरिति चेत् न। प्राचीनघटसंयोगध्वंसमादायेदानीं घटवत्यपि प्रतीत्यापादन इष्टापत्तेः। पूर्वं घटोत्रस्थ एवान्यत्रापनीतः पुनरत्रोपनीत इति प्रतीत्यान्यत्र नीत इति प्रतीतेरेव तत्प्रतीतित्वादिति भावः।।

## तर्कताण्डवम्

**किञ्च त्वद्रीत्याश्रयणेपि किमत्यन्ताभावस्य धीरापाद्यते उत्पादविनाशशीलस्य तुरीयाभावस्य वा। नाद्यः। तस्य त्वत्पक्षे घटकालेपि स्वरूपात्मकप्रत्यासत्त्या तत्र सत्त्वेन तत्प्रतीतेर्दुर्वारत्वात्।**

**नान्त्यः। श्यामतादशायां रक्तरूपस्येव घटसत्त्वकाले तुरीयाभावस्य सत्त्वेन साम्यात्। रक्तरूपस्यापि श्यामतादशायामेव जपाकुसुमादौ सत्त्वाच्च। इह नास्तीति चेत्। विशेषणे तस्य विशेष्येण संसर्गे च सति विशेष्ये विशेषणाभावस्यासम्भवात्। नहि प्रतियोगिनि रूपे प्रतियोगितावच्छेदकसंसर्गे च सति रूपसंसर्गाभावः सम्भवी।।**

## न्यायदीपः

नन्वस्त्वेवं भूतलघटो नेति धीस्तत्संयोगाभावविषयेति भवदभिमते दोषाभावः, तार्किकमते भट्टादिमते च स्यादेव दोष इत्यत आह ॥ **किञ्चेति** ॥ **त्वद्रीत्येति** ॥ मणिकृद्रीत्येत्यर्थः ॥

ननु प्राचीनरीत्यापि इह भूतले घटो नास्तीति तत्संयोगो निषिध्यत इत्युदयनोक्तेः उत्पादविनाशशीलोपि प्रागभावादित्रितयान्यश्चतुर्थः कश्चित्संसर्गाभावोस्तीति मतेनाह ॥ **उत्पादविनाशेति** ॥ उक्तं च वर्धमानेन "प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात् संयुक्तघटाभावोयं विशिष्टान्तराभाववदुत्पादविनाशशीलोन्य एवेति" ॥

॥ **स्वरूपात्मकेति** ॥ एतेन तदानीन्तनयोर्विशिष्टप्रत्ययजननयोग्यत्वाभावात् न स्वरूपप्रत्यासत्तित्वमिति निरस्तम्। द्वयोः स्वरूपसत्त्वे प्रत्यासत्तित्वं नेत्यस्य रिक्तवचनत्वात् ॥

यदुक्तं वर्धमानेन घटात्यन्ताभावस्य भूतलेन सह तत्संयोगध्वंसादिरेव सम्बन्ध इति न तदा प्रतीत्यापत्तिरिति। तन्न। अभावाधिकरणयोः सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वरूपक्लृप्तसम्बन्धत्यागेनार्थसंयोगध्वंसादेः सम्बन्धत्वकल्पने घटस्य कपालेष्वत्यन्ताभावः स्यात्। घटभावे त्वाश्रयाश्रयिभावध्वंसादिरूपसम्बन्धाभावादप्रतीत्युपपत्त्या बाधकाभावात्। तथा च घटाद्यत्यन्ताभावस्याप्याकाशाद्यत्यन्ताभावस्येव केवलान्वयित्वापत्तेरिति भावः ॥

यत्तु तदा रक्तरूपाभावादप्रतीतिरिति पूर्वमुक्तं तन्न। घटे श्यामतादशायां जपाकुसुमे रक्तरूपभावात्। घटो रक्त इति धीरवर्जनीयैव। समवायस्यैकत्वेन श्यामरूपसमावायस्य घटे सत्त्वे तदानीमेवान्यत्र विद्यमानरक्तरूपसमवायस्यापि सत्त्वादिति भावेनाह ॥ **रक्तरूपस्यापीति** ॥ **इहेति** ॥ घटे रक्तरूपं नास्तीति चेदित्यर्थः ॥ **विशेषण इति** ॥ सतीत्यन्वयः ॥ **तस्य** ॥ विशेषणस्य ॥ **प्रतियोगितावच्छेदक इति** ॥ रूपं न समवेतमित्यत्र संसर्गस्यावच्छेदकत्वादेवमुक्तम् ॥

## तर्कताण्डवम्

**किञ्च रूपसमवायवतोपि वायो रूपराहित्यस्वभाववत् प्रतियोगिमदधिकरणस्यापि प्रतियोगिकाले स्वस्मिन् तत्प्रतियोगिकाभावविशिष्टप्रमित्यजनकत्वस्वभावः कल्प्यताम्।**

**अपिच यथा तव चत्वरीयाभावगेहस्वरूपयोर्न प्रतियोगिकाले सम्बन्धत्वं तदाऽभावाप्रतीतेः, किन्तु कदाचिदेव, तथा घटसत्त्वकाले वैशिष्ट्यस्य सत्त्वेपि न तदा तस्य सम्बन्धत्वमिति। न घटवति घटाभावधीप्रसङ्गः।**

## न्यायदीपः

पूर्वं परीतिमाश्रित्य प्रतिबन्द्या अभावप्रतीत्यापादनमयुक्तमित्युक्तम्, इदानीं भूतलाभावयोः नित्यसम्बन्धसत्त्वेपि घटदशायामप्रतीत्युपपादकमाह ॥ **किञ्चेति** ॥ प्रतियोगिकाल इत्याद्युक्त्या न चात्र तादृशः स्वभावः कल्प्यः घटापसरणानन्तरं घटाभावप्रतीतेरित्युक्तदोषोऽपास्तो ध्येयः ॥

अत्यन्ताभावस्वीकारवादिना त्वया भूतले घटाभावस्य घटदशायां सतोप्यप्रतीतेरुपपादकत्वेन प्रतियोगिदेशान्यदेशत्वं वा तत्संयोगध्वंसादिरूपो वा सम्बन्धो नेत्युच्यते यथा, तथैवात्र नित्यसम्बन्धपक्षेप्यस्तु तथा च घटापसरणानन्तरमभावधीर्न स्यादितिशङ्कानवकाशोपीत्याह ॥ **अपि चेति** ॥ **चत्वरीयः** ॥ चत्वरनिष्ठो योऽभावः यच्च गृहं तयोर्ये स्वरूपे तयोर्ग्रहे पटादिलक्षणप्रति-योगिकाले सम्बन्धत्वं नास्ति यथा तथा कादाचित्कप्रतीत्यन्यथानुपपत्त्या प्रकृतेप्यस्त्वित्यर्थः।

## तर्कताण्डवम्

**ननु अभावस्य स्वाश्रयेण नित्यसम्बन्धश्चेत् ध्वंसस्यापि स्वाश्रयनाशेन नाशापत्त्या घटोन्मज्जनं स्यात्। कार्यनाशं प्रति नित्यसम्बन्धवत्कारणनाशरूपं समान्यमेव तन्त्रम्। न तु तद्विशेषसमवायिनाशः। असति बाधके सामान्यस्य त्यागायोगात्। किञ्च समवायत्वं न जातिः, किं तु वैशिष्ट्यान्यनित्यसम्बन्धत्वमिति कल्पनीयत्वाद्गौरवमिति चेन्न। तथा सति ध्वंसातिरिक्ताभावे वैशिष्ट्याभ्युपगमे बाधकाभावात्। नचैकस्मिन्नभावे स्वरूपसम्बन्धश्चेदभावा-न्तरेपि तथा। भावेपि ज्ञातो घट इत्यादौ स्वरूपस्य सम्बन्धत्वे रूपे घट इत्यादावपि तथात्वापत्तेः॥**

## न्यायदीपः

एवमभावविशिष्टबुद्धावप्येको नित्यः कश्चित्सम्बन्धः सिद्धः स्यादित्युक्तप्रतिबन्द्या घटदशायामपि घटाभावाधीः स्यादिति मण्याद्युक्तं बाधकं निरस्येदानीं बाधकान्तरमप्याशङ्क्य निराह **।। नन्वभावस्येत्यादिना ।।**

ननु आश्रयनाशहेतुककार्यनाशे समवायिकारणनाश एव प्रयोजकः। पटादौ तथा दर्शनात्। एवं च ध्वंसरूपकार्यनाशः स्वनिरूपितनित्यसम्बन्धयुक्तस्वाश्रयस्य नाशमात्रेण कथं चोद्यते। न हि विशिष्टबुद्धित्वहेतुना अभावविशिष्टबुद्धौ सिद्ध्यन् समवायो भवति। अयुतसिद्धत्वाभावात्। किं तु तदन्यः कश्चिदेव। तथा च कथमेवमापादनमित्यत आह **।। कार्यनाशं प्रति हीति ।।** न केवलं त्यागे कारणाभावो, गौरवं चास्तीत्याह **।। किञ्चेति ।। न जातिरिति ।।** एकव्यक्तित्वादिति भावः। अभावादिविशिष्टबुद्धौ यद् वैशिष्ट्यं तदन्यनित्यसम्बन्धित्वमित्यर्थः **।। न चेति ।।** अभावान्तरेपि तथा न चेत्यन्वयः। कुत इत्यत आह **।। भावेपीति ।।** तथात्वापत्तेरित्यन्वयः। युतसिद्धत्वायुत-सिद्धत्वादिना भावपदार्थेषु वैषम्यं चेदभावेष्वपि कार्यत्वाकार्यत्वादिना वैषम्यमिति समम्।

ननु ज्ञानादेर्घटेन नित्यसम्बन्धे सदा घटप्रकाशः स्यादिति चेत्। रूपादेर्घटादिना नित्यसम्बन्धे सदा घटे श्यामरक्तरूपादिधीप्रसङ्गः स्यादिति समम्। श्यामरूपादेः कादाचित्कत्वान्न दोष इति चेत्। ज्ञानादेरपि तथात्वादिति तुल्यम्। किं च यथाकथञ्चिद् बाधकवशाद्भावे द्वैरूप्यं चेदभावेप्युक्तादेव बाधकाद् द्वैरूप्यमस्त्विति सामान्यमेवेति भावः।।

## तर्कताण्डवम्

**किञ्च यदि लाघवान्नित्यसम्बन्धिकारणनाशः कार्यनाशे तन्त्रं तर्हि ततोपि लाघवान्नित्यसम्बन्धिनाश एव तत्र तन्त्रं स्यात्। न चेष्टापत्तिः।**

**घटनाशेन पटरूपनाशापत्तेः। भवति हि पटरूपाहेतुरपि घटः पटरूपसमवायी। एवं सम्बन्धस्य नाश्यत्वे सम्बन्धत्वमेव तन्त्रम्, लाघवात्, न तु तद्विशेषः संयोगत्व-मिति समवायस्यापि नाशः स्यात्।।**

**यदि च समवायरक्षार्थं तत्र कारणत्वादिकं विशेषणं तर्हि वैशिष्ट्यरक्षार्थं वैशिष्ट्यान्यत्वविशेषणमप्यस्तु। साम्यात्।**

**केचित्तु समवायिकरणनाशस्य हेतुत्वकल्पने समवायत्वं न प्रविष्टम्। येन गौरवं स्यात्। किं त्वनतिप्रसक्तमुण्डित-समवायव्यक्तिमात्रमित्याहुः॥**

## न्यायदीपः

नन्वयुतसिद्धभावमात्रे अस्त्यैकरूप्यं, संसर्गाभावमात्रे नास्त्यैकरूप्यं, ध्वंसातिरिक्ताभाव एव नित्यसम्बन्धोपगमादित्यतो, अभावमात्र एवास्तु नित्यसम्बन्धः, न चोक्तदोषः, कार्यनाशं प्रति समवायिकारणनाशस्यैव प्रयोजकत्वाद्गौरवस्य चाकिञ्चित्करत्वादिति भावेन कार्यनाशं प्रति हीत्यादिनोक्तं निराह॥ **किञ्चेति**॥ **नित्यसम्बन्धीति**॥ नित्यो यः सम्बन्धः तद्युक्त इत्यर्थः॥ **ततोपि लाघवादिति**॥ कारणपदत्यागादिति भावः॥

कार्यनाशे समवायिनाशस्य तन्त्रत्वमनुक्त्वा नित्यसम्बन्धिनाशस्यैव लाघवेन प्रयोजकत्वस्वीकारेतिप्रसङ्गान्तरं चाह॥ **एवमिति**॥ लाघवमनुसृत्य विशेषत्यागेन सामान्यादेरसति कार्यनाशे नित्यसम्बन्धिनाशवत् सम्बन्धनाशे सम्बन्धत्वमेव तन्त्रं स्यादित्यर्थः॥ **तत्रेति**॥ नाशप्रयोजकसम्बन्धत्वे कारणीभूतसम्बन्धत्वं समवायान्यसम्बन्धत्वमिति बिशेषणं यदीत्यर्थः॥ **वैशिष्ट्येति**॥ अभावविशिष्टबुद्धिविषयीभूतवैशिष्ट्यान्यसम्बन्धत्वमेव सम्बन्धनाशे तन्त्रमित्यस्तु। एवं चाभावेपि नित्यसम्बन्धः स्यादेवेति भावः॥

कार्यनाशे समवायनाशो हेतुरित्यत्र किञ्च समवायत्वमित्यादिना यद्गौरवमुक्तं तदुद्धारं प्रकारान्तरेणाह॥ **केचित्त्विति**॥ समवायत्वाप्रवेशेपि सम्बन्धत्वेनाप्रवेशे किञ्चिद्युक्तकारण-नाशस्तन्त्रमित्यपि प्राप्त्यातिप्रसङ्गेन नित्यकारणभूतसम्बन्धवन्नाशस्तन्त्रमित्येव वाच्यत्वात् किमनेनेत्यरुचिबीजमत्रेति ध्येयम्॥

## तर्कताण्डवम्

**एतेनैव सत्यलौकिकप्रत्यक्षजातिगुणक्रियाविशिष्ट-बुद्धयः विशेषणसम्बन्धनिमित्तकाः सत्यलौकिकप्रत्यक्ष-**

**विशिष्टबुद्धित्वात्। दण्डीति सत्यलौकिकप्रत्यक्षबुद्धिवत्। अत्र च क्षित्यादौ कर्तेव लाघवाद्विशेषणसम्बन्धोपि एक एव सिध्यति। अनुगतकार्यस्यानुगतकारणजन्यत्वात्। स्वरूप-सम्बन्धानामननुगतत्वाच्च। अत एव नाप्रयोजकता। सम्बन्धं विनापि विशिष्टबुद्धौ गवाश्वादावपि तत्प्रसङ्गादिति निरस्तम्। अभावादौ क्लृप्तेन स्वरूपसम्बन्धत्वेनानुगतीकृतानां गुणादिस्वरूपाणामेवानुगतकार्यहेतुत्वोपपत्तेः। तस्माद-भावादाविव गुणादावपि धर्मिकल्पनात इति न्यायसाम्येन स्वरूपमेव सम्बन्धः।**

## न्यायदीपः

एवमभावविशिष्टप्रतिबन्दीदुरुद्धारेत्यभावस्थल इव क्लृप्तस्वरूपसम्बन्धेनैव विशिष्टप्रतीत्युप-पत्तौ न समवायकल्पनेत्युक्त्वा विशिष्टबुद्धित्वादिति हेतुरप्रयोजक इति निरस्येदानी "मथवा सम्बन्धविशेषनिमित्तका इति साध्य"मित्यादिना मण्युक्तमनुमानान्तरं चानूद्य निराह ॥ **एतेनेति** ॥ स्वरूपसम्बन्धेनैवान्यथोपपत्तिकथनेनेत्यर्थः। निरस्तमित्यन्वयः ॥

हेतौ च सत्यत्वं विशेषणमिति मण्युक्त्यैव पक्षेपि तदनुमतमिति भावेन सत्यपदम्। तत् कृत्यं पूर्ववत्। मणौ विशिष्टबुद्धय इत्येव पक्षोक्तावप्यत्र पक्षहेतुदृष्टान्तेषु विशिष्टबुद्धिपदं लौकिकप्रत्यक्षपरमिति तट्टीकोक्तेर्लौकिकेत्याद्युक्तिः। अलौकिकप्रत्यक्षे बाधनिरासाय ॥ **लौकिकेति** ॥ अनुमित्यादौ बाधनिरासाय ॥ **प्रत्यक्षेति** ॥ निर्विकल्पके तन्निरासाय विशिष्टपदम्। भ्रमे व्यभिचारवारणाय हेतौ सत्यपदम्। साध्यसाधनतावैकल्याय दृष्टान्तविशेषणानि।

तावता समवायसिद्धिः कुत इत्यत आह ॥ **अत्र चेति** ॥ पक्षधराद्युक्तमाह ॥ **क्षित्यादौ कर्तेवेति** ॥ अत एवेत्युक्तं हेतूच्छेद(क)बाधकं व्यनक्ति ॥ **सम्बन्धमिति** ॥

सम्बन्धनिमित्तका इत्यत्र सम्बन्धस्य निमित्तत्वं किं विषयत्वेनाथ समवायत्वेन आद्ये गुणादिस्वरूपाणामेव केनचिद्धर्मेणानुगतानां तथा हेतुत्वमस्तु। किं समवायेन। अन्त्ये तु समवायत्वं नित्यसम्बन्धत्वं तथा च लाघवेन सम्बन्धत्वेनैव हेतुत्वमस्तु। तच्च स्वरूपसम्बन्धसाधारणमिति तेनानुगतीकृतानां गुणादीनामेव हेतुत्वमस्तु।

अवच्छेदकलाघवे व्यक्तिगौरवस्यादोषत्वादिति भावेन निराह ।। **अभावादाविति** ।। आदिपदेन तन्मतसिद्धसमवायविशिष्टबुद्धिपरिग्रहः।

एतच्च सत्यलौकिकजात्यादिविशिष्टप्रत्यक्षत्वं कार्यतावच्छेदकमुपेत्योक्तम्। वस्तुतस्तु तादृशानुमितित्वादिकमिव तादृशप्रत्यक्षत्वमपि नावच्छेदकं मानाभावात्। स्वावच्छिन्नकार्यता-निरूपितानुगतैककारणासिद्ध्या अनित्यप्रमात्वानित्यप्रत्यक्षत्वादेरिव बाधकोपपन्नत्वेनाव-च्छेदकत्वासम्भवाच्च। न च नित्यैकरूपसम्बन्धरूपसमेवाय एवानुगतकारणमिति युक्तम्। अन्योन्याश्रयापत्तेः। विषयस्य प्रत्यक्षं प्रत्यहेतुत्वस्य प्रामाण्यवादे व्युत्पादनाच्चेति ज्ञेयम्।।

## तर्कताण्डवम्

**यत्तु युतसिद्धसम्बन्धिद्वयविषयाणां दण्डादिविशिष्ट-बुद्धीनामिवायुतसिद्धसम्बन्धिद्वयविषयाणां अवयविगुण-क्रियाजातिविशिष्टबुद्धीनामन्योन्यं स्फुटतरविवेकप्रकाश-राहित्यरूपं साजात्यमन्यविशिष्टबुद्धितो व्यावृत्तमनुभव-साक्षिकम्। तथा च दण्डादिविशिष्टप्रतीतिं प्रति संयोग इव गुणादिविशिष्टप्रत्यक्षप्रतीतिरूपमनुगतकार्यं प्रति निमित्ततया समवायः सिध्यतीति। तन्न।**

**तस्य भेदाविषयत्वेन, स्फुटतरप्रकाशसामग्रीराहित्येन वा, त्वदभिमतसमवायनियामकायुतसिद्धविषयत्वे वा, भेदाऽभेदविषयत्वेन वा, सविशेषाभेदविषयत्वेन वोपपत्तेः ।।**

## न्यायदीपः

पक्षधराद्युक्तमनूद्य निराह ।। **यत्त्वित्यादिना** ।। **अन्योन्यमिति** ।। अवयवावयविविशिष्ट-बुद्धेर्गुणादिविशिष्टबुद्ध्या तस्याः जातिविशिष्टबुद्ध्या जातिविशिष्टबुद्धेः गुणविशिष्टबुद्ध्येत्यादि-रूपेणान्योन्यं साजात्यमित्यन्वयः ।।

तत्स्वरूपमाह ।। **स्फुटतरेति** ।। विवेको भेदः। तद्विषयकत्वराहित्यरूपमित्यर्थः। अवयवा-वयव्यादेरन्योन्यं भेदस्याङ्गुलिद्वयवदप्रतीतेरिति भावः ।। **अन्येति** ।। दण्डीकुण्डलीत्यादिविशिष्ट-

बुद्धीनामन्योन्यं साजात्यमिवेहायुतसिद्धविशिष्टबुद्धीनामन्योन्यसाजात्येपि दण्डीत्यादिबुद्धितो व्यावृत्तं तादृशबुद्धाववविद्यमानं अनुभवसाक्षिकमस्तीत्यर्थः।

तादृशं साजात्यं अन्यतो व्यावृत्तं गुणक्रियादिविशिष्टबुद्धिगतमनुभवसिद्धमुक्तम्। तत्किं जातिकृतमुत स्फुटतरविवेकप्रकाशराहित्यरूपमेव बाधविषयविशेषकृतं वा। नाद्यः जातित्वे मानाभावात्। तादृशानुमितित्वादिना साङ्कर्यापत्तेश्च। द्वितीये समवायेन विनापि तादृशविशिष्ट-बुद्धित्वस्योपपत्तेरप्रयोजको हेतुरिति भावेन तादृशविशिष्टबुद्धेः अन्यथासिद्धिमाह ।। **तस्येति** ।। अवयव्यादिविशिष्टबुद्धिगतसाजात्यस्येत्यर्थः। तृतीयं प्रत्याचष्टे ।। **त्वदिति** ।। त्वदभिमता या समवायनियामकायुतसिद्धिरित्यर्थः ।।

ननु नित्यसम्बन्धित्वमेवायुतसिद्धिरित्यतोऽयावद्द्रव्यभाविगुणक्रियावयव्याद्यभिप्रायेण विषयान्तरमाह ।। **भेदाभेदेति** ।। यावद्द्रव्यभाविगुणाद्याशयेनाह ।। **सविशेषेति** ।।

## तर्कताण्डवम्

**अभावप्रतियोगिनोर्ज्ञानज्ञेयादीनां च विवेकप्रकाशस्य स्फुटतया न्यायसाम्येन तत्र संयोगापत्तेश्च ।।**

**अभावाधिकरणयोस्तन्मते सुवर्णतदुपष्टम्भकपीत-द्रव्ययोश्च विवेकप्रकाशस्यास्फुटत्वेन न्यायसाम्येन तत्र समवायापत्तेश्च ।।**

**युतसिद्धेषु संयोगस्येवायुतसिद्धेषु समवायस्यापि न्यायसाम्येन नानात्वापाताच्च। तस्मान्न समवाये प्रमाणमस्तीति।**

**समवाये प्रमाणभङ्गः ।। २९ ।।**

## न्यायदीपः

यद्वाद्या विषयोक्तिर्न्यायमतरीत्या द्वितीया मीमांसकरीत्या तृतीया सिद्धान्तरीत्येति ध्येयम्। तन्तुपटादिबुद्धिः कुण्डेबदरादिबुद्धेर्विलक्षणेत्यभेदविषयैवावसीयत इति सुधोक्तेरिति भावः। एवं

वदता त्वया स्फुटतरविवेकप्रकाशोपेतविशिष्टबुद्धौ संयोग इत्युक्तः स्यात्। तच्चायुक्तमित्याह **॥ अभावेति ॥** आदिपदेनेच्छेष्यमाणादेर्ग्रहः **॥ न्यायेति ॥** स्फुटतरविवेकप्रकाशराहित्यस्थले समवाय इतिवत् तादृशंप्रकाशवद्विशिष्टबुद्धौ दण्डीत्यादिबुद्धाविव संयोगः स्यादित्यर्थः **॥ नानात्वेति ॥** उक्तप्रकाशराहित्यरूपसाजात्यस्यानुगतस्य दण्डीत्यादिबुद्धौ सत्त्वेपि तत्र संयोगनानात्ववत् समवायस्यापि नानात्वापत्तेरित्यर्थः।

यत्त्वाश्रयनाशजन्यकार्यनाशस्थले कार्यनाशं प्रति समवायिरूपाश्रयनाश एव हेतुर्वाच्यो न त्वाश्रयमात्रनाशः। तथात्वे कपालनिष्ठघटध्वंसस्य कपालनाशेनापि नाशप्रसङ्गेन घटोन्मज्जनापत्तेरतः समवायोभ्युपेय इति तन्न। समवायत्वं हि नित्यसम्बन्धत्वं न तु जातिरनभ्युपगमात्। तथा च लाघवात्सम्बन्धिकारणरूपाश्रयनाश एव वा कारणीभूताश्रयनाश एव वाश्रितकार्यनाशहेतुरिति स्वीकृतौ ध्वंसनाशाप्रसक्त्या समवायस्यानुपेयत्वात्॥

वस्तुतस्तु परिणामवादे ध्वंसस्य भूतलादिनिष्ठत्वेन कपालनाशेपि तन्नाशाप्रसक्तेः। अत एव प्राग् भेदाभेदविषयत्वेनेत्याद्युक्तिरिति।

समवाये प्रमाणभङ्गः ॥ २९ ॥

## समवाये बाधकाम्

### तर्कताण्डवम्

**किञ्च कालस्य स्वगतेन सङ्ख्यापरिमाणादिना त्वयापि स्वरूपसम्बन्धः स्वीकृत इति किं तत्र समवायेन।**

**यदि च कालस्य तेन सह समवायस्य सत्त्वान्न स्वरूप-सम्बन्धः। तर्हि कालस्य घटेन सह संयोगस्य सत्त्वात् स्वरूपसम्बन्धो न सिद्ध्येत्। साम्यात्॥**

### न्यायदीपः

एवं समवायस्याप्रामाणिकत्वमुक्त्वानुव्याख्यानसुधयोरुक्तमन्यत्समवायोपगमे बाधक-जातमाह **॥ किञ्चेति ॥** यद्वा प्रागुक्तानुमानेषु गुणादिविशिष्टबुद्धिनिमित्तसम्बन्धतया हि समवाय-

सिद्धिरभिमता सा न युक्ता। तद्बुद्धेरन्यथोपपत्तेरिति। चतुर्थान्यथोपपत्तिमाह ॥ **किञ्चेत्यादिना** ॥

अथवा-

"समवायश्च सम्बन्धो नित्यः स्यादेक एव सः"

इति नित्यत्वे सत्येकत्वे सति सम्बन्धत्वमिति यत्समवायलक्षणमुक्तं तत्र सम्बन्धत्वं तावदन्यथोपपत्तिचतुष्टयेन निराह ॥ **किञ्चेत्यादिना** ॥

तत्रादौ तावत्साम्यादनवस्थितेरिति सूत्रखण्डस्य स्वगतसङ्ख्यादिगुणेन कालस्य पदार्थान्तरेणेव स्वरूपसम्बन्धस्वीकारसाम्यात्समवायस्यानवस्थितेरसत्त्वापातादित्यर्थमुपेत्याह ॥ **कालस्येति** ॥ कालपरिमाणं सदास्तीति कालस्यैकत्वसख्या सदास्तीत्यादिप्रतीत्या कालस्य जगदाधारताप्रयोजकत्वेन स्वगतधर्मैरन्यैश्च सर्वैः स्वरूपसम्बन्धः स्वीकृत इति तेनैव सम्बन्धेनैकः कालो परिच्छिन्नपरिमाणः काल इति विशिष्टबुद्ध्युपपत्तौ तत्र समवायस्यावस्थित्यभावः स्यादित्यर्थः।

स्वगतसङ्ख्यादिना समवायसत्त्वस्येव घटादिद्रव्येण संयोगसत्त्वस्यापि साम्यादिदानीं घट इत्यादिधीबलेन घटादिना स्वीकृतस्वरूपसम्बन्धस्यावस्थित्यभावापत्तेरित्यर्थान्तरं चोपेत्याह ॥ **यदि चेति** ॥ **तेन** ॥ स्वगतसङ्ख्यादिना ॥

## तर्कताण्डवम्

**अपि च गुणादेरपि त्वन्मते स्वाभावस्वज्ञानस्वकालैः सह स्वरूपसम्बन्धत्वं तावदस्ति। तत्र गुणादेरभावज्ञानादीन्प्रति स्वरूपसम्बन्धत्वं न प्रतियोगिविषयत्वादिना। अननुगमात्। गौरवाच्च। किन्तु विशेषत्वेनानुगमाल्लाघवाच्च। विशेषणत्वं च गुणादेर्गुण्यादावपि सममिति गुण्यादावपि गुणादेः स्वरूपसम्बन्धत्वं क्लृप्तमेवेति क्व समवायस्य अवकाशः।**

**अपि च घटरूपसमवाया इति समूहालम्बनज्ञानात् रूपी घट इत्यादिबुद्धेर्वैलक्षण्यायावश्यमङ्गीकार्येण रूपस्य घटेन सह विशेषणताविशेषेणैव विशिष्टबुद्ध्युपपत्तौ किं समवायेन।**

**एवं रसादावपीति न समवायस्यावकाशः।**

**किञ्च समवायस्यापि स्वसम्बन्धिना सह सम्बन्धाङ्गीकारे अनवस्था। तत्र स्वरूपसम्बन्धाङ्गीकारे च गुणादेरेव गुण्यादिना स्वरूपसम्बन्धोस्तु। साम्यात्। किं दूरगमनेन। कालस्य स्वगतसङ्ख्यादिना समवायानुपपत्तिः, गुणादेः, स्वाभावादिनेव गुण्यादिनापि स्वरूपसम्बन्धेनैवोपपत्तिः, समूहालम्बनाद्वैलक्षण्यानुपपत्तिः, अनवस्था चेति बाधकचतुष्टयं दुष्परिहरम्॥**

## न्यायदीपः

नन्वस्त्वेवं तथापीदानीं घटरूपमित्यादिधीबलाद्घटे रूपादिनैव स्वरूपसम्बन्धः कालस्य नान्येनेत्यत आह॥ **अपि चेति**॥ यद्वा काले गुणविशिष्टबुद्ध्युपपादकसम्बन्धत्वेन समवायसिद्धा-वप्यन्यत्र तथात्वेन सिद्धिरस्त्वित्यत आह॥ **अपि चेति**॥ तच्च स्वरूपसम्बन्धत्वमित्यन्वयः। विषयत्वादिनेत्यादिपदेन विशेषणविशेष्यभावग्रहः॥ **अननुगमादिति**॥ स्वाभावेन प्रतियोगित्व-रूपः, ज्ञानादिना विषयत्वरूपः, कालेन विशेषणत्वादिरित्यननुगमात् अनेककल्पने गौरवाच्चेत्यर्थः॥

॥ **सममिति**॥ एतेन गुणादेर्विशेषणत्वसाम्यात्समवायस्यावस्थित्यभावात् इत्यर्थ उक्तो भवति ॥ **वैलक्षण्यायेति**॥ समूहालम्बनेपि घटतद्रूपतत्समवायानां प्रतीतिवद्रूपी घट इति प्रतीतावपि रूपादित्रयस्यैव भानेऽनुभवसिद्धस्य ततो वैलक्षण्यस्यायोगेन रूपादौ विशेषणत्वादिरेव समूहालम्बने प्रतीतोत्र प्रतीयत इति वाच्यमिति तेनैवोपपत्तौ किं समवायेनेत्यर्थः। एतेनाभावस्थित्यभाव इत्यर्थः सूत्रांशस्य सूचितः।

"भिन्नत्वसाम्यतस्तस्य ताभ्यां योगो भवेद्ध्रुवम्"

इत्यनुव्याख्यानसुधयोरुक्तमाह॥ **किञ्चेति**॥ सम्बन्धिना गुणगुण्यादिरूपेणेत्यर्थः। समवायस्य अवस्थित्यभाव इत्यर्थः। समवायविशिष्टबुद्धिसाम्यात्समवायस्यावस्थित्यभावो गुणादावपी-त्यर्थमुपेत्याह॥ **तत्रेति**॥ समवेतः पट इत्यादिसमवायविशिष्टबुद्धौ प्रतीतसमवायसमवायिनोरित्यर्थः ॥ **दूरेति**॥ गुणादिविशिष्टबुद्धौ समवायः, समवायविशिष्टद्धौ स्वरूपसम्बन्ध, इत्यभ्युपगमेन किमित्यर्थः। उपपादितबाधकानि बुद्ध्यारोहाय संगृह्याह॥ **कालस्येति**॥

## तर्कताण्डवम्

किञ्च समवायस्यैकत्वमयुक्तम्। तथाहि। धूमाद्यनुमानेन हि धर्मिमात्रं धर्ममात्रं वा न साध्यम्। तयोः प्रागेव सिद्धत्वात्। अन्यथा आश्रयासिद्ध्यप्रसिद्धविशेषणत्वे स्याताम्। किन्तु तयोः सम्बन्धः। स च क्वचित्संयोगः यथा पर्वताग्न्योः। क्वचित्समवायः यथा रसाद्रूपानुमाने। अग्निसंयोगोपि महानसादौ सिद्ध इति नानुमानसाध्यः। किन्तु पर्वतस्य अग्निसंयोगः। तत्र च षष्ठ्यर्थः समवाय एव। स च एक एवेत्यनुमानमात्रं सिद्धसाधनं स्यात्। एवं शब्दमात्रमपि ज्ञातज्ञापकं स्यात्। तत्रापि पदार्थानां संसर्गाणां च सिद्धत्वात्। तदुक्तमनुव्याख्याने –

''भूधरस्याग्निसंयोगो यदि षष्ठ्यर्थ एव कः।
समवायो यदि ह्यस्य चैकत्वात्सिद्धसाधनम्'' इति।

सिद्धसाधनं ज्ञातज्ञापनम्। एवं सुखस्यात्मान्तरे सिद्धत्वात्स्वसम्बन्ध एव कृतिसाध्य इति वक्तव्यम्। तच्चाशक्यम् समवायस्यानादित्वेनासाध्यत्वात्। एतदप्युक्तं ''समवाय'' इत्यादिना। सिद्धसाधनं निष्पन्ननिष्पादनम्।

एवं दुःखस्यात्मान्तरे निवर्तयितुमशक्यत्वात्स्वसम्बन्ध एव निवर्त्य इति वाच्यम्। तच्चाशक्यम्। समवायस्य अविनाशित्वात्।

## न्यायदीपः

एवमन्यथोपपत्त्या समवायस्य स्वरूपमेव (स्य सम्बन्धित्वेन सिद्धिं) निरस्येदानीमस्तु नाम गुणगुण्यादौ कश्चनातिरिक्तः सम्बन्धः, तस्यैकत्वं तु न, तथात्वेनुमानशब्दप्रमाणमात्रोच्छेद इति भावेन सुधोक्तं विवृण्वन्नाह ।। **किञ्चेति** ।। **धर्मीति** ।। पर्वतादिमात्रं वह्न्यादिमात्रमित्यर्थः

॥ **षष्ठ्यर्थः** ॥ पर्वतस्येति षष्ठ्यर्थ इत्यर्थः ॥ **स च एक एवेति** ॥ रूपी घट इत्यादिप्रतीतौ सिद्धश्चेत्यपि ध्येयम् ॥ **विशकलितानामिति** ॥ न च विशिष्टं नान्यत्र सिद्धमिति वाच्यम्। विशिष्टस्य त्वन्मते पदार्थान्तरत्वाभावाद्धटोस्तीत्यादिवाक्यबोध्यस्य घटतत्सत्तयोः समवायस्यैकत्वेनात्र तस्य ज्ञातत्वाच्चेति भावः ॥ **तदुक्तमिति** ॥ वैशेषिकाधिकरणानुव्याख्यान इत्यर्थः।

शब्दसाधारण्यलाभार्थमाह ॥ **ज्ञातज्ञापनमिति** ॥ धूमाद्यनुमानमिति शेषः। इति सुधोक्तिरुपलक्षणम्। पर्वते वह्निरस्तीत्यादिशब्दजातमित्यपि ध्येयम्। अत एव सुधायां समवायैकत्वनिरासप्रकरणावसाने आगमापह्नवश्च समवायैक्ये स्यात्पदार्थानां तत्संसर्गाणां (सिकतावद्विशकलितानां) सिद्धत्वादित्युक्तमिति भावः।

समवायो यद्युपेयते तर्ह्यस्यैकत्वात्सिद्धस्यैव साधनमुत्पादनमिति प्राप्तमित्यर्थान्तरं चोत्तरार्धस्योपेत्य समवायस्यैकत्वे बाधकान्तरं चाह ॥ **एवमिति** ॥ **स्वेति** ॥ स्वस्य सुखेन यः समवायस्तस्येत्यर्थः। सिद्धसाधनमित्युपलक्षणम्। सिद्धस्यैव नित्यस्यैव दुःखादिसम्बन्धस्यावसानमित्यपि ध्येयमिति भावेनाह ॥ **एवं दुःखस्येति** ॥ इष्टानिष्टप्राप्तिपरिहारार्थं प्रयत्नाभावापत्तिः समवायैक्ये बाधिकेत्युक्तं भवति।

## तर्कताण्डवम्

**अपि चात्माकाशकालादौ रूपरसादिसमवायस्य चलनादिसमवायस्य, घटपटादौ ज्ञानेच्छादिसमवायस्य, पटादौ घटत्वादिसमवायस्य, सुखादौ दुःखादिसमवायस्य च, सत्त्वेन सर्वपदार्थेषु सर्वधर्मसम्बन्धस्य साम्यात् सर्वसङ्कररूपाव्यवस्था स्यात्। नन्वात्मादौ रूपादिसमवायस्य सत्त्वेपि घटादाविव रूपादिना सह विशेषणताविशेषाभावाद्वा अधिकरणस्वभावाद्वा आधेयस्वभावाद्वा न सङ्कर इति चेत्। एवं हि तैरेव सर्वव्यवस्थोपपत्तौ किं व्यवस्थित्यहेतुना समवायेन॥**

**किञ्चैवं सर्वेषामपि वस्तूनां सर्वैः सह एक एव सम्बन्ध इति वा स्यात्। आद्ये आधारस्य वा आधेयस्य वा सम्बन्धस्य**

**वा स्वभावात् कुत्रचिदसम्बन्धव्यवहार इति द्वितीये आधारस्य वा आधेयस्य वा स्वभावात्कुत्रचित्सम्बन्धव्यवहार इति च सुवचत्वात्॥**

**किञ्च संयोगोप्येक एव लाघवात्। व्यवस्था तु स्वभाववैचित्र्यादिति स्यात्। नाशाद्यनुभवस्तु उभयत्रापि समः। पाकेन श्यामरूपमिव तत्सम्बन्धोपि नष्टः, रक्तरूपमिव तत्सम्बन्धोप्युत्पन्न इत्यनुभवात्।**

## न्यायदीपः

समवायैकत्वदूषणं सूत्रारूढं दर्शयितुं साम्यादनवस्थितेरिति सूत्रांशस्यार्थान्तरमुपेत्य अतिप्रसङ्गान्तरमाह ॥ **अपि चात्मेति** ॥ षष्ट्यन्तानां पूर्वपूर्वेणैव सप्तम्यन्तेनान्वयः ॥ **सत्त्वेनेति** ॥ सर्वषष्ट्यन्तेन सम्बन्धः। समवायस्यैकत्वपक्ष इति योज्यम्॥

यत्तु मणौ ''ननु समवायस्यैकत्वे कथं रूपिनिरूपिव्यवस्थे''त्यादिनैतदेव साङ्कर्यमाशङ्क्य अधिकरणस्वभावादिना समाहितं, तदनूद्य निराह ॥ **नन्वात्मादाविति** ॥ समवायस्यैकत्वपक्षे मण्याद्युक्तसमाधावतिप्रसङ्गान्तरमाह ॥ **किञ्चैवमिति** ॥ पक्षद्वयेप्युपपत्तिप्रकारं परोक्तन्यायेनाह ॥ **आद्य इत्यादिना** ॥ ननु संयोगस्यैक्ये घटसंयोगो नष्टः पटसंयोग उत्पन्न इति धीः कथमित्यत आह ॥ **नाशादीति** ॥ सम इत्युक्तसाम्यं समवायेन व्यनक्ति ॥ **पाकेनेति** ॥

## तर्कताण्डवम्

**न हि सम्बन्धनाशेपि सम्बन्धिनः स्थितिवत् सम्बन्धिनाशेपि सम्बन्धस्थितिः कुत्रचिद्दृष्टा।**

**एतेनात्मादिनिष्ठे समवाये रूपादिप्रतिसम्बन्धिकत्वस्य अभावान्न सङ्कर इति निरस्तम्। आत्मनिष्ठस्य समवायस्य घटादिनिष्ठाद्भेदे अपसिद्धान्तात्। अभेदे घटादिनिष्ठेपि रूपादिप्रतिसम्बन्धिकत्वाभावापातात्॥**

**एतेनैव समवायस्य स्वभावतः एकत्वेपि औपाधिको भेदोस्ति। रूपसुखाद्युपाधीनां भिन्नत्वादिति निरस्तम्। एवं हि रूपादिः संयोगादिश्चैक एव भेदस्त्वौपाधिक इति स्यात्।**

**किञ्चौपाधिकत्वं उपाधिज्ञेयत्वं चेत्। ज्ञानस्य प्रमात्वे भेदासिद्धिः। भ्रमत्वे तु पदार्थानां सङ्करतादवस्थ्यम्। उपाधिजन्यत्वं चेत्। सिद्धः समवायस्य सत्यो भेदः। अपसिद्धान्तश्च।**

**तदुक्तमनुव्याख्याने।**

**''उपाधिजन्यं तद्गम्यमिति चौपाधिकं भवेत्।**
**उभयत्राप्यनन्ताः स्युः समवाया इतस्तत'' इति।**

**न्यायदीपः**

अयमनुभवो भ्रमोस्त्वित्यतो बाधकाभावादिति भावेनाह ॥ **न हीति** ॥ **रूपादिप्रतिसम्बन्धिकत्वस्येति** ॥ रूपादिनिरूपितत्वस्येत्यर्थः ॥ **रूपादिरिति** ॥ रसगन्धादिरादिपदार्थः। तत्रोपाधिः पटादिराश्रय एव। तथा च घटपटादिगतरूपमेकमेव। भेदकार्यं तु घटाद्याश्रयलक्षणोपाधिभेदनिमित्तभेदसत्त्वाद्युक्तमित्यस्तु इत्यर्थः। संयोगादिः इत्यादिपदेन विभागस्य वा विशेषणविशेष्यभावादिसम्बन्धस्य वा ग्रहः ॥ **औषाधिक इति** ॥ घटादिस्वरूपनिरूपकभेदनिमित्तक इत्यर्थः। उपाधिशब्दात् तृतीयासमर्थाज्जन्यगम्यार्थे शैषिके ठकि कृते औपाधिकशब्दो निष्पन्नः।

औपाधिकमित्युपाधिगम्यमुतोपाधिजन्यमिति कल्पद्वयलाभं हृदि कृत्वा आद्येपि ज्ञानं प्रमा भ्रमो वेति क्रमेण निराह ॥ **किञ्चौपाधिकत्वमिति** ॥ **तदुक्तमिति** ॥ वैशेषिकनये ॥ **उभयत्रेति** ॥ उपाधिना जन्यत्वपक्षे प्रमीयमाणत्वपक्षे चेत्यर्थः। कथमानन्त्यमित्यत उक्तम् ॥ **इतस्तत इति** ॥ अत्र तत्रेत्यर्थः। नानादेशकालेषु स्थितानामवयवावयव्याद्युपाधीनामनन्तत्वादिति शेषः। ज्ञानस्य भ्रमत्वपक्षे साङ्कर्यदोषोक्तिस्तु॥

''अविद्यमान एवान्यः समवायोवगम्यते।
उपाधिना तद्गमकमनुमानं न मा भवेत्॥

इत्यनुव्याख्यानोक्तमुपलक्षणमिति भावेनेति ज्ञेयम्। अत एव तत्र सुधायां "इत्यादि द्रष्टव्यम्" इत्युक्तम्।

## तर्कताण्डवम्

**एतेन लाघवतर्कसहकृतेन धर्मिग्राहकानुमानेन समवायस्य एकत्वं नित्यत्वं च सिद्धमिति निरस्तम्। एकत्वादौ प्रत्यक्षविरोधस्योक्तत्वेनानुमानस्य तदविरुद्धनानासम्बन्धसाधनेन कृतार्थत्वात्।।**

**अन्यथा संयोगोपि लाघवतर्कसहकृतेन प्रत्यक्षेण, अभावाधिकरणयोर्ज्ञानज्ञेयादिनां सम्बन्धोपि तत्सहकृतैरुक्तानुमानैरेको नित्यश्च सिध्येत्। द्व्यणुकादीनां सोपादानकत्वसाधने कार्यत्वहेतुनापि तत्सहकृतेन नित्यमेकं उपादानं सिध्येत्। लाघवतर्कस्य साम्यात्। ईश्वरानुमानेपि कर्त्रेकत्वसिद्धिर्नेत्युक्तम्।।**

**तस्मात्समवायस्य नित्यत्वमेकत्वं वाऽयुक्तम्। समवायाभावे तु अयुतसिद्धयोराधाराधेयभावनिमित्तसम्बन्धः न सम्बन्धिभिन्नः अयुतसिद्धयोरेवान्योन्यं सम्बन्धत्वात्। भूतलघटाभावसम्बन्धवत्, संयोगभिन्नः साक्षात्सम्बन्धः न संयोगविशेषणतोभयभिन्नः साक्षात्सम्बन्धत्वात् संयोगवत्, साक्षात्सम्बन्धत्वं संयोगविशेषणतान्यान्यत्वव्याप्यम् साक्षात्सम्बन्धमात्रवृत्तित्वात् संयोगत्ववत्, सम्बन्धत्वं न सम्बन्धिध्वंससमानकालीनसम्बन्धवृत्ति न सम्बन्धिद्वयप्रागभाव समानकालीनसम्बन्धवृत्ति वा सम्बन्धमात्रवृत्तित्वात् संयोगत्ववदित्याद्यनुमानानि प्रमाणानि।।**

समवाये बाधकम्।। ३०।।

## न्यायदीपः

धर्मिग्राहकमानबाधं समवायानन्त्यापादनमित्याशङ्क्य निराह ॥ **एतेनेति** ॥ **धर्मीति** ॥ सत्यलौकिकप्रत्यक्षजातिगुणक्रियाविशिष्टबुद्धयो विशेषणसम्बन्धनिमित्तकाः, इति प्रागुक्तानुमानेनेत्यर्थः ॥ **उक्तत्वेनेति** ॥ नाशाद्यनुभवस्तूभयत्र सम इत्यादिग्रन्थेनेत्यर्थः ॥ **उक्तानुमानैरिति** ॥ पूर्वत्र समवायानुमानभङ्गे उक्तैर्विशिष्टबुद्धित्वात् तद्विशिष्टविषयकविशिष्टबुद्धित्वादित्याद्यनुमानैः इत्यर्थः ॥ **तत्सहकृतेन** ॥ लाघवतर्कसहकृतेनेत्यर्थः।

नन्वेवमीश्वरानुमानेपि लाघवतर्केण कर्त्रैक्यसिद्धिर्न स्यादित्यत आह ॥ **ईश्वरेति** ॥ उक्तमीश्वरानुमानभङ्ग इत्यर्थः।

समवायाभावे मानाभावादेव समवायसिद्धिरस्त्वित्यत आह ॥ **समवायाभावे त्विति** ॥ इत्याद्यनुमानानि प्रमाणानीत्यनेनान्वयः। अयुतसिद्धौ यौ भावौ अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेत्येवं द्वन्द्वीभूतौ द्वौद्वौ पदार्थौ तयोरित्यर्थः। अत्र सम्बन्ध इत्यस्यैव पक्षत्वे स्वरूपसम्बन्धेन सिद्धसाधनं अतोन्योन्यमित्यन्तम्। कालसम्बन्धेन तद्वारणाय वान्योन्यमित्युक्तिः। न्यायमते जगदाधारताप्रयोजकतया कालस्य सर्वेणापि स्वरूपसम्बन्धोपगमात्। अयुतसिद्धभावयोरपि प्रत्येकं स्वस्वनिष्ठाभावादिना स्वरूपसम्बन्धस्योपगमेन तेन सिद्धसाधनवारणाय वा अवयवावयविनोः प्रत्येकमन्येन संयोगे बाधनिरासाय वान्योन्यमित्युक्तिः। भूतलघटाभावयोरन्यसम्बन्धेनार्थान्तरवारणाय ॥ **भावयोरिति** ॥ अपृथक् गृह्यमाणत्वरूपत्वादयुतसिद्धत्वस्य घटपटसंयोगे बाधनिरासायायुतसिद्धेत्युक्तिः। संयोगस्य परमते सम्बन्धिनात्यन्तं भिन्नत्वात्। सिद्धान्तेपि भिन्नाभिन्नत्वात्। अत एव संयोगे व्यभिचारवारणाय हेतावयुतसिद्धयोरित्युक्तिः। अत एवावयवावयविनोः प्रत्येकमन्येन सह संयोगे व्यभिचारवारणाय अन्योन्यमित्युक्तिः। पक्षे भावपदस्याधिकस्योपादानान्न हेतुतावच्छेदकैक्यनिमित्तसिद्धसाधनत्वं शङ्क्यम्। अभावभूतलयोरयुतसिद्धत्वमसिद्धमिति चेत् न। तस्यापृथग्गृह्यमाणत्वमात्ररूपत्वादन्यस्यानिरूपणात्। नित्यसम्बन्धत्वादेः समवायसिद्ध्युत्तरकालीनत्वात्।

अभावव्यावृत्तमन्यदेव किञ्चिदयुतसिद्धत्वमिति वादिनं प्रति प्रयोगान्तरमाह ॥ **संयोगेति** ॥ सम्बन्ध इत्येवोक्तौ रक्तः स्फटिकः कृष्णं वस्त्रमित्यादौ स्फटिकवस्त्रसंयुक्तजपाकुसुमकर्दमसम्बन्धरक्तिमकालिमादिसम्बन्धे बाधवारणाय साक्षादित्युक्तिः। संयोगेनार्थान्तरवारणाय संयोगभिन्न इति। केचिद्विशेषणतारूपसम्बन्धेनार्थान्तरनिरासाय साक्षादित्युक्तिरित्याहुः ॥ **न संयोगेति** ॥ संयोग-

विशेषणतान्यतररूप एवेत्यर्थः। तथैवोक्तौ वक्ष्यमाणसाध्यांशेऽविशेषापत्त्या नञ्द्वयेनोक्तिः। तत्र संयोगभिन्नत्वाभावेन साध्यपर्यवसाने बाधात्। विशेषणताभिन्नत्वाभावेनैव साध्यपर्यवसानात् संयोगान्यसाक्षात्सम्बन्धस्य विशेषणतारूपत्वस्यैव सिद्धिरिति भावः। हेतौ प्रागुक्तपरम्परा-सम्बन्धेऽव्यभिचाराय साक्षादित्युक्तिः।

**॥ साक्षादिति ॥** प्रागुक्तपरम्परासम्बन्धे बाधनिरासाय साक्षादित्युक्तिः **॥ संयोगेति ॥** संयोगाविशेषणतान्यतरत्वव्याप्यमित्यस्यार्थनिर्देशः संयोगविशेषणताभ्यामन्यज्जगत् तदन्यत्वं संयोगविशेषणतयोरेव तद्व्याप्यत्वमिति। तथा च संयोगविशेषणतारूपौ द्वावेव साक्षात्सम्बन्धौ सिध्यतो न त्वतिरिक्तः कश्चित्समवाय इति भावः। हेतौ साक्षात्पदकृत्यं प्राग्वत्। प्रमेयत्वादा-वव्यभिचाराय मात्रेत्युक्तिः ॥

एवं सम्बन्धैकत्वविरोध्यनुमानान्युक्त्वा नित्यत्वविरोध्यनुमानमाह **॥ सम्बन्धत्वमिति ॥** सम्बन्धिद्वयमवयवावयव्यादि। अनादित्वविरोधिसाध्यान्तरमाह **॥ न सम्बन्धिद्वयप्रागभावेति ॥** मात्रपदकृत्यं प्राग्वत्।

समवाये बाधकम् ॥ ३० ॥

**समवायवादः समाप्तः।**

## निर्विकल्पकवादः

## निर्विकल्पके प्रमाणभङ्गः

### तर्कताण्डवम्

**यच्चोच्यते समवायसम्बन्धेन पूर्वं गत्वादिजातिविषयकं निर्विकल्पकं अनन्तरं जातिविशिष्टगकारविषयकं सविकल्पकमिति। तन्न। निर्विकल्पके मानाभावात् ॥**

**ननु यद्यपि निर्विकल्पके न प्रत्यक्षं प्रमाणम्। तस्याती-न्द्रियत्वाभ्युपगमात्। नापि व्यवहारः। तस्य च सविकल्पक-**

**साध्यत्वात्। नापीदं पूर्वं मया संमुग्धेन ज्ञातमित्यनुभवः। तस्याल्पविशेषणज्ञानेनैवोपपत्तेः। नापि ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणम् सकलज्ञानवृत्तित्वात् सत्तावत्, चक्षुः चाक्षुषसविकल्पकातिरिक्तज्ञानकरणं ज्ञानकरणत्वाद् घ्राणवदित्यनुमानम्। अप्रयोजकत्वात्। अतिप्रसङ्गाच्च। नापि जागराद्यं गौरिति ज्ञानं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् दण्डी पुरुष इति ज्ञानवदित्यनुमानम्। दृष्टान्तस्य साध्यवैकल्यात्। दण्डपुरुषयो रुभयोर्युगपदिन्द्रियसन्निकर्षे असंसर्गाग्रहे च सति विनैव दण्डज्ञानं दण्डीति ज्ञानोत्पादानुभवात्॥**

## न्यायदीपः

ननु समवायाभावे निर्विकल्पकादिभेदेन प्रत्यक्षप्रमाद्वैविध्यानुपपत्तिः। तस्य समवायरूपवैशिष्ट्यावगाहित्वानवगाहित्वाभ्युपगमेनैव द्वैविध्यस्य वाच्यत्वादित्यतः द्रव्यादिविकल्पानां प्रथममेवोत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तेरिति पद्धतिवाक्यं विवृण्वानो नास्त्येव निर्विकल्पकं विशिष्टज्ञानं च स्वरूपसम्बन्धावगाहीति भावेनाह ॥ **यच्चेति** ॥ **समवायेति** ॥ वस्तुगत्या समवायसम्बन्धेन स्थिता या गत्वादिजातिः तद्विषयमित्यर्थः। यद्वा श्रोत्रसन्निकर्षरूपेण समवायसम्बन्धेन जायमानं गत्वादिजातिविषयकं वैशिष्ट्याविषयकं ज्ञाननिर्विकल्पकं, तेनैव सन्निकर्षेण पश्चाज्जायमानं जातिविशिष्टज्ञानं सविकल्पकमित्यर्थः।

सम्भावितपक्षान्मण्युक्तखण्डनरीत्या निराकुर्वन्नेव पूर्वपक्षयति ॥ **यद्यपीत्यादिना** ॥ तथापीति वक्ष्यमाणेनान्वयः। व्यवहारो गौरित्याद्यभिलपनरूपः ॥ **तस्येति** ॥ तादृशानुव्यवसायस्येत्यर्थः। सविकल्पकज्ञानत्वे अव्यभिचाराय सकलेति हेतुविशेषणम्। निष्प्रकारकघटादिवृत्तित्वे बाधात् तादृशज्ञानवृत्तित्वेनैव साध्यपर्यवसानमिति भावः ॥ **अतिप्रसङ्गाच्चेति** ॥ ज्ञानत्वं घटत्वसमानाधिकरणमिति, तथा चक्षुः चाक्षुषनिर्विकल्पकसविकल्पकातिरिक्तं ज्ञानजनकमित्यपि त्वदक्तप्रयोगाभ्यां साधयितुं शक्यत्वादिति भावः ॥ **गौरिति** ॥ ज्ञानमात्रपक्षत्वे द्वितीयादिसविकल्पके प्राथमिकसविकल्पकजन्यत्वेनार्थान्तरनिरासाय जागराद्यमित्युक्तिः। साध्ये ईश्वरज्ञानजन्यत्वेन अर्थान्तरवारणाय जन्येति ज्ञानविशेषणम्॥

## तर्कताण्डवम्

**तथापि ''एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवत्'' इति मण्युक्तमनुमानं मानम्। नच तत्र विशेषणज्ञानं स्मृतिरूपम्। एतज्जन्मनि तेन गोत्वस्याननुभवात्। न चाद्यस्तनपानादाविवात्रा दृष्टमेव जन्मान्तरियसंस्कारोद्बोधकम्। तद्वदनन्यगतिकत्वाभावात्। अन्यथातिप्रसङ्गात्। तद्वदेव सन्निकर्षेपि प्रथमं गोत्वस्मृत्यापाताच्च। गोत्वसन्निकर्षस्याप्यपेक्षायां तु सन्निकर्षाद्गोत्वानुभव एवोचितः। तस्यानुभव एव हेतुत्वस्य कलृप्तत्वात्। स्मृतिसामग्रीतोनुभवसामग्र्याः बलवत्त्वात्। अन्यथा जन्मान्तरानुभूतानां एतज्जन्मनि इन्द्रियसन्निकृष्टानां नित्यानां वैदिकानां चार्थानां स्मृतिरेव स्यान्न त्वनुभवः। न च गोत्वरूपविशेषणानुभवः सविकल्पकः। तथात्वे तस्यापि विशेषणज्ञानजन्यत्वावश्यम्भावेनानवस्थानात्।**

## न्यायदीपः

मणिकृता सिद्धन्तितमनुमानमाह ।। **तथाप्येतज्जन्मनीति** ।। एतज्जन्मनीत्यस्य कृत्यमग्रे व्यक्तम्। द्वितीयादिज्ञाने प्राथमिकसविकल्पकजन्यत्वेनार्थान्तरनिरासाय प्राथमिकमित्युक्तिः। साध्ये जन्येति विशेषणमीश्वरज्ञानेनार्थान्तरनिरासाय। हेतौ चाव्यभिचारायेति भावः।

मण्युक्तदिशैव परिष्करोति ।। **न च तत्रेति** ।। **तद्वदिति** ।। इह निर्विकल्पकेनाप्युपपत्त्या जन्मान्तरीयसंस्कारोब्दोधकादृष्टकल्पनानुपपत्तेरिति भावः ।। **अतिप्रसङ्गादिति** ।। सविकल्पक प्रत्यक्षादेरप्येवमपलापप्रसङ्गादित्यर्थः ।। **तद्वदेवेति** ।। स्तनपानादिवदेवेत्यर्थः।

नन्वस्तु सन्निकर्षाद्गोत्वानुभवः। स च विशिष्टज्ञानरूप एव सविकल्पकहेतुरस्त्वित्याशङ्क्याह ।। **न च गोत्वरूपेति** ।।

## तर्कताण्डवम्

**तस्मादर्थान्निर्विकल्पकसिद्धिः। न चाप्रयोजको हेतुः। अनुमितिशाब्दज्ञानादौ हि साध्यप्रसिद्धिपदार्थोपस्थित्यादिः हेतुः। साध्यादीनि च विशेषणानि। एवं च यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि स इति न्यायेन साध्यप्रसिद्ध्यादेर्जन्यविशिष्टज्ञानसामान्ये जन्य-विशेषणज्ञानत्वेन हेतुत्वसिद्धिरिति। तन्न।**

**अनुमित्यादौ साध्यप्रसिद्ध्यादेरेवाहेतुत्वेन यद्विशेष-योरिति न्यायानवकाशात्। न हि व्याप्त्यादिज्ञाने सति तद्विलम्बेनानुमित्यादिविलम्बः॥**

**नच व्याप्त्यादिधीरेव तेन विना नेति वाच्यम्। एवं हि तस्य हेतुहेतुत्वेनान्यथासिद्धत्वान्नानुमित्यादिहेतुता॥**

## न्यायदीपः

पूर्वपक्षदशायां मण्युक्तमेवानुकूलतर्कमत्राह॥ **अनुमितीति**॥ आदिपदद्वयेन क्रमादुपमिति-वाचकज्ञानयोर्ग्रहः॥ **यद्विशेष(ण)योरिति**॥ साध्यप्रसिद्ध्यनुमित्योः पदार्थोपस्थितिशाब्दज्ञानयोः वाचकज्ञानोपमित्योरित्यर्थः॥

नन्वेवं दण्डघटयोः कार्यकारणभावे यत्सामान्ययोर्द्रव्यमात्रपृथिवीमात्रयोः कार्यकारणभावः स्यादित्यत आह॥ **असति बाधक इति**॥ तत्र व्यभिचारस्यैव बाधकत्वादिह च तदभावादिति भावः॥ **साध्यप्रसिद्ध्यादेरहेतुत्वेनेति**॥ तदहेतुत्वं च द्वितीयतृतीयपरिच्छेदयोर्विवरिष्यत इति भावः॥

''असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते''

इत्यनुव्याख्यानोक्तं हृदि कृत्वाह॥ **न हीति**॥ आदिपदेन शब्दज्ञानसङ्केतस्मरणयोः सत्त्वे इति ग्रहः॥ **तद्विलम्बेन**॥ साध्यप्रसिद्धिपदार्थस्मृतिविलम्बेनेत्यर्थः। ननु सम्बन्धिनोरज्ञाने तन्निरूपितव्याप्ति-शक्त्योर्धीरेव नेत्याशङ्क्य निराह॥ **न चेति**॥

## तर्कताण्डवम्

अस्तु वा साध्यप्रसिद्ध्यादिरनुमित्यादिहेतुः। तथापि वह्निमानित्यादिज्ञानं प्रति वह्न्यादिज्ञानस्य न विशेषणज्ञानत्वेनैव कारणता। द्रव्यत्वादिना वह्निज्ञानेपि तदभावात्। नापि विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेन। तेन निर्विकल्पकासिद्धेः। गौरवाच्च। किं तु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन। तथाच न निर्विकल्पकसिद्धिः।

ननु तत्र विशेषणज्ञानत्वमप्यस्ति। एवं च विशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेन हेतुता सेत्स्यति । यद्विशेषयोरिति न्यायादिति चेत्।

एवं ह्यनुमितौ करणविशेषलिङ्गज्ञानस्य हेतुत्वाद् यद्विशेषयोरिति न्यायेन जन्यज्ञानमात्रे करणमात्रज्ञानं हेतुः स्यात्। तथा च प्रत्यक्षेपि चक्षुरादिविषयकमतीन्द्रियं निर्विकल्पककल्प्यं स्यात्।

## न्यायदीपः

परप्रक्रियामुपेत्यादिनिर्विकल्पकासिद्धिमाह ।। **अस्तु वेति** ।। अस्त्वेवं को दोष इत्यत आह ।। **तथा च न निर्विकल्पकेति** ।। तस्य निष्प्रकारकत्वेन यद्विशेषन्यायेनापि विशेषणतावच्छेदकप्रकारकज्ञानस्यैव सिद्धिरिति भावः।

एवमपि निर्विकल्पकसिद्धिरिति भावेन मण्युक्तमाशङ्कते ।। **ननु तत्रेति** ।। वह्निज्ञानादावित्यर्थः ।। **विशिष्टवैशिष्ट्येति** ।। वह्निमानित्यादिज्ञानमित्यर्थः। तत्र वह्नित्वविशिष्टवैशिष्ट्यस्य पर्वते भानाद्गौरित्यादि तु विशिष्टज्ञानमात्रमित्यर्थः।

अतिप्रसङ्गेन न्यायस्याभासत्वमाह ।। **एवं हीति** ।। अनुभवबाधपरिहारायाह ।। **अतीन्द्रियनिर्विकल्पकमिति** ।।

## तर्कताण्डवम्

**अपि चैवं प्रत्यक्षविशिष्टज्ञानं प्रति विशेष्यज्ञानस्यापि हेतुता स्यात्। संशयादौ धर्म्यादिज्ञानस्यानुमित्यादौ पक्षादिज्ञानस्य हेतुत्वेन क्लृप्तत्वात्। नच इष्टापत्तिः दण्डत्वविषयके निर्विकल्पके सामग्रीसत्त्वेन दण्डस्यापि स्वरूपेण भानादिति वाच्यम्। त्वदनङ्गीकृतविशेष्यज्ञानत्वेन हेतुत्वस्यापादनात्।**

**किं च सामान्यप्रत्यासत्तिर्नेति पक्षे वयाप्तिग्रहकाले अनुभूतो वह्निः पर्वतं प्रति न विशेषणम्। अन्यविशेषणज्ञानस्य हेतुत्वे चातिप्रसङ्गः ।।**

## न्यायदीपः

अतिप्रसङ्गान्तरोक्त्या यद्विशेषयोरिति न्यायस्याभासतामाह ।। **अपि चैवमिति** ।। यद्विशेषयोरिति न्यायेन विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन हेतुत्व इत्यर्थः। कुत इत्यत आह ।। **संशयादाविति** ।। संशयरूपविशिष्टप्रत्यक्षविशेषं प्रति, तथा इदं रजतमित्यादिविपरीतविशिष्टप्रत्यक्षविशेषं प्रति च धर्मिज्ञानस्याधिष्ठानज्ञानस्य च हेतुत्वमस्ति। अन्यथा कोटिस्मरणस्य उत्कटकोटिकसंशयादेश्चानुपपत्तेः। तथा अनुमितौ पक्षज्ञानस्य शाब्दे बोधे पदार्थज्ञानस्य च हेतुत्वमस्ति। एवं च यद्विशेषयोरिति न्यायेन धर्म्यादिज्ञानसंशयप्रत्यक्षादिरूपज्ञानयोः कार्यकारणभावो तत्सामान्ययोः प्रत्यक्षविशिष्टज्ञानाविशेष्यज्ञानयोरपि कार्यकारणभावापत्तिः स्यादित्यर्थः।

इष्टापत्तिं व्यनक्ति ।। **दण्डत्वेति** ।। **सामग्रीति** ।। दण्डेन्द्रियसम्प्रयोगादिरूपेत्यर्थः। विशेषणज्ञानस्येव विशेषणज्ञानत्वेन दण्डत्वविशिष्टसविकल्पके दण्डरूपविशेष्यज्ञानस्य हेतुत्वं नानिष्टमिति भावः।

।। **विशेष्यज्ञानत्वेनेति** ।। विशेषणज्ञानस्य तत्त्वेन यथा हेतुत्वं तथेति भावः। यद्विशेषन्यायेनापि न विशेषणज्ञानत्वेन हेतुत्वं कल्पयितुं शक्यम्। येन तद्बलान्निर्विकल्पकत्वसिद्धिरिति भावेनाह ।। **किञ्चेति** ।। सामान्यप्रत्यासत्तिरस्तीति न्यायमते यो धूमवानसौ वह्निमानिति व्याप्तिग्रहदशायां पर्वतीयवह्नेरपि पर्वतविशेषणतया भानेनोक्तदोषासम्भवात्। सामान्यप्रत्यासत्तिर्नेति पक्ष इत्युक्तम्।। एतन्मतेनुमानप्रवृत्तेस्तृतीयपरिच्छेदे उपपादयिष्यमाणत्वादिति भावः।।

## तर्कताण्डवम्

अपि च त्वयापि घटाभाववद्भूतलामिति ज्ञाने अभाव-रूपविशेषणस्य संयुक्ताविमौ समवेताविमावित्यादिज्ञाने च संयोगसमवायादिरूपस्य विशेषणस्य, अनुव्यवसाये व्यवसायगतस्य रजतत्वप्रकारकत्वरूपस्य विशेषणस्य, अभावज्ञाने प्रतियोगित्वादिरूपस्य विशेषणस्य च, पूर्वमज्ञातस्यैव भानमिति स्वीकृतत्वात्तत्र व्यभिचारः ।।

भूतले अभाव इत्याभावादिविशेष्यकज्ञानानन्तरमेव भूतलमभाववदित्यभावविशेष्यकज्ञानमिति कल्पने त्वन्योन्याश्रयः। एतत्कल्पनस्यविशिष्टज्ञानविशेषणज्ञानयोः कार्यकारणभावसिद्ध्यधीनत्वात् ।।

एतेनानुगतस्य विशेषणज्ञानस्याहेतुत्वे अनुगतं विशिष्टज्ञानरूपं कार्यमाकस्मिकं स्यात्। अन्यस्य तदनुगतस्य हेतोरभावादिति निरस्तम्। व्यभिचारस्योक्तत्वात्। उभयसम्मतादिच्छादिव्यावृत्तादात्ममनोयोगादिरूपज्ञानसामान्यहेतुत एव विशिष्टज्ञानसम्भवाच्च ।।

## न्यायदीपः

व्यभिचाररूपबाधकसत्त्वादसति बाधके यत्सामान्ययोरिति न्यायावतारोप्ययुक्तः। यद्बलाद् विशेषणज्ञानहेतुतासिद्ध्या निर्विकल्हपकसिद्धिरिति भावेनानेकस्थलेषु व्यभिचारमाह ।। **अपि चेति** ।।

यत्तु मणावेतदेवाशङ्क्य प्रथमं भूतले घटो नास्तीति बुद्धिरित्यादिना समाधानमुक्तं तदनूद्य निराह ।। **भूतले भाव इत्यादिना** ।। अन्योन्याश्रय इत्युक्तं व्यनक्ति ।। **एतदिति** ।। प्रथमं विशेष्यत्वेन ज्ञानमिति कल्पनस्येत्यर्थः। विशिष्टज्ञानविशेषणज्ञानयोः कार्यकारणभावे सिद्धे हि व्यभिचारस्य गत्यन्तरकल्पनं सिद्धे च तस्य गत्यन्तरे तयोः कार्यकारणभावसिद्धिरिति भावः ।। **व्यभिचारस्य**

**उक्तत्वादिति ॥** तथा चानुगतकारणाभावाद्विशिष्टज्ञानत्वं कार्यतावच्छेदकमेव नेति भावः। तस्य कार्यतावच्छेदकत्वमुपेत्याप्यन्यदेवानुगतकारणमाह ॥ **उभयेति ॥**

## तर्कताण्डवम्

**यदि ह्यननुमित्यनुमितिरूपज्ञानद्वयवन्निर्विकल्पकसविकल्पकरूपज्ञानद्वयं प्रामाणिकं स्यात्। तदा ज्ञानसामान्यसामग्रीत एव विशिष्टज्ञानोत्पत्तौ सर्वमपि ज्ञानं सविकल्पकं स्यादिति भयेन विशेषसामग्री कल्प्येत। न च तदस्ति। निर्विकल्पकस्याद्याप्यसिद्ध्या सर्वस्यापि ज्ञानस्य सविकल्पकत्वात्। इदमित्थमिति हि सर्वापि धीः। अन्यथा निष्प्रकारकधीवन्निर्विषयापि धीः स्यात्। इच्छापि काचिन्निष्प्रकारिकातीन्द्रिया च स्यात्। एवं द्वेषोपि॥**

**एतेनैव व्यभिचारेण रूप्यादिस्मृतेर्भ्रमे विशेषणज्ञानत्वेन कारणत्वं क्लृप्तमतोन्यत्रापि विशिष्टज्ञाने तत्करणमिति निरस्तम्। आवश्यकविशेषणसन्निकर्षत्वेनैव तस्य तत्र हेतुत्वात्। भ्रमं प्रति विशेष्यज्ञानस्यापि हेतुतायाः क्लृप्तत्वेन अन्यत्रापि विशिष्टज्ञाने तस्यापि हेतुत्वापत्तेश्च॥**

## न्यायदीपः

ननु कथमेतत् निर्विकल्पकसाधारणकारणस्य विशिष्टज्ञानहेतुत्वम्। अन्यथा तदपि विशिष्टज्ञानमापद्येतेत्यत आह ॥ **यदि हीति ॥ विशेषेति ॥** विशेषणज्ञानरूपविशेषसामग्रीत्यर्थः ॥ **इति हीति ॥** हि शब्देन सर्वानुभवसिद्धत्वं सूचयति ॥

ननु निर्विकल्पकस्यातीन्द्रियत्वादेव नानुभव इत्यत आह ॥ **अन्यथेति ॥ एवं द्वेषोपीति ॥** निष्प्रकारको अतीन्द्रियश्च स्यादित्यर्थः ॥ **एतेनैवेति ॥** व्यभिचारविशिष्टज्ञानान्यथासिद्ध्यतिप्रसङ्गानां कथनेनैवेत्यर्थः। रूप्यादिस्मृतेर्व्यभिचारेणेत्यन्वयः। गृह्यमाणारोपस्थले स्मृतेरभावान्न स्मृतित्वेन आरोप्यभूतरूप्यादिज्ञानस्य हेतुता। किं तु विशेषणज्ञानत्वेनेत्यर्थः। कथं तर्हि हेतुतेत्यत आह

॥ **आवश्यकेति** ॥ **हेतुत्वापत्तेश्चेति** ॥ इष्टापत्तिस्तु प्रागेव निरस्तेति भावः ॥

## तर्कताण्डवम्

**ननु विशेषणज्ञानस्याजनकत्वे कथं विशेषणस्यैव प्रकारत्वमिति नियमः। सन्निकर्षस्य विशेष्येपि सत्त्वादिति चेत्। निर्विकल्पकाङ्गीकारेपि कथम्। त्वन्मते विशष्येपीन्द्रियसम्प्रयोगादिनिर्विकल्पकसामग्र्याः सत्त्वेन निर्विकल्पकस्य विशेष्येपि सत्त्वात्। कथं चाभावादिज्ञाने अभावत्वादेः प्रकारत्वम्।**

**किं च फलीभूतज्ञाने यद्विशेषणत्वेन भासते तद्विषयकज्ञानेन जन्यं यज्ज्ञानं तत्तत्प्रकारकमिति वा नियमः, यज्ज्ञानजन्यं यज्ज्ञानं तत्तत्प्रकारकमिति वा। नाद्यः। आत्माश्रयात्। नान्त्यः। अनुमित्यादौ व्याप्त्यादेः प्रकारत्वापातात्। तस्मात्त्वयापि प्रकारत्वनियमो भोजकादृष्टादिभिरेव वाच्यः।**

**उक्तेन व्यभिचारेणैव विशिष्टज्ञानं सम्बन्धविषयकं सम्बन्धज्ञाने च सम्बन्धिज्ञानं हेतुः सम्बन्धि च विशेषणमिति निरस्तम्। सम्बन्धिनोर्युगपदिन्द्रियसन्निकर्षे तयोरसंसर्गाग्रहे च ताभ्यां सहैवेन्द्रियसन्निकृष्टसम्बन्धस्यापि धीरित्युक्तत्वाच्च॥**

**इयांस्तु भेदः, सम्बन्धः सम्बन्धिनौ विना न भाति तौ तु तेन विनापि भात इति।**

## न्यायदीपः

यदपि गोत्वादेः प्रकारत्वनियमान्यथानुपपत्त्या विशेषणज्ञानहेतुत्वसिद्धिः। विशिष्टधीहेतुताविषयत्वस्यैव प्रकारत्वादिति तदप्याशङ्क्य निराह ॥ **नन्विति** ॥ सन्निकर्षो नियामक

इत्यत आह ।। **सन्निकर्षस्येति** ।। **कथमिति** ।। विशेषणस्यैव प्रकारत्वनियम इत्यनुषङ्गः। कुत इत्यत आह ।। **त्वन्मत इति** ।। अभावादिज्ञान इत्यादिपदेन प्राग्व्यभिचारस्थलोक्तसंयोगसमवायादिग्रहः। त्वदुक्तरीत्या भूतले घटाभाव इत्यभावविशेष्यकज्ञानस्य प्राथमिकत्वेप्यभावत्वस्य तत्राज्ञाततस्यैव प्रकारत्वात्। भावस्थल एवायं नियम इत्युक्तावपीमौ संयुक्तौ इत्यादावभावादिति भावः।

ननु तर्हि गोत्वादेरिव प्रकारत्वनियमे किं बीजमित्यतस्तत्परमुखेनैव वाचयितुं परोक्तं विशिष्टधीहेतुधीविषयत्वरूपं प्रकारत्वं विकल्प्य निराह ।। **किञ्चेति** ।। **फलभूतज्ञाने** ।। विशिष्टज्ञान इत्यर्थः। विशेषणत्वेन प्रकारत्वेनेत्यर्थः ।। **आत्माश्रयादिति** ।। विशेषणत्वेनेत्यस्य प्रकारत्वेनेत्यर्थतया प्रकारत्वज्ञाने प्रकारत्वज्ञानस्यापेक्षितत्वादिति भावः ।। **तस्मादिति** ।। जनकज्ञान-विषयत्वस्य प्रकारत्वरूपत्वासम्भवादित्यर्थः ।। **उक्तेनैवेति** ।। अपि च त्वयापि इत्यादिग्रन्थे-नोक्तेनेत्यर्थः। अभाववद्भूतलमित्यादौ सम्बन्धिनोऽभावादेरज्ञानेपि विशिष्टज्ञानोदयेन न तस्य हेतुत्वमिति भावः।

दोषान्तरं चाह ।। **सम्बन्धिनोरिति** ।। **उक्तत्वाच्चेति** ।। त्वन्मते विशेष्येपीत्यादिना ग्रन्थेनोक्तप्रायत्वादित्यर्थः। यद्वा दण्डपुरषयोर्युगपदिन्द्रियसन्निकर्षेत्यादिना ग्रन्थेनोक्तत्वादित्यर्थः। नन्वेवं सम्बन्धिवत्सम्बन्धस्यापिनिरपेक्षधीः स्यादित्यत आह ।। **इयांस्त्विति** ।। अयं भेदो वस्तुस्वभावकृत इति भावः ।।

## तर्कताण्डवम्

**किञ्च विशेष्यस्यापि सम्बन्धित्वेन तज्ज्ञानस्यापि हेतुता स्यात्। न च विशेष्यस्य सम्बन्धित्वेपि न प्रतियोगित्वं किं तु विशेषणस्यैवेति तज्ज्ञानमेव हेतुरिति वाच्यम्। अभावादि-बुद्धाविव प्रतियोगितावच्छेदकप्रकारकज्ञानस्यैव हेतुताया वक्तव्यत्वेन निर्विकल्पकासिद्धेः।**

**किञ्चास्तु विशेषणज्ञानं तथापि न निर्विकल्पकसिद्धिः। तथा हि। न तावज्जन्यविशिष्टज्ञानत्वं जन्यविशेषणज्ञान-जन्यतावच्छेदकम्। स्मृतावतिप्रसक्तेः। न च तत्रापि पूर्वानुभवो विशेषणज्ञानतया संस्कारद्वारा हेतुरिति वाच्यम्।**

**विशेषणज्ञानत्वेन जनकतायां संस्कारस्य द्वारत्वायोगात्। यज्जातीयस्य यं जनयित्त्वैव यज्जातीयजनकत्वं स एव हि तत्र व्यापारः। अन्यथा दण्डादिरपि कुलालव्यापारः स्यात्। न चात्र तत्सम्भवति। विशेषणज्ञानस्य संस्कारमजनयित्वापि विशिष्टज्ञानजनकत्वात्। तथा च जन्यानुभवत्वमेव जन्य-विशेषणज्ञानजन्यताच्छेदकमस्तु। लाघवात्। वैशिष्ट्यप्रवेशे एव गौरवात्॥**

**तथा च निर्विकल्पकाभिमतमपि विशेषणज्ञानजन्यम्। अत एव विशिष्टज्ञानं वास्तु। न चैवमनवस्था। क्वचिद्विशिष्ट-ज्ञानस्य स्मरणरूपतया तत्र विशेषणज्ञानानपेक्षणात्। जन्यविशिष्टानुभवं प्रत्येव हि जन्यविशेषणज्ञानं हेतुः। न तु स्मृतिं प्रत्यपीत्युक्तम्॥**

## न्यायदीपः

विशेषणस्य प्रतियोगित्वात्तन्निमित्तं विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वं चेत्तदा दोषमाह ॥ **अभावादिबुद्धाविवेति** ॥ इमौ संयुक्तावित्यादिबुद्धिरादिपदार्थः। व्यवहितेऽनुभवनाशादाह ॥ **संस्कारद्वाराहेतुरिति** ॥ **यज्जातीयस्येति** ॥ चक्षुरादीन्द्रियजातीयस्य सन्निकर्षं जनयित्त्वैव चाक्षुषादिसाक्षात्कारजातीयजनकत्वं दृष्टमिति सन्निकर्ष एवेन्द्रियस्य व्यापारः। तथा दण्डजातीयस्य चक्रभ्रमं जनयित्त्वैव घटजातीयजनकत्वमिति भ्रमिः दण्डस्य व्यापारो दृष्ट इत्यर्थः। कदापि फलोपधानरहितवनस्थदण्डादेर्व्यापारवत्त्वाय यज्जातीयस्येत्युक्तिः ॥ **अन्यथेति** ॥ सापेक्षत्वमात्रेण व्यापारत्व इत्यर्थः।

नन्वस्त्वेवं व्यापारत्वं तादृशमपि संस्कारस्यास्त्वित्यत आह ॥ **न चात्रेति** ॥ ननु विशिष्टज्ञानत्वस्योक्तविधया कार्यतानवच्छेदकत्वेपि निर्विकल्पकासिद्धिः कुत इत्यत आह ॥ **तथाचेति** ॥ जन्यविशिष्टज्ञानत्वस्यानवच्छेदकत्वे सतीत्यर्थः ॥ **तत्रेति** ॥ स्मरण इत्यर्थः। अननुभूतगोव्यक्तेः प्रथमतो गोत्वविशिष्टज्ञानमपि प्राग्भवीयसंस्कारजन्यस्मरणमस्तु। स्तनपानादाविवेति भावः।

ननु स्मरणस्य विशेषणज्ञान जन्यत्वादनवस्थेत्यत आह ।। **जन्येति** ।। **उक्तमिति** ।। स्मृतावतिप्रसक्तेरित्यादिपूर्वग्रन्थे उक्तमित्यर्थः।।

## तर्कताण्डवम्

**केचितु-**

**अस्तु वा स्मृतिसाधारणं जन्यज्ञानत्वमेव कार्यतावच्छेदकम्। तथापि वैशिष्ट्यप्रवेशे गौरवमेव। न चैवमनवस्था। बीजाङ्कुरवत् प्रामाणिकत्वेन वस्त्वनवस्थाया अदोषत्वात्। प्रथमप्रवृत्तेन प्रमाणेन लाघवसहकारिणा जन्यज्ञानपरम्परायामेव विशेषणज्ञानस्य कारणत्वावधारणात्। अन्यथा सामग्री सामग्र्यन्तरसापेक्षेत्यनवस्थापि दोषः स्यात्।।**

**न च जन्यस्य सर्वस्यापि ज्ञानस्य विशेषणज्ञानजन्यत्वे पूर्वपूर्वज्ञानधाराया अविच्छेदे प्रायणाद्यनुपपत्त्या ज्ञानानवस्थादोषः। एतज्जन्मनि प्राथमिकानुभवे स्मरणं हेतुः। तत्र च संस्कारद्वारा जन्मान्तरीयानुभवः। तत्रापि पूर्वजन्मान्तरीयानुभव इति स्वीकारेणाविरललग्नज्ञानधाराया अभावेन प्रायणाद्युपपत्तेः ।।**

**न च पुरुषप्रयोज्यशब्दवृत्तिजातिविशिष्टप्रत्यक्षे विशेषणज्ञानं न स्मृतिरूपं, तस्या जातेः पूर्वमननुभवादिति वाच्यम्। शब्दस्य शब्दत्वादिना स्मरणानन्तरं शब्दविशेषणकशब्दविशेष्यकज्ञानसम्भवात्। त्वत्पक्षे अभावविशेष्यकज्ञानानन्तरं तद्विशेषणकज्ञानवत्।।**

**एवं प्रत्यग्रोत्पन्नरूपादिविशिष्टप्रत्यक्षेपि द्रष्टव्यम्। अन्यथा त्वत्पक्षेपि निर्विकल्पकस्यादृष्टद्वारा जन्यज्ञान-**

**जन्यत्वादनवस्था स्यादित्याहुः।**

## निर्विकल्पके प्रमाणभङ्गः ॥ ३१ ॥

### न्यायदीपः

स्मृतिव्यावृत्तमेव कार्यतावच्छेदकं स्वयमुपपाद्य स्मृतिसाधारणमेव कार्यतावच्छेदकमस्त्विवति मतान्तरमाह ॥ **केचिदिति** ॥ इत्याहुरित्यन्वयः ॥ **नचैवमिति** ॥ स्मरणस्यापि जन्यविशेषण-ज्ञानजन्यत्व इत्यर्थः। प्रामाणिकत्वं व्यनक्ति ॥ **प्रथमेति** ॥ **लाघवेति** ॥ वैशिष्ट्यप्रवेशापेक्षया जन्यज्ञानत्वस्य लाघवादिति भावः ॥ **सामग्र्यन्तरेति** ॥ स्वजनकसामग्र्यन्तरेत्यर्थः ॥ **प्रायणादीति** ॥ मरणमूर्च्छादिरित्यर्थः ॥**अदृष्टद्वारा जन्यज्ञानेति** ॥ हविरादिगोचरजन्यज्ञानेत्यर्थः। आहुरित्यरुचिबीजं तु स्मृतावतिप्रसक्तेरित्यादिना पूर्वोक्तमेव ज्ञेयम्।

निर्विकल्पके प्रमाणभङ्गः ॥ ३१ ॥

## निर्विकल्पके बाधकम्

### तर्कताण्डवम्

**किञ्चातीन्द्रियज्ञानोपगमे योग्यानुलब्धेरभावेन ज्ञाना-भावस्य निश्चेतुमशक्यतया अनुपलब्धिलिङ्गजन्या घटाद्य-भावधीर्न स्यात्॥**

### न्यायदीपः

निर्विकल्पके साधकाभावमात्रं न बाधकं चास्तीत्याह ॥ **किञ्चेति** ॥ **योग्येति** ॥ यद्यत्र मयि ज्ञानं स्यादुपलभ्येतेति प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगित्वरूपमण्युक्तयोग्यानुपलब्धेरित्यर्थः ॥ **लिङ्गजन्येति** ॥ यद्यपि घटाद्यभावो योग्यानुपलब्धिसहकृतप्रत्यक्षवेद्यस्तथापि क्वचिदन्धकाराद्या-वृतस्थले परामर्शेन गृह्यमाणो घटाद्यभावोत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति लिङ्गगम्य इत्यभ्युपगमात्। ज्ञानाभावज्ञानस्यावश्यकत्वद्योतनाय लिङ्गजन्या घटाद्यभावधीरित्युक्तम्।

न च सविकल्पकाभाव एव घटाभावबुद्धौ लिङ्गमस्तु सविकल्पकस्य योग्यतया तदभावज्ञान-

सम्भवादिति वाच्यम्। उपलब्धिसामान्याभावस्यैवार्थाभावे लिङ्गत्वादन्यथातिप्रसङ्गादिति भावः।

## तर्कताण्डवम्

न च सविकल्पकाभाव एव निर्विकल्पकाभावे लिङ्गम्। निर्विकल्पके सति सविकल्पकावश्यम्भावाभावेन निर्विकल्पकं प्रति सविकल्पकस्याव्यापकत्वात्॥

अपि च निर्विकल्पकजन्यसविकल्पकोत्पत्तिदशाया-मतीन्द्रियनिर्विकल्पकसामग्रीसत्त्वेन सत्प्रतिपक्षवत् सामग्री-द्वयस्य परस्परप्रतिबन्धादेकमपि ज्ञानं नोत्पद्येत॥

न च पूर्वनिर्विकल्पकमेवोत्तरनिर्विकल्पकप्रतिबन्धकम्। धारावाहिकसाक्षात्कारदर्शनेन त्वत्पक्षेपि प्रत्यक्षस्थले सिद्धेः सिद्ध्यन्तराप्रतिबन्धकत्वात्।

न च समूहालम्बनवत् सामग्रीद्वयादार्थसमाजादेकं ज्ञानमस्त्विति वाच्यम्। तद्वदिह फलाविरोधाभावात्। न हि सम्भवत्येकमेव ज्ञानमेकस्मिन्नेव घटे घटत्वप्रकारकं तद-प्रकारकं चेति॥

अपि च दण्डपुरुषोभयसन्निकर्षे सति दण्डदण्डत्वो-भयनिर्विकल्पकानन्तरं दण्डे दण्डत्ववैशिष्ट्यज्ञानात्पूर्वं मुण्डितदण्डविशिष्टपुरुषधीः स्यात्। सामग्र्याः सत्त्वात्। न चेष्टापत्तिः। तादृशज्ञानाननुभवात्॥

न हि दण्डपुरुषसन्निकर्षानन्तरं दण्डे दण्डत्ववैशिष्ट्य-ज्ञानात्पूर्वं मुण्डितदण्डविशिष्टपुरुषज्ञानमनुभूयते। न चेदमपि ज्ञानमतीन्द्रियम्। सविकल्पकत्वात्। मम तु इन्द्रिय-सन्निकर्षादादावेव विशिष्टवैशिष्ट्यज्ञानोत्पत्तेर्नायं प्रसङ्गः॥

## न्यायदीपः

ननु निर्विकल्पकस्यातीन्द्रियत्वेन तदभावस्याप्रत्यक्षत्वेपि तज्ज्ञानमनुमितिरूपमस्तु। सविकल्पकस्य निर्विकल्पव्यापकतया सविकल्पकाभावस्यैव तत्र लिङ्गत्वात्तस्य च प्रत्यक्षत्वादित्याशङ्क्य निराह ॥ **न चेति** ॥ **सविकल्पकावश्यम्भावाभावेनेति** ॥ निर्विकल्पकमात्रं सविकल्पकं प्रत्यक्षसामग्रीत्वात्कारणान्तराभावादिना तदभावसम्भवादिति भावः।

बाधकान्तरमाह ॥ **अपि चेति** ॥ सविकल्पकदशायां निर्विकल्पकसामग्र्येव नास्ति निर्विकल्पकाभावसहकृतेन्द्रियसंयोगादेरेव निर्विकल्पकसामग्रीत्वादेवं च नोक्तदोष इति भावेनाशङ्क्य निराह ॥ **न च पूर्वेति** ॥ सामग्रीद्वयसत्त्वेप्यविरोधमाशङ्क्य निराह ॥ **न च समूहेति** ॥ तत्तदिन्द्रिय-सन्निकर्षरूपानेकसामग्रीसत्त्वेपि अनेकगोचरमेकं ज्ञानं जायते न तु प्रतबिन्ध एवमस्त्वित्यर्थः। विरोधं व्यनक्ति ॥ **न हीति** ॥

ननु स्मृतिसामग्रीतोनुभवसामग्र्या इवानुमितिसामग्रीतः प्रत्यक्षसामग्र्या इव च निर्विकल्पक-सामग्रीतः सविकल्पकसामग्र्या बलवत्त्वात् सविकल्पकस्यैवोत्पत्तिरित्यस्त्वित्यतो दोषान्तरमाह ॥ **अपिचेति** ॥ **मुण्डितदण्डेति** ॥ दण्डत्वानुल्लेखिदण्डविशिष्टपुरुषधीरित्यर्थः ॥ **सामग्र्या इति** ॥ विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहरूपविशिष्टज्ञानसामग्र्या इत्यर्थः।

## तर्कताण्डवम्

**किञ्च दण्डपुरुषसन्निकर्षे तदुभयस्वरूपमात्रविषयक-निर्विकल्पकवत् सम्बन्धस्यापि सन्निकर्षे तत्स्वरूप-मात्रविषयकं निर्विकल्पकमपि कस्मान्न स्यात्।**

**अपि चास्य निर्विकल्पकजातीयस्य ज्ञानकार्यं व्यवहारं संस्कारं इच्छादिकं च कदाप्यजनयतो न ज्ञानत्वं युक्तम्। नतरां चास्य स्वविषये कदापि संशयाद्यविरोधिनो निश्चय-त्वम्। नतमां चास्य स्वविषयासिद्धिमकुर्वतः प्रमात्वम्। न च निर्विकल्पकेन कस्यचिदपि वस्तुनः कदापि सिद्धिर्दृष्टा। नच प्रमाभ्रमविजातीयं ज्ञानमस्ति॥**

## न्यायदीपः

ननु मुण्डितदण्डज्ञानमग्रीसम्पत्तिवद्दण्डे दण्डत्व वैशिष्ट्यज्ञानसामग्र्यामपि सत्त्वात्। मुण्डितदण्डविशिष्टज्ञानोत्पत्तिवेळायां दण्डत्ववैशिष्ट्यमपि दण्डे भात्येवेतित्वन्मत वन्न्यायमते विशिष्टवैशिष्ट्यधीरस्त्वित्यत आह ।। **किञ्च दण्डपुरुषेति** ।। **सन्निकर्षेणेति** ।। संयुक्तविशेषणतादिरूपेणेत्यर्थः।

ननु सम्बन्धभाने सन्निकर्षमात्रं न हेतुः। किं तु सम्बन्धिज्ञानमपीति चेत् न। सम्बन्धत्वेन सम्बन्धज्ञास्य तथात्वेपि सम्बन्धस्वरूपज्ञाने तदनपेक्षणात्। अन्यथा सम्बन्धितावच्छेदकसम्बन्धिज्ञानेनैव सम्बन्धज्ञानदर्शनात्। विशिष्टज्ञानेपि सम्बन्धस्याभानापातात्।

अभ्युपेत्य वा दोषान्तरमाह ।। **अपि चास्येति** ।। क्वचित्कार्याजननेपि निर्विकल्पकान्तरे ज्ञानकार्यबलात् निर्विकल्पकमात्रे ज्ञानत्वादिकमविरुद्धमित्यतोऽस्येत्यस्य विवरणं ।। **निर्विकल्पकजातीयस्येति** ।। नतरान्नतमां इति चाव्ययमतिशयार्थकम्।

सिद्धिमकुर्वत इत्येतद् व्यनक्ति ।। **न चेति** ।। नन्वीश्वरज्ञानमिवनिर्विकल्पकमपि प्रमाभ्रमविजातीयज्ञानमनित्यमित्यत आह ।। **न चेति** ।। तथात्वे घटादिरपि कुतो न ज्ञानं स्यादिति भावः ।।

## तर्कताण्डवम्

**अपि चैवं निर्विकल्पकज्ञानं प्रत्यक्षविशेषवत् अनुमितिविशेषोऽपि स्यात्। निर्विकल्पकाभावे तु ज्ञानत्वाश्रयो न सविकल्पकत्वावच्छिन्नभिन्नः ज्ञानत्वात्। दण्डीति ज्ञानवत्, सविकल्पकत्वं ज्ञाननिष्ठात्यन्ताभावाप्रतियोगी सविकल्पकवृत्तित्वात् ज्ञानत्ववत्, ज्ञानं न सविकल्पकत्वासमानाधिकरणधर्मवत् ज्ञानत्वात् अनुमितिवत्, अपरोक्षत्वं विशिष्टज्ञानत्वव्याप्यं ज्ञानविभाजकधर्मत्वात् परोक्षत्ववदित्यादि द्रष्टव्यम्।**

**एतदेवाभिप्रेत्योक्तं पद्धतौ ''द्रव्यादिविकल्पानां प्रथममेवोत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तेः'' इति।**

यद्विशेषयोरित्यादिन्यायरूपस्यानुगतकारणं विनानुगत-कार्यानुत्पत्तिरूपस्य विशेषणस्य पूर्वमभावे विशिष्टज्ञाने प्रकारत्वानुपपत्तिरूपस्य सम्बन्धिज्ञानं विना सम्बन्धज्ञाना-नुपपत्त्यादिरूपस्य च विपक्षे बाधकस्योक्तरीत्या अभावेनेत्यर्थः ॥

उपलक्षणं चैतत्। प्रत्युत निर्विकल्पकाङ्गीकार एवानुप-लब्धिलिङ्गकघटाभावज्ञानानुपपत्तिरूपस्य, निर्विकल्पक-सविकल्पकसामग्र्योः परस्परं प्रतिबन्धकत्वप्रसङ्गरूपस्य, मुण्डितदण्डविशिष्टपुरुषज्ञानप्रसङ्गरूपस्य, सम्बन्धांशेपि निर्विकल्पकप्रसङ्गादिरूपस्य, बाधकस्य च सद्भावेनेत्यपि ग्राह्यम्॥

तस्मात्सर्वमपि ज्ञानं सविकल्पकमेव।

तदेवं वर्णस्य गुणत्वे उक्तरीत्या ग्रहणासम्भवात् नित्यविभुद्रव्यात्मकवर्णसमुदायात्मकस्य वेदस्यापौरुषेयत्वं युक्तमिति।

निर्विकल्पके बाधकम्॥ ३२॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण
व्यासयतिना विरचिते तर्कताण्डवे
प्रथमः परिच्छेदः

## न्यायदीपः

यदपि ''प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकं चे''ति मण्यादौ प्रत्यक्षत्वकथनं तदप्ययुक्तमित्याह ॥ **अपि चैवमिति** ॥ साक्षात्कारकार्यमकुर्वतोपि प्रत्यक्षज्ञानविशेषत्वेनुमिति-कार्यमकुर्वतोप्यनुमितिविशेषत्वं स्यादित्यर्थः ॥

प्रमाणविरुद्धं च निर्विकल्पकमिति भावेनाह ।। **निर्विकल्पकाभावे त्विति** ।। इत्यादिद्रष्टव्यमित्युत्तरेणान्वयः। एतेन निर्विकल्पकाभावे मानाभावादेव निर्विकल्पसिद्धिरिति निरस्तम्। सविकल्पकस्यापि सविकल्पकान्तरभिन्नत्वाद् बाधनिरासाय सविकल्पकत्वावच्छिन्न-भिन्नेति साध्योक्तिः। यत्किञ्चित्सविकल्पकत्वे व्यभिचारनिरासाय सकलेति सविकल्पकविशेषणम्।।

उक्तप्रमेयस्य बाधकाभावेनेतदारूढतां व्यनक्ति ।। **यद्विशेषेत्यादिना** ।। **उपलक्षणं चैतदिति** ।। बाधकाभावेनेत्येतद् बाधकभावेनेत्यस्याप्युपलक्षणमित्यर्थः। तदेवं व्यनक्ति ।। **प्रत्युतेति** ।। भङ्गाद्वयार्थमुपसंहरति ।। **तस्मादिति** ।।

प्रसक्तानुप्रसक्तप्रमेयोपपादनस्यादिवर्जितैरित्युक्तविशेषणसमर्थनंफलमिति दर्शयन् परिच्छेदा-र्थमुपसंहरति ।। **तदेवमिति** ।। **उक्तेति** ।। समवायरूपप्रत्यासत्तिर्नेत्युक्तरीत्येत्यर्थः ।। **युक्तमिति** ।। तथाचाम्नायैरादिवर्जितैरित्युक्तं साध्विति भावः ।।

निर्विकल्पकवादः ।। ३२ ।।

इति श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यराघवेन्द्रयतिकृते
तर्कताण्डवविवरणे न्यायदीपे
प्रथमः परिच्छेदः

## तर्कताण्डवम्

### शक्तिवादः

#### अथाकाङ्क्षानिरुपणम् ।

यच्चेदमुच्यते वेदस्यापौरुषेयत्वे आप्तवाक्यत्वादिरूपस्य प्रमाणशब्दलक्षणस्याभावात् प्रामाण्यं न स्यादिति। तन्न। पद्धतौ निर्दोषशब्दत्वं निर्दोषवाक्यत्वं वा आगमलक्षणमित्युक्तत्वात्।

अत्राद्यं निर्दोषः शब्द आगम इति प्रमाणलक्षणानुसारि। निष्प्रयोजनत्वादिदोषनिरासार्थमावश्यकेन निर्दोषत्वविशेषणेनैव निरभिधेये अनन्विते चाप्यतिव्याप्तिनिरासेन वाक्यग्रहणस्यानपेक्षितत्वात्।।

द्वितीयं तु ''आगमोऽदुष्टवाक्यं च'' इति ब्रह्मतर्कानुसारि। अत्र वाक्यग्रहणं शिष्याणां पदवाक्यादिस्वरूपज्ञापनार्थम्।

अत एव पद्धतौ ''द्वितीयपक्षे विभक्त्यन्तावर्णाः पदं, आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि वा वाक्य''मित्यादिना पदादीनां लक्षणमुक्तम्। अत एव प्रमाणलक्षणटीकायां ''मूलस्थं शब्दपदं वाक्यपर''मित्युक्तम्।।

### न्यायदीपः

यस्मिन् वेदस्य सर्वस्याप्याकाङ्क्षायोग्यतादयः।
तं वन्दे परमानन्दमिन्दिरामन्दिरोरसम्।।

ननु-वेदापौरुषेयत्वसमर्थनं पूर्वपरिच्छेदे कृतमयुक्तम्। तथात्वे शब्दप्रमाणलक्षणाभावेन

प्रमाणशब्दत्वानापत्तेः। एवं च "आदिवर्जितैः, आदरेणाख्यात इत्युक्ते हरौ शक्तितात्पर्ये न युक्ते इति चोद्यमनूद्य निराह **॥ यच्चेति ॥** आदिपदेन आप्तिपूर्वकशब्दत्वयथार्थवाक्यार्थज्ञानजन्य-वाक्यत्वादिग्रहः। प्रमाणभूतशब्दस्य यल्लक्षणं तस्येत्यर्थः **॥ प्रामाण्यमिति ॥** प्रमाजनकत्वमित्यर्थः। पूर्वं दूरे तस्य स्वतस्त्वसाधनमिति भावः **॥ पद्धताविति ॥** "निर्दोषः शब्द आगमः, निर्दोषं वाक्यमिति वा" पद्धतावित्यर्थः। द्वयोरप्युक्तिः तद् द्वयतात्पर्यव्यक्त्यर्था। तथा च लक्षणान्तर-सम्भवात् प्रमाण्यं वेदस्य युक्तमिति भावः। एतेन एवमागमलक्षणोक्तेरभिप्रायः स्फुटीकृतो भवति। द्वयोक्तेर्मूलं भावं च व्यनक्ति **॥ अत्रेति ॥**

ननु-कथं तर्हि अबोधकविपरीतबोधकरूपवाक्याभासेऽतिव्याप्तिनिरासः। पद्धतावेव "आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि वाक्यं" इत्युक्त्वा "पदत्वेनानभिधेयत्वस्य आकाङ्क्षा-सन्निधिभ्यामन्वयाभावस्य निरास" इत्याद्युक्तेरित्यतस्तद् द्वितीयलक्षणाभिप्रायमित्युपेत्य "निरभिधेयत्वेनान्वयाभवेन वा अबोधकत्व"मित्यादि निर्दोषपदकृत्योक्तिपरपद्धत्युक्तिं हृदि कृत्वा तात्पर्यमाह **॥ निष्प्रयोजनत्वेति ॥ ब्रह्मतर्केति ॥** तत्त्वनिर्णयोक्तब्रह्मतर्केत्यर्थः। नन्वेवमुक्तदिशा शब्द इत्येव पूर्तौ वाक्यमिति व्यर्थमत आह **॥ अत्र वाक्येति ॥** अस्मिन्पक्षे निर्दोषपदं पद्धत्युक्तवाक्यपदव्यावर्त्यान्यदोषव्यावृत्त्यर्थमिति भावः॥

**॥ विभक्त्यन्ता इति ॥** सुप्तिङ्रूपविभक्त्यन्ता इत्यर्थः। "विभक्तिश्च" इति सूत्रे सुप्तिङोरुभयोरपि विभक्तिसञ्ज्ञोक्तेः। "सुप्तिङन्तं पदं" इति पाणिनीयसूत्रादिति भावः। अत्र बहुत्वं प्रायिकत्वाभिप्रायम्। विभक्त्यन्तो वर्णः तादृशौ वर्णौ वा तादृशा वर्णा वेत्यर्थः। विभक्त्यन्तवर्णत्वं पदत्वमिति यावत्। विभक्त्यन्तत्वस्य वर्णत्वाव्यभिचारेऽपि वर्णा इत्याद्युक्तिः स्पष्टार्था। राजपुरुष इत्यादौ अनेकपदसमुदायस्य विभक्त्यन्तस्य पदत्वनिवृत्त्यर्थं वर्णा इत्युक्तिः। तदर्थस्तु विभक्तिः अन्त एव येषां ते विभक्त्यन्ता इति। राजपुरुष इत्यादौ तु मध्येऽपि विभक्तिर्लुप्ताऽस्तीत्येके। अन्ये तु तस्यापि पदत्वलाभायैवमुक्तिः। पदद्वयावयवविभक्तिद्वयात् समुदाय उत्पन्नविभक्तेरन्यत्वेन पदद्वयस्थवर्णसमुदायस्यापि विभक्त्यन्तवर्णत्वादित्याहुः। वर्णान्यस्फोटनिरासाय वर्णोक्तिरित्यपरे॥

**॥ आकाङ्क्षेति ॥** प्रयुज्यमानपदेष्वेवान्योन्याकाङ्क्षावन्ति पदानीत्यर्थः। तेन निराकाङ्क्षपदानि वाक्यमिति भाष्यटीकया न विरोधः। स्वस्मिन्नेव पूर्णाकाङ्क्षावत्त्वेनान्यत्र निराकाङ्क्षपदसन्दर्भो वाक्यमिति चन्द्रिकायां तस्यार्थोक्तेः। पदानीति बहुत्वं प्रायिकाभिप्रायम्। अत्रापि पदशब्दप्रयोगकृत्यं पूर्वं वर्णपदकृत्यवत् पदान्यवाक्यस्फोटनिरासायेति बोध्यम्। प्रकृतिप्रत्ययसमभिव्याहारपदे अतिव्याप्तिनिरासाय पदानीत्युक्तिः। पदादीनामित्यादिपदेन वाक्यस्याकाङ्क्षासन्निध्यादेर्ग्रहः **॥ अत**

**एवेति** ।। पदादिस्वरूपव्युत्पादनार्थत्वादेवेति ब्रह्मतर्कसंवादार्थत्वादेवेत्यर्थः ।। **मूलेति** ।। ''निर्दोषः शब्द आगमः'' इति मूलस्थमित्यर्थः ।।

## तर्कताण्डवम्

**ननु-केयमाकाङ्क्षा?**

**न तावदविनाभावः। घटमानयेत्यादावभावात्। न हि घट आनयनाविनाभूतः। अहो विमलं जलं नद्याः कच्छे महिषः चरतीत्यत्र जले साकाङ्क्षस्य नदीपदस्य नद्यविनाभूते कच्छे साकाङ्क्षत्वप्रसङ्गाच्च।।**

**नाप्युदयनाद्युक्तरीत्या श्रोतरि तदुच्चारणजन्यसंसर्गावगमप्रागभाव आकाङ्क्षा। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र पुत्रे साकाङ्क्षस्य राजपदस्य तात्पर्यभ्रमेण पुरुषान्वयबोधे ततः प्राक्तदन्वयावगमप्रागभावस्य सत्त्वेनातिव्याप्तिः।**

**नापि तात्पर्यविषयीभूतसंसर्गावगमप्रागभाव आकाङ्क्षा। प्रागभावस्य कार्यमात्रहेतुत्वेन शाब्दासाधारण्यायोगात्। वक्ष्यते चैतत्।।**

## न्यायदीपः

तत्र पद्धतौ वाक्यलक्षणे प्रथमोद्दिष्टाकाङ्क्षास्वरूपं निरूपयितुं पूर्वपक्षमाह ।। **नन्विति** ।। पदानां या आकाङ्क्षा सेयं केत्यर्थः ।। **अभावादिति** ।। कुतः परस्परव्यभिचारादिति भावेनाह ।। **न हीति** ।। आनयनं वा घटाऽविनाभूतमित्यप्युपलक्ष्यते। एतेन कारकस्य क्रियाऽविनाभावः क्रियायाः कारकाऽविनाभावोस्तीति निरस्तम्। क्रियाविशेषकारकविशेषयोः तदभावेन घटमानयेत्यनयोः निराकाङ्क्षताऽऽपत्तेरिति। मणौ नीलं सरोजमित्यादौ व्यभिचारोक्तिस्त्वयुक्ता। तत्र तात्पर्यविषययोः नीलसरोजयोरविनाभावसत्त्वादिति भावः ।।

ननु-पदार्थतावच्छेदकरूपेण क्रियाकारकभावेन विवक्षितोऽविनाभावः प्रकृतेप्यस्तीत्यत आह ॥ **अहो विमलमिति** ॥ पूर्वत्रोक्तातिव्याप्तेर्निरासकं पक्षमाशङ्क्य निराह ॥ **नापीति** ॥ श्रोतरि विद्यमान उक्तरूपप्रागभाव अकाङ्क्षेत्यर्थः। अत्र घटः कर्मत्वं आनयनं कृतिरिति वाक्याभासे घटमानयेत्येतत्-समानार्थकेऽतिव्याप्तिनिरासाय तदुच्चारणजन्येत्यवगमविशेषणम्। वक्त्रपेक्षयाऽसम्भववारणाय श्रोतरीत्येके। स्वरूपकथनं तदित्यन्ये॥

अहो विमलमिति पूर्वोक्तवाक्ये च तात्पर्यवशात् कदाचित् कच्छनद्योः संसर्गावगमेन तत्प्रागभावसत्त्वेऽपि तदुच्चारणे तात्पर्यवशात् जलान्वितनद्याः कच्छसंसर्गावगमो नेति न तत्प्रागभाव इति नातिव्याप्तिरिति भावः। इत्यत्रेत्युपलक्षणम्। पूर्ववाक्ये चेत्यपि ज्ञेयम्। कस्यचित् तात्पर्यवशात् जलान्वयावगमेन नद्याः कच्छान्वयानवगमेऽपि प्रयोगान्तरे पुनरन्यस्य कच्छान्वयतात्पर्यभ्रमेण तदन्वयावगमसम्भवात्।

॥ **तात्पर्यविषयेति** ॥ पुरुषान्वयबोधस्तु न तात्पर्यविषय इति न पूर्वोक्तदोष इति भावः। शब्दासाधारण्यायोगादित्युपलक्षणम्। संसर्गावगमान्तरप्रागभावस्य सत्त्वात्। जनितान्वयबोधस्यापि वाक्यस्य साकाङ्क्षत्वापत्तिरित्यपि बोध्यम् ॥ **वक्ष्यत इति** ॥ मण्युक्ताकाङ्क्षा स्वरूपखण्डनप्रस्तावे "किञ्च प्रागभावस्य" इत्यादिग्रन्थे।

## तर्कताण्डवम्

**यत्तु मणावुक्तम्- "अभिधानापर्यवसानमाकाङ्क्षा। यस्य येन विना स्वार्थान्वयाननुभावकत्वं तस्य तदेवापर्यवसानम्। अन्वयाननुभावकत्वं च अन्वयानुभवप्रागभावः। अत एव जनितान्वयबोधं पदमनाकाङ्क्षं तदा प्रागभावाभावात्। अत एव स्वरूपयोग्यतात इयं भिन्ना। सा हि जनितफलेप्यस्ति। इयं तु फलजननात् प्रागेव। न चाभावे तारतम्याभावेन आकाङ्क्षायामुत्कटत्वानुत्कटत्वरूपतारतम्यायोगः। ससम्बन्धिकासम्बन्धिकपदत्वादिनैव तदुपपत्तेः। ज्ञाता चेयं हेतुः। अन्यथा निराकाङ्क्षे तद्भ्रमादन्वयधीर्न स्यात्। न तु समभिव्याहृतपदार्थजिज्ञासा आकाङ्क्षा। ज्ञाने इष्टसाधनत्वाज्ञानेन**

**ज्ञानेच्छारहितस्यापि पुंसः शाब्दबोधदर्शनात्। किञ्च-अस्मिन् पक्षे आकाङ्क्षाज्ञानं हेतुर्न स्यात्। जिज्ञासाया अज्ञानेऽपि शाब्दबोध दर्शनात्'' इति।।**

**तदपि न। गौणलाक्षणिकयोरव्याप्तेः। न हि त्वत्पक्षे तयोरितरविरहप्रयुक्तमननुभावकत्वम्। किन्तु स्वत एव। किञ्च घोषपदमेव गङ्गापदेन साकाङ्क्षं, गङ्गापदं तु न घोषपदेनेति सम्भवति।।**

## न्यायदीपः

**।। यत्तु मणाविति ।।** शब्दखण्डे आकाङ्क्षावादसिद्धान्त इत्यर्थः। ननु-अभिधानमन्वयानुभवः तस्यापर्यवसानमनिष्पत्तिः इत्यर्थश्चेत्, कर्मत्वमित्यादावस्त्येवेत्यतोऽन्यमेवापर्यवसानशब्दार्थं मण्युक्तमाह **।।यस्येति।।** यस्य पदस्योपस्थितस्य यद्व्यतिरेकप्रयुक्तस्वार्थान्वयाननुभावकत्वं तस्य पदस्य तदननुभावकत्वमेवापर्यवसानं तेन च सह तदेवाकाङ्क्षेत्यर्थः।

ननु-इयमाकाङ्क्षा स्वरूपयोग्यतैव। सा च नाकाङ्क्षा। तस्याः शब्दसहकारित्वात्। स्वरूपयोग्यतायाश्च अतथात्वात्। इत्यतः पक्षधराद्युक्तमाह **।। अत एव चेति ।।** प्रागभावरूपत्वादेवेत्यर्थः। प्रागभावस्याकाङ्क्षारूपत्वे चोत्थितोऽथाप्याकाङ्क्षयोरुत्कर्षादिर्न स्यादित्याशङ्क्याह **।। न चेति ।।** अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपदादेः पुत्रादिनोत्कटाकाङ्क्षत्वं पुरुषपदादिना च न तथेति एतत्सम्बन्धिकत्वादिना युक्तमित्यर्थः **।। अन्यथेति ।।** स्वरूपसत्याः हेतुत्वे घटः कर्मत्वमित्यादौ निराकाङ्क्षे साकाङ्क्षत्वभ्रमात् कदाचिदन्वयधीर्न स्यादित्यर्थः। यद्वा अहो विमलमित्यादिवाक्ये नद्याः कच्छेनाकाङ्क्षाभ्रमादन्वयधीर्न स्यादित्यर्थः।

पक्षान्तरं निराह **।। नन्विति ।।** यत्पदोच्चारणानन्तरं यत्पदार्थज्ञानेच्छा भवति तद्वाचिना पदेन तत्पदं साकाङ्क्षमिति न भवति। ज्ञानेच्छा हि जिज्ञासा। सा च ज्ञानविषयिणी जायमानज्ञानस्य इष्टसाधनत्वे सति भवति नान्यथा। तथा च कदाचिच्छाब्दज्ञाने तदिष्टसाधनतावबोधहीनस्यापि शाब्दबोधदर्शनेन व्यतिरेकव्यभिचारात् नेयमाकाङ्क्षा शाब्दबोधहेतुरित्यर्थः।।

**।। गौणेति ।।** सिंहश्चैत्रः गङ्गायां घोषः इत्यनयोरित्यर्थः। तत्र मणिकृन्मते सिंहगङ्गापदयोः अननुभावकत्वं व्यनक्ति **।। नहि त्वत्पक्ष इति ।।** यस्य येनेत्यादिनोक्तार्थनिष्कर्षानुवाद इतर-

विरहेत्यादि ॥**स्वत एवेति**॥ स्वरूपायोग्यत्वप्रयुक्तत्वादेवेत्यर्थः। घटः कर्मत्वमित्यादौ यथा स्वरूपायोग्यत्वप्रयुक्तमेवाननुभावकत्वं, न पदान्तरविरहप्रयुक्तं तथेति भावः।

## तर्कताण्डवम्

**न चाननुभावकपदस्थानेऽज्ञापकपदप्रक्षेपेऽव्याप्तिर्नेति युक्तम्। इतरपदविरहेऽपि पदस्य स्मारकत्वेनाज्ञापकत्वस्येतर-पदविरहाप्रयुक्तत्वात्। किञ्च प्रागभावस्य सर्वकार्यहेतुत्वेन शाब्दासाधारण्यं न स्यात्।**

**न च शाब्दानुभवेऽन्वयानुभवप्रागभावस्योत्तरपदविरह-प्रयुक्तत्वेन हेतुत्वादसाधारण्यं, अत एव येन विनेति विशेषितमिति वाच्यम्। इतरपदानां सहकारित्वेन शाब्दबोध-प्रागभावस्य तद्विरहप्रयुक्तत्वेऽपि घटादाविव शाब्दानुभवेऽपि प्रागभावत्वेनैव हेतुत्वात्। अन्यथा घटप्रागभावोऽपि घटे दण्डादिविरहप्रयुक्तत्वेन हेतुः स्यात्। न च शाब्दज्ञाने प्रागभावज्ञानं कारणमित्यसाधारण्यम्। तज्ज्ञानस्य कारणत्वे मानाभावात्। न हि शाब्दबोधात् प्राक् ममात्रान्वये ज्ञानं नेति ज्ञानमनुभवसिद्धम्। अन्यथा घटेऽपि प्रागभावो ज्ञातो हेतुः स्यात्॥**

## न्यायदीपः

अलक्ष्यत्वान्नाव्याप्ति-र्दोषायेत्याशङ्क्य निराह ॥**न चेति**॥ अनुभवविरोधादिति भावः। अज्ञापकपदेति विच्छेदः॥

न च पदस्य पदार्थस्मारकत्वेऽप्यन्वयाज्ञापकत्वमस्त्येव। तस्यैव लक्षणेऽभिमतत्वादिति युक्तम्। वक्ष्यमाणदिशाऽन्विताभिधानवादेन्वितस्वार्थस्मारकत्वस्यापि सत्त्वात्। परमतेऽपि जात्याकृत्यन्वितव्यक्तेरेव पदार्थत्वेन जात्याद्यन्वयस्मारकत्वाच्चेति तात्पर्यात्॥

ननु-यदुपस्थापितस्यार्थस्य यत्पदव्यतिरेकेण नानुभवविषयत्वं तस्य तत्साकाङ्क्षत्वमिति

लक्षणार्थः। एवं च तीरादेरनुभवविषयत्वं न घोषादिपदं विनेति लाक्षणिकादेरपि साकाङ्क्षत्वमिति पक्षधराद्युक्तेर्नाव्याप्तिरित्यतो दोषान्तरमाह ॥ **किञ्चेति** ॥ तट्टीकाकारैरुक्तमाशङ्क्य निराह ॥ **न च शब्देत्यादिना** ॥ **सहकारिकत्वेनेति** ॥ शाब्दबोधसहकारित्वेनेत्यर्थः ॥

## तर्कताण्डवम्

**अथ प्रागभावः प्रागभावत्वेन नाकाङ्क्षा, किन्तु प्रागभावात्यन्ताभावसाधारण्येनेतरविरहप्रयुक्तान्वयानुभवाभावत्वेनेति असाधारण्यम्। घटादौ प्रागभावत्वेनैव हेतुत्वात्। अत एवान्वयबोधदशायां नातिव्याप्तिः। तदा प्रागभावात्यन्ताभावयोरभावात्। नाप्यन्वयबोधध्वंसदशायाम्। तदा ध्वंसस्य सत्त्वेऽपि तस्येतरविरहाप्रयुक्तत्वादिति चेन्न ॥**

**अत्यन्ताभावसाधारणेन रूपेण हेतुत्वे स्वात्यन्ताभावस्य स्वं प्रत्यहेतुत्वात्। शाब्दानुभवान्तराभावः शाब्दानुभवं प्रति, त्वन्मतेऽनुमित्यन्तराभावोऽनुमितिं प्रतीव प्रतिबन्धकाभावतया हेतुः स्यात्। प्रतिबन्धकाभावश्चाज्ञात एव हेतुः कार्यमात्रसाधारणश्चेति त्वदङ्गीकृतमाकाङ्क्षाज्ञानस्य हेतुत्वमसाधारण्यं च न स्यात्। किञ्च सकलपदोपस्थितिदशायां शाब्दबोधात्पूर्वं प्रागभावस्येतरविरहाप्रयुक्तत्वादव्याप्तिः। तस्मादाकाङ्क्षा दुर्निरूपेति ॥**

## न्यायदीपः

प्रकारान्तरेण शब्दासाधारण्यं संसर्गावगमप्रागभावस्य शङ्कते ॥ **अथेति** ॥ प्रागभावात्यन्ताभावेत्युपलक्षणम्। ध्वंसेत्यपि ध्येयम्। अत एवेतरविरहप्रयुक्तान्वयानुभवाभावत्वेनेति हेतुतावच्छेदकोक्तिः। अन्यथाऽन्वयानुभवानाद्यभावत्वेनेत्येव हेतुतावच्छेदकमुक्त्वा इतरविरहप्रयुक्तेति न ब्रूयात्। तस्य ध्वंसदशायामतिव्याप्तिवारकत्वात्। अन्वयानुभवसंसर्गाभावत्वेन हेतुत्वविवक्षायामेवेतरविरहप्रयुक्तेति सार्थक्यात्। ध्वंसस्याहेतुत्वान्न तत्साधारण्यं चेदत्यन्ता-

भावसाधारण्यमपि न स्यात्। अत एव नाप्यन्वयबोधध्वंसदशायामित्यादि वक्ष्यतीति ध्येयम्॥

यद्वोक्तोभयसाधारणमेवास्तु अन्वयानुभवाभावत्वेनैव हेतुता ध्वंसेति प्रसक्तेति तद्वारणायैवेतरेत्यादिविशेषणोक्तिः। घटादौ तु नैवमित्याह **॥घटादाविति॥** तत्प्रागभावस्येति योज्यम्। अत एवेत्युक्तं व्यनक्ति **॥तदेति॥ ध्वंसदशायामिति॥** अतिव्याप्तिरित्यनुषङ्गः।

अत्यन्ताभावसाधारण्येन हेतुत्वं किं स्वात्यन्ताभावसाधारण्येन विवक्षितं, उत शाब्दानुभवान्तरात्यन्ताभावसाधारण्येनेति। आद्य आह **॥स्वात्यन्ताभावस्येति॥** अन्त्य आह **॥शाब्दान्तरानुभवेति॥**

**॥प्रतिबन्धकाभावतयेति॥** सिद्धसाधनता अनुमाने दोष इति सिद्धेरनुमितिप्रतिबन्धकत्वात् सिद्ध्यन्तराभावोऽनुमितौ यथा प्रतिबन्धकाभावतया हेतुः एवमप्राप्ते वाक्यमर्थवदिति न्यायादन्वयगोचरानुभवान्तरे सति पुनः शाब्दानुभवस्यानपेक्षितत्वेनानुदयादनुभवान्तरमन्वयानुभवे प्रतिबन्धकमिति तदभावोऽपि प्रतिबन्धकाभावत्वेनैव हेतुः स्यादित्यर्थः। ततश्च किमित्यत आह **॥प्रतिबन्धकाभावश्चेति॥ पूर्वमिति॥** सङ्केतस्मरणपदार्थोपस्थितिदशायां पदानामुपस्थित्यनन्तरमित्यर्थः॥

## तर्कताण्डवम्

**उच्यते- यस्य पदस्य यदन्वयाननुभावकत्वं समभिव्याहृतयत्पदगतयद्रूपविरहप्रयुक्तं तस्य पदस्य तस्मिन्नन्वये तेन पदेन सह तद्रूपमाकाङ्क्षा।**

## न्यायदीपः

पद्धतौ ''आकाङ्क्षा जिज्ञासा चेतनधर्मः। तद्विषयत्वात्पदार्थाः साकाङ्क्षाः। तत्प्रतिपादकत्वात् पदान्यपि'' इति ग्रन्थेन जिज्ञासाविषयीभूतपदार्थविषयप्रतिपत्तिजनकत्वं पदानां साकाङ्क्षत्वमिति यदुक्तं तत्र जनकत्वं न फलोपधानं, किन्तु स्वरूपयोग्यतैवाभिमतेति भावेन तत्रोक्तं निष्कृष्याग्रे स्वाभिमताकाङ्क्षालक्षणं विवक्षुरादौ तावत्प्रौढ्या पद्धत्युक्तलक्षणाविनाभूतं लक्षणान्तरमाह **॥यस्य पदस्येत्यादिना॥**

पद्धतौ पदानीत्युक्तत्वात्पदस्येति बाहुल्याभिप्रायेणोक्तम्। यस्य शब्दस्येत्यर्थः। तेन

प्रातिपदिकप्रत्यययोर्महावाक्यस्यावान्तरवाक्यस्य च ग्रहः। तदपि तदुपस्थितिपरम्। यत्पदेत्यत्रापि यच्छब्देत्यर्थः। यद्रूपेत्यत्र यद्रूपोपस्थितीत्यग्रे व्यक्तम्। तथाच यस्य शब्दस्योपस्थितस्य यदन्वयाननुभावकत्वं यश्चासावन्वयश्चेति विग्रहः। तस्मिन्नन्वये इत्यग्रेकथनात्। तादृशान्वयानुभावकत्वाभावः। स च प्रागभावः उच्चारणतो वा अभिप्रायतो वा सहस्थितयत्पदस्थितयद्रूपोपस्थितिविरहप्रयुक्तो वा भवति तद्रूपं क्रियापदत्वकारकपदत्वैकविभक्तिकत्वादिकं तद्वत्त्वमित्यर्थः। उपस्थितेतरशब्दस्याभिमतान्वयाननुभावकत्वप्रयोजकविरहप्रतियोगिज्ञानविषयीभूतरूपवत्पदान्तरसमभिव्याहृतत्वं साकाङ्क्षत्वमिति यावत्। उपस्थितिशब्दस्याभिमतान्वयानुभावकत्वप्रयोजकरूपवदुपस्थितशाब्दान्तरसमभिव्याहृतत्वं तेन साकाङ्क्षमित्यन्वयार्थः।

तद्यथा घटमानयेत्यत्र यस्य घटशब्दस्य यदन्वयाननुभावकत्वं समभिव्याहृतानयेति पदगतक्रियापदत्वविरहप्रयुक्तं घटमानयनमित्यादौ तथा दर्शनात्, तथा च तस्य घटपदस्य तस्मिन्नानयनान्वये तेनानयनपदेन सह तद्रूपं क्रियापदत्वरूपमाकाङ्क्षा। तथाऽऽनयेति पदस्य घटान्वयाननुभावकत्वं घटपदगतकर्मकारकत्वविरहप्रयुक्तम्। घटः आनयेत्यादौ दर्शनात्। एवं च तस्यानयनपदस्य घटान्वये तेन घटपदेन सह कर्मकारकपदत्वमेवाकाङ्क्षेति ध्येयम्।

अत्र यस्य शब्दस्य समभिव्याहृतयच्छब्दविरहप्रयुक्तंमननुभावकत्वमित्येवोक्तौ असम्भवः स्यात्। घटमानयनमित्यादौ सत्यपि पदान्तरे त्वयाऽननुभावकत्वसत्त्वेन तस्य पदान्तरविरहाप्रयुक्तत्वात्। यत्पदगतयद्रूपेत्युक्तम्। घटो भवतीत्यत्रानुच्चारितेनापि समानविभक्तिकेन रक्त इति पदेन घटपदस्य निराकाङ्क्षतैवेति पक्षे घटे रागान्वयाननुभावकताप्रयोजकविरहप्रतियोगितावच्छेदकरूपस्य समानविभक्तिकत्वस्य सत्त्वादतिव्याप्तिनिरासाय समभिव्याहृतेत्युक्तिः। साकाङ्क्षता तयोरप्यस्तीति मते तु यत्पदगतेत्याद्येव। समभिव्याहृतपदमनादेयमित्यग्रे व्यक्तम्। यदन्वय इत्युक्तिस्तु घटः कर्मत्वं आनयनं कृतिरिति वाक्ये क्रियाकर्मभावान्वये निराकाङ्क्षे भेदान्वये च साकाङ्क्षेऽतिव्याप्त्यव्याप्त्योर्निरासायेत्यग्रे व्यक्तम्।

## तर्कताण्डवम्

**तच्च रूपं क्रियाकारकभावान्वये क्रियापदत्वादिकम्। सम्बन्धरूपान्वये षष्ठ्यन्तत्वादिकम्। अभेदान्वये समानविभक्तिकत्वम्। प्रकृतिप्रत्ययार्थयोरन्वये प्रकृतित्वादिकम्॥**

**अत एव घटमानयेत्यत्रानयेति क्रियापदं विना घटमिति द्वितीयान्तं कारकपदं क्रियाकर्मभावान्वयाननुभावकमिति क्रियाकारकभावान्वये तेन साकाङ्क्षम्। घटः कर्मत्वमानयनं कृतिरिष्टसाधनत्वमित्यादौ घटमानयेत्यनेन सहैकार्थ्ये सत्यपि क्रियाकारकपदत्वाभावान्न तदन्वये घट इत्यादिपदं साकाङ्क्षम्। अभेदान्वये तु समानविभक्तिकत्वात्साकाङ्क्षम्। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्रभुक्तमित्यस्य क्रियापदस्य आसन्नेनाप्यकारकगिरिपदेन नाकाङ्क्षा। किन्त्वनासन्नेनापि कारकेण देवदत्तेनेति पदेनैवाकाङ्क्षा॥**

## न्यायदीपः

कुत्र किंरूपमित्यतः तद्दर्शयति ॥**तच्चेति**॥ आदिपदेन कारकपदत्वग्रहः। राज्ञः पुरुष इत्यादावाह ॥**सम्बन्धेति**॥ प्रथमान्तत्वमादिपदार्थः। रक्तो घट इत्यादावाह ॥**अभेदेति**॥ लक्षणवाक्ये तदग्रहणं शब्दपरमित्युपेत्याह ॥**प्रकृतीति**॥ घटमित्यादौ घटरूपप्रातिपदिकार्थ-द्वितीयाविभक्त्यर्थयोरन्वय इत्यर्थः। आदिपदेन द्वितीयत्वादिग्रहः।

क्रियापदत्वादिकं तद्रूपमित्युक्तं तत्कथमित्यतः क्वचिद्व्यनक्ति ॥**अत एवेति**॥ क्रियापदत्वादेरितरपदविरहप्रयुक्तान्वयाननुभावकताप्रयोजकत्वादेवेत्यर्थः ॥**क्रियापदं विनेति**॥ क्रियापदत्वाश्रयशब्दं विना आनयनमित्यादिपदप्रयोगेपीत्यर्थः ॥**क्रियाकारकभावेति**॥ अभेदान्वये तु निराकाङ्क्षत्वात्तदनुभावकताप्रयोजकसमानविभक्तित्वाभावेऽपि नाव्याप्तिशङ्का। अत एव लक्षणे यदन्वयेत्युक्तमिति भावः॥

नन्वथाप्युक्तवाक्यसमानार्थकवाक्यान्तरेऽव्याप्तिरेव। तत्रोक्तान्वयानुभवप्रयोजक-क्रियापदत्वादेरभावादित्यत आह ॥**घट इति**॥ आनयेत्यत्र लुप्तविधिप्रत्ययस्याख्यातत्वेन वाच्यार्थोक्तिः कृतिरिति विधित्वेन वाच्यार्थोक्तिरिष्टसाधनत्वमितीष्टसाधनत्वमेव विध्यर्थ इति विधिवादे वक्ष्यमाणत्वात् ॥**न तदन्वय इति**॥ तथा च लक्ष्यत्वान्न दोष इति भावः॥

यद्वा क्रियापदत्वादिकमभिमतान्वयानुभावकताप्रयोजकमित्यन्वयेनोपपाद्य व्यतिरेक-मुखेनोपपादयति ॥**घट इति**॥ अन्वयान्तरे तु लक्ष्यत्वेऽपि प्रयोजकमप्यस्तीति नाव्याप्तिरित्याह

॥ **अभेदेति** ॥ एतेन यदन्वय इत्युक्तेः कृत्यं विवृतं ध्येयम्। वाक्यान्तरेप्यतिव्याप्त्यव्याप्ती आशङ्क्य यत्रोक्तरूपप्रयोजकं तत्राकाङ्क्षासत्त्वेन लक्ष्यत्वम्, यत्र तन्नास्ति तत्राकाङ्क्षाऽपि नेत्यलक्ष्यत्वमतो न दोष इत्याह ॥ **गिरिरिति** ॥ **क्रियापदस्येति** ॥ क्रियावाचिसुबन्तपदस्येत्यर्थः

## तर्कताण्डवम्

**अत्र च पदशब्देन शब्दमात्रं विवक्षितम्। तेन प्रकृति-प्रत्यययोरन्योन्यं वाक्ययोश्चान्योन्यमाकाङ्क्षायां नाव्याप्तिः। एवं पदशब्देन तदुपस्थितिरेव विवक्षिता। तेन पदमात्रस्य स्वत एवान्वयाननुभावकत्वेनाननुभावकत्वस्येतरविरहाप्रयुक्तत्वात् असम्भव इति शङ्कानवकाशः। द्वारमित्यत्र द्वारशब्दस्य पिधेहिशब्देन सह, विश्वजिता यजेतेत्यत्र यजेतेत्यस्य स्वर्ग-कामशब्देन सहोच्चारणनिबन्धनसमभिव्याहाराभावेऽपि मौनिश्लोकादाविवाभिप्रायिकः समभिव्याहारोऽस्तीति नाव्याप्तिः। घटो भवतीत्यत्र तु घटपदेन सह रक्त इति पदस्य समानविभक्तिकत्वेऽपि आभिप्रायिकोऽपि समभिव्याहारो नास्तीति नातिव्याप्तिः॥**

**यद्वा तत्र रक्तपदेन नाकाङ्क्षाऽस्त्येव। नहि समभि-व्याहारादाकाङ्क्षा। किं तु साकाङ्क्षाणां समभिव्याहारः। तत्रानाकाङ्क्षत्वव्यवहारस्तु रक्तान्वये तात्पर्याभावात्। भवन-क्रियान्वयेन घटपदस्य रक्तपदे उत्थिताकाङ्क्षाऽभावाच्च। घटस्य रक्ताभेदाप्रतीतिस्तु रक्तपदानुपस्थितेः। अस्मिंश्च पक्षे आकाङ्क्षालक्षणे समभिव्याहृतविशेषणमनपेक्षितमेव।**

## न्यायदीपः

॥ **अत्र चेति** ॥ लक्षणवाक्य इत्यर्थः ॥ **अन्योन्यं वाक्ययोरिति** ॥ महावाक्यस्थयोरित्यर्थः। एतेन यत्पदेति पदशब्दोऽपि शब्दपरः। यद्रूपेत्यपि यद्रूपोपस्थितिपरमिति सूचितम्॥

लौकिकवैदिकवाक्यान्तरेषु पदान्तरसमभिव्याहाररहितेषु साकाङ्क्षेष्वव्याप्तिमाशङ्क्य निराह ॥ **द्वारमित्यत्रेति** ॥ **स्वर्गकामेति** ॥ सः स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति चतुर्थाध्यायतृतीयपादीय-सप्तमाधिकरणे विश्वजितेत्यादौ स्वर्गकामपदाध्याहारस्य सिद्धत्वादिति भावः। एवं ह्यतिव्याप्ति-रित्याशङ्क्य निराह ॥ **घट इति** ॥ **समानेति** ॥ अभेदान्वयानुभावकताप्रयोजकरूपवत्त्वेऽपीत्यर्थः। एतेन समभिव्याहृतेति पदकृत्यं विवृतं ध्येयम्।

समभिव्याहाराभावे कथमाकाङ्क्षेत्यत आह ॥ **न हीति** ॥ तथात्वे द्वारमित्यादावाकाङ्क्षाऽभाव-प्रसङ्गादिति भावः ॥ **साकाङ्क्षाणामिति** ॥ अत एव द्वारमित्यादावध्याहार इति भावः ॥ **तत्रेति** ॥ रक्तपद इत्यर्थः। अन्वयेन अन्वितत्वेन ॥ **उत्थितेति** ॥ स्वारसिकेत्यर्थः।

आकाङ्क्षारूपहेतौ सति कुतो नान्वयधीरित्यत आह ॥ **पटस्येति** ॥ **अस्मिंश्च पक्ष इति** ॥ रक्तपदेऽस्त्याकाङ्क्षेति पक्ष इत्यर्थः। तस्यापि लक्ष्यत्वेनातिव्याप्तेरभावात्। एवं द्वारमित्यादा-वव्याप्तिशङ्का नास्तीति भावः ॥

## तर्कताण्डवम्

**नन्वेवमितरपदविरहप्रयुक्ताननुभावकताप्रयोजकरूप-वत्त्वात्मिका स्वरूपयोग्यता आकाङ्क्षेति पर्यवसितम्। सा च जनितफलेऽप्यस्तीति तत्रातिव्याप्तिः स्यात्। प्रागभावपक्षे तु नायं दोष इति चेन्न। इष्टापत्तेः। जनितफलेऽनाकाङ्क्षत्व-व्यवहारस्तु विरक्तं प्रति वाणिज्योपदेश इव श्रोतुरन्वयबोधा-न्तरस्यानपेक्षितत्वात्। न तु पदस्य निराकाङ्क्षत्वात्। न च लाक्षणिकादावव्याप्तिः। मन्मते लाक्षणिकगौणयोरप्यनु-भावकत्वात् ॥**

**नन्वथापि स्वरूपयोग्यता कारणतैव, न तु कारणम्। तथाचाकाङ्क्षायाः शाब्दबोधहेतुत्वं न स्यादिति चेन्न। उक्ता-काङ्क्षाज्ञानस्यैव हेतुत्वेनेष्टापत्तेः। अत एवोक्तयोग्यताज्ञानस्य शाब्दबोध एव हेतुत्वादेवासाधारण्यम्। न हि घटादौ कारणताज्ञानं हेतुः। न च शाब्दबोधेपि तज्ज्ञानस्य हेतुत्वे**

**मानाभावः। पदशक्तिग्रहरूपपदव्युत्पत्तौ सत्यामपि क्रियापदं विना कारकपदं नान्वयबोधकमिति सामान्यज्ञानरूप-वाक्यव्युत्पत्तिं विना वाक्यार्थबोधाभावात्। अन्यथा वाक्यं वाक्याव्युत्पन्नस्याप्यन्वयबोधकं स्यात्॥**

## न्यायदीपः

इतरपदविरहप्रयुक्तानुभवप्रागभाव आकाङ्क्षेति मण्युक्तलक्षणाभिमानी शङ्कते ॥ **नन्वेवमिति** ॥ पदान्तरस्य पदान्तरविरहप्रयुक्ताननुभावकतायाः पदान्तरे क्रियापदत्वादिलक्षणप्रयोजकरूपं यत्तद्वत्त्वात्मिकेत्यर्थः। जनितान्वयानुभवेऽपि वाक्येऽस्तिक्रियापदत्वादेस्तदाऽप्यनपायादिति भावः ॥ **अनपेक्षितत्त्वादिति** ॥ एतेन जनितान्वयबोधेनापि द्वितीयान्वयबोधजननापत्तेरिति रुचिदत्ताद्युक्तं निरस्तम्। अनपेक्षाया एव प्रतिबन्धकत्वात्, अपेक्षायां त्विष्टापत्तेरिति।

मणिकृन्मतेऽभिहितदोषो नात्रास्तीत्याह ॥ **नचेति** ॥ **मन्मत इति** ॥ तत्रोक्तदोषस्तु गौणलक्षणवृत्तिविचारे निरसिष्यत इति भावः ॥ **नन्वथापीति** ॥ जनितफलेतिव्याप्तेरदोषत्वेपीत्यर्थः। अत एवेत्येतद्व्यनक्ति ॥ **उक्तयोग्यतेत्यादि** ॥ **नहीति** ॥ येनासाधारण्यं न स्यादिति भावः।

यत्त्वाकाङ्क्षाज्ञानस्य हेतुत्वे जनितफलेऽपि वाक्ये परेणेतरविरहप्रयुक्ताननुभावकताप्रयो-जकरूपवदिति शब्द उद्भाविते़ऽन्वयबोधापत्तिरिति। तन्न। प्राचीनान्वयबोधस्यैव प्रतिबन्धकत्वात् श्रोतुरनपेक्षितत्वाच्चेति॥

॥ **मानाभाव इति** ॥ शक्तिस्मरणे सति तज्ज्ञानाभावेनान्वयबोधविलम्बाभावादिति शङ्कितुर्भावः। तदभावेऽस्यान्वयबोधविलम्ब इत्याह ॥ **पदशक्तीति** ॥ उक्तं च जयदेवेनापि "आकाङ्क्षाहेतुत्वेमानाभावेन तज्ज्ञानं कारण"मिति। एतेन "न हि तस्यापि ज्ञानं हेतुरिति शक्यते वक्तुम्। तत्र मानाभावादिति" रुचिदत्तोक्तं निरस्तं ध्येयम्॥ **वाक्याव्युत्पन्नस्येति** ॥ उक्तरूपवाक्य-व्युत्पत्तिहीनस्यापीत्यर्थः॥

## तर्कताण्डवम्

**नन्वेवं चेदयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपदे पुत्रपुरुषपदगतरूपविरहप्रयुक्ततत्तदन्वयानानु-**

**भावकत्वरूपाकाङ्क्षायाः सत्त्वादुभयान्वयधीः स्यादिति चेन्न। उभयत्राकाङ्क्षायाः सत्त्वेऽपि पुत्रान्वय एव तात्पर्यग्रहे पुरुषान्वयबोधाभावसम्भवात्। उभयत्र तात्पर्यग्रहे चेष्टापत्तेः।**

**अत एव तत्रावृत्तिः कल्प्यते। अहो विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्र येन पुंसा नद्या इत्यादिकमेव श्रुतं तं प्रति नदीपदं जलपदाश्रवणेन कच्छ एव साकाङ्क्षम्॥**

## न्यायदीपः

उक्तलक्षणस्य वाक्यान्तरेऽतिव्याप्तिमाशङ्कते ॥ **नन्वेवमिति** ॥ इतरपदविरहप्रयुक्ताननुभावकताप्रयोजकरूपवत्त्वमाकाङ्क्षा चेदित्यर्थः ॥ **पुत्रपुरुषपदगतेति** ॥ प्रथमाविभक्त्यन्तत्वलक्षणधर्मेत्यर्थः। रूपशब्दो धर्मपर्यायः ॥ **उभयेति** ॥ नास्ति च पुरुषपदेनाकाङ्क्षा। अतस्तत्रोक्तलक्षणमतिव्याप्तमिति भावः। लक्ष्यत्वमुपेत्य समाधिमाह ॥ **उभयत्रेति** ॥ तात्पर्यग्रहस्य शाब्दबोधे हेतुत्वादन्यत्र तदभावादेवान्वयबोधाभावो न त्वाकाङ्क्षाविरहात्। येनातिव्याप्तिः स्यादिति भावः ॥ **आवृत्तिरिति** ॥ राजपदस्येत्यर्थः ॥ **कच्छ एवेति** ॥ एवं च जलस्याश्रवणेनानुपस्थितेस्तत्र षष्ठ्यन्तान्वयप्रयोजकोपस्थितिविषयरूपवत्त्वाभावात्। प्रथमान्तेनाऽपि जलपदेन निराकाङ्क्षतैवेति न तत्राव्याप्तिर्दोषाय। उपस्थितौ तु तत्राकाङ्क्षासत्त्वेऽपि तात्पर्याग्रहादन्वयबोधाभावः। तत्रापि तात्पर्यग्रहे तूभयत्रान्वयबोधो नदीपदावृत्तिश्च पूर्ववदिष्टैवेति भावः॥

## तर्कताण्डवम्

**नन्वेवमुदयनादिमते त्वदुक्तरूपग्रहविरहप्रयुक्तः शाब्दानुभवप्रागभाव आकाङ्क्षा। तन्मते तु प्रागभावप्रयोजकविरहप्रतियोगिग्रहविषयीभूतं रूपमाकाङ्क्षा। ततः कोत्र विशेष इति चेदियानेव विशेषः। त्वन्मते आकाङ्क्षा श्रोतृगता स्यात्, प्रागभावज्ञानं शाब्दबोधजनकमित्यस्योक्तरीत्या दुर्घटत्वात् शाब्दबोधं प्रत्याकाङ्क्षाज्ञानस्य हेतुत्वं न स्यात्, जनितफलवाक्यस्थपदे विरक्तं वाणिज्योपदेश इव साकाङ्क्षत्वे सत्यपि**

**पुरुषस्यानपेक्षामात्रेण शब्दस्याकाङ्क्षाऽपलापश्च स्यादिति दोषत्रयम्। मन्मते तु आकाङ्क्षा आसत्तिवच्छब्दगतैव, तज्ज्ञानस्य जनकत्वं च सुघटम्, जानितपदेप्याकाङ्क्षाऽनपलापश्चेति दोषत्रयं नेति। इदं चाकाङ्क्षालक्षणं टीकोक्तजिज्ञासाविषयप्रतिपादकत्वरूपलक्षणाविनाभूतम्॥**

## न्यायदीपः

एवं सर्वत्र लक्ष्येऽलक्ष्ये च स्वोक्ताकाङ्क्षालक्षणस्य भावाभावानुपपाद्येदानीं परोक्तलक्षणात् स्वोक्तलक्षणस्यातिशयं शङ्कापूर्वं व्यनक्ति ॥ **नन्विति** ॥ **प्रागभावेति** ॥ अन्वयानुभवप्रागभावे प्रयोजकीभूतो यो विरहः तत्प्रतियोगी यो ग्रहः ज्ञानं तद्विषयीभूतं रूपमित्यर्थः। यद्रूपविरहेति लक्षणवाक्ये यद्रूपविरहशब्देन यद्रूपोपस्थितिविरहस्याभिमतत्वादिति भावः ॥ **श्रोतृगतेति** ॥ अत एवोदयनलक्षणे श्रोतरीत्युक्तिरिति भावः ॥ **उक्तरीत्येति** ॥ तज्ज्ञानस्य कारणत्वे मानाभावादित्यादिनोक्तरीत्येत्यर्थः ॥ **आकाङ्क्षेति** ॥ शब्दगतैवेत्यन्वयः ॥ **सुघटमिति** ॥ प्रागुक्तवाक्यव्युत्पत्तिरूपप्रमाणभावादिति भावः ॥

नन्विदं मूलग्रन्थे नोपलभ्यत इत्यत आह ॥ **इदं चेति** ॥ **टीकोक्तेति** ॥ टीकाकृता पद्धतावुक्तेत्यर्थः। प्रमाणलक्षणटीकायामुक्तेति वार्थः। तदुक्तेरपि पद्धत्युक्त्यैकार्थत्वात्।

## तर्कताण्डवम्

**वस्तुतस्तु यत्पदप्रयोज्यजिज्ञासाविषयत्वयोग्यज्ञानजनकत्वावच्छेदकरूपवत्त्वं यस्य तेन सह तस्य तद्रूपमेवाकाङ्क्षा। भवति हि घटमानयेत्यत्र घटमिति कारकपदप्रयोज्या या जिज्ञासा तस्य विषयत्वयोग्यं यत्क्रियाज्ञानं तज्जनकं यदानयेति क्रियापदं तन्निष्ठजनकतावच्छेदकं क्रियापदत्वमाकङ्क्षा। इयं च जिज्ञासायोग्यताऽजिज्ञासितेप्यस्तीति नाव्याप्तिः।**

**तस्मात्स्वरूपयोग्यतैवाकाङ्क्षा। अत एव पद्धतौ**

"आकाङ्क्षा जिज्ञासा चेतनधर्मः। तद्विषयत्वात्पदार्थाः साकाङ्क्षाः। तत्प्रतिपादकत्वात्पदानीत्यपीत्यत्र प्रतिपादक-शब्देन जिज्ञासाविषयज्ञानजनकतावच्छेदकरूपवत्त्वात्मिका जिज्ञासितार्थप्रतिपादनयोग्यतैवाकाङ्क्षा" इत्युक्तम्। न तु फलोपधानम्। अन्वयबोधात्प्रागाकाङ्क्षाभावप्रसङ्गात्।

प्रमाणलक्षणटीकायामपि पूर्वपदजनिताकाङ्क्षा-पूरकत्वमित्यत्र पूरकशब्देनास्मदुक्ता जिज्ञासाविषयत्वयोग्य-ज्ञानजनकतावच्छेदकरूपवत्त्वात्मिका जिज्ञासा पूरकतैव आकङ्क्षेत्युक्तम्। भवति हि जिज्ञासाविषयज्ञानजनको जिज्ञासापूरकः। इच्छाविषयसाधकस्यैव लोके इच्छा-पूरकत्वेन व्यवहारात्।

यत्तु टीकायां विरक्तं प्रति वाणिज्योपदेशे नैराकाङ्क्ष्य-मुक्तं, तदन्वयबोधोपयोगि साकाङ्क्षत्वे सत्यपि श्रोतुर-नपेक्षितत्वमात्रेण। अत एव टीकायामन्वयबोधोपयोग्या-काङ्क्षाभावे गौरश्वः पुरुषो हस्तीत्यादिकमेवोदाहृतम्।

इत्याकाङ्क्षानिरूपणम्॥ १॥

## न्यायदीपः

ननु लक्षणे यस्याननुभावकत्वं यद्रूपविरहप्रयुक्तमिति नञ्द्वयप्रवेशाद्गौरवम्। यस्यानुभावकत्वं यत्पदगतयद्रूपप्रयुक्तमित्येवोक्तौ लाघवम्। किञ्चान्वयानुभवप्रागभावस्य विरहप्रयुक्तत्वं च दुर्वचम्। अनादेर्जन्यत्वायोगात्। तद्व्याप्यत्वस्यापि भिन्नाधिकरणतया दैशिकस्यायोगात्। कालिकस्य च सङ्केतास्मृतिदशायां सत्यपीतरपदेऽनुभवप्रागभावसम्भवेन व्यभिचारात्। किञ्चैवं सति टीका-कृदुक्तलक्षणमसमञ्जसमित्यपि धीर्मन्दानां प्राप्नोतीत्यत आह ॥ **वस्तुतस्त्विवति** ॥ **यत्पद-प्रयोज्येति** ॥ यच्छब्दोपस्थितिजन्येत्यर्थः। पदेति शब्दपरं सत्तदुपस्थितिपरमिति प्रागेवोक्तत्वात्। अन्यथा पूर्वोक्तदोषापत्तिः। जिज्ञासाज्ञानविषयकेच्छा। तद्विषयत्वयोग्यं ज्ञानं तज्जनकतावच्छेदकं

रूपं क्रियापदत्वादिकं पूर्वोक्तमेव ध्येयम्॥

लक्षणार्थं विवृण्वन्नेव लक्ष्यनिष्ठतया दर्शयति ॥ **भवति हीति** ॥ **इयं चेति** ॥ इयं च जिज्ञासां प्रति योग्यता अजिज्ञासिते जनितपले जिज्ञासापूर्वभाविन्यपि वाक्य इत्यर्थः। तस्मादव्याप्ति-शून्यत्वादित्यर्थः। नच स्वरूपयोग्यताया आकाङ्क्षात्वे शब्दबोधासाधारण्यं न स्यादिति शङ्क्यम्। उक्तरूपाकाङ्क्षाज्ञानस्यैव हेतुत्वादित्युपपादितत्वादिति भावः ॥ **अत एवेति** ॥ उक्तरूपस्वरूप-योग्यताया आकाङ्क्षात्वादेवेत्यर्थः ॥ **जिज्ञासाविषयज्ञानेति** ॥ इच्छाविषयज्ञानेत्यर्थः ॥ **इच्छा-विषयेति** ॥ इच्छाविषयोत्पादकस्यैवेत्यर्थः ॥ **टीकायामिति** ॥ प्रमाणलक्षणटीकायामित्यर्थः।

इत्याकाङ्क्षानिरूपणम् ॥ १ ॥

## अथाऽसत्तिनिरूपणम्।

### तर्कताण्डवम्

**ननु-सन्निधानापरपर्यायासत्तिर्न तावन्मण्युक्तरीत्या अव्यवधानेन पदार्थस्मृतिः। वाक्ये पदार्थस्मृतिरेव नेति वक्ष्यमाणत्वात्। अनासन्ने आसत्तिभ्रमेणान्वयबोधस्थळे त्वत्पक्षे पदार्थोपस्थितेर्विशेषणज्ञानत्वेन शाब्दबोधहेतुत्वात्। हेतोश्चाव्यवहितत्वनियमेनासत्तेरेव सत्त्वेनासत्तिभ्रमा-नुपपत्तेश्च। पदार्थस्मृतौ सत्यां स्मृतिविषयकज्ञानविलम्बेन शाब्दबोधविलम्बादर्शनेनासत्तिज्ञानस्य हेतुत्वानुपपत्तेश्च। न चेयं स्वरूपसत्येव हेतुः। तद् भ्रमेण शाब्दभ्रमायोगात्।**

### न्यायदीपः

प्रमाणपद्धतौ ''आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि वाक्यम्'' इत्युक्तेः सन्निधिनिरूपणं विनाऽसत्तिनिरूपणमयुक्तमित्यत आह ॥ **सन्निधानापरपर्यायेति** ॥ यद्यपि साक्षादाकाङ्क्षायोग्यतेति निर्देशक्रमेण योग्यतैवाकाङ्क्षोक्त्यनन्तरं निरूपणीया। तथाऽप्यासत्तिनिरूपणस्याल्पत्वात् सूचीकटाह-न्यायेनासत्तेः पूर्वमुक्तिरित्येके॥

वस्तुतस्तु शाब्दप्रमायामाकाङ्क्षासत्ती एव हेतू न पुनर्योग्यताऽपीति तयोरेव पूर्वमुक्तिर्युक्ता। अत एव पद्धतावासत्तिस्वरूपोक्त्यनन्तरमेव योग्यता। अतस्तत्क्रममनुसृत्यात्र निरूपणमिति। क्वचिदाकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यमिति पद्धत्यनुरोधे पूर्वनिर्देशात्तथैवास्त्विति यथान्यास एव क्रमः॥

आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः। सा च स्मृतिर्नानुभव इति मण्युक्तं निष्कृष्यानुवदति ॥ **अव्यवधानेन पदार्थस्मृतिरिति** ॥ अन्वयविरोधिव्यवधानाभावेनेत्यर्थः ॥ **पदार्थेति** ॥ सङ्केतस्मरणवाक्यार्थबोधयोर्मध्ये पदार्थस्मृतिरेव नास्ति, कुतोऽव्यवधानत्वं तस्या इत्यर्थः ॥ **वक्ष्यमाणत्वात्** ॥ अन्विताभिधानोक्तिवाद इत्यर्थः॥

पक्षधराद्यूहितदोषमाह ॥ **अनासन्नेति** ॥ सप्तम्यन्तानामासत्तेरेव सत्त्वेनेत्यन्वयः ॥ **आसत्ति-भ्रमेणेति** ॥ अन्वयविरोधिव्यवधानेपि तदभावभ्रमेणेत्यर्थः। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ व्यवहितपदोपेततया आसत्तिहीनवाक्ये पदानामव्यवहितत्वभ्रान्त्या पदार्थानामुपस्थितौ गिरिरग्निमान् देवदत्तेन भुक्तमित्यन्वयबोधदर्शनात्तत्र स्थळे पदार्थे स्मृतेर्व्यवहितत्वस्यावश्यकत्त्वात्तत्रातिव्याप्तिरिति भावः।

विशेषणज्ञानत्वेनेत्युपलक्षणम्। पदार्थस्मृतित्वेन हेतुत्वेप्येष दोषः सम एव। असम्भवं चास्य(स्ति)लक्षणस्याह ॥ **पदार्थस्मृताविति** ॥ **न चेयमिति** ॥ आसत्तिरित्यर्थः। अपसिद्धान्ते सत्यपि दोषान्तरमाह ॥ **तद् भ्रमेणेति** ॥

## तर्कताण्डवम्

**किञ्च नानाविशेषणकैकविशेष्यकबोधस्थळे विशेषणा-नामन्योन्यमन्वाययोग्यतयाऽन्वितान्वयासम्भवेन समूहाल-म्बना एकैव पदार्थस्मृतिर्वक्तव्या। तथाच तत्र वाक्ये किञ्चित् केनचिदासन्नमनासन्नं च केनचिदिति कथं विभागः॥**

**किञ्च पद्ये कुलकादौ चातिव्यवहितत्वात्कथमासत्तिः। नाप्यव्यवहितपदोस्थितिरासत्तिः। व्यवहितपदोपस्थितिक-पद्यादावव्याप्तेः। उक्तरीत्यासत्तिज्ञानस्य हेतुत्वानुपपत्तेश्च॥**

## न्यायदीपः

यत्त्वन्वयप्रतियोग्युपस्थितिरासत्तिरन्वयबोधाङ्गं, सा च स्वरूपसती भानाभावात्। अनुमितौ पक्षसाध्यप्रत्ययवत्तद् भ्रमेण शाब्दभ्रमोऽसिद्ध एव। तात्पर्यभ्रमेण योग्यताभ्रमेण वा तदुपपत्तेरिति तन्न। विशेषणज्ञानत्वेन हेतुत्वोक्तौ शाब्दसाधारण्याभावात्पदार्थस्मृतित्वेन हेतुत्वे च वाक्ये पदार्थस्मृतिरेव नेत्यसम्भवदोषात् अतिव्याप्त्यसम्भवावुक्त्वाऽव्याप्तिं चाह – **किञ्चेति।**

**नानाविशेषणकेति।** दण्डी कुण्डली चैत्र इत्यादौ चैत्रपदेन कुण्डलीपदमासन्नं दण्डीपदमनासन्नमिति विभागोस्ति। स न स्यात्। पदार्थस्मृतेरेवासत्तित्वे तावत्पदार्थगोचरैकस्मृतेरेव तत्र वाच्यत्वात् क्रमेणोपस्थितौ हि पूर्वस्मृतविशेषणान्वयानन्तरं चरमं स्मृतविशेषणान्वयः स्यात्। नचैवं युक्तम्। विशेषणविशिष्टे विशेषणान्तरान्वये विशेषणयोरप्यन्वयापत्त्या तदसम्भवात्। विशेष्येणासन्नं विशेषणं स्वासन्नेन विशेषणेन स्वयमन्वितं सत्पश्चाद्विशेषेणान्वेतीत्यस्यापि विशेषणयोरप्यन्वयायोगेनासम्भवादित्यर्थः॥

स्थळान्तरेप्यव्याप्तिमाह॥ **किञ्च पद्य इति**॥-

"श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि
वसन् ददर्शावतरन्तमम्बरात्"

इत्यादिश्लोके क्रियाकारकपदानामतिव्यवहितत्वात्तत्र त्वदुक्ताव्यवहितपदार्थस्मृतेरयोगात्॥

"ततः सपत्नापनयस्मरणानुशय(नुदय)स्फुरा।"

इत्यादि माघस्थेष्वष्टसु श्लोकेष्वतिव्यवहितत्वात्तत्राव्याप्तिरिति भावः।

## तर्कताण्डवम्

**नापि पदाव्यवधानमासत्तिः। अव्यवधानं हि पदे लिप्युच्चारणादिनिबन्धनमेव वाच्यम्। तथाच व्यवहितोच्चारिते लिखिते वा योजनयाप्यन्वयबोधो न स्यात्। व्यवधानस्य दृष्टत्वेन योजनयाप्यव्यवधानबोधासम्भवात्। लिप्यनुमिते पदस्यैवाभावेन तत्र पदाव्यवधानाभावाच्च।**

**नाप्यव्यवहितत्वेन पदतात्पर्यमासत्तिः। अतात्पर्यक-शुकादिवाक्याव्याप्तेः। अव्यवहिततात्पर्यकं व्यवहित-मुच्चारयतो वादिनोऽनासन्नाभिधानरूपापार्थकनिग्रहानुप-पत्तेच्च। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यनासन्नोदाहरणे अति-व्याप्तेश्च। तत्राप्यव्यवहिततात्पर्यकत्वसम्भवात्। तस्मादा-सत्तिर्दुर्निरूपेति॥**

## न्यायदीपः

पक्षान्तराण्यपि निराह ॥ **नाप्यव्यवहितेति** ॥ अव्यवहितपदानामुपस्थितिरित्यर्थः। सा किं स्वरूपसती हेतुरुत ज्ञाता। आद्य आह ॥ **व्यवहितेति** ॥ अन्त्य आह ॥ **उक्तरीत्येति** ॥ पदार्थस्मृतावित्यादिनोक्तरीत्येत्यर्थः। पदार्थस्मृतिपदस्थाने पदोपस्थितौ सत्यामिति ज्ञेयम्। लिप्युच्चारणादीत्यादिपदेन विरोधिपदानुच्चारणग्रहः ॥ **व्यवहितेति** ॥ गिरिर्भुक्तमग्निमान् देवदत्तेने-त्यादावित्यर्थः ॥ **लिप्यनुमितेति** ॥ यत्र लिपिदृष्ट्या पदस्यानुमानं तादृशस्थल इत्यर्थः। तथाच तत्राव्याप्तिरिति भावः॥

वस्तुतोऽव्यवहितत्वेन पदतात्पर्यमासत्तिरिति पर्यवसितेति पक्षधरनिर्धारितपक्षं निराह ॥ **नाप्यव्यवहितत्वेनेति** ॥ व्यवहितपद्ये कुलकादौ च पदानां व्यवधानेनोच्चारणे लेखनेपि चाव्यवहितत्वेन वक्तृतात्पर्यगोचरत्वात्तेषां तत्र नातिव्याप्तिरिति भावः ॥ **शुकादीति** ॥ न च तत्राप्यस्तीश्वरतात्पर्यमिति वाच्यम्। तथासत्यासत्तिभ्रमस्थले तदादायासत्तिसत्त्वसम्भवे तद्भ्रमानुपपत्तेः। दोषान्तरं चाह ॥ **अव्यवहितेति** ॥ **अपार्थकमिति** ॥ अनन्वितवाचकपदादि-प्रयोगोऽपार्थकमित्यपार्थकनिग्रहस्थानलक्षणादिति भावः॥

ननु-सर्वथैवानन्वितावाचकपदप्रयोगोऽपार्थकम्। कुण्डमजाजिनं दशदाडिमानि षडपूपा इत्यादौ योजनयाप्यन्वयहीनस्थले एव तत्। न तु योजनयाप्यन्वयस्थलेपीति चेत्। तत्राप्यस्ती-त्यादिपदान्तरतात्पर्यकत्वसम्भवात्। दोषान्तरं चाह ॥ **गिरिरिति** ॥

यदप्यव्यवहितपदार्थोपस्थित्यनुकूलो व्यापार आसत्तिः, स चैकपदानन्तरमपरपदेन तात्पर्यमु-च्चारणं वेति पक्षधराभिमतं पक्षान्तरं तदप्यनेनैव निरस्तम्। शुकादिवाक्यादावव्याप्तेः। गिरिरित्यादि-वाक्येऽतिव्याप्तेः। वाक्ये पदार्थोपस्थितेरेवाभावस्य वक्ष्यमाणत्वादिति भावेनोपसंहरति ॥ **तस्मादिति** ॥

## तर्कताण्डवम्

**उच्यते- पदोपस्थित्यनुकूलवक्तृव्यापारे निष्फलस्य अन्वयबोधविरोधिव्यवधानस्याभाव आसत्तिः। वक्तृव्यापारत्वं च लिप्युच्चारणाभिप्रायसाधारणमिति न मौनिश्लोकादावव्याप्तिः। न च गिरिर्भुक्तमित्यनयोर्मध्ये विरोध्युपस्थित्यभावादेतयोरासत्तिः स्यादिति वाच्यम्। इष्टापत्तेः। अन्वयऽबोधस्त्वाकाङ्क्षाविरहात्।**

**नापि पद्यकुलकादावव्याप्तिः। तत्रापि मया छन्दोऽनुरोधायालङ्काररसविशेषयोराधानाय च व्यवधाने कृतेपि श्रोतैवं योजयिष्यतीत्यभिप्रायस्य सत्त्वात्।**

**अपौरुषेयेपि वेदे अस्माकमुक्त ईश्वराभिप्रायोऽस्त्येव। मीमांसकानामप्यनादौ संसारेऽर्थाभिज्ञाध्यापकस्योक्ताभिप्रायोस्त्येव। व्यवधानस्य त्वदृष्टविशेषः फलम्।**

## न्यायदीपः

सन्निधिरविलम्बेनोच्चरितमिति पद्धत्याद्युक्तं हृदि कृत्वाह ।। **पदेति** ।। पदग्रहणं शब्दमात्रपरम्। तेन प्रकृतिप्रत्यययोरवान्तरवाक्ययोश्चासत्तौ नाव्याप्तिः। पदयोः पदानां चोपास्थितेरनुकूलो यो व्यापारः लिपिः उच्चारणं तात्पर्यं वा तस्मिन्नित्यर्थः। निष्फलान्वयबोधविरोधिव्यवधानशून्यः शब्दोपस्थित्यनुकूलवक्तृव्यापारविषयताऽऽसत्तिरित्यर्थः। उच्चारणमात्रं वक्तृव्यापारश्चेन्मौनिश्लोकादावव्याप्तिरित्यत आह ।। **वक्त्रिति** ।।

लिपिसने विशिष्टस्यापि लक्षणस्यातिव्याप्तिमाशङ्क्य लक्ष्यत्वोपगमेन समाधिमाह ।। **न च गिरिरिति** ।। तथात्वे स्यादन्वयबोध इत्यत आह ।। **अन्वयाबोधस्त्विवति** ।। निष्फलस्येति विशेषणमव्याप्तिनिरासायेति भावेनाह ।। **नापि पद्येति** ।।

।। **छन्द इति** ।। वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वरौ वन्द इत्युक्तेऽनुष्टप्सज्ज्ञच्छन्दो भज्येतातो

व्यवधानम्। एवमन्यत्रापि ॥ **अलङ्कारेति** ॥ कुलकालङ्कारेत्यर्थः ॥ **रसेति** ॥ शृङ्गारवीरकरुणादिरसेषु मध्ये शृङ्गारादिरसविशेषलाभायेत्यर्थः। तथाच तत्र निष्फलव्यवधानाभावान्नाव्याप्तिरिति भावः।

वेदवाक्येऽव्याप्तिस्तर्हि स्यादित्यत आह ॥ **अपौरुषेयेति** ॥ **उक्त इति** ॥ श्रोतैवं योजयिष्यतीत्येवंरूपाभिप्रायोऽस्माकं मते अस्त्येवेत्यर्थः। सेश्वरवादित्वादिति भावः।

ननु वेदेऽलङ्कारविशेषरसविशेषयोराधानाभावात्-

"सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि"

इत्यादौ निष्फलमेव व्यवधानमिति तत्राव्याप्तिरित्यत आह ॥ **व्यवधानस्य त्विति** ॥ अनादितो व्यवधानेनैव सन्निवेशितपादावल्या तथैवाध्यापनजपाद्यनुष्ठानेऽदृष्टमन्यथा नार्थ इति शुभाशुभप्राप्ति-परिहाररूपादृष्टमेव फलमित्यर्थः।

## तर्कताण्डवम्

**नाप्यनासन्नोदाहरणेऽतिव्याप्तिः। तत्र व्यवधानस्य निष्फलत्वात्। अत एवाव्यवहिततात्पर्यके वादिवाक्ये नातिव्याप्तिः। श्रुतस्य व्यवहितत्वात्। आभिप्रायकस्य च वादिनोऽनाप्तत्वेनाभिप्रायकल्पनाविरहादेवानुपस्थितेः।**

**केचित्तु-श्लोककुलकादावासत्त्यभावान्न श्लोकादिकं बोधकम्। किन्तु तदुन्नीतं वाक्यादिकमेवेत्याहुः ॥**

**इयं चासत्तिर्ज्ञातैव शाब्दधीहेतुः। आसत्तिभ्रमेण शाब्द-भ्रमात्। नीलो घटोस्तीत्यादौ नीलघटपदयोर्मध्ये अनुषङ्ग-पदान्तरोच्चारणावृत्त्यध्याहारादिसन्देहे निश्चये वा वाक्यार्था-बोधाच्च।**

## न्यायदीपः

निष्फलस्येत्युक्त्या गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावतिव्याप्तिश्च निरस्तेत्यत आह ॥ **नाप्य-नासन्नेति** ॥ अव्यवहिततात्पर्यकमित्यादिनोक्तदोषः स्वपक्षे नेत्याह ॥ **अत एवेति** ॥ तमेव हेतुं

व्यनक्ति ।। **श्रुतस्येति ।। केचित्त्विति ।।** कल्पनागौरवमस्मिन्पक्षे अस्वारस्यबीजं ध्येयम्। आसत्तिभ्रमेण शब्दभ्रमे विप्रतिपन्नं प्रत्याह ।। **नील इति ।।** अनुषङ्गश्च पदान्तरोच्चारणं चावृत्तिश्चाध्याहारश्चेत्येवमादिसन्देहे नीलघटपदार्थान्वयबोधाभावेन स्वरूपसदासत्त्या न हेतुत्वं किन्तु ज्ञाताया एव। अन्यथा तादृशस्थलेप्यन्वयबोधः स्यादेव। स्वरूपसत्यास्तस्यास्तत्र सत्त्वादित्यर्थः ।।

एतेनासत्तिः स्वरूपसती हेतुः। न तु ज्ञाता। मानाभावादिति रुचिदत्तेनोक्तं निरस्तम्। आवृत्तिरस्तिपदस्य। नीलोस्ति घटोस्तीति नीलो भवति घटोस्तीति क्रियान्तराध्याहार इत्यादि ध्येयम् ।।

## तर्कताण्डवम्

**पद्धतौ प्रमाणलक्षणटीकायां च सन्निधिरविलम्बेन उच्चारितत्वमित्यत्राविलम्बशब्देनास्मदुक्तव्यवधानाभावः उच्चारणशब्देन च वक्तृव्यापारमात्रं विवक्षितमिति ज्ञेयम् ।।**

**इत्यासत्तिनिरूपणम् ।। २ ।।**

## न्यायदीपः

उक्तलक्षणं मूलारूढं दर्शयति ।। **पद्धताविति ।। अस्मदुक्तेति ।।** निष्फलस्येत्यादिना अस्मदुक्तेत्यर्थः ।। **वक्तृव्यापारमात्रमिति ।।** लिप्युच्चारणाभिप्रायसाधारणमित्यर्थः ।।

इति आसत्तिनिरूपणम् ।। २ ।।

# अथ योग्यतानिरूपणम्।

## तर्कताण्डवम्

**अथ का योग्यता ? न तावत्सजातीयेऽन्वयदर्शनं योग्यता। पयसा सिञ्चति इत्यनाप्तवाक्येऽतिव्याप्तेः। किञ्च यथाकथ-ञ्चित् साजात्यमयोग्यसाधारणम्। पदार्थतावच्छेदकधर्मेण वा तात्पर्यविषयीभूतान्वयप्रतियोगितावच्छेदकधर्मेण वा**

**साजात्यं तु अद्य जातः पयः पिबतीत्यादावव्याप्तम्॥**

**नापि समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मशून्यत्वं योग्यता। प्रमेयमभिधेयमित्यादौ संसर्गाभावस्याप्रसिद्ध्या न्यायमते तत्राव्याप्तेः। समभिव्याहृतपदार्थसंसर्गो योग्यता इत्येतावतैव पूर्णत्वेन शेषवैयर्थ्याच्च। अनाप्तवाक्ये अतिव्याप्तेश्च॥**

**एतेनैव समभिव्याहृतपदार्थसंसर्गव्याप्यधर्मवत्त्वं वा, अन्वयप्रतियोगितावच्छेकधर्मवत्त्वं वा योग्यतेति निरस्तम्। उक्तरीत्या शेषवैयर्थ्यात्। अनाप्तवाक्येऽतिव्याप्तेश्च।**

## न्यायदीपः

"प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यते"ति प्रमाणपद्धत्युक्तिं समर्थयमानः प्रसक्तपक्षान्पूर्ववादिमुखेन प्रत्याख्याति ॥ **अथेत्यादिना** ॥ **सजातीय इति** ॥ दृष्टान्वयसजातीयत्वं योग्यतेत्यर्थः। मण्युक्तमपि दोषमाह ॥ **किञ्चेति** ॥ **अयोग्यतेति** ॥ अग्निना सिञ्चेदित्यादावपि शब्दार्थत्वादिना साजात्यस्य सत्त्वादिति भावः। मणिव्याख्यातृभिरुक्तमाह ॥ **तात्पर्यविषयेति** ॥ **अद्य जात इति** ॥ अद्य जातत्वेन रूपेण तदन्वयस्येतः पूर्वं क्वाप्यदर्शनादिति भावः

॥**समभिव्याहृतेति**॥ समभिव्याहृतं यत्पदं तदर्थनिरूपितसंसर्गस्य योऽभावस्तद्व्याप्यधर्मशून्यत्वम्। यथा जलेन सिञ्चतीत्यादौ समभिव्याहृतसेकरूपपदार्थसंसर्गाभावव्याप्यो धर्मोऽग्नित्वादिः, तथा समभिव्याहृतजलपदार्थसंसर्गाभावव्याप्यो दाहत्वादिस्तादृशधर्मशून्यत्वमस्ति। अग्निना सिञ्चतीति जलेन दहतीत्यादौ तु तादृशधर्मवत्त्वादयोग्यतेत्यर्थः॥

सिद्धान्ते धर्ममात्रस्य व्यतिरेकित्वाद्घटनिष्ठप्रमेयत्वादेः पटे तन्निष्ठप्रमेयत्वादेर्घटेऽसत्त्वेन प्रमेयत्वादिसंसर्गाभावस्यापि प्रसिद्धत्वादाह ॥ **न्यायमत इति** ॥ तन्मते तस्य केवलान्वयित्वादिति भावः। सिद्धान्ते तु कथमित्यतो दोषान्तरमाह ॥ **समभिव्याहृतेति** ॥ **अनाप्तेति** ॥ पयसा सिञ्चतीत्याद्यनाप्तवाक्य इत्यर्थः। क्रमेण पक्षद्वये दोषमाह ॥ **उक्तरीत्येति** ॥ समभिव्याहृतपदार्थसंसर्ग इत्येव पूर्तेरिति भावः।

## तर्कताण्डवम्

**नापि मण्युक्तरीत्या एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो वा, एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं वा योग्यता।**

## न्यायदीपः

एकेति पदस्य वा पदार्थस्य वा विशेषणम्। अपरेत्यप्येवं बोध्यम्। तन्निरूपितसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावं प्रति यत्प्रतियोगित्वं तत्प्रकारिका या प्रमा तद्विशेष्यत्वाभाव इत्यर्थः। अग्निना सिञ्चतीत्यादावग्निकरणकान्वयः सेके नास्तीति वा, अग्निकरणान्वयः सेकनिष्ठात्यन्ताभावप्रतियोगीति वाऽनुभवेन तद्वाक्यं त्वयोग्यम्। पयसा सिञ्चतीत्यादौ तु पयःकरणकत्वं सेके नास्तीत्यादिप्रतीतेः कदाप्यभावेन तत्र पयःपदार्थसंसर्गे सेकनिष्ठाभावप्रतियोगित्वप्रकारकप्रमाशेष्यत्वं नेति तद्योग्यमित्युच्यते। अत्र शब्दत्ववदाकाशस्य शब्दनिष्ठात्यन्ताभावप्रतियोगित्वात्तत्राव्याप्तिनिरासाय ।। **संसर्गेति** ।। तादृशप्रमाविषयकत्वाभाव इत्येवोक्तौ घटसंसर्गत्वं गेहनिष्ठात्यन्ताभावप्रतियोगीति प्रमाविषयो घटसंसर्गोपि भवतीति तत्राव्याप्तिः स्यात्। तन्निरासाय तादृशप्रमाविशेष्यत्वाभाव इत्युक्तिरिति पक्षधरः।

रुचिदत्तस्तु यत्पदार्थसंसर्गो बोध्यः तदंशे तादृशप्रमाविशेष्यत्वाभावो विवक्षितः। तेन सेकसंसर्ग आकाशश्च जलनिष्ठात्यन्ताभावप्रतियोगीति समूहालम्बनकृतप्रमाविशेष्यत्वकृतदोषोऽपास्तः। एवं चांशभेदप्राप्तये विशेष्यतोक्तिः। विषयत्वमात्रे तात्पर्यमित्यवोचत्।।

यन्मते तादृशप्रमात्वपरिग्रहः प्रतिबन्धकस्तन्मतेनैतल्लक्षणकरणात्तादृशाभावप्रतियोगिताभाव इत्येवानुक्त्वा तादृशप्रमाविशेष्यत्वाभाव इत्युक्तमिति रुचिदत्तः।।

नरहरिस्तु प्रमेत्याद्यनुक्त्वा तादृशप्रतियोगित्वाभावो योग्यतेत्येवोक्तौ योग्यताया वाक्यार्थमात्रपर्यवसन्नतया तद्धीर्वाक्यार्थबोधात्पूर्वं न भवतीति शाब्दबोधे योग्यताज्ञानस्याहेतुत्वापत्तेः तादृशप्रमाविशेष्यत्वाभाव इत्युक्तमित्याह।।

यन्मतेऽप्रामाण्यशङ्काशून्यविपरीतनिश्चयस्य प्रतिबन्धकत्वं तन्मतेनोक्तं लक्षणान्तरं चानुवदति ।। **एकपदार्थेति** ।। तादृशं हि अग्निना सिञ्चतीत्यत्राग्निसंसर्गत्वमतस्तदयोग्यम्। जलेन सिञ्चतीत्यादौ

जलसंसर्गादिकं तथा न भवतीति तद्योग्यमित्युच्यत इत्येतदपि नेत्यर्थः ।।

## तर्कताण्डवम्

**एकत्वापरत्वयोः पदार्थविशेषणत्वे प्रमेयत्वे प्रमेयत्वमित्यादावव्याप्तेः । तत्र पदार्थभेदाभावात् ।**

**पदविशेषणत्वे च प्रत्ययार्थान्वितस्वार्थबोधकं गामित्यादिकमयोग्यं स्यात् । तत्र पदस्यैकत्वात् । पदशब्दस्य शब्दमात्रपरत्वेपि स्वार्थीभूतवर्तमानत्वान्वितकृत्यादिबोधको लडादिप्रत्ययो योग्यो न स्यात् । तत्र शब्दभेदस्याप्यभावात् । तत्रापि तिङ्त्वलट्त्वादिना भेदकल्पनेऽपि द्रव्यं संयोगीति वाक्यमयोग्यं स्यात् । संयोगस्य द्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वात् ।**

## न्यायदीपः

लक्षणद्वयेप्येकपदार्थापरपदार्थेत्यत्रैकत्वापरत्वे पदार्थविशेषणे पदविशेषणेवा इति विकल्पौ हृदि कृत्वा क्रमेण पक्षधराद्युक्तदोषानेवाह ।। **एकत्वेति** ।। पदविशेषणपक्षोक्तदोषो नास्ति तस्य शब्दमात्रपरत्वादित्यत आह ।। **पदशब्दस्येति** ।। गच्छति चैत्र इत्यत्राख्यातस्य कृतिर्वर्तमानत्वं च द्वयमर्थः । "वर्तमाने लट्" इत्युक्तेः । "लः कर्मणि च भावे चाकर्मकेभ्य" इत्यत्र चकारेण कर्तरि लकारविधानेऽपि न्यायमते लाघवेन कृतिरेव लकारार्थ इति स्वीकृत्य तयोरन्योन्यान्वयस्य च स्वीकारात् । तथाच लडर्थभूतवर्तमानत्वान्वितकृत्यादिबोधको लडादिप्रत्ययो योग्यो न स्यादित्यर्थः । कृत्यादीत्यादिपदेन रथो गच्छतीत्यादिजडसाधारणव्यापारग्रहः । चिरन्तनमते व्यापारमात्रस्य आख्यातार्थत्वात्

।। **तिङ्त्वेति**।। तिङ्त्वेन कृतिरर्थो लट्त्वेन वर्तमानत्वमर्थ इत्याकारभेदाद्भेद इत्यर्थः । यद्यपि लकारत्वेनैव कृतिरर्थः । तथापि तिङो लकारादेशत्वात्तिङ्त्वेनेत्युक्तम् ।। **संयोगस्येति** ।। द्रव्यं संयोगीति विशिष्टवैशिष्ट्यं हि वाक्यार्थः । तथाच संयोगरूपैकपदार्थनिरूपितसंसर्गेऽपरपदार्थद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वस्यैव सत्त्वेन तत्प्रमाणविशेष्यत्वस्य तत्प्रतियोगितावच्छेदकधर्मस्य च

सत्त्वेनोक्तलक्षणाभावादव्याप्तिरिति भावः। संयोगसंसर्गश्च निरूपितत्वविशिष्टसमवायो वा, विशेषणतारूपस्वरूपसबन्धो वा ध्येयः। तत्रोक्तलक्षणसत्त्वेपि संयोगस्याव्याप्यवृत्तित्वमिति संयोगस्येत्येवोक्तम्॥

यत्तूक्तं रुचिदत्तेन-एकत्वापरत्वे पदार्थविशेषणे एव। न चैवं प्रमेयत्वे प्रमेयत्वमित्यत्राव्याप्तिः। एकपदार्थसंसर्गे स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावस्य तदर्थत्वादिति। तदेतेनैव निरस्तम्। द्रव्यं संयोगीत्यत्र तथाप्यव्याप्तेरपरिहारात्॥

## तर्कताण्डवम्

**अत्यन्ताभावस्य प्रतियोगिविरोधित्वेन व्याप्यवृत्तित्वेन वा विशेषणेऽपि गन्धप्रागभावसमानकालीनो घटो गन्धवानिति वाक्यमपि योग्यं स्यात्। गन्धवति गन्धप्रागभावस्य सत्त्वेऽपि गन्धात्यन्ताभास्यासत्त्वात्॥**

**एकपदार्थसंसर्गेऽपरपदार्थनिष्ठसंसर्गान्योन्याभाव-प्रतियोगितावच्छेदकत्वप्रमाविशेष्यत्वाभावरूपायामन्योन्या-भावगर्भायां योग्यतायामव्याप्तेश्च। न च सा न योग्यता। त्वयैव लाघवेन व्याप्तेरिव योग्यताया अपि अन्योन्याभावगर्भाया एव ग्राह्यत्वात्॥**

**नचैवमन्योन्याभावगर्भैव योगताऽस्तु। न त्वत्यन्ता-भावगर्भेति वाच्यम्। एकपदार्थसंसर्गोऽपरपदार्थनिष्ठा-त्यन्ताभावप्रतियोगीत्यत्यन्ताभावगर्भायोग्यत्वज्ञानेऽपि शाब्दधीप्रसङ्गात्।**

## न्यायदीपः

उक्ताव्याप्तिपरिहारकविशेषणदानेऽतिव्याप्तिरायातीत्याह ॥ **अत्यन्ताभावस्येति** ॥ योग्यं स्यादित्येतद्व्यनक्ति ॥ **गन्धवतीति** ॥ घटो हि गन्धवान्गन्धप्रागभाववांश्च भवति। उत्पन्नं द्रव्यं

क्षणमगुणं तिष्ठतीति तैरङ्गीकारात्। कालभेदेन गन्धतत्प्रागभावयोरेकत्राविरोधात्। तथा च द्वितीयादिक्षणेषु गन्धवति घटे प्रथमक्षणे गन्धप्रागभावसत्त्वेपि तदत्यन्ताभावो नेति गन्धरूपैक-पदार्थनिरूपितसंसर्गे घटरूपापरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावस्य सत्त्वेनोक्तप्रमा-विशेष्यत्वाभावस्योक्तरूपप्रतियोगितावच्छेदकधर्मशून्यत्वस्यापि सत्त्वादतिव्याप्तिरित्यर्थः॥

यत्त्वत्यन्ताभावपदं विरोध्यभावपरम्। एवं चोक्तस्थले गन्धवानिति विशिष्टवैशिष्ट्यसंसर्गे प्रागभावोऽपि विरोधीति तत्प्रतियोगित्वस्यैव सत्त्वान्नाव्याप्तिरिति त्वग्रे नन्वित्यादिना शङ्कितपक्षधरमतनिरासेन निरसिष्यते॥

यद्वैतदनुशयादाह **॥ पदार्थेति ॥ अपरेति ॥** अपरपदार्थनिष्ठो यः पदार्थान्तरनिरूपित-संसर्गवदन्योन्याभावस्तत्प्रतियोगितावच्छेदको वेत्यर्थः। जलेन सिञ्चतीत्यत्र सेको वह्निसंसर्गवान्नेति धीवत्, जलसंसर्गवान्नेति बुद्धेरभावात्सेकनिष्ठान्योन्याभावप्रतियोगी वह्निसंसर्गाद्दाहादिरेव न तु संसर्गीति वह्निसंसर्गस्यैव सेकनिष्ठान्योन्याभावगर्भप्रतियोगितावच्छेदकत्वं न तु जलसंसर्गस्येति तस्यैव तादृशप्रमाविशेष्यत्वं न तु जलसंसर्गस्येति वह्निना सिञ्चितीति वाक्यमयोग्यं जलेनेति योग्यमित्येतादृशयोग्यतायामत्यन्ताभावगर्भमयोग्यतालक्षणस्याभावादव्याप्तिरित्यर्थः॥

रुचिदत्तस्तु एकपदार्थसंसर्गत्वे अपरपदार्थसंसर्गनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्व-प्रमाविशेष्यत्वाभाव इत्यवदत्॥

**॥ व्याप्तेरिवेति ॥** प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगि यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यत्यन्ताभावगर्भव्याप्त्यपेक्षया यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति त्वया व्याप्तिवादेऽन्योन्याभावस्य व्याप्यवृत्तित्वेन प्रतियोग्यसमानाधिकरणेति विशेषणनैरपेक्ष्यात् लाघवेनान्योन्याभावगर्भैव व्याप्तिरङ्गमिति यथैवान्योन्याभावगर्भयोग्यतायां प्रतियोगिव्यधिकरणेति विशेषणनैरपेक्ष्येण लाघवात्तस्या एव शाब्दबोधाङ्गत्वादिति भावः।

## तर्कताण्डवम्

**ननु तर्ह्युभयधीरपि प्रत्येकं शाब्दबोधहेतुः। न चाननुगमः। ग्राह्यसंसर्गविरोधिविषयकप्रमाविरह-ज्ञानत्वेनानुगमात्। तथाच न कोपि दोषः। संसर्ग्यन्योन्या-**

भावस्यापि संसर्गविरोधित्वात्। द्रव्ये संयोगात्यन्ताभावस्य संयोगाविरोधित्वात्। गन्धप्रागभावस्यापि भिन्नकालीनगन्धेन सहाविरोधेति तात्पर्यविषयेण समानकालीनगन्धेन विरोधादिति चेन् मैवम्॥

अत्र ह्याद्यपक्षे तात्पर्यविषयीभूतान्वयविरोधिप्रमाविरहो योग्यता। द्वितीये तात्पर्यविषयभूतान्वयविरोधिधर्मशून्यत्वं योग्यतेति फलितोर्थः।

तथाच समभिव्याहृतशब्दतात्पर्यविषयस्यान्वयस्य सत्त्वं वा तदविनाभूतप्रमाणाविरोधो वा योग्यतेत्येवास्तु। किमनया कुसृष्ट्या। तावतैव निश्चिताप्रामाण्यकोऽग्निना सिञ्चेदित्यादावनिश्चिताऽप्रामाण्यके जलेन सिञ्चतीत्यादौ चानाप्तवाक्ये अनतिव्याप्तेः। त्वदीयद्वितीयलक्षणस्य जलेन सिञ्चतीत्यनाप्तवाक्येऽतिव्याप्तेश्च॥

## न्यायदीपः

पक्षधरेणात्र ब्रूम इत्यादिना सिद्धान्तितमाशङ्कते ॥ **नन्विति** ॥ द्विरूपयोग्यताज्ञानस्यापि अनुगतधर्मानाह ॥ **ग्राह्येति** ॥ ग्राह्यो यः संसर्गः जलसेकसंसर्गः, तद्विरोधि यदपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वं, अपरपदार्थनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम्, विरोधित्वस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वरूपत्वस्यात्राभिमतत्वात्, तद्विषयकप्रमाविरहज्ञानत्वं द्विरूपस्यापि योग्यताज्ञानस्यास्तीत्यानुगमादित्यर्थः॥

न कोपि दोष इत्युक्तं व्यञ्जयन्नत्यन्ताभावस्य संसर्गविरोधित्वं व्यक्तमिति तत्राव्याप्त्यभावमप्रदर्श्य अन्योन्याभावगर्भयोग्यतायामव्याप्तिदोषस्तावन्नेत्याह ॥ **संसर्गेति** ॥ वह्निसंसर्गान्योन्याभाववति वह्निसंसर्गस्यादर्शनादिति भावः। द्रव्यं संयोगीत्यात्राव्याप्तिदोषो नेत्याह ॥ **द्रव्य इति** ॥ **संयोगाविरोधित्वादिति** ॥ संयोगसंसर्गाविरोधित्वादित्यर्थः। एवं च तत्र संयोगस्याव्याप्यावृत्तितया स्वाधिकरणद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि तस्य ग्राह्यसंयोगसंसर्गाविरोधित्वेन विरोध्यभाव-

प्रतियोगित्वप्रमाविशेष्यत्वाभावादेः सत्त्वान्नाव्याप्तिरित्यर्थः ॥

यदपि गन्धप्रागभावसमानकालीन इत्यादिनातिव्याप्तिकथनं तदपि नेत्याह **॥ गन्धेति ॥ विरोधित्वादिति ॥** तथाच तत्र गन्धस्य ग्राह्यसंसर्गविरोध्यभावप्रतियोगित्वमेवेति नातिव्याप्तिरित्यर्थः **॥ अत्र हीति ॥** एकपदार्थेत्यादिमण्युक्तलक्षणद्वय इत्यर्थः **॥ फलितार्थ इति ॥** त्वदुक्तविवक्षारीत्येति भावः।

**॥ तदिति ॥** उक्तरूपान्वयसत्त्वाविनाभूत इत्यर्थः **॥ इत्येवास्त्विति ॥** अन्यथान्योन्याभाव-गर्भयोग्यतासत्त्वेऽत्यन्ताभावगर्भायोग्यताज्ञानादन्वयबोधापत्तेः। कारणतावच्छेदकावच्छिन्नयत्कि-ञ्चित्कारणसत्त्वे एव कार्योत्पत्तेः। न चेष्टापत्तिः। ग्राह्यसंसर्गविरोध्यवगाहित्वेनावश्यं तस्य तत्प्रति-बन्धकत्वादिति भावः

**॥ अनिश्चितेति ॥** तत्र विवादस्यानिश्चयादनिश्चितेत्युक्तम् **॥ अनतिव्याप्तेरिति ॥** अनाप्तो-क्तत्वादेव तद्वाक्येऽन्वयस्यासत्यत्वादिति भावः **॥ त्वदीयेति ॥** त्वदीयेत्यादिनोक्ते इत्यर्थः। जलेनत्यादौ सेकान्वयविरोधिवह्नित्वरूपधर्मशून्यत्वसत्त्वादिति भावः।

## तर्कताण्डवम्

**इयं हि विषयसत्त्वरूपा योग्यता स्वरूपसत्येवानाप्तवाक्ये लक्षणस्यानतिव्याप्त्यर्थमुक्ता। न तु सत्तया ज्ञाततया वा शाब्दप्रमाकारणत्वेनोक्ता। शाब्दप्रमायां तस्या वा तद्विषय-ज्ञानस्य वा हेतुत्वायोगत्॥**

**उक्तं चैतत्प्रमाण्यस्वतस्त्वे। भ्रमसाधारणे शाब्दज्ञाने त्वाकाङ्क्षासत्ती अयोग्यतानिश्चयविरहश्च हेतव इत्यस्तु। न तु योग्यता। न वा तज्ज्ञानम्।**

**यद्यपि योग्यताज्ञानादयोग्यतानिश्चयविरहो गुरुः। तथाप्यसावसंसर्गाग्रहरूपत्वात्प्रत्यक्षादिविशिष्टज्ञाने क्लृप्त आवश्यकश्च॥**

**किञ्च योग्यतायाः संसर्गात्मकत्वेन तज्ज्ञानस्य शाब्द संसर्गज्ञानहेतुत्व आत्माश्रयः स्यात्।।**

## न्यायदीपः

नन्वेवं शाब्दप्रमाहेतोर्योग्यताया विषयसत्त्वरूपत्वे शाब्दप्रमाया गुणजन्यत्वेन प्रमायाः परतस्त्वापत्तिरित्यत आह।। **इयं हीति** ।। स्वरूपसत्येवेत्युक्तैवकारव्यावर्त्यं व्यनक्ति ।। **न त्विति** ।। **तस्या वेति** ।। यरोग्यताया वेत्यर्थः। कथं न हेतुत्वमित्यत आह ।। **उक्तं चैतदिति** ।। शाब्दप्रमायां योग्यता तज्ज्ञानं वा न हेतुरित्येतत्प्रत्यक्षप्रमादावनुगतगुणभङ्गे शाब्दप्रमानुगतगुणखण्डनप्रस्तावे उपपादितं चेत्यर्थः ।।

नन्वेवं शाब्दज्ञानमात्रेऽपि योग्यता न हेतुः स्यात्। तथाचानिश्चितायोग्यतावाक्यादपि धीप्रसङ्गः। न चायोग्यतानिश्चयविरहो हेतुः। गुरुत्त्वेन योग्यतायां एव हेतुत्वौचित्यादित्यत आह।। **भ्रमेत्यादि** ।। **असावति** ।। अयोग्यतानिश्चयाविरह इत्यर्थः ।। **क्लृप्त इति** ।। हेतुत्वेनेति योज्यम् ।। **आवश्यक इति** ।। तदभावे शाब्दज्ञानानुदयादिति भावः। योग्यताज्ञानहेतुत्वे विपक्षे बाधकं चाह।। **किञ्चेति** ।।

## तर्कताण्डवम्

**वस्तुतस्तु अयोग्यतानिश्चयविरहोपि न शाब्दधीहेतुः। किं त्वाकाङ्क्षासत्ती एव। तथात्वे हि अयोग्यत्वेन निश्चितस्य प्रतिवादिवाक्यस्याबोधकतया कथाबधिरकलहः स्यात्। अग्निना सिञ्चतीत्यादिवाक्यादपि सामग्रीसत्त्वादप्रमात्वेन निश्चितं प्रवृत्त्यजनकं ज्ञानं जायत एव। कथमन्यथा तन्निराकरणम्। उक्तं च सुधायाम् ‘‘मेरुः सर्षप इत्यादि-वाक्यान्मेरोरपि सर्षपत्वेन प्रतिभासात्’’ इति।**

**एतेन संशयसाधारणं योग्यताज्ञानं शाब्दधीहेतुरिति, योग्यताभ्रमः शाब्दभ्रमहेतुरिति च निरस्तम्। अयोग्यत्व-निश्चयेऽपि शाब्दधीदर्शनात्। दृश्यते च परोक्तयोग्यता-सन्देहाभावेपि गेहे घट इति वाक्याज्झडिति संसर्गधीः।**

**परोक्तयोग्यता वा तत्प्रमा वा शाब्दप्रमायां हेतुरिति तु प्रामाण्यस्वतस्त्वे निरस्तम्॥**

## न्यायदीपः

ननु असंसर्गाग्रहरूपतया यद्ययोग्यतानिश्चयविरहः शाब्दधीहेतुः स्यात्तर्हि यत्सामान्य-विशेषन्यायेनाविद्यमानासंसर्गाग्रहः, प्रमामात्रेऽविद्यमानायोग्यतानिश्चयविरहश्च शाब्दप्रमायामनुगतो गुणो हेतुः प्राप्नोतीति प्रामाण्यस्य परतस्त्वापत्तिः। शाब्दसाधारण्यानापत्तिः। प्रतिवाद्यादिवाक्या-दितोऽर्थज्ञानाभावापत्तिश्चेत्यत आह॥ **वस्तुतस्त्विति**॥

कुत इत्यतो विपक्षे बाधकमाह॥ **तथात्वे हीति**॥ अयोग्यतानिश्चयविरहस्य शाब्दधीहेतुत्व इत्यर्थः। कथेत्यनुवादः। बधिरकलह इति विधिः। प्रतिवादिवाक्यात्पदार्थोपस्थितौ मानसः संसर्ग-बोध इति तु शब्दकरणकत्वानुभवविरुद्धम्। अन्यथा आप्तवाक्यस्थलेप्येवं सुवचत्वेन शब्दप्रामाण्यं दत्तजलाञ्जलि स्यादिति भावः। तर्हि अग्निनेत्यादिवाक्यादप्यार्थधीः स्यात्ततश्च प्रवर्तेतापि पुरुष इत्यत आह॥ **अग्निनेति**॥ **सामग्रीति**॥ आकाङ्क्षासत्तिरूपसामग्रीसत्त्वाज्ज्ञानं जायत इत्यन्वयः। अप्रामाण्यानिश्चायकबाधावताररूपसमग्रीसत्त्वान्निश्चिता। प्रामाण्यमिति नान्वयः। अत एव प्रवृत्त्यजनकमित्यर्थः॥ **उक्तं चेति**॥ जिज्ञासाधिकरणे-

"विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम्।"

इत्येतद्व्याख्यायामख्यातिपक्षखण्डनावसरे उक्तमित्यर्थः। योग्यताज्ञानस्यशाब्दज्ञानव्यतिरेक-व्यभिचारमाह॥ **अयोग्यत्वेति**॥ योग्यतासन्देहस्यापि व्यतिरेकव्यभिचारमाह॥ **दृश्यते चेति**॥ **परोक्तेति**॥ पदार्थसंसर्ग इत्यादिना परोक्तेत्यर्थः॥

यद्वा भवदुक्तान्वयसत्त्वादिरूपयोग्यताज्ञानस्याहेतुत्वेऽपि परोक्तयोग्यताज्ञानस्य तत्प्रमायाश्च शाब्दभ्रमत्वज्ञाने तत्प्रमयोः स्यादित्यत आह – **दृश्यते चेत्यादिना। प्रामाण्यस्वतस्त्व इति।** प्रत्यक्षादिप्रमास्वनुगतहेतुत्वभङ्ग इत्यर्थः।

## तर्कताण्डवम्

**ननु प्रकृतप्रमाणविरोधरूपप्रतियोगिनोऽप्रामाणिकत्वात् तदभावः कथं प्रामाणिकः स्यादिति चेत्काऽत्र कथन्ता।**

**प्रतियोग्यप्रामाणिकत्वस्याभावप्रामाणिकत्वं प्रत्येव प्रयोजकतायाः शुक्तिरूप्यतादात्म्यादौ दर्शनात्। प्रपञ्चितं चैतन्न्यायामृते। एतेदवाभिप्रेत्योक्तं पद्धतौ ''प्रतीतार्थस्य प्रमाणविरोधाभावो योग्यता। तत्प्रतिपादकत्वात्पदान्यपि योग्यतावन्ती''ति।**

## न्यायदीपः

नन्वस्त्वेवमन्वयसत्त्वं योग्यतेति पक्षः। प्रमाणाविरोधो योग्यतेति पक्षो न युक्तः। यत्किञ्चित्प्रमाणाविरोधस्यातिप्रसञ्जितया प्रकृतग्राह्यसंसर्गाभावावगाहिप्रमाणाविरोध एव योग्यतेति वाच्यम्। स च न युक्त इत्याशङ्क्य समाधत्ते ॥ **नन्वित्यादिना** ॥ जलेन सिञ्चतीत्यादौ प्रकृतजल-संसर्गाभावावगाहिप्रमाणेत्यर्थः। तादात्म्यस्यासत एव सदुपरागेण भ्रान्तौ भानस्य चिरन्तनमते स्वीकारात् शुक्तिरूप्यतादात्म्यादावित्युक्तम्॥

ननु कथमसतो निःस्वरूपस्यात्यन्ताभावप्रतियोगित्वं नाम धर्म उपपद्यतामित्यत आह ॥ **प्रपञ्चितं चैतदिति** ॥ धर्मिसत्तानिरपेक्षधर्मत्वादिना प्रपञ्चितमाद्यपरिच्छेदेऽसतोत्यन्ताभाव-प्रतियोगित्वसमर्थनवाद इत्यर्थः।

## तर्कताण्डवम्

**यत्तु-प्रमाणलक्षणटीकायामन्योन्यान्वययोग्यता-वदर्थाभिधायकत्वं योग्यत्वमित्युक्तम्। तन्निश्चिताप्रामा-ण्यकादग्निना सिञ्चितीत्यादिवाक्याद् व्यावृत्तयोग्यता-निरूपणपरम्। न तु जलेन सिञ्चतीत्यनाप्तवाक्यव्यावृत्त-योग्यतानिरूपणपरम्। तद्व्यावृत्तेर्निर्दोषत्वविशेषणेनैव सिद्धेरिति ज्ञेयम्।**

**तस्माद्वेदस्यापौरुषेयत्वेपि प्रामाण्यसम्भवात्तस्य विष्णावेव शक्तितात्पर्ये युक्ते इति।**

**इति योग्यतनिरूपणम् ॥ ३॥**

## न्यायदीपः

ग्रन्थान्तरोक्तयोग्यतालक्षणस्यासदर्थके जलेन सिञ्चितीत्याद्यनाप्तवाक्येऽतिव्याप्तिमाशङ्क्य तत्साधारण्यमेवाभिप्रेतमतो न दोष इत्याह ॥ **यत्त्वित्यादिना** ॥ एवं तर्हि तद्वाक्यस्यापि प्रमाण-शब्दत्वापत्तिरित्यतो ''निर्दोषवाक्यमागम'' इति निर्दोषत्वविशेषणेनैव तन्निवारणादन्यथा निर्दोषेति व्यर्थमापद्यत इति भावः। एवं वेदस्यापौरुषेयत्वे आप्तवाक्यत्वरूपलक्षणाभावे अप्रामाण्यमिति शङ्किते निर्दोषवाक्यरूपलक्षणेनैव प्रामाण्यम्।

वाक्यत्वं चाकाङ्क्षायोग्यताऽऽसत्तिमत्पदकदम्बत्वमित्यभिप्रेत्याकाङ्क्षादिस्वरूपं चोपपाद्योत्तर-प्रसङ्गमुपक्षिपन्नुपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या निर्दोषवाक्यत्वादिरूपलक्षणसम्भवादित्यर्थः ॥ **शक्तीति** ॥ पदानां शक्तिरेव तत्समुदायवेदस्यापि शक्तिरिति भावः। तात्पर्यं तत्प्रमितिशेषत्वं प्राग्वेदापौरुषेयत्ववादे व्यक्तम्। एवं चादिवर्जितैराम्नायैराख्यातेत्युक्तं युक्तमिति भावः ॥

इति योग्यतावादः समाप्तः।

# अथ शक्तिवादः ।

## अथ लीलावत्युक्तशक्त्यपलापप्रकारभङ्गः ।

### तर्कताण्डवम्

**ननु-स्वरूपसहकार्यतिरिक्तशक्तौ मानं नेति चेन्न। यादृशात् करतलानलसंयोगाद्दाहो जायते तादृशादेव मण्यादिसमवधाने न जायत इति मण्यादिविघटनीयशक्तिसिद्धेः। तत्र दृष्टसामग्र्याः सत्त्वेन तद्विलम्बेन वा तत्सम्पादकादृष्टविलम्बेन वा दाहविलम्बायोगात्॥**

### न्यायदीपः

विष्णावेव शक्तितात्पर्ये इत्युक्तम्। अतीन्द्रियशक्तावेव मानाभावादिति भावेन लिङ्गपादे ''अत्ता चराचरग्रहणात्'' इत्यधिकरणसुधायां ''स्वरूपसहकारिसमवधानातिरिक्तशक्तिरेव नास्तीति केचित्'' इत्यादिना ''आस्तां प्रपञ्च'' इत्यन्तेन सङ्क्षेपेण शक्तिसमर्थनं कृतं, तत्स्पष्टं विवृण्वानः शक्तिमाक्षिप्य समाधत्ते ॥**स्वरूपेत्यादिना**॥ शब्दादिस्वरूपतत्सहकारिभ्यामन्यशक्तावित्यर्थः।

क्वचिदेव शक्तिसिद्धौ शब्दे सा सेत्स्यतीति भावेनोपपादनसौकर्याय प्रसिद्धवह्नौ तावत्साधयति ॥**यादृशेति**॥ दाहाभावस्य कारणवैकल्यनिमित्तकत्वशङ्काव्युदासायोक्तं यादृशात्तादृशादेवेति ॥**न जायत इति**॥ दाह इत्यनुषङ्गः।

एतेन मण्यादेर्दाहादिप्रतिबन्धकत्वं प्राप्तं, ततः किमित्यत आह ॥**इति मण्यादीति**॥ इति शब्दो हेत्वर्थः। मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्तिरेव वह्न्यादिगतातीन्द्रियशक्तौ मानम्। कार्यानुकूलकिञ्चिद्धर्मविघटकत्वरूपत्वात्प्रतिबन्धकत्वस्य कार्यानुकूल-किञ्चिद्धर्मश्च शक्तेरन्यो न युक्त इति भावः। एतच्चोपलक्षणम्। वक्ष्यमाणार्थपञ्चकेनापीत्यपि ध्येयम्॥

ननु-मण्यादेः प्रतिबन्धकत्वमेवासिद्धम्। मण्यादिसन्निधिस्थले दाहाभावस्य दाहसामग्र्यभावेन वा दाहसामग्रीसम्पादकादृष्टाभावेनोपपत्तेरित्यतस्तादृशादेवेत्युक्तिकृत्यं व्यञ्जयन् प्रतिबन्धकत्वं तावद्द्रढयति ॥**तत्रेति**॥ मण्यादिसन्निधिस्थल इत्यर्थः॥

## तर्कताण्डवम्

**न च दृष्टसामग्र्याः सत्त्वेपि मणिरेव साक्षाद्दाहजनकमदृष्टं नाशयतीति वाच्यम्। तादृशादृष्टे मानाभावात्। अन्यथा अन्त्यतन्तुसंयोगादौ सत्यपि कदाचित्पटानुत्पत्तिः स्यात्। वन्ध्यापुंसम्प्रयोगादावपि साक्षाज्जनकादृष्टविलम्बान्न विलम्बः। किं तु नापुत्रस्य लोकोस्तीति श्रुत्याऽपुत्रस्य नरकोक्त्या तज्जनकस्य दुरितस्यावश्यकत्वेन दाहं प्रति मणेरिव दुरितस्यैव पुत्रोत्पत्तिप्रतिबन्धकत्वात्॥**

**न चैवमदृष्टस्य कुत्रचिदपि साक्षाज्जनकत्वाभावे परम्परया जनकत्वमपि न स्यादिति वाच्यम्। दृष्टसामग्रीरहिते सर्गाद्यकालीने कार्येऽदृष्टस्य साक्षाज्जनकत्वस्वीकारात्॥**

**अस्तु वा दाहादावपि साक्षाज्जनकमदृष्टं, तथापि न तन्मण्यादिविनाश्यम्। अदृष्टस्यादृष्टनाशकत्वेन विहितेतर-फलमात्रनाश्यत्वात्। अन्यथा मण्यादिनाऽदृष्टनाशशङ्कया वैदिके कर्मणि निष्कम्पप्रवृत्तिर्न स्यात्॥**

## न्यायदीपः

नन्वतस्त्वेवं मण्यादेः प्रतिबन्धकत्वं तथापि साक्षाद्दाहजनकादृष्टनाशकत्वेन वा दाहप्रतिकूल-दुरदृष्टजनकत्वेन वा स्वाभावरूपदाहकारणविघटकत्वेन वा मण्यादेः प्रतिबन्धकत्वोपपत्तौ न तदन्यथानुपपत्त्याऽतीन्द्रियशक्तिसिद्धिरित्यतः आद्यं तावदाशङ्क्य निराह ॥ **न च दृष्टेति** ॥ **तादृशेति**॥ साक्षाज्जनकप्रतिबन्धकनाश्यादृष्ट इत्यर्थः ॥ **पटादीति** ॥ तत्रापि कदाचित्त्वदुक्तादृष्टाभावसम्भवा-दिति भावः। एतच्चोपलक्षणम्। मणिकृदुक्तदिशा मण्यपसरणानन्तरं दाहाभावप्रसङ्गादन्वय-व्यतिरेकाभ्यां क्लृप्तत्वेन मण्याद्यभावरूपदाहकारणाभावेनैव दाहाभावोपपत्तेश्चेत्यपि ध्येयम्।

ननु वन्ध्यासम्प्रयोगादौ दृष्टाव्यभिचाराददृष्टविलम्बो वाच्य इत्यत आह ॥ **वन्ध्येति** ॥ (नन्वदृष्टं

क्वचित्साक्षाज्जनकम्। अन्यथा दृष्टसामग्रीरहितस्थले साक्षादहेतुत्वे दृष्टसमग्र्यामप्यहेतुत्वापत्त्या परम्परया हेतुरपि न स्यादतः कथं तादृशादृष्टं नेत्युच्यत इत्यत आह ॥ **न चैवमिति** ॥ **न तन्मण्याविनाश्यमिति** ॥ येन मण्यादेः प्रतिबन्धकत्वं शक्तिं विनाप्युपपन्नं स्यादिति दोषः कुतो नेत्यत आह ॥ **अदृष्टस्येति** ॥ प्रबलदुरितादृष्टस्य पुण्यादृष्टनाशकत्वेन प्रबलपुण्यादृष्टस्य दुरितादृष्टनाशकत्वेन मण्यादेरनाशकत्वादित्यर्थः। अदृष्टस्य विहितादिजन्यत्वाद्विहितेतरनाश्यत्वेपि फलमात्रनाश्यत्वेन मण्यादिरूपेण विहितेतरेणानाश्यत्वादित्यर्थः। कीर्तनादेरप्युपलक्षणम्। "धर्मः क्षरति कीर्तनात्" इत्यादेः। यद्वाऽदृष्टस्य नाश्यत्वादित्यन्वयः। अदृष्टनाशकत्वेन यद्विहितं प्रायश्चित्तादि तदितरेण फलमात्रेण नाश्यत्वादित्यर्थः। मण्यादि त्वदृष्टनाशकतया विहितेतरदपि न फलरूपमिति न तन्नाशकमिति भावः।

## तर्कताण्डवम्

**नापि-मणिना दाहप्रतिपक्षादृष्टजननाद्दाहविलम्बः, प्रतिपक्षादृष्टजनने शौचाद्यनपेक्षादिति वाच्यम्। प्रतिपक्षादृष्टस्यापि मणितुल्यतया तद्विघटनीयत्वेनैव शक्तिसिद्धेः॥**

**नापि-मण्याद्यभावरूपदृष्टकारणाभावादेव दाहविलम्बः, अभावस्यापि भाववद्दाहकतौल्येन कारणत्वात्, त्वयापि विशेषादर्शनेन भ्रमस्य, विहिताकरणेन प्रत्यवायस्य, निर्दोषत्वादिना वेदप्रामाण्यादेश्च स्वीकृतत्वादिति वाच्यम्। उत्तेजकसमये मणिसत्त्वेपि दाहदर्शनेन मण्यद्यभावस्य अहेतुत्वात्॥**

**तस्मान्मण्यादिना प्रतिबन्धदशायां दाहजनकादृष्टस्य मण्यादिना नाशाद्वा मण्यादिना दाहप्रतिकूलादृष्टजननाद्वा मण्याद्यभावरूपदृष्टकारणविरहाद्वा दाहानुत्पत्तिरिति लीलावत्याद्युक्तं पक्षत्रयमप्ययुक्तम्॥**

**लीलावत्याद्युक्तशक्त्यपलापप्रकारभङ्गः ॥४॥**

## न्यायदीपः

**॥ नापीति ॥ प्रतिपक्षेति ॥** प्रतिकूलेत्यर्थः। शौचाचमनादेरभावे कथमदृष्टजन्मेत्यत आह **॥ प्रतिपक्षेति ॥**

ननु-प्रतिकूलादृष्टस्य मण्यादिजन्यस्य न शक्तिविघटकत्वेन दाहप्रतिबन्धकता, किं तु प्रतिकूलादृष्टान्तरजनकत्वेनेति चेत्तर्ह्यनवस्थापत्तिः। एवं तर्हि स्वाभावरूपदाहकारणविघटनरूपत्वेन प्रतिपक्षादृष्टस्य दाहप्रतिबन्धकतास्त्विति चेन्न। एवं हि मण्यादेरेव तथात्वोपपत्तौ किं प्रतिपक्षादृष्टजन्मकल्पनया ॥

नन्वस्तु तर्हि तथैवेत्यतस्तृतीयं पक्षं सयुक्तिकमाशङ्क्य निराह **॥ नापीति ॥** वाच्यमित्यन्वयः। भाववत् भावस्य कारणत्ववत्। अभावस्य हेतुता न केवलं युक्तिसिद्धा प्रतिवादिसिद्धा चेत्याह **॥ त्वयापीति ॥** अदर्शनाकरणनिर्दोषपदैरभावस्यैव प्रतीतेरिति भावः। आदिपदेन कुड्यसंयोगाभावस्य गतावनुपलब्धेश्चाभावज्ञाने हेतुत्वदृष्टेरिति गृह्यते। तस्मादित्युक्तमेव हेतुत्रयं व्यनक्ति **॥ मण्यादिनेति ॥**

लीलावत्युक्तशक्त्यपलापभङ्गः ॥ ४ ॥

## अथ शक्तौ श्रुत्यादिनिरूपणम्।

### तर्कताण्डवम्

**अत्र नैयायिकाः - उत्तेजकाभावविशिष्टमण्याद्यभावरूपदृष्टकारणविरहादेव दाहानुत्पत्त्युपपत्तेर्न शक्तिसिद्धिः ॥**

**ननु-मण्याद्यभावानां न तावन्मण्याद्यभावत्वेन कारणत्वमननुगमात्। नापि प्रतिबन्धकत्वाभावत्वेन अन्योन्याश्रयात्। कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकत्वात्। मन्त्रसत्त्वेपि मण्यभावमात्रेण दाहापत्तेश्च। तस्यापि प्रतिबन्धकाभावत्वात्। न हि यावत्कारणसमवधान एव कार्यम्। एकदण्डसमवधानेपि घटोत्पत्तेरिति चेन्मैवम्। दण्डचक्रादि-**

**कूटवत्सकलानां मण्यादीनां संसर्गाभावकूटस्य दाहजन-कत्वेनाननुगमान्योन्याश्रययोरभावात्॥**

**एतेन-दाहकाले सकलानां मण्यादिसंसर्गाभावानां कूटोऽसम्भवी, मणिध्वंसकाले तत्प्रागभावस्यासम्भवादिति निरस्तम्। साकल्यस्य प्रतियोगिविशेषणत्वेनोक्ततया सर्वेषां मण्यादीनामेकैकस्य संसर्गाभावस्य दाहकाले सत्त्वेन तादृशाभावकूटस्यापि तत्काले सत्त्वात्॥**

## न्यायदीपः

यत्त्वनुमानखण्डे मणावीश्वरवादानन्तरं लीलावत्याद्यभिमतशक्त्यपलापप्रकारं निरस्य स्वयं प्रकारान्तरेणापलापप्रदर्शनं कृतं तदप्युच्यत इत्यादिना न युक्तमिति वक्तुमनुवदति ''अत्र नैय्यायिका'' इत्यादिना ''तस्मान्न शक्ति'' रित्यन्तेन। उत्तेजकं प्रतिबन्धकप्रतिबन्धकं, तदभावविशिष्टो यो मण्यादिस्तदभावेत्यर्थः। मण्याद्युक्तं मणिमन्त्रौषधाद्यभावानां कूटस्थकारणत्वं शङ्कोत्तराभ्यां व्यनक्ति ॥**नन्वित्या-दिना**॥ अन्योन्याभावव्यावृत्त्यर्थं प्रागभावादिसाधारणाभावलाभं चाह ॥**संसर्गाभावकूटस्येति**॥ सकलपदस्य मण्यादेर्विशेषणत्वेनोक्तौ कृत्यं व्यनक्ति ॥**एतेनेति**॥ एतच्छब्दार्थं स्फुटीकरोति ॥**साकल्यस्येति**॥ अभावविशेषणत्वे हि स्यात् त्वदुक्तदोषः। न चैवमित्यर्थः। प्रतिबन्धका-भावेनोक्तौ कृत्यं व्यनक्ति ॥**एतेनेति**॥

## तर्कताण्डवम्

**किञ्च कार्यानुत्पत्तिव्याप्यत्वं प्रतिबन्धकत्वमिति पक्षे प्रतिबन्धकत्वावच्छिन्नाभावः कारणम्। स च यत्किञ्चित्-प्रतिबन्धकसत्त्वदशायां नास्तीति न तदा दाहप्रसङ्गः। नाप्यन्योन्याश्रयाननुगमौ। प्रहरं मा दहेति सावधिमन्त्रपाठे मन्त्रस्य झडिति नाशेपि मन्त्रप्रयोक्तृपुरुषाभिप्रायविषयः कालविशेष एव प्रतिबन्धक इति न कोपि दोषः॥ तस्मान्न शक्तिसिद्धिरिति।**

## न्यायदीपः

प्रतिबन्धकाभावत्वेन कारणत्वेपि न प्रागुक्तदोष इति भावेन ''यद्वा प्रतिबन्धकत्वावाच्छिन्नप्रतियोगिकोऽभावः कारण''मित्यादिना मण्युक्तमेवाह ॥**किञ्चेति**॥ कार्यानुत्पत्तिः कार्यप्रागभावो व्याप्तिश्च कालिकीति भावः। ॥**प्रतिबन्धकत्वेति**॥ मणिमन्त्राद्यनुगतप्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकाभावत्वेन न मण्याद्यभावस्य कारणत्वमित्यर्थः ॥

मन्त्रसत्त्वेपि मण्याद्यभावमात्रेण दाहापत्तिरूपप्रागुक्तदोषो नेत्याह ॥**स चेति**॥ मन्त्रसत्त्वस्थले मणित्वाद्यवच्छिन्नाभावसत्त्वेपि एकप्रतिबन्धकसत्त्वे प्रतिबन्धकत्वावच्छिन्नाभावो नेति न दाहप्रसङ्गदोष इति भावः ॥**नाप्यन्योन्याश्रयेति**॥ कारणीभूताभावप्रतियोगित्वपक्ष एवास्य दोषस्योक्तेरिति भावः ॥

ननु-व्यभिचारात्कथं मन्त्राद्यभावः कारणमित्यतो व्यभिचारं निराह ॥**प्रहरमिति**॥ निषेधार्थकमाशब्दोयम्। न माङ्। तेन ''माङि लुङिति'' लुङ भाव्यमिति न शङ्क्यम्।

**उच्यते-**

**''पराऽस्य शक्तिर्विविधैव श्रूयते. स्वाभाविकी''**

**''विचित्रशक्तिः पुरुषः पुराणो'',**

**''न चान्येषां शक्तयस्तादृशाः स्युः''**

**''सर्वैर्युक्ता शक्तिभिर्देवता सा''**

**''परेति यां प्राहुः'' इत्यादि श्रुत्या**

**''शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।**
**यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः''।**

**इत्यादिस्मृत्या च शक्तिसिद्धेः॥**

## न्यायदीपः

मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्तिरूपार्थापत्तेर्नैयायिकोक्तान्यथोपपत्तिमग्रे निरसिष्यन्,

एकत्र शक्तिसिद्धौ अन्यत्र शब्दादावपि तदनुमानमिति भावेन, परमेश्वरेशक्तिसत्त्वे तावत्-

''ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः।
नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरुच्यते॥
इति पैङ्गश्रुतिश्चाह शक्तिसद्भाव एव तु''

इत्यत्राधिकरणानुख्यानाद्युक्तदिशा श्रुत्यादिरूपमानोक्त्या शक्तौ मानं नेत्यतावत्तावन्निराकरोति ॥ **परास्येति** ॥ अस्य भगवत इत्यर्थः। ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया चेति विग्रहः। विचित्रेति वाक्यान्तरम्। तादृशास्तादृश्यः। सर्वैर्युक्तेति वाक्यान्तरम्। सर्वैः सर्वाभिः। लिङ्गव्यत्ययात्।

''परेति यां प्राहुरजस्रशक्तिम्''

इति वाक्यशेषः। ''एता आत्मनि चैवं विचित्राश्च हि'' इत्यादि सूत्रभाष्योक्ताः। तावता न सर्ववस्तुषु शक्तिलाभ इत्यतो रामानुजभाष्योक्तविष्णुपुराणस्मृतिमाह ॥ **शक्तय इति** ॥ सर्गाद्याः सृष्ट्यादिविषया भावशक्त्याः भावरूपशक्तय इति वा स्वभावशक्तय इति वाऽर्थः।

## तर्कताण्डवम्

**न चेयं स्वरूपमात्रपरा। अस्येति षष्ठ्या विचित्रशक्तिरिति बहुव्रीहिणा शक्तिभिर्युक्तेति युक्तशब्देन सम्बन्धित्वेन विविधैवेति विचित्रेति च बहुविधत्वेन शक्तिभिः शक्तय इति बहुत्वेन चोक्तेः॥**

**नाप्यागन्तुकसहकारिपरा।**

**''न तस्य कार्यं कारणं च विद्यते''।**

**इति वाक्यशेषे सहकारिनिषेधात् स्वाभाविकत्वाजस्रत्वयोरुक्तेश्च।**

**नापि प्रतिबन्धकाभावपरा। भावत्वोक्तेः।**

**''अचिन्त्यज्ञानगोचरा'' इति बीजादिनिष्ठशक्तेरप्यतीन्द्रिय-**

त्वोक्तेश्च।

"अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्तिताः"।

इत्यादिस्मृत्या इदमिह शक्तं, इदं शक्ततरं, इदं तु शक्ततममिति लोकव्यवहारेण गुरुत्वादाविव शक्तौ तारतम्यप्रतीतेश्च॥

इति शक्तौ श्रुत्यादिनिरूपणम्॥५॥

## न्यायदीपः

श्रुत्यादेरन्यथोपपत्तिं निराह॥ **न चेयमित्यादिना**॥ **वाक्यशेष इति**॥ परास्य शक्तिरित्यस्य पूर्ववाक्ये न तस्य कार्यं काराणजन्यकारणं न विद्यत इत्युक्तेरित्यर्थः॥ **इत्यादिस्मृत्येति**॥

"भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान्।
चतुर्थः कीचकस्तस्मात्पञ्चमं नानुशुश्रुम" इति॥

॥ **अन्योन्यानन्तरेति**॥ विराटपर्वगतस्मृत्येत्यर्थः। तारतम्यप्रतितेश्चेयं नाभावपरेत्यन्वयः। अभावे तारतम्याभावादिति भावः॥

इति शक्तौ श्रुत्यादिनिरूपणम्॥५॥

## अथ शक्तावर्थापत्तिपञ्चकम्।

## तर्कताण्डवम्

किञ्च दण्डादेरन्वयव्यातिरेकाभ्यां घटादिकारणत्वं तावदनुमीयते। तत्र न तावत्पूर्ववृत्तित्वमात्रं लिङ्गम्। रासभादावपि सत्त्वात्॥

नापि नियमविशेषितम्। अन्यथासिद्धेऽपि सत्त्वात्।

**तस्मात् प्रत्यक्षसिद्धं कारणतात्वेन त्वदभिमतमनन्यासिद्ध-नियतपूर्ववृत्तित्वमेव लिङ्गं वाच्यम्। न च तदेव तेनानुमेयमिति तदनुमेयातीन्द्रियशक्तिसिद्धिः। न च तत्र स्वरूपयोग्यतारूपं दण्डत्वमनुमेयम्। तस्य प्रत्यक्षत्वात्।**

**नापि-सहकारिसमवधानरूपं फलोपधानमनुमेयम्। दण्डे सहकार्यसमवधानेऽपि तद्व्यवहारात्। शिलादौ तत्समवधानेऽपि कारणत्वाव्यवहाराच्च।**

**नापि-दण्डत्वस्यानन्यथासिद्धिविशिष्टनियमावच्छे-दकत्वमनुमेयम्। तस्य हेतुशरीर एव प्रवेशात्।**

**एतदेवाभिप्रेत्योक्तं सुधायाम् -**

**''ततोन्वयव्यतिरेकसमधिगम्यमतीन्द्रियमेव किञ्चिन्मृदादीनां घाटदिकारणत्वमभ्युपगमनीयम्। तदेव च शक्ति''रिति॥**

**व्याप्तिग्राहकप्रत्यक्षेण तु नियमरूपा रसरूपादिसाधारणी व्याप्तिरेव गृह्यते। न तु शक्तिरूपाकारणता। तस्या नित्याती-न्द्रियत्वात्।**

## न्यायदीपः

श्रुत्याद्यनुग्राहकार्थापत्तीरपि शक्तौ मानत्वेन विवक्षुरादौ कारणत्वस्यान्वयव्यतिरेक-गम्यत्वान्यथानुपपत्तिरूपार्थापत्तिं सुधोक्तां तावद्व्यनक्ति ॥ **किञ्च दण्डादेरिति** ॥

॥ **अनुमीयत इति** ॥ तस्य प्रत्यक्षत्वे घटादिप्रत्यक्षस्येवान्वयाद्यपेक्षा न स्यात्। कारणत्वमेव शक्तिपदार्थ इति कारणतावादे मणिकृदुक्त्यातीन्द्रियत्वावगतेश्चेति भावः। अन्वयव्यतिरेकौ नाम अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपो यस्मिन् सति यन्नियतं यदभावे च यदभावो नियत इत्येवंरूप-त्वादन्वयव्यतिरेकयोः। एवं च तत्र कारणत्वानुमापकं किं विशेष्यमात्रं नियमविशेषितं विशेष्यं वा कृत्स्नं विशिष्टं वा। आद्ययोः साध्याविशिष्टत्वदोषाभावेपि व्यभिचारान्न लिङ्गत्वमित्याह ॥ **तत्र न**

**तावदिति ॥ अन्यथासिद्धेऽपीति ॥** घटाकारणे तद्गतरूपकारणे मृत्पिण्डरूप इत्यर्थः ॥ **कारणत्वेनेति ॥** कारणत्वरूपत्वेनेत्यर्थः ॥

कारणत्वस्योक्तरूपलिङ्गानुमेयान्यथानुपपत्तिरूपार्थापत्तेरन्यथोपपत्तिं त्रेधाऽऽशङ्क्य निराह ॥ **न चेत्यादिना ॥** ॥ कारणतावच्छेदकस्यैव स्वरूपयोग्यतारूपत्वाद्दण्डत्वमित्युक्तम् ॥ **तस्येति ॥** उक्तरूपावच्छेदकत्वस्येत्यर्थः। अनन्यथासिद्धनियतपूर्ववृत्तित्वान्यूनानधिकवृत्तित्वस्य हेतुत्वेन वाच्यत्वात्तस्यैवोक्तरूपावच्छेदकत्वादिति भावः ॥ **सुधायामिति ॥**

''अत्ता चराचरग्रहणा''दित्यधिकरणे-

''इति पैगिश्रुतिश्चाह शक्तिसद्भाव एव तु''।

इत्यादिश्लोकव्याख्यानावसर इति ध्येयम्॥

ननु-वह्न्यादौ सति दाहादिस्तदभावे तदभाव इति दाहादेर्वह्न्यादिना व्याप्तिग्राहकप्रत्यक्षेणैव दाहकारणत्वं वह्न्यादेर्गृह्यते। यद्वा यत्र धूमस्तत्राग्निरित्यादिव्याप्तिग्राहकप्रत्यक्षेण कारणता गृह्यत इति कथमनुमेयतोक्तिः। एतदन्यथाऽनुपपत्त्या शक्तिसिद्धिरित्यत आह ॥ **व्याप्तीति ॥**

### तर्कताण्डवम्

**न च व्यभिचरितं सहचारदर्शनं नियमरूपव्याप्तेरपि कथं ग्राहकम्, ग्राहककोटौ नियमप्रवेशे चात्माश्रय इति वाच्यम्। तस्याञ्जनादिवद्व्याप्तिग्राहकप्रत्यक्षसहकारित्वेनाव्यभिचारानपेक्षणात्॥**

**किञ्च जलस्य जलत्वेन पिपासोपशामकत्वं तावदनुमीयते। तत्र च न तावत्फलोपधानमनुमेयम्। बाधाद् व्यभिचाराच्च। किं तु पिपासोपशमनकारणत्वमात्रम्। तच्च न तावदनन्यथासिद्धनियतपूर्ववृत्तित्वरूपम्। तस्य पूर्वमेव ज्ञातत्वात्। कथमन्यथा जलत्वस्य व्याप्तिग्रहः॥**

**नापि सहकारिविरहप्रयुक्तकार्याभाववत्त्वरूपम्। सह-**

**कारिशब्देन स्वेतरकारणस्यैव विवक्षणीयत्वेनात्माऽश्रयात्। भाविसहकारिविरहशङ्कया फलार्थिनो निष्कम्पप्रवृत्त्ययोगात्।**

**तावता त्वदुक्तनिर्वचनस्य सहकारिविरहः कार्यप्रागभावस्योत्तरकालसम्बन्धकारणमित्येतदर्थकतया कारणत्वमज्ञात्वा कार्याभावस्य सहकारिविरहप्रयुक्तत्वस्य ज्ञातुमशक्यतयाऽत्माश्रयाच्च। प्रागभावेऽव्याप्तेश्च। सहकारिसाकल्यसमवधानदशायां दण्डादेरहेतुत्वापाताच्च। तस्मात् अतीन्द्रियं शक्तिरूपं कारणत्वमेवानुमेयमिति शक्तिसिद्धिः॥**

**एतदप्युक्तं सुधायाम् - ''ततोऽतीन्द्रियमेवे''त्यादिना॥**

## न्यायदीपः

ननु व्याप्तिरेव गृह्यत इत्ययुक्तम्। सहचारदर्शनस्य वा नियतसहचारदर्शनस्य वा तदनिर्णायकत्वादित्याशङ्क्य समाधत्ते ॥ **न चेति** ॥ तस्य सहचारदर्शनस्येत्यर्थः।

जलस्य पिपासोपशामकत्वानुमित्यन्यथानुपपत्तिश्च शक्तौ मानमिति भावेनाह ॥ **किञ्चेति** ॥ अर्थापत्तेरन्यथोपपत्तिं निराह ॥ **तत्र चेति** ॥ किं त्वित्यादिना वक्ष्यमाणपक्षापेक्षया तावच्छब्दः ॥ **बाधादिति** ॥ तत्रानुमित्यनन्तरं प्रवृत्तस्य जलपानान्तरमेवोदन्यानिवृत्तिरूपफलोपलम्भात् क्वचिदप्रवृत्तिपानाभावायोरपि सम्भवाच्चेति भावः ॥ **व्यभिचारादिति** ॥ जलत्वोपेतस्य सर्वस्याप्युक्तफलोपधाने मानाभावात्प्रत्यग्रोत्पन्नविनष्टजले फलोपधानाभावाच्च व्यभिचार इति भावः॥

प्रकारान्तरेण पिपासोपशमकारणत्वस्वरूपमाशङ्क्य निराह ॥ **नापीति** ॥ सहकारिविरहप्रयुक्तः सहकारिविरहेणोत्तरसमयसम्बन्धविशिष्टतया जन्यो यस्तृप्तिरूपकार्यस्य प्रागभावस्तद्वत्त्वं पिपासोपशमनकारणत्वमित्यर्थः ॥ **तावता त्वदुक्तनिर्वचनस्येति** ॥ इत्येतदर्थकतयेत्यन्वयः ॥ **आत्माश्रयेति** ॥ कारणत्वरूपनिर्वचने कारणपदप्रवेशादित्यर्थः। ॥ **प्रागभाव इति** ॥ घटादिकारणीभूतप्रागभावस्य प्रागभावान्तराभावात्तत्र सहकारिविरहप्रयुक्तघटप्रागभावरूपकार्याभाववत्त्वरूपत्वदुक्तकारणत्वाभावाद्घटादिप्रागभावेऽव्याप्तेरित्यर्थः ॥ **दण्डादेरहेतुत्वेति** ॥ तदा प्रागभावसत्त्वेपि

तस्य सहकारिविरहप्रयुक्तत्वाभावात्। न चेष्टापत्तिः। सर्वदा तत्र हेतुत्वव्यवहारादिति भावः ।। **तस्मादिति** ।। पिपासोपशमनकारणत्वस्य शक्तितोऽन्यस्यायोगादित्यर्थः ।।

## तर्कताण्डवम्

किञ्चानन्यथासिद्धनियतपूर्ववृत्तित्वमेव कारणत्वं चेद् रासभादौ तदभावो न तावदन्यथासिद्ध्या। नियतपद-वैयर्थ्यात्।।

नापि पूर्ववृत्तित्वस्यानियतत्वेन। व्यक्त्यपेक्षया नियमस्य दण्डादावप्यभावात्। जात्यपेक्षया नियमस्य च रासभेऽपि प्रसङ्गात्। सम्भवति ह्यनादौ संसारे घटजातीयाद्रासभ-जातीयस्य कदाचिदपि व्यवहितपूर्ववृत्तित्वनियमः।।

नाप्यव्यवहितपूर्ववृत्तित्वस्यानियतत्वेन। व्यवहित-नियतपूर्ववर्तिनो यागादेः स्वर्गाद्यहेतुत्वापातात्। सापूर्वस्य यागस्याव्यवहितत्वमस्तीति चेन्न। पूर्वं प्रतीतेन यागस्य स्वर्गहेतुत्वेन पश्चादपूर्वस्य कल्पनीयतया तदव्यवहितत्वस्य कारणत्वशरीरे प्रवेशायोगात्। अन्यथाऽपूर्वं वाच्यं स्यात्।।

तस्मादतीन्द्रियशक्तिरेव कारणत्वम्। तां च प्रति स्वाश्रयजातीयस्य फलाव्यवधानं व्यापकम्। यागस्य च भोजनादेस्तृप्तिं प्रतीव स्वर्गं प्रति स्वरूपेणाव्यवधानं न सम्भवतीत्यनुभवस्य स्मृतिं प्रतीव व्यापारद्वाराऽव्यवधानं वक्तव्यमित्यपूर्वकल्पना युक्ता।।

एतदप्युक्तं सुधायाम्-अतीन्द्रियमेवेत्यादिना।

## न्यायदीपः

रासभादेरकारणत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरिति भावेनाह ।। **किञ्चानन्यथेति** ।।

चेदित्यनन्तरं रासभादेर्घटादिकं प्रति कारणत्वाभावो न स्यादिति शेषः। कुतो न स्यादित्यत आह ।। **रासभादावित्यादि** ।। **पूर्ववृत्तित्वस्यानियतत्वेनेति** ।। रासभादौ तदभाव इत्यनुषङ्गः। किं व्यवहितपूर्ववृत्तित्वस्यानैयत्येन रासभादौ कारणत्वाभावोऽनभिमत उताव्यहितपूर्ववृत्तित्वस्यानैयत्येनेति। आद्ये रासभादावतिप्रसङ्गं व्यनक्ति ।। **सम्भवति हीति** ।।

अन्त्यं निराह ।। **नापीति** ।। अनियतत्वेनेत्यनन्तरं पूर्ववदनुषङ्गः ।। **सापूर्वस्येति** ।। अपूर्वसहितस्येत्यर्थः।।। **तदिति** ।। अपूर्वाव्यवहितस्येत्यर्थः ।। **वाच्यं स्यादिति** ।। त्वन्मत इष्टसाधनत्वस्यैव लिङादिवाच्यतया गुरुमत इवापूर्वस्य लिङादिवाच्यत्वाभावात्। सापूर्वस्य स्वर्गाव्यवहितपूर्ववृत्तित्वरूपकारणत्वस्य यागनिष्ठस्य विध्यर्थत्वेऽपूर्वमपि लिङादिवाच्यम् स्यात् न त्वर्थापत्तिकल्प्यमित्यपसिद्धान्त इति भावः।

।। **शक्तिरेवेति** ।। तथा च रासभादौ तदभावादेव कारणत्वाभाव इति नातिप्रसङ्ग इति भावः। नापि यागादावव्याप्तिप्रसङ्गादित्यत आह ।। **तां चेति** ।। शक्तिं चेत्यर्थः। स्वाश्रयस्येत्येवोक्तावरण्यस्थदण्डे व्यभिचारः स्यादतः स्वाश्रयजातीयस्येत्युक्तिः। ।। **एतदपीति** ।। रासभादेश्चाकारणत्वान्यथानुपपत्त्याऽप्यतीन्द्रियशक्तिसिद्धिरित्येतदपीत्यर्थः ।।

## तर्कताण्डवम्

**नन्वेवं शक्तिः कारणत्वं चेत्सा कारणं न स्यात्। तथाच शक्तिर्दाहानुकूला न स्यादिति चेन्न। कारणत्वस्यापि कारणस्येव कार्यप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपानुकूलत्वाश्रयत्वात् ।।**

**केचित्तु प्रतिबन्धकाभावत्वेन कारणत्वेऽन्योन्याश्रयात् मण्याद्यभावकूटस्य कारणता त्वयोक्ता। तथाचाननुगतानां तावदभावानां कारणता तत्तदनन्तनिष्ठानन्तधर्माणां कारणतावच्छेदकत्वमिति कल्पनाद्वरं शक्तिकल्पनम्। अन्यथा तवापि समवायो न सिध्येत्। क्लृप्तैरनन्तैः स्वरूपसम्बन्धैरेव विशिष्टप्रतीत्युपपत्तेरित्याहुः ।।**

## न्यायदीपः

शक्तेः कारणत्वरूपत्वे बाधकमाशङ्क्य निराह ॥ **नन्वेवमिति** ॥ **व्याप्येति** ॥ व्याप्तिः कालिकी ध्येया। दण्डादेः कारणस्येव तच्छक्तेरपि तादृशप्रागभावप्रतियोगित्वादिति भावः। प्रकारान्तरेण शक्तिसिद्धिमन्यापदेशेनाह ॥ **केचित्त्विति** ॥ **अन्योन्येति** ॥ मण्याद्यभावानां प्रतिबन्धकाभावत्वे ज्ञाते तदभावानां कारणत्वज्ञानं कारणत्वज्ञाने च सति कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वज्ञानं सति च तस्मिन् प्रतिबन्धकाभावत्वेन तदभावानां कारणत्वज्ञानमित्यन्योन्याश्रयाद्धेतोरभावकूटस्य कारणता त्वयोक्तेत्यर्थः ॥

ततश्च किमित्यतः स्वाभिमतसाध्यमाह ॥ **तथाचेति** ॥ अभावकूटस्य कारणत्वे सतीत्यर्थः। अन्यथा कल्पनागौरवानादर इत्यर्थः ॥ **तवापीति** ॥ जातिगुणक्रियाविशिष्टप्रतीतयो विशेषणसम्बन्धनिमित्तका इत्यादिरूपेण समवायमनुमिमानस्य तवेत्यर्थः। अत्र पक्षेऽरुचिबीजं तु प्रतिबन्धकाभावानां वक्ष्यमाणदिशा विशिष्टविधित्वादिनाऽनुगतिपक्षेऽस्य दोषस्याभावात् अन्यथानुपपत्त्या शक्तिकल्पनानवकाश इति बोध्यम्। तथाऽपि तत्पररीत्या परस्यापादनसम्भवादेतत्पक्षावतार इत्यदोषः ॥

## तर्कताण्डवम्

**किञ्चैवमुत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वं स्वीकृत्य शक्त्यपलापे प्रायश्चित्ताभावसहकृतसन्ध्यावन्दनाद्यकरणस्य नरकहेतुत्वसम्भवात् तन्निवर्त्यमपि दुरितापूर्वं न सिध्येत् ॥**

**एवं ज्योतिष्टोमादिजन्यमपूर्वमपि न सिध्येत्। अन्वयव्यतिरेकाभ्यां साङ्गयागप्रागभावविशिष्टात्माभावस्यैव स्वर्गादिफलहेतुत्वोपपत्तेः। आत्मनः स्थायित्वेन विशेष्याभावाभावेपि प्रागभावरूपविशेषणाभावेन विशिष्टाभावसम्भवात्।**

**नचास्य विशिष्टाभावस्यानन्तत्वेन फलानन्त्यं स्यादिति**

**शङ्क्यम्। सावधिकफलबोधकश्रुतिबलादपूर्वस्येवोक्तस्य विशिष्टाभावस्यापि सावधिकफलजनकत्वस्वभाव-कल्पनात्॥**

## न्यायदीपः

अपूर्वप्रतिबन्धाऽपि शक्तिं साधयति ॥ **किञ्चैवमिति** ॥ पूर्वत्र श्रुत्यादिनिरूपणवादे अत्र नैयायिका इत्यादिनोक्तरीत्यैवशब्दार्थः ॥ **अपूर्वमपीति** ॥ यागजन्यापूर्वमपीत्यर्थः। कथं तर्हि चिरध्वस्तयागादेः स्वर्गादिहेतुतेत्यत आह ॥ **अन्वयेति** ॥

उपपत्तेरित्येतद्व्यनक्ति ॥ **आत्मन इति** ॥ इष्टापूर्तादिकारिणो यजमानात्मनः स्थायित्वेऽपि तस्य कृतयागादित्वेन तत्र तत्प्रागभावाभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः सुलभ एव, मण्यादिसत्त्वदशायामुत्तेजके सत्युत्तेजकाभावविशिष्टमण्याद्यभावसत्त्ववदिति भावः।

ननु यागस्यैव प्रागभावविरोधितयाऽऽशुतरविनाशियागनाशे प्रागभावोन्मज्जनान्न विशेषणा-भावसम्भव इति चेन्न। यागस्येव तद्ध्वंसस्यापि तत्प्रागभावविरोधित्वात्॥

प्रतिबन्धकाभाववैषम्यमाशङ्क्य निराह ॥ **न चेति** ॥ **सावधिकेति** ॥ "अमृतो वा व सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्य" इत्यादिश्रुतीत्यर्थः।

## तर्कताण्डवम्

**अपिच यत्र देवदत्तादिशरीरं प्रत्यक्षेण गृहीतं प्रत्यक्षा-न्तरेणानुमानादिना वा पुनर्नानुभूतं तत्रापि तच्छरीरस्मृति-स्तावदुत्पद्यते। तां च स्मृतिं प्रत्यन्वयव्यतिरेकाभ्यां तदनुभव-प्रागभावविशिष्टात्मविरहः स्मृतिपर्यन्तस्थायी कारणमस्तु। कृतमनुभवस्य स्मृतिहेतुत्वमङ्गीकृत्य तन्निर्वाहाय संस्कार-कल्पनया॥**

**न चात्र स्मृतिरूपफलसातत्यशङ्काऽवकाशोप्यस्ति। संस्कारकल्पनापक्ष इव सदृशादृष्टचिन्तादिसहकारि-**

**वैकल्प्यादेव फलाभावोपपत्तेः ॥**

**यदि च तत्र स्वर्गस्मरणादौ क्लृप्तकारणभावस्य यागानुभवादेरेव लाघवेन भावरूपापूर्वसंस्कारद्वारा कारणत्वं व्यवस्थाप्य तदभावात्कार्याभावोपपादनं, तर्हीहापि दाहे क्लृप्तकारणाभावस्य वह्नेरेव लाघवाद्भावरूपशक्त्या कारणत्वं निर्वाह्य तदभावात्कार्याभाव उपपाद्यताम्। कृत-मुत्तम्भकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वकल्पनया ॥**

**तस्मात्प्रतिबन्धकाभावो न हेतुरिति प्रतिबन्धकसमये शक्त्यभावादेव दाहाभावो वक्तव्य इति शक्ति सिद्धिः ॥**

## न्यायदीपः

यथा फलानन्त्यशङ्का नास्ति तथा प्रतिबन्द्यन्तरमाह ॥ **अपि चेति** ॥ अनुभवप्रसङ्गभाव-रूपविशेषणस्याभावोपपादनायोक्तं प्रत्यक्षान्तरेणानुमानादिना वा पुनर्नानुभूतमिति। ॥ **कृतमिति** ॥ अलमित्यर्थः। प्रागुक्तदोषोऽत्र नेत्याह ॥ **न चात्रेति** ॥ प्रतिबन्दीद्वये परमुखेनैव समाधिं वाचयित्वा अत्रापि तथेत्याह ॥ **यदि चेति** ॥

## तर्कताण्डवम्

**ननु-शक्तिपक्षे प्रतिबन्धकेन पूर्वस्याः शक्तेर्नाशात् प्रतिबन्धकापनये वोत्तेजकसमवधाने वा कथं पुनर्दाहः। यदि च ताभ्यां शक्त्यन्तरोत्पादस्तदाऽननुगतस्यापि प्रतिबन्धका-भावस्य हेतुत्वं तवापि समानमिति चेन्न। सत्येव कुठारे कदाचित् कुण्ठत्ववत्सत्येव संस्कारे कदाचिदनुद्बोधवत् सत्यामेवानुमितिसामग्र्यां संशयोत्तरप्रत्यक्षस्थळे अनुमित्य-भाववत्सत्येवापूर्वे कदाचिदविपाकवच्च सत्यामेव शक्तौ तस्याः कदाचित्कुण्ठीभावलक्षणावस्थाविशेषस्य कल्पनात् ॥**

**उक्तं हि सुधायां ''व्यक्तिशब्देन शक्तेरेवावस्थाविशेषस्य विवक्षितत्वा''दिति ॥**

## न्यायदीपः

शक्तिपक्षे बाधकमाशङ्क्यानेकदृष्टान्तपूर्वं निराह ॥ **नन्वित्यादिना** ॥ **उक्तं हीति** ॥ अत्ता चराचरेत्यधिकरणसुधायाम् शक्तेरवस्थाविशेष एव न तु शक्त्यन्तरमित्येतदुक्तमित्यर्थः। शक्ति-र्व्यक्त्यात्मनाऽस्तीत्युक्तौ का नामव्यक्तिरिति पृष्टस्योत्तरं वक्ति ॥ **शब्देनेत्यादिना** ॥

## तर्कताण्डवम्

**किञ्चास्तु त्वया वक्ष्यमाणे पक्षचतुष्टये त्वदनभिमते विशिष्टं पदार्थान्तरमिति पक्षे च कथञ्चिद्विशिष्टाभावस्य अनुगमः कारणता च। तथाऽपि मण्यादेर्लोकसिद्धं कार्यानु-कूलकिञ्चिद्धर्मविघटकत्वरूपं प्रतिबन्धकत्वं न स्यादिति मण्यादेः प्रतिबन्धकत्वान्यथाऽनुपपत्त्या शक्तिसिद्धिः।**

**न च मणिः कार्यानुकूलविघटनरूपः प्रतिबन्ध एव, न तु प्रतिबन्धकः, तत्प्रयोक्ता पुरुष एव तु प्रतिबन्धकः, मणौ प्रतिबन्धकव्यवहारस्तु उपचाराद्वा स्वार्थे कप्रत्ययाश्रयणाद्वेति वाच्यम्। मुख्ये बाधकाभावात्। मणिना प्रतिबद्ध इति व्यवहारानुसारेण प्रतिबन्धक इत्यत्रापि कर्तर्थकप्रत्यय-स्यैवौचित्याच्च ॥**

## न्यायदीपः

मण्यादेः प्रतिबन्धकत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरित्याह ॥ **किञ्चेति** ॥ **वक्ष्यमाण इति** ॥ विशेषणविशेष्यतत्सम्बन्धानामभावत्रयं वा विद्यमानस्यापि प्रतिबन्धकरूपविशेष्यस्यैव प्रतियोगितावच्छेदकभेदेनाभावो वा देशान्तरस्थानामुत्तम्भकाभावविशिष्टानां मण्यादीनामत्रत्या-भावो वा विशेषणविशेष्ययोर्यः सम्बन्धस्तदभावो वा कारणमित्युत्तरभङ्गे वक्ष्यमाण इत्यर्थः

॥ **कर्त्रर्थकप्रत्ययस्येति** ॥ "ण्वुल्तृचाविति" कर्तरि विहितण्वुल्प्रत्ययस्येत्यर्थः ॥

## तर्कताण्डवम्

**किञ्च मण्याद्यभावस्य कारणत्वे मणेः प्रतिबन्धकत्वमपि न स्यात्। लोके कारणाभावरूपे दण्डाभावादौ प्रत्यवायकारणीभूतविहिताकरणस्याभावरूपे विहितकरणे च प्रतिबन्धकव्यवहाराभावात्॥**

**तस्माद्दृष्टान्वयव्यतिरेकाभ्यां कारणत्वानुमित्यन्यथाऽनुपपत्त्या रासभादेरकारणत्वान्यथाऽनुपपत्त्याऽपूर्वादिप्रतिबन्द्या मण्यादेर्लोकसिद्धप्रतिबन्धकत्वान्यथाऽनुपपत्त्या त्वदभिमतप्रतिबन्धकत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिः॥**

**इति शक्तावर्थापत्तिपञ्चकम् ॥ ६ ॥**

## न्यायदीपः

ननु-कारणीभूतस्वाभावप्रतियोगित्वरूपप्रतिबन्धकत्वमेव मण्यादेरिति मते शक्तिसिद्धिर्नेत्यतः शक्तिं विना तदेवायुक्तमित्याह ॥ **किञ्चेति** ॥ तथा च कारणीभूतशक्तिविघटनरूपत्वादिनैव प्रतिबन्धकत्वं त्वयाऽपि वाच्यम्। प्रागुक्तं सर्वं निष्कृष्यानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ अपूर्वादीत्यादिपदेन सङ्ग्रहः। केचिदित्यादिनोक्तकल्पनालाघवस्यारुचिग्रस्तत्वान्न तस्य सङ्ग्रहः कृतः॥

शक्तावर्थापत्तिपञ्चकम् ॥ ६ ॥

## अथ प्रतिबन्धकाभावस्य हेतुत्वे प्रकारचतुष्टयभङ्गः।

## तर्कताण्डवम्

**किञ्च-त्वन्मते विशिष्टं विशेषणविशेष्यतत्सम्बन्धातिरिक्तं नास्तीत्युत्तम्भकाभावविशिष्टप्रतिबन्धकाभावोऽपि**

**क्वचिद्विशेषणाभावरूपः क्वचिद्विशेष्याभावरूपः क्वचित् सम्बन्धाभावरूप इत्यननुगमान्न हेतुः। अभावत्रयस्यैक-शक्तिमत्त्वेनानुगमे च शक्तिसिद्धिः॥**

**न च विशेषणविशेष्यतत्सम्बन्धाभावाः विशिष्ट-विरोधित्वेनानुगताः, यत्र विशेषणं वा विशेष्यं वा तत्सम्बन्धो वा नास्ति तत्र विशिष्टं नास्तीति प्रतीतेरिति वाच्यम्। विशिष्ट-विरोधित्वं हि विशिष्टविरहात्मकत्वं वा तद्व्याप्यत्वं वा वाच्यम्।**

**तदुभयमपि प्रतियोगिनो विशिष्टस्याननुगमे तदभावस्या-प्यननुगमादननुगतमेव। विशिष्टस्यैवानुगमे तु तदभावोऽपि स्वत एवानुगत इति किमनया कुसृष्ट्या।**

## न्यायदीपः

एवमुत्तेजकाभावविशिष्टमण्याद्यभावरूपदृष्टकारणाभावादेव दाहानुत्पत्त्युपपत्तेर्न शक्तिसिद्धि-रित्यादिना कृतचोद्यस्य श्रुत्यादिविरोधार्थापत्तिपञ्चकविरोधाभ्यां दूषणमुक्त्वाऽधुना तादृशाभावस्य कारणत्वमेव न युक्तं येन शक्त्यपलापो घटेतेति भावेनाह ॥ **किं चेति** ॥

मणौ हि उत्तेजकाभावसहकृतस्याभावो हेतुरिति प्राञ्च इत्युक्त्वा विशिष्टं नार्थान्तरं एतदभावोऽनुगतः स्यादित्यादिना तद्दूषयित्वा स्वयं तत्सर्वं निष्कृत्य वदन् दूषणमाह ॥ **त्वन्मत इत्यादिना** ॥ **एकशक्तिमत्त्वेनेति** ॥ एककार्यानुकूलशक्तिमत्त्वेनेत्यर्थः।

शशधरोक्तमेवानुगमकमाशङ्क्य निराह ॥ **न चेति** ॥ त्रयाणां विशिष्टविरोधित्वं व्यनक्ति ॥ **यत्रेति** ॥ **अनुगम इति** ॥ विशेषणविशेष्यतत्सम्बन्धरूपत्रितयात्मकत्वे तदभावस्यापि त्रित्वापत्त्याऽननुगमात्। तद्विरहात्मत्वं वा तद्विरहव्याप्यत्वं वाऽननुगतमेवेत्यर्थः ॥ **अनुगमे त्विति** ॥ विशेषणादित्रितयानुगतं विशिष्टं पदार्थान्तरमित्युपगमे त्वित्यर्थः ॥ **कुसृष्ट्येति** ॥ विशिष्टविरोधित्वेन अनुगमः विरोधित्वं विरहात्मत्वादिति कल्पनयेत्यर्थः।

## तर्कताण्डवम्

**ननु-तर्हि स्वरूपेण विद्यमानस्यैव मणेरुत्तेजकसमये उत्तेजकाभावावच्छिन्नत्वेनाभावोऽस्ति। प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात्। कथमन्यथा दण्डिनि पुरुषे सत्येव केवलपुरुषो नास्तीति कैवल्याव-च्छिन्नत्वेन पुरुषाभावप्रमा। तथाचोत्तम्भके सत्यसति च मण्यभावकाले उत्तम्भकयुक्तमणिकाले चानुगते मण्यभाव एव हेतुरिति चेन्न। मन्मते पदार्थन्तरस्य विशिष्टस्यैवा-वच्छिन्नाभावप्रतियोगित्वेन मणेस्तदप्रतियोगित्वात्। त्वन्मते च विशेष्ये सति विशिष्टाभावबुद्धेः सविशेषणे हीति न्यायेन विशेषणाभावविषयत्वेनाननुगमतादवस्थ्यात्। कथमन्यथा शिखैव नष्टा न तु पुरुष इत्यबाधितधीः। कथं च विशेष्य-सत्त्वाविरोधिनः तदभावत्वम्। विशेषणसत्त्वमात्रविरोधिनः तदभावत्वाभावश्च॥**

## न्यायदीपः

एवं शशधराभिमतमभावत्रयपक्षं मण्याद्युक्तदिशा निरस्येदानीमुदयनाद्यभिमतमतिरिक्ताभाव-पक्षमाशङ्कते ॥ **ननु तर्हीति** ॥ **प्रतियोगिभेदेनैवेति** ॥ यद्यपि प्रतियोगिभेदस्थळे प्रतियोगिताव-च्छेदकभेदस्यावश्यकत्वात्तद्भेदादेव भेदस्तथाऽपि यथा प्रतियोगिभेदोऽभावभेदव्याप्तस्तथा प्रतियोगितावच्छेदकभेदोऽपीत्यर्थः। स च प्रतियोगिनि सत्यपि वर्तमानोऽभावः प्रागभावादित्रितयान्य एव ध्वंस एव वा क्लृप्तात्यन्ताभाव एव वा मण्युक्तदिशा ध्येय इति भावः॥

अस्त्वेवं ततश्च किमित्यत आह॥ **तथा चेति** ॥ उत्तम्भकदशायां मणिर्न चेत्तदोत्तम्भकाभाव-रूपावच्छेदकस्य तदवच्छेद्यविशेष्यस्य चोभयस्याभावात्तत्प्रयुक्तो मण्यभावः, उत्तम्भके सति मणिर्न चेत्तदातु विशेष्याभाव उत्तम्भकयुक्तमणिदशायां चोत्तम्भकाभावरूपावच्छेदकाभावप्रयुक्तो विशेष्याभावोऽनुगत इत्यर्थः ॥ **मणेस्तदप्रतियोगित्वादिति** ॥ तथा च त्वदभिमताभाव एवाळीक इति कस्य कारणतयाशक्त्यपलापः स्यादिति भावः। मण्युक्तमेव दोषमाह ॥ **त्वन्मते चेति** ॥

उदयनमत इत्यर्थः ।। **कथमन्यथेति** ।। विशिष्टाभावबुद्धेर्विशेष्याभावपरत्व इत्यर्थः। विशेषणाभावविषयत्वं विशिष्टाभावबुद्धेर्व्यनक्ति ।। **कथं चेति** ।। **विशेषणसत्त्वेति** ।। कथं चेत्यनुषङ्गः।

## तर्कताण्डवम्

**किञ्चास्यैव मणेरुत्तेजकात्पूर्वमुत्तेजकाभावविशिष्टतया तदवच्छेदेनाप्यभावोऽसम्भवी। न च मण्यादेः पूर्वमुत्तेजकाभावविशिष्टत्वेपीदानीमुत्तेजकाभावाभावेनेदानीमुत्तेजकाभावविशिष्टत्वेनाभावोस्तीति वाच्यम्। एवं हीदानीन्तनोत्तम्भकाभाववैशिष्ट्यं प्रतियोगितावच्छेदकं वाच्यम्। तच्चायुक्तम्। तस्योत्तेजकसमवहितमणौ कदाचिदप्यभावेन व्यधिकरणधर्मावच्छिन्नाभावापत्त्याऽपसिद्धान्तात्। तस्य केवलान्वयितयोत्तेजकात्पूर्वमपि सत्त्वेन तदाऽपि दाहापत्तेश्च।।**

**किञ्च विद्यमानस्याप्यविद्यमानधर्मावच्छेदेनाभावे व्यासज्यप्रतियोगिकोप्यभावः स्यात्। स च नेष्टः।।**

## न्यायदीपः

एतादृशाभावकल्पनं न्यायसिद्धान्तविरुद्धं चेत्याह ।। **किञ्चास्यैवेति** ।। यस्याभाव उच्यते तस्यैव मणेरित्यर्थः। किमुत्तेजकात्पूर्वं तदभावः प्रतियोगितावच्छेदकोऽथोत्तेजकदशायाम्। आद्य आह ।। **उत्तेजकादिति** ।। द्वितीयमाशङ्क्य निराह ।। **न चेति** ।। **इदानीमिति** ।। उत्तेजकदशायामित्यर्थः ।। **इदानीन्तनेति** ।। उत्तेजककालीनेत्यर्थः ।। **व्यधिकरणेति** ।। प्रतियोगिताव्यधिकरणेत्यर्थः।

।। **अपसिद्धान्तादिति** ।। यथा शृङ्गे शशीयत्वस्य कदाऽप्यभावेन शशीयत्वावच्छिन्नशृङ्गाभावो नोपेयते तथात्वे पटत्वावच्छिन्ने भूतले घटो नेति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाधिकरणताकाभावस्यातिरिक्तस्याङ्गीकर्तव्यताप्रसङ्गभयात् व्यक्तमेतदनुमितिलक्षणे तट्टीकासु, तथेहाऽप्युत्तेजकसहकृतमणावभावप्रतियोगितावतीदानीन्तनोत्तेजकाभावरूपावच्छेदकस्यान्यत्रैव सत्त्वेनेह तदा

कदाऽप्यभावेन प्रतियोगिताव्यधिकरणत्वावच्छिन्नाभावाङ्गीकारेऽपसिद्धान्तादित्यर्थः।

यदि कश्चिद् ब्रूयादस्तु तादृशोप्यभाव इति तदाऽपि दोषमाह ॥ **तस्येति** ॥ उत्तेजककालीनो-त्तेजकाभावरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावरूपेत्यर्थः ॥

## तर्कताण्डवम्

**अपि चैवं रक्ततादशायां घटस्य श्यामरूपावच्छिन्नत्वेना-भावापत्त्या प्रत्यभिज्ञाविरोधः स्यात्।**

**न च घटस्य श्यामत्वेनासत्त्वेऽपि घटत्वेन सत्त्वान्न तद्विरोध इति वाच्यम्। तथात्वे प्रत्यभिज्ञाया घटत्वाव-च्छिन्नाभेदविषयत्वेनोपपत्त्या श्यामत्वावच्छिन्नत्वेन भेदापत्त्या त्वदनभिमतभेदाभेदप्रसङ्गात्।**

**एवं तत्तक्षणावच्छेदेनापि भेदापत्त्या क्षणभङ्गः स्यात्। एवमेकस्मिन्नपि क्षणे संयोगतदभावावच्छेदेन भेदाभेदौ स्याताम्॥**

## न्यायदीपः

अतिप्रसङ्गं चाह ॥ **किञ्चेति** ॥ **व्यासज्येति** ॥ घटसत्त्वस्थले घटपटौ न स्त इति धीबलाद् द्वित्वावच्छिन्नप्रतियोगिताको विद्यमानघटपटोभयप्रतियोगिकोक्तातिरिक्ताभावोऽपि स्यात्। अन्यतराभावेनैव प्रतीत्युपपत्तावप्रामाणिकोऽभावो न तत्र नैयायिकैः स्वीकृत इत्यर्थः॥

अस्तु तादृशोऽप्यभाव इति वदन्तं प्रति दोषान्तरमाह ॥ **अपि चैवमिति** ॥ विद्यमानस्यैव वस्तुनोऽवच्छेदकाभावनिमित्ताभावस्वीकार इत्यर्थः ॥ **प्रत्यभिज्ञेति** ॥ यः श्यामः स एवायं रक्त इति प्रत्यभिज्ञेत्यर्थः ॥ **भेदाभेदेति** ॥ घटत्वेनाभेदः श्यामत्वेन भेद इति भेदाभेदेत्यर्थः ॥ **तत्क्षणेति** ॥ एतत्क्षणावच्छिन्नघटो न पूर्वक्षणावच्छिन्नः पूर्वक्षणावच्छिन्नश्चैतत्क्षणावच्छिन्नो नेति प्रतीत्या प्रतिक्षणामविद्यमानपूर्वोत्तरक्षणावच्छेदेन भेदसम्भवात् क्षणिकता स्यादित्यर्थः।

॥ **भेदाभेदाविति** ॥ वृक्षे शाखायां कपिसंयोगस्य मूले तु तदभावस्य सत्त्वेन वृक्षो मूले

कपिसंयोगवान्न भवति अग्रे कपिसंयोगाभाववान्नेति वा प्रतीत्या संयोगवदभेदः संयोगाभाववद्भेदश्च वृक्षे संयोगतदभावावच्छेदेन स्याताम्। तथा संयोगाभावस्थळे सयोगाभाववदभेदः संयोगवद्भेदश्च स्यादित्यर्थः ॥

## तर्कताण्डवम्

**किञ्च प्रतियोगिसत्त्वकालेऽपि सन्नयमभावो न तावद् ध्वंसः प्रागभावो वा। तयोः प्रतियोग्यसमानकालीनत्वात्। ध्वंसस्यानन्तत्वेनोत्तेजकापनयनकालेऽपि सत्त्वेन मणिसत्त्वेपि दाहापत्तेश्च। अत एव नात्यन्ताभावः। तस्यानाद्यनन्तत्वेन प्रतिबन्धककालेऽपि सत्त्वेन तदाऽपि दाहापत्तेः ॥**

**ननु-विशिष्टात्यन्ताभावं प्रति विशेषणस्य विशेष्यस्य वा प्रागभावो ध्वंसो वा प्रत्यासत्तिः। तथाच विशेषणादिदशायामत्यन्ताभावस्याप्रत्यासन्नत्वान्न दाहोत्पादकत्वं न वा प्रतीतिरिति चेन्न। तेषु प्रत्यासत्तित्वावच्छेदकैकरूपस्य अभावात्। अननुगतानामपि प्रत्यासत्तित्वे वाऽवश्यकानां तेषामेव दाहहेतुताऽस्तु। किं विशिष्टाभावकल्पनया ॥**

**एतेन कालविशेष एव प्रत्यासत्तिरिति निरस्तम्। अननुगमात्। सर्वत्रापि तत्तत्कालविशेषस्यैव हेतुत्वापत्त्या कारणान्तरापलापापत्तेश्च ॥**

## न्यायदीपः

ननु विशेष्यसत्त्वस्थलेऽवच्छेदकभेदेनाङ्गीक्रियमाणोऽभावः संसर्गाभाव एव न त्वन्योन्याभावः। येनोक्तदोषः स्यादित्यत आह ॥ **किञ्चेति** ॥ दाहापत्तेरित्युपलक्षणम्। तदाऽप्यभावधीप्रसङ्गाच्चेत्यपि ध्येयम् ॥

अत्यन्ताभावपक्षमुपेऽत्य तत्रोक्तदोषोद्धारमाशङ्कते ॥ **नन्विति** ॥ **तेष्विति** ॥ यद्यपि ध्वंसप्रागभावौ द्वावेव शङ्कितौ। तथाऽपि विशेषणविशेष्यरूपप्रतियोगिभेदाच्चतुष्ट्वमुपेत्य

तेष्वित्युक्तम्। यद्वा ध्वंसादिव्यक्तिबाहुळ्यापेक्षया तेष्वित्युक्तिः। एवं चाननुगम एव क्वचित्कस्यचिदेव प्रत्यासत्तित्वस्वीकारादिति भावः ।। **अननुगमादिति** ।। क्वचित्प्रागभावकालः क्वचित्प्रध्वंसकाल इत्यननुगमादित्यर्थः ।। **तुरीय इति** ।। प्रागभावप्रध्वंसात्यन्ताभावरूपे संसर्गाभावमध्ये सामयिकोपि क्वचिदत्यन्ताभावोस्त्वित्यर्थः ।। **कालविशेषेति** ।। उत्तम्भककालविशेषेत्यर्थः ।।

## तर्कताण्डवम्

**नाप्ययमुत्पादविनाशशीलस्तुरीयोऽभावः। उत्तम्भकोपनये उत्तम्भकाभावविशिष्टमण्यभावस्योत्पत्तेरपनये च विनाशादिति वाच्यम्। उक्तरीत्याऽऽवश्यकेन विशेषणाभावेनैव तद्व्यवपहारोपपत्तौ तुरीयाभावकल्पकाभावात्।।**

**न चायं कालविशेषावच्छेदेनात्यन्ताभाव एवेति वाच्यम्। तथात्वे प्रागभावादेरपि तथात्वापातत्। इह घटो नेत्यत्रापि घटभूतलसम्बन्ध एव प्रतियोगी न तु घटः। वक्ष्यते चैतदभावप्रस्तावे।।**

## न्यायदीपः

नन्वेवं-विशेषणाभावादिना विशिष्टाभावापलापे घटाद्यभावोऽपि न सिध्येत्। इह भूतले घटो नेत्यत्रापि घटभूतलसम्बन्धाभावेनैव तद्व्यवहारोपपत्तेरित्यत इष्टापत्तिमाह ।। **इह घटेति** ।। व्यक्तमेतन्न्यायामृते असतोऽभावप्रतियोगित्ववादे प्रथमपरिच्छेदे ।। **वक्ष्यत इति** ।। अभावस्य स्वरूपादन्यन्न प्रत्यासत्तिरित्येतदाश्रयासिद्धेर्दोषत्वभङ्गे वक्ष्यत इत्यर्थः ।।

## तर्कताण्डवम्

**ननु-तर्हि मण्युत्तम्भकोभयसत्त्वकाले तदानीमुत्तम्भकाभावविशिष्टानां देशान्तरस्थानामन्येषां मण्यादीनामत्रत्याभावः कारणं, न त्वत्र विद्यमानस्यैव मण्यादेरभावः। अत एवोदयनो ''न हि दण्डिनि सत्यदण्डानामन्येषां नाभाव''**

**इत्याह। अन्यथाऽन्येषामिति व्यर्थं स्यादिति चेन्न। एवं हि उत्तम्भककालीनं दाहं प्रति विद्यमानमणेरभावः कारणं न स्यात्। तथा चोत्तेजकागमनात् प्राक् मणिकालेऽपि दाहः स्यात्। एतन्मण्यभावस्य तदानीमसत्त्वेऽपि तस्याहेतुत्वेन तद्विलम्बेन दाहविलम्बानुपपत्तेः। हेतुभूतस्य च तत्राविद्य-मानानामन्येषां मणीनामभावस्योत्तेजकागमनात्प्रागपि सत्त्वात्॥**

**अथ मतं-विशेषणविशेष्ययोः सम्बन्ध एव विशिष्टं, तथाच मण्युत्तम्भकाभावरूपोभयसम्बन्धाभावो विशेषणा-द्यभावव्यापकोऽनुगतो हेतुरिति चेत्। मैवम्। अयमप्यभावो हि मण्युत्तम्भकाभावरूपसम्बन्ध्यात्मकविशेषणद्वयविशिष्ट-सम्बन्धरूपविशेष्यस्याभावः। न तु सम्बन्धमात्रस्याभावः अतिप्रसङ्गात्। तथा चायं विशिष्टाभावोऽपि यदि सम्बन्धि-रूपविशेषणद्वयेन सह सम्बन्धरूपविशेष्यस्य यत्सम्बन्धान्तरं तदभावात्मकः। तदाऽनवस्था। यदि तु तत्परिहाराय विशेषणाभावाद्यात्मकस्तदा पूर्ववदननुगमतादवस्थ्यम्।**

## न्यायदीपः

उदयनोक्तं पक्षान्तरमाशङ्क्य निराह ॥ **ननु तर्हीत्यादिना** ॥ अभावस्य विद्यमानमण्यादि-प्रतियोगिकत्वासम्भव इत्यर्थः। अदण्डिनामपि न बहुव्रीहिः किन्तु दण्डिनामेवेति योज्यम्॥

''अत्रोच्यते'' इत्यादिना मण्युक्तं पक्षमाशङ्कते ॥ **अथ मतमिति** ॥ **अतिप्रसङ्गादिति** ॥ घटपटसम्बन्धाभावस्यापि दाहहेतुत्वप्रसङ्गादित्यर्थः ॥ **अयमिति** ॥ विशेषणविशेष्ययोः सम्बन्धरूपविशिष्टस्याभावोऽपीत्यर्थः ॥ **विशेषणद्वयेनेति** ॥ विशेषणविशेष्यरूपविशेषण-द्वयेनेत्यर्थः। दण्डीत्यत्र दण्डचैत्रसम्बन्धस्य विशिष्टशब्दार्थत्वे सति तुल्यन्यायतया सम्बन्धस्य तत्सम्बन्धीभूतविशेषणाभ्यां दण्डचैत्राभ्यां सह कश्चन सम्बन्ध एव विशिष्टशब्दार्थो वाच्यः। तत्रापि सम्बन्धस्य तत्सम्बन्धिभूतसम्बन्धतत्सम्बन्धिभ्यामान्य एव सम्बन्धो विशिष्टपदार्थ इति

विशिष्टाभावपक्षे प्राचीनसम्बन्धस्य सम्बन्धान्तराभाव एव विशिष्टाभावो वाच्यः। तत्राप्येवं तत्राप्येवमित्यनवस्थेत्यर्थः **॥ तत्परिहारायेति ॥** अनवस्थापरिहाराय विशेषणविशेष्य-तत्सम्बन्धाभावात्मक इत्यर्थः॥

## तर्कताण्डवम्

**ननु-भवेदिदं यद्युत्तम्भकसहितमण्यादिकाले मण्यादि-रूपविशेष्यस्य सत्त्वेऽप्युत्तम्भकाभावविशेषणाभाव-वत्सम्बन्धरूपविशेष्यस्य सत्त्वेऽपि कदाचित्सम्बन्धिरूप-विशेषणाभावः स्यात्।**

**न चैवं प्रकृते। सम्बन्धिनोरभावे सम्बन्धाभावस्यावश्य-कत्वात्। तथा च सम्बन्धरूपविशेष्याभाव एवानुगत इति चेत्। मैवम्। अनुगमाय तदनपेक्षायामपि सम्बन्धा-भावमात्रस्य हेतुत्वेऽतिप्रसङ्गेनानतिप्रसक्तस्य कारणत्वाय तदपेक्षणात्। मण्युत्तम्भकाभावसम्बन्धस्य तदुभयमात्र-वर्तित्वेन दाह्ये करतले दाहके वह्नौ च तत्सम्बन्धाभावस्य सदा सत्त्वेन केवलमणिकालेऽपि दाहप्रसङ्गाच्च॥**

## न्यायदीपः

उक्तानवस्थादिदोषनिरासाय वैषम्यामशङ्कते॥ **नन्विति ॥ इदमिति ॥** सम्बन्धान्तरमादाया-नवस्थोद्भावनमित्यर्थः **॥ प्रकृत इति ॥** सम्बन्धसम्बन्धिनोः सम्बन्धीविषय इत्यर्थः **॥ सम्बन्धा-भावस्येति ॥** विशेष्यभूतसम्बन्धाभावस्येत्यर्थः।

**॥ तदनपेक्षायामिति ॥** सम्बन्धिभूतविशेषणा-नपेक्षायामित्यर्थः **॥ तदपेक्षणादिति ॥** तथा च विशेष्यसम्बन्धाभावात्मकत्वेऽननुगमता स्यादेवेति भावः॥

ननु तदपेक्षाऽयामपि परिचायकत्वेनैव तदपेक्षाऽस्तु तावताऽति प्रसङ्गाभावादित्यतो दोषान्तरमाह **॥ मणीति ॥** मणेरुत्तम्भकाभावेन यः सम्बन्धस्तस्येत्यर्थः

## तर्कताण्डवम्

केचित्तु-संशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनमिव प्रतिबन्धककालीनदाहं प्रत्युत्तेजकं हेतुरिति कल्पनेनैव सर्वसामञ्जस्ये किं विशिष्टाभावस्य हेतुत्वकल्पनेनेत्याहुः।

तस्माच्छशधररीत्या विशेषणविशेष्यतत्सम्बन्धानामभावत्रयं वोदयनादिरीत्या विद्यमानस्यापि प्रतिबन्धकरूपविशेष्यस्यैव प्रतियोगितावच्छेदकभेदेनाभावो वा देशान्तरस्थानामुत्तम्भकाभावविशिष्टानां मण्यादीनामत्यन्ताभावो वा मणिकृद्रीत्या विशेषणविशेष्ययोर्यः सम्बन्धस्तदभवो वा कारणमिति पक्षचतुष्टयमप्ययुक्तम्।

तदेवं त्वदभिमतं विद्यमानमणेः कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धत्वमयुक्तमिति कार्यानुकूलविघटकत्वरूपं प्रतिबन्धकत्वमेव वाच्यमिति मण्यादिविघटनीयशक्तिसिद्धिः।

इति प्रतिबन्धकाभावस्य हेतुत्वे प्रकारचतुष्टयभङ्गः ॥७॥

## न्यायदीपः

॥ **केचित्त्विति** ॥ अस्मिन् पक्षे शक्तिसिद्धेरभावोऽरुचिबीजं ध्येयम् ॥ **देशान्तरस्थानामिति** ॥ उदयनादिरीत्येत्यनुकर्षः।

प्रतिबन्धकाभावस्य हेतुत्वभङ्गः ॥७॥

# अथ तृणारणिमणीनामेकशक्तिमत्त्वसाधनम्।

## तर्कताण्डवम्

किञ्च-शक्त्यभावे तृणारणिमणीनां वह्निजातीय-

**रूपकार्येऽननुगमेन हेतुत्वं न युक्तमिति तेषामेकशक्तिमत्त्वेन अनुगमार्थं शक्तिः स्वीकार्या ॥**

**न च तृणादिर्वह्निविशेष एव हेतुः वह्निसामान्ये तु स्पर्शविशेषवदवयवादिरिति वाच्यम् ।**

## न्यायदीपः

यद्यप्यनुमानखण्डे मणौ तृणारणिमणीनां वह्नौ कारणत्वेनैकशक्तिमत्त्वमुपेयमित्यादिना शक्तिसिद्धिं पूर्वपक्षयित्वा तन्निराकरणं सिद्धान्तितम् । तदपि निराकृत्य शक्तिं साधयति **॥ किं चेति ॥** एवं क्वचिच्छक्तिसिद्धौ पदेऽपि तदनुमानं भविष्यतीति पूर्ववदभिप्राय ऊह्यः ।

**॥ एकशक्तिमत्त्वेनेति ॥** एकजातीयकार्यानुकूलशक्तिमत्त्वेनेत्यर्थः । अन्यस्याभावादनुकूलत्वं च कार्याभावप्रयोजकाभावप्रतियोगित्वं कारणतदवच्छेदकोभयसाधारणम् । तेन शक्तेरवच्छेदकत्वेऽपि नानुकूलत्वहानिः । एवं च शक्तीनां प्रतिव्यक्ति नानात्वेन तन्निष्ठानुगतजात्यैवैकजातीय-शक्तिमत्त्वेनानुगतेरावश्यकत्वाच्छक्तौ जातेश्च तद्व्यञ्जकसंस्थानविशेषादेरभावेनायोग इत्यादिदूषणानवकाशः । सिद्धान्ते जातेरभावाच्च ॥

यद्वा संसर्गानुगतैकैवास्तु । न चैवमेकतृणव्यक्तिनाशे आश्रयनाशप्रयुक्तशक्तिनाशात् तृणान्तरादितः कार्याभावदोष इति वाच्यम् । आधेयशक्तिवादे वक्ष्यमाणदिशा समाधानसम्भवादित्याशयादित्याहुः ॥

वस्तुतस्तु एकशक्तिमत्त्वमित्यस्यैकजातीयशक्तिमत्त्वमित्येवार्थः । अनुगतजातेरभावेऽपि शक्तिव्याप्त्यादिग्रहसमर्थनवादे वक्ष्यमाणदिशा सदृशशक्तिमत्त्वस्यैवैकजातीयशक्तिमत्त्वशब्दार्थत्वात् । तद्व्यभिचाराय तृणादेर्वह्निविशेष एव हेतुत्वे तर्हि तत्कार्ये वह्नित्वमाकस्मिकं स्यादित्यत आह **॥ वह्निसामान्य इति ॥** स्पर्शविशेषवन्त उष्णस्पर्शवन्तोऽवयवा इत्यर्थः । आदिपदेन तादृशद्रव्यादिग्रहः ॥

## तर्कताण्डवम्

**तृणादिजन्यवह्नौ हि जातिविशेषः न तावत्प्रदीपे दारुदहनादाविव गोमयवृश्चिकजन्यवृश्चिकेष्विव च प्रत्यक्षः ।**

**अननुभवात्। नापि कारणवैजात्यात् कल्प्यः। शक्त्यैव अन्यथासिद्धेः।**

**न च तृणादिषु तत्तद्भावजनितानन्तशक्तिकल्पनाद्वह्नौ जातित्रयकल्पनं लघीय इति वाच्यम्। जातित्रयकल्पनस्य योग्यानुपलब्धिबाधितत्वात्। मन्मते शक्तिवज्जातेरपि प्रतिव्यक्तिभिन्नत्वाच्च॥**

## न्यायदीपः

स किं विशेषः प्रत्यक्ष उत कल्प्य इति विकल्पौ क्रमेण निराह ॥ **तृणेति** ॥ **दारुदहनेति** ॥ काष्ठजन्यवह्नीत्यर्थः। आदिपदेन करीषाग्न्यादिग्रहः ॥ **गोमयेति** ॥ गोमयजन्येषु वृश्चिकजन्येष्वित्यर्थः। ॥ **शक्त्यैवेति** ॥ तृणादेर्वह्निजातीयं प्रत्येकशक्तिमत्त्वेनैव कारणत्वोपपत्तौ कार्ये तत्तज्जन्यताव-च्छेदकजातित्रयकल्पनानुपपत्तेर्गौरवदोषाच्चेति भावः॥

ननु शक्त्या जात्यपलापोऽयुक्तः। किन्तु वैपरीत्यमेव युक्तमिति भावेन मणिकृता सिद्धान्ते अभिहितं गौरवमाशङ्क्य निराह ॥ **न चेति** ॥ **तत्तद्भावेति** ॥ तृणादिव्यक्तीनामानन्त्येन तोषां तृणादीनां यानि भावकारणानि तज्जनितेत्यर्थः। प्रतिव्यक्ति शक्तेर्भिन्नत्वादानन्त्यं वह्नित्वावान्तरजातित्रय-कल्पनेऽतिलाघवमिति भावः॥

योग्यवृत्तिजातेर्योग्यत्वनियमादाह ॥ **योग्यानुपलब्धीति** ॥ शक्तेस्त्वतीन्द्रियत्वान्नायं दोष इति भावः। यत्तु मणौ तृणजन्यवह्निष्वनुगतमतिरेव तादृशजातौ मानमित्युक्तम्। तन्न। तृणजन्यत्वोपा-धिनोपपत्तेरिति भावः ॥**मन्मत इति** ॥ तथा च जातित्रयकल्पनेऽपि न लाघवमिति भावः॥

## तर्कताण्डवम्

**किञ्च-सम्भवत्येकसामग्रीत्वे सामग्रीत्रयकल्पने गौरवम्। शक्तिगौरवं तु फलमुखत्वान्न दोषः। एककारणत्व-कल्पनसमये शक्तिबहुत्वस्यानुपस्थितेः॥**

**ननु-यदि विजातीयेषु कारणेष्वेका शक्तिस्तर्हि कार्य-**

**विशेषात् कारणविशेषानुमानं न स्यात्। अरण्यभावेऽपि तृणाद्वह्नेरिव वह्न्यभावेऽपि धूमजननशक्तियुक्तादन्यस्मादपि धूमसम्भवादिति चेत्तर्हि कार्यवैजात्येऽपि तृणस्य वह्निविशेष इव वह्नेरपि धूमविशेष एव हेतुत्वं, न तु धूममात्र इति शङ्कया धूममात्राद्वह्न्यनुमानं न स्यात्॥**

## न्यायदीपः

सिद्धान्ते गौरवेऽप्यनुगतजातिपक्षे न गौरवमित्यत आह ॥ **किञ्चेति** ॥ वह्नित्वावच्छिन्नवह्निं प्रत्येकशक्तिमत्त्वेन तृणादेः सर्वस्यैकसामग्रीत्वे सम्भवति तृणारणिमणीनां प्रत्येकं सामग्रीत्वमुपेत्य वह्नौ तज्जन्यतावच्छेदकावान्तरजातित्रयकल्पने गौरवमित्यर्थः। पक्षद्वयेऽपि साम्यमेवेत्यत आह ॥ **शक्तीति** ॥ तृणादौ शक्तौ सिद्धायामेव शक्त्यानन्त्योपस्थितिः। न तु ततः पूर्वमिति प्रामाणिकत्वान्न दोषावहं गौरवमित्यर्थः। तदेव व्यनक्ति ॥ **एकेति** ॥ वह्निजातीयं प्रत्येव शक्तिमती सामग्रीति कल्पनसमय इत्यर्थः॥

शक्तिपक्षे गौरवस्यादोषत्वेऽपि बाधकान्तरमस्त्विति शङ्कते ॥ **नन्विति** ॥ **कार्येति** ॥ धूमादिरूपकार्यविशेषादित्यर्थः। कुतो न स्यादित्यत आह ॥ **अरणीति** ॥ प्रतिबन्द्योत्तरमाह ॥ **तर्हि कार्येति** ॥ तृणादिजन्यकार्ये जातित्रयकल्पनेपीत्यर्थः॥

## तर्कताण्डवम्

**अथ-तत्रोपस्थितेन धूमत्वेनैव वह्निकार्यता बाधकाभावात्। वह्नेस्तु न वह्नित्वेन तृणादिकार्यता। व्यभिचारादिति चेत्तर्हि वह्नेर्धूमं प्रत्युपस्थितवह्नित्वेनैव कारणता। बाधकाभावात्। तृणस्य तु वह्निं प्रति नोपस्थिततृणत्वेनैव हेतुता। व्यभिचारात्। किन्त्वेकशक्तिमत्त्वेनेति समम्॥**

**एतेन-तृणादीनां प्रत्येकं कारणताग्रहाधीनं तेषु शक्तिकल्पनं तद्ग्रहश्च न युक्तः। एकैकं विनाऽपि वह्न्युत्पत्तेरिति**

**निरस्तम्। कार्ये वैजात्यकल्पनस्यापि तदधीनत्वेन दोष-साम्यात्॥**

**अथ-मण्यरण्यभाववतो वह्निस्तोमविशेषस्य तृणा-न्वयव्यतिरेकानुविधायित्वेन तत्र तस्य कारणत्वे गृहीते अनन्तरं कार्ये जातिकल्पनं तर्हि कारणे शक्तिकल्पनमपि तदनन्तरमेवास्तु॥**

## न्यायदीपः

तेनैव समाधिं वाचयति ॥ **अथ तत्रेति** ॥ उपस्थितेन प्रत्यक्षावगतेनेत्यर्थः ॥ **बाधकेति** ॥ व्यभिचाररूपबाधकाभावादित्यर्थः ॥ **उपस्थितेति** ॥ धीस्थेन वह्नित्वेनेत्यर्थः। तथा च धूमादिरूपकार्यविशेषाद्वह्न्यादिरूपकारणानुमित्यभावप्रसङ्गदोषो नेति भावः।

नन्वेवं तृणादेः प्रत्येकं हेतुत्वग्रहे सति तत्रैकशक्तिकल्पनं तत्कल्पने च सति तृणादेर्हेतुत्वग्रह इत्यन्योन्याश्रय इति चोद्यं प्रतिबन्द्या निराह ॥ **एतेनेति** ॥ **न युक्त इति** ॥ शक्तिमत्त्वज्ञानं विना न युक्त इत्यर्थः। कुत इत्यत आह ॥ **एकैकमिति** ॥ **दोषसाम्यादिति** ॥ तृणत्वादिना हेतुत्वग्रहे तज्जन्यतावच्छेदकतया जातिकल्पनं तत्कल्पने च सत्यव्यभिचारात्तृणादेर्हेतुत्वग्रह इति दोषसाम्यादित्यर्थः। परमुखेनैव समाधिं वाचयति ॥ **अथेति** ॥

## तर्कताण्डवम्

**किञ्च-यद्यादावेव तृणत्वस्य कारणतावच्छेदकता वह्नित्वस्य कार्यतावच्छेदकता च गृह्यते तदा त्वदुक्तः तृणजातीयं विना वह्निजातीयस्योत्पत्तिरूपो व्यभिचारः प्रतिबन्धकः स्यात्। न च तथा गृह्यते। किं तु, स्वर्गजातीयं प्रति साधनान्तरे सत्यपि ज्योतिष्टोमव्यक्तेः स्वर्गव्यक्तिं प्रतीव, यागजातीयं प्रति यवरूपे साधनान्तरे सत्यपि व्रीहि-व्यक्तेर्यागव्यक्तिं प्रतीव, चादौ तृणव्यक्तेर्वह्निव्यक्तिं प्रति कारणता गृह्यते।**

**तत्र च त्वदुक्तो व्यभिचारो न प्रतिबन्धकः। सम्भवमात्रं प्रत्यनियमस्याविरोधित्वात्। अनन्तरं गृहीतकारणत्वरक्षार्थं त्वया स्वर्गे यागे वह्नौ च वैजात्यमिव मया स्वर्गकारणे ज्योतिष्टोमादौ यागकारणे व्रीह्यादौ वह्निकारणे तृणादौ चैकशक्तिमत्त्वं कल्पयित्वा तस्य कारणातावच्छेदकता स्वर्गत्वादेः कार्यतावच्छेदकता च कल्प्यत इति न कोपि दोषः॥**

## न्यायदीपः

नन्वेवमुक्तदिशा वह्निजातीयं प्रति तृणात्वादिनैव कारणताग्रहे तद्रक्षार्थं कार्यवैजात्यकल्पनं स्यात्। तस्मादेकशक्तिमत्त्वेनैव कारणताग्रहो वाच्य इत्यत आह॥ **किं चेति**॥ **साधनान्तर इति**॥ ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते''त्यादिनोक्तदर्शादिरूपसाधानान्तर इत्यर्थः।''ज्योतिष्टोमेन स्वर्गकामो यजेते''त्यपि श्रवणादिति भावः॥ **यवरूप इति**॥ व्रीहिभिर्यजेत यवैरिति द्वयोरपि यागसाधनताश्रवणादिति भावः॥ **सम्भवेति**॥ वह्नौ तृणादिः कारणं सम्भवत्येवं योग्यतामात्रं प्रति व्यभिचारस्याप्रतिबन्धकत्वादित्यर्थः॥

## तर्कताण्डवम्

**ननु-वह्निजनेन तृणस्यैव फूत्कारः सहकारी अरणेरेव मथनमित्यादिनियमो दृश्यते। स च कार्यगतजातिभेदं विनाऽनुपपन्नः। एकजातीये कार्ये सहकारिवैचित्र्यायोगादिति चेत्। तृणादीनां वह्नित्वावच्छिन्नं प्रत्येकशक्तिमत्त्वेन कारणता फूत्कारादीनां तु पूत्कारत्वादिना तृणादिजन्यवह्निविशेषं प्रतीति स्वीकारे शक्त्यैक्यसहकारिनियमयोरविरोधात्।**

**न च-फूत्कारादिनिरूपितां वह्निनिष्ठकार्यतां प्रति जातिरेवावच्छेदिका, लाघवात्, न तु तृणजन्यत्वोपाधिः गुरुत्वादिति वाच्यम्।**

जातेर्योग्यानुपलब्धिबाधादित्युक्तत्वात्। तृणादिजन्यत्वमज्ञात्वा जातेर्ज्ञातुमशक्यतया प्रथमोपस्थितोपाधेरेव कार्यतावच्छेदकत्वसम्भवाच्च।

तस्माद्योग्यानुपलब्धिरूपस्यफलमुखगौरवरूपस्य कार्यविशेषात् कारणविशेषाननुमितिप्रसङ्गरूपस्यान्योन्याश्रयप्रसङ्गरूपस्य सहकारिनियमानुपपत्तिरूपस्य च बाधकस्य अभावात् कारणमुखलाघवरूपस्य साधकस्य च सत्त्वात् तृणारणिमणीनां वह्निजातीयं प्रति कारणत्वान्यथाऽनुपपत्त्या शक्तिसिद्धिः॥

इति तृणारणिमणीनामेकशक्तिमत्त्वसाधनम्॥८॥

## न्यायदीपः

सहकारिवैचित्र्यात्कार्यवैजात्यकल्पनमित्याशङ्क्य निराह॥ **नन्वित्यादिना**॥ आदिपदेन मणेरेव तरणिकिरण इति गृह्यते। प्रागुक्तं निष्कृष्यानुवदन्नुपसंहरति॥ **तस्मादिति**॥ तस्मादिति परामृष्टं, न तावत्प्रदीपेत्यादिना, किञ्चित्सम्भवतीत्यादिना, ननु यदीत्यादिना, एतेन तृणादीत्यादिना, ननु वह्निजनन इत्यादिना, तृणादिजन्यत्वमज्ञात्वेत्यादिनोक्तं च बाधकपञ्चकस्याभावं साधकं च व्यनक्ति॥ **योग्यतेत्यादिना**॥ **अफलमुखेति**॥ अस्य च फलमुखत्वोक्तेरिति भावः॥ **कारणमुखेति**॥ तृणादीनामननुगतानमेकजातीयकार्यं प्रति हेतुत्वमेकशक्तिमत्त्वमेव लाघवादाक्षिपति। तृणादिजन्यत्वज्ञानानन्तरमेव कार्यवैजात्यकल्पनादिति भावः।

तृणारणिमणीनामेकशक्तित्वसाधनम्॥८॥

## अथ सहजशक्तिवादः।

### तर्कताण्डवम्

किञ्च, (१)संसार्यात्मा अदृष्टात्मत्वेतरसकलस्वजन्या-

**नुकूलधर्मवान् आत्मत्वात् सत्त्वात् ज्ञेयत्वाद्वा ईश्वरवत्,**

**(२)विमतो वह्निर्दाहानुकूलवह्नीतरानिरूप्यातीन्द्रियधर्मवान् दाहकारणत्वात् आत्मवत्॥**

**(३)करवह्निसंयोगो वा कार्यानुकूलभावभूतधर्मवान् कारणत्वात् ज्ञेयत्वाच्च आत्मवदित्याद्यनुमानैरतीन्द्रियशक्तिसिद्धिः॥**

## न्यायदीपः

यदपि मणौ-''मा भूदर्थापत्तिः शक्तौ मानम्। अनुमानं तु स्या'' दित्यादिना कानिचिदनुमानान्याशङ्क्याप्रयोजकत्वादिना निरस्यानुमानमपि शक्तौ न मानमित्युक्तम्। तन्न। प्रकारान्तरेण शक्तावनवद्यानुमानसम्भवादनुकूलतर्कसम्भवाच्चेति भावेनाह ॥ **किञ्चेति** ॥ इत्याद्यनुमानैरपि शक्तिसिद्धिरित्यन्वयः। ईश्वरांशे सिद्धत्ववारणाय संसारीत्युक्तिः। तस्यादृष्टात्मत्वेतरसकलस्वजन्यानुकूलज्ञानेच्छाकृतिरूपधर्मवत्त्वात् ॥ **अदृष्टेति** ॥ अदृष्टं चात्मात्वं च ताभ्यामितरः सकलानि यानि स्वजन्यात्मकार्याणि तदनुकूलश्च यो धर्मस्तद्वानित्यर्थः। अदृष्टस्यात्मत्वस्य च सकलस्वजन्यानुकूलधर्मत्वात्तदादाय अर्थान्तरवारणायादृष्टात्मत्वेतरेत्युक्तम्॥

न चानुकूलत्वं जनकत्वं तच्चादृष्टस्यैव नात्मत्वस्य तज्जनकतावच्छेदकत्वादिति वाच्यम्। कार्याभावप्रयोजकाभावप्रतियोगित्वस्यैव तदाऽनुकूल्यस्याभिप्रेतत्वात् तस्य च कारणतावच्छेदकोभयसाधारण्यात्। अत एव शक्तेरवच्छेदकत्वेऽपि न बाधशङ्का॥

नचैवमप्यदृष्टस्य स्वमते मनोधर्मतयाऽऽत्मधर्मत्वाभावान्नार्थान्तरमिति वाच्यम्। स्वस्वामिसम्बन्धेन धनवत्त्ववददृष्टधर्मकत्वस्याप्यात्मनि सम्भवात्। परीत्या परस्य साधनमित्यप्याहुः॥

आत्मजन्येच्छादियत्किञ्चिदनुकूलज्ञानादिधर्मवत्त्वेनार्थान्तरवारणाय सकलेति स्वजन्यविशेषणम्। ज्ञानादेर्यावदात्मजन्याननुकूलत्वात्। सिद्धान्ते शक्तिशक्तिमतोरभेदेऽपि विशेषबलेन धर्मधर्मिभावस्यापि सत्त्वान्न बाधः। हेतुपक्षतावच्छेदकैक्यनिमित्तकसिद्धसाधनतानिरासाय हेत्वन्तरोक्तिः ॥ **सत्त्वादिति ज्ञेयत्वादिति** ॥ **ईश्वरवदिति** ॥ तत्र सकलस्वजन्यानुकूलधर्मो ज्ञानमिच्छा प्रयत्नश्च तस्य कार्यमात्रं प्रति हेतुत्वात्तद्वत्त्वेन दृष्टान्ते साध्यानुगम इति भावः॥

चेतने तत्सिद्धावप्यचेतने तु नेत्यतोऽचेतनेऽपि शक्तिं साधयति ॥ **विमत इति** ॥ **दाह इति** ॥ दाहानुकूलो वह्नीतराऽनिरूप्यातीन्द्रियो भाव भूतो यो धर्मस्तद्वानित्यर्थः। तादृशो धर्मः शक्तिरेवेति भावः। दाहानुकूलत्वं च दाहाभावप्रयोजकाभावप्रतियोगित्वं पूर्ववद्ध्येयम्। अतीन्द्रियत्वं च अस्मदादिप्रत्यक्षाविषयत्वं ध्येयम्। विशेषणानां कृत्यमग्रे व्यक्तम् ॥ **आत्मवदिति** ॥ तत्र तादृशादृष्टरूपधर्मवत्त्वेन साध्यानुगतिर्ध्येया॥

गुणेऽपि तां साधयति ॥ **करेति** ॥ यद्वा वह्नीतरानिरूप्येति विशेषणोपादनाद्गौरवं मन्वान आह ॥ **करेति** ॥ **कार्येति** ॥ स्वकार्येत्यर्थः। अतीन्द्रियेत्यपि ग्राह्यम्। तेनोक्तरूपसंयोगत्वे नार्थान्तरम्। आदिपदेन प्रतिबन्धदशाऽऽपन्नो वह्निर्दाहजनकदशावृत्तिकार्यानुकूलभावधर्मशून्यः दाहाजनकत्वात् तीक्ष्णकुठारात् कुण्ठकुठारवदित्यादिमण्युक्तग्रहः॥

## तर्कताण्डवम्

**द्वितीयानुमाने दाहानुकूलपदं अननुकूलतादृशधर्मेण अर्थान्तरतां, वह्नीतरानिरूप्यपदमदृष्टवदात्मसंयोगप्रतिबन्धकाभावाभ्यामर्थान्तरतां, अतीन्द्रियपदं प्रत्यक्षोष्णस्पर्शेनार्थान्तरतां वारयितुम्॥**

**हेतौ च दाहपदं घटादावव्यभिचाराय। न चात्रात्मत्वमुपाधिः। अदृष्टत्वस्य दाहानुकूलत्वेनादृष्टे साध्याव्यापकत्वात्॥**

**नचादृष्टात्मान्यान्यत्वमुपाधिः। तादृशधर्मवत्त्वे साध्ये उक्तन्यान्यत्वस्याप्रयोजकत्वेन साध्याव्यापकत्वात्।**

## न्यायदीपः

प्रथमसाध्ये वक्तव्याभावादाह ॥ **द्वितीय इति** ॥ साध्य इति योज्यम् ॥ **तादृशेति** ॥ वह्नीतरानिरूप्येत्यादिरूपेत्यर्थः। दाहानुकूलेत्यनुक्तौ यत्किञ्चिदनभिमतधर्मसिद्ध्याऽप्युपपत्तेः उद्देश्यसिद्ध्यर्थं तदिति भावः। यद्वा कर्मानुकूलस्थितस्थापकसंस्काररूपवह्निगतधर्ममादाय अर्थान्तरवारणाय दाहानुकूलपदमित्यर्थः। स्थितस्थापकगुणस्तु वह्निगतक्रियानुकूल एवेति भावः

**॥ न चेति ॥** द्वितीयानुमान इत्यनुषङ्गः। जीवात्मन्यदृष्टवत्त्वमादायेश्वरात्मनि च तादृशज्ञानादिधर्मत्वमादाय साध्यव्यापकत्वात्साधनवति पक्षेऽभावेन साधनाव्यापकत्वादिति भावः **॥ अदृष्टत्वस्येति ॥** तस्य कारणतावच्छेदकत्वेन प्रागुक्तस्य कारणतावच्छेदकसाधारणानुकूलत्वस्य सत्त्वात्तादृशादृष्टत्वरूपधर्मवत्यदृष्टे आत्मत्वं नेति साध्याव्यापकत्वादित्यर्थः। स्वमते शक्तेरेव कारणताऽवच्छेदकत्वेऽपि अदृष्टत्वस्य नियामकत्वात्। न्यायमते तस्यैव कारणतावच्छेदकत्वाच्च।

उक्तरूपसाध्यवत्यदृष्टेऽप्युपाधिसत्त्वालाभाय प्रकारान्तरेणोपाधिमाशङ्क्य निराह **॥ न चेति ॥** एवं चात्मन्यदृष्टे चोपाधेरपि सत्त्वान्न सध्याव्यापकत्वमिति भावः **॥ अप्रयोजकत्वेनेति ॥** अस्तूक्तरूपं साध्यं माऽस्तूक्तरूपोपाधिरित्युक्ते विपक्षे बाधकाभावादिति भावः॥

## तर्कताण्डवम्

**न चाचाक्षुषद्रव्यत्वमुपाधिः। तैजसे त्र्यणुके चाक्षुषे दाहानुकूलातीन्द्रियोष्णस्पर्शवति साध्याव्यापकत्वात्। पक्षमात्रव्यावर्तकविशेषणवत्त्वेन साध्यव्यापकताग्राहकतर्काभावेन प्रतिबन्धकसत्त्वे ऐन्द्रियकस्यापि तादृशधर्मं विना कार्यजनकत्वलक्षणविपक्षबाधकेनोक्तश्रुत्यादिबाधकप्रसङ्गेन प्रत्युत हेतोरेवोक्ततर्कानुगृहीतत्वेन चोपाधेरेव साध्याव्यापकत्वात्। अत एव नाप्रयोजकत्वम्।**

**न च तृतीये आत्मत्वं द्रव्यत्वं चोपाधिः। अदृष्टादौ साध्याव्यापकत्वात्। न च घटादौ व्यभिचारः। पक्षसमत्वात्।**

## न्यायदीपः

**॥ न चाचाक्षुषेति ॥** आत्मनि तादृशादृष्टादिमत्त्वमादाय साध्यव्यापकत्वात्पक्षे साधनाव्यपकत्वादिति भावः। त्र्यणुकगतोष्णस्पर्शेऽतीन्द्रियत्वविवादिनं प्रत्याह **॥ पक्षेति ॥** तृतीयान्तानामुपाधेरेवेत्यादिसाध्येनान्वयः। अनुकूलतर्कसध्रीचीनस्य तादृशस्याप्युपाधित्वे दोषाभावादाह **॥ साध्यव्यापकताग्राहकेति ॥**

निरुपाधिसहचार एव तादृशतर्क इत्यतो निरुपाधित्वमसिद्धमिति भावेनाह **॥ प्रतिबन्धके-**

**त्यादि ॥** प्रकृतहेतोरेवोक्ततर्कानुगृहीतत्वेन चेति दाहस्यैतादृशधर्मान्यैन्द्रियिकत्वप्रयोज्यत्वं प्रतिबन्धकालेऽपि दाहः स्यात्। न चैवमतः प्रतिबन्धदशायां तादृशातीन्द्रियधर्मवत्त्वशून्यत्वाद् वह्नेर्दाहरूपकार्याजनकत्वं दृष्टम्। ऐन्द्रियकत्वे तु सत्यपि दाहजनकत्वं न दृष्टमित्यप्रतिबन्धदशायामपि तादृशधर्मवत्त्वाभावे चाक्षुषद्रव्यादपि वह्नितो दाहकार्यानुदयः स्यात्। तथा च हेतूच्छित्तिरूपविपक्ष-बाधकतर्कसहितत्वाद्धेतोः-

''अनुकूलेन तर्केण सनाथे सति साधने।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः'' ॥

इति न्यायेनोपाधेरेव साध्याव्यापकत्वादित्यर्थः। केचित्तु प्रत्युत हेतोरेवोक्ततर्कानुग्रहः **॥ उक्तेति ॥** ''परास्य शक्ति''रित्यादिश्रुतिस्मृतिबाधितत्वप्रसङ्गेनेत्यर्थः।

**॥ अत एवेति ॥** विपक्षे बाधकाद्युपेतत्वादेवेत्यर्थः। तथा च मणिकृदुक्तमप्रयोजकत्व-दूषणमज्ञानमूलमिति भावः। अदृष्टादावित्यादिपदेन तादृशदण्डत्वादिधर्मवद्दण्डादिपरिग्रहः। अदृष्टस्यापि पूर्वोक्तरीत्या कार्यानुकूलादृष्टत्वधर्मवत्त्वादिति भावः ॥

**॥ घटादाविति ॥** तस्यापि स्वगतरूपादिकं प्रति परमते कारणत्वाज्ज्ञेयत्वाच्च हेतोः सत्त्वेऽपि साध्याभावादिति भावः **॥ पक्षेति ॥** ''शक्तयः सर्वभावाना''मिति स्मृत्या सर्ववस्तुष्वपि शक्तेरङ्गीकारादिति भावः ॥

## तर्कताण्डवम्

**ननु-तथाऽपि बीजादावङ्कुरानुकूलशक्तिवच्छक्त्यनुकूला शक्तिरपि स्वीकार्या। बीजनिष्ठामङ्कुरजननशक्तिं प्रति बीजस्य समवायिकारणत्वात्। एवं तदनुकूला तत्पूर्वकालीना बीजादावनादिशक्तिपरम्पराङ्गीकार्येति बीजादेरनादित्वं स्यादिति चेन्न। मन्मतेऽङ्कुरे शक्तियुक्तस्य बीजस्य बीजे शक्तात्स्वकारणादेवोपपत्त्या बीजगतशक्तिपरम्पराऽन-पेक्षणात्।**

**किञ्च-यथा प्रतिबन्धे सत्यङ्कुरानुत्पत्तिः प्रामाणिकी तथा**

**प्रतिबन्धाभिमतकिञ्चित्सत्वे यदि शक्त्यनुत्पत्तिः प्रामाणिकी स्यात्तदा शक्त्यनुकूलाऽपि शक्तिर्बीजादौ स्वीकार्या स्यात्। न च तदस्ति।। नापि शक्तावपि स्वीकार्यानुगुणशक्तिः स्वीकार्येत्यनवस्था। समवायविशेषादिवत् स्वनिर्वाहकत्वा-दिति।।**

**तस्मादुक्तरीत्या श्रुतिस्मृती अर्थापत्तिपञ्चकं परोक्तस्य विशिष्टाभावकारणत्वस्यानुपपत्तिस्तृणादेर्वह्निजातीयकारणत्वा-नुपपत्तिः, अनुमानानि च प्रमाणानि।**

## न्यायदीपः

मण्युक्तमनवस्थारूपप्रतिकूलतर्कपराहतिलक्षणबाधकमाशङ्क्य निराह ।। **नन्वित्यादिना ।। स्वीकार्येति ।।** अन्यथा प्रागुक्तहेतोस्तत्र व्यभिचारापत्तेरिति भावेनाह ।। **बीजनिष्ठामिति ।। तदनुकूलेति ।।** अङ्कुरजननशक्तिजननशक्त्यनुकूलेत्यर्थः ।।

अनवस्थाऽऽपादनमेवायुक्तं वैषम्यादिति भावेनाह ।। **किञ्चेति ।।** नन्वेवमपि-यथाकारणं बीजादिकं स्वकार्यजनने शक्तिमपेक्षते। तथा शक्तिरपि स्वकार्यजनने शक्त्यन्तरमपेक्षेत। साऽपि तथेत्यनवस्थादि स्यादित्यत आह ।। **नाऽपीति ।। विशेषेति ।।** नित्यद्रव्येषु व्यावर्तकतया तार्किकाभ्युपगतविशेषस्येवेत्यर्थः ।।

सहजशक्तिवादः ।। ९ ।।

## अथाधेयशक्तिः ।

## तर्कताण्डवम्

**एवमाधेयशक्तिरपि स्वीकार्या। अन्यथा व्रीहीन् प्रोक्षती-त्यादौ प्रोक्षणजन्यस्य व्रीहिनिष्ठस्यातीन्द्रियस्येप्सितस्य अतिशयस्याभावेन व्रीहीनितीप्सितकर्मणि द्वितीया न स्यात्।**

## न्यायदीपः

**॥ एवमाधेयेति ॥** सहजशक्तिवत्कारणविशेषोत्पाद्याप्युपेयेत्यर्थः। यद्यपि सहजशक्तेरभावे विष्णावेव वेदस्य शक्तितात्पर्यरूपसमन्वयायोगवदाधेयशक्त्यभावे काचिदपि हानिर्नास्ति, पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थनभिदधतीति पद्धतिवाक्यस्य अन्विताभिधानवादेऽग्रे गतेर्वक्ष्यमाणत्वेन विशेषान्वयतोऽप्याधेयशक्तेरनपेक्षितत्वात्। तथाऽपि करणानां प्रमाजननस्वभावानामपि दोषेणाहितशक्तिकानामप्रमाजनकत्वस्वीकारात्तथा प्रामाण्यग्रहणस्वभावस्यापि साक्षिणो विसंवादादिरूपपरीक्षाहितशक्तिकस्याप्रामाण्यग्राहकत्व-स्वीकारात्संस्काराहितशक्तिकस्य चक्षुरादेः प्रत्यभिज्ञाजनकत्वस्वीकारात् तदुपयोगितया तत्साधनमित्यवधेयम्॥

**॥ व्रीहीनिति ॥** यदा हि ''चतुरो मुष्टीर्निर्वपति'' इतिं पुरोडाशार्थतया निरुप्तानां व्रीहीणां प्रोक्षणं विधीयते ''व्रीहीन् प्रोक्षति'' इति। आदिपदेन ''अपः प्रणयति'' इत्यादिग्रहः। **॥ ईप्सितस्येति ॥** आप्तुमिष्टस्येत्यर्थः। आप्लृव्याप्तावित्यस्य सन्प्रत्यये ''आपूज्ञप्यृधामीत्'' इतीकारादेशे सति निष्ठायामीप्सितमिति रूपसम्पत्तेः॥

**॥ ईप्सितकर्मणीति ॥** कर्मकारकं तावद् द्विविधम्। ईप्सितमनीप्सितं च। ''कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम्'' इति पाणिन्युक्तेः। तत्राद्यं ग्रामं गच्छति व्रीहीन् प्रोक्षतीत्यादि। द्वितीयं तु विषं भुङ्क्त इत्यादि। अतस्तद्व्यावृत्त्यर्थमीप्सतकर्मणीत्युक्तम्॥ **द्वितीयेति ॥** ''कर्मणि द्वितीया'' इति सूत्रोक्ता द्वितीयाविभक्तिरित्यर्थः॥

## तर्कताण्डवम्

**न च प्रोक्षणजन्यजलसंयोग एव व्रीहिनिष्ठोऽतिशयः। क्षणिकस्य तस्य भाविकरणोत्पाद्यापूर्वानुपयोगित्वेन अनीप्सितत्वात्। संयोगावच्छिन्नक्रियायाः प्रोक्षणपदार्थत्वेन स्वस्यैव स्वजन्यत्वविरोधाच्च।**

**न च धात्वर्थे संयोगादिरुपलक्षणमात्रमिति वाच्यम्। त्यजतिगच्छत्योः पर्यायत्वापत्तेः। ग्रामसंयोगविभागयोः धात्वर्थाप्रवेशात्। क्रियात्वमात्रस्य चोभयत्र साम्यात्॥**

### न्यायदीपः

शशधरे मणौ चोक्तमाशङ्क्य निराह ॥ **न चेति** ॥ **भाविकरणेति** ॥ करणं यागः भावि च तत्करणोत्पत्त्यपूर्वं च तदनुपयोगित्वेनेत्यर्थः। प्रोक्षितव्रीहयो हि अवघातादिद्वारा पुरोडाशं निर्वर्त्य तत्साधकयागक्रियाजन्योत्पत्त्यपूर्वे उपयुज्यन्ते। सन्निपात्यङ्गत्वात्तच्च व्यवहितो तत्कालभावीति कथं तदुपयोगः। तदुपयोगाभावे ईप्सितं न स्यादिति भावः।

॥ **धात्वर्थ इति** ॥ प्रोक्षणादिरूपधात्वर्थ इत्यर्थः ॥ **संयोगादिरेवेति** ॥ विभाग आदिपदार्थः। ग्रामं त्यजतीत्यत्र ग्रामविभागस्त्यजधात्वर्थे उपलक्षणमित्यर्थः। ॥ **त्यजतीति** ॥ त्यज विसर्गे गम्लृ गताविति धात्वोरित्यर्थः। अवच्छेदकीभूतसंयोगविभागयोरुपलक्षणत्वे क्रियामात्रस्योभयत्र धात्वर्थे सत्त्वादिति भावेनाह ॥ **ग्रामेति** ॥ एवमित्यस्य व्याख्या व्रीहीणामित्यादि। ग्रामस्य यथा तथेति भावः।

### तर्कताण्डवम्

**किञ्चैवं व्रीहीणामपि प्राप्यकर्मत्वे संस्कार्यकर्मत्वा-भावेन-**

**''उत्पाद्यं च विकार्यं च प्राप्यं संस्कार्यमेव च''**

**इति लोकसिद्धं कर्मणश्चातुर्विध्यं न स्यात्॥**

**यदि च स्थायी संयोगध्वंसोऽपूर्वोपयोगी तर्हि यागध्वंस एव स्वर्गोपयोगी स्यात्॥**

### न्यायदीपः

॥ **उत्पाद्यमिति** ॥ कुलालो घटमुत्पादयतीत्यादावुत्पाद्यकर्म, काष्ठं तक्ष्णा करोति सुवर्ण कुण्डलं करोतीत्यादौ विकार्यकर्म, ग्रामं गच्छतीत्यादौ व्रीहीन् प्रोक्षतीत्यादौ संस्कार्यं कर्मेति चातुर्विध्यं न स्यादित्यर्थः। यद्यपि प्रथमे कर्तुरीप्सिततमं कर्मेत्यत्र मञ्जर्याम्-

''निवर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।''

इत्युक्त्वा-

यदसञ्जायते यद्वा जन्मना यत्प्रकाश्यते।
तन्निवर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्।

प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत्।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णकटकादिवत्।

इत्यादिना तत्स्वरूपं चोक्तम्। तथाऽपि प्राभाकरैराघाराग्निहोत्राद्यधिकरणेषु तत्र चातुर्विध्यस्य उक्तत्वात्। पिष्टं संयौति, आज्यं विलापयति गां दोग्धि, व्रीहीन् प्रोक्षतीत्यादेरुदाहृतत्वाच्चैवमुक्तमिति बोध्यम्॥

ननु प्रोक्षिता व्रीहयोऽवघाताय कल्प्यन्त इति वाक्यबलेनोत्तरोपयोगित्वेनावगतप्रोक्षणस्य उपलक्षणतया संयोगध्वंसद्वारोत्तरोपयोगोऽस्त्वित्यत आह॥ **यदि चेति**॥ **अपूर्वेति**॥ योगोत्पत्त्य-पूर्वेत्यर्थः।

## तर्कताण्डवम्

**किञ्चैवं परमतेऽपि प्रोक्षणजन्यमात्मनिष्ठमपूर्वं कल्प्यं स्यात्। न चात्मनिष्ठमेवादृष्टं व्रीहिसंयुक्तात्मद्वारा व्रीहि-सम्बद्धमतिशयः। साक्षात्सम्बन्धस्यौत्सर्गिकत्वात्। प्रोक्षण-जन्यादृष्टवदात्मसंयोगस्याप्रोक्षितव्रीहिष्वपि सत्त्वाच्च॥**

**न चात्मनिष्ठमदृष्टं स्वरूपसम्बन्धेन साक्षाद्व्रीहि-सम्बद्धमिति वाच्यम्। अदृष्टस्यात्मना समवायो व्रीहिभिः स्वरूपसम्बन्ध इति सम्बन्धद्वयकल्पने गौरवात्।**

## न्यायदीपः

नन्वेवं यागध्वंसस्यानन्तत्वात्कालानन्त्यं स्यादित्यतो दोषान्तरमाह॥ **किञ्चैवमिति**॥ नन्वस्त्वेवं व्रीहीणां द्वितीयान्तानामीप्सितकर्मत्वान्यथाऽनुपपत्त्या विहितक्रियारूपप्रोक्षण-जन्यातिशयवत्त्वं परम्परैवान्यगतेन साक्षात्स्वरूपसम्बन्धेन वोपपन्नमिति किमर्थमप्रामाणिकानेकापूर्वं व्रीहिषु कल्पनीयमित्याशङ्क्याह॥ **न चेति**॥ तच्चात्मनीति च स्वरूपसम्बन्धेन॥ **साक्षादिति**॥ आत्मनिष्ठज्ञानादेर्बाह्यघटादिनेवेति भावः॥ **गौरवादिति**॥ ज्ञानादेस्त्वनन्यगतात्मनिष्ठत्वानुभव-

बलेन च सम्बन्धद्वयकल्पनम्। न चैवं प्रकृते। व्रीहिगतत्वेनैव कल्पने बाधकाभावादिति भावः ॥

## तर्कताण्डवम्

**न च-ग्रामं गच्छामि, घटं जानामि, अतीतं जानामीत्यादौ व्यभिचारः, ग्रामे संयोगादेरनीप्सितत्वात् अन्यस्येप्सितस्याभावात्, घटादौ च त्वन्मते ज्ञाततताया अभावादिति वाच्यम्। ग्रामादौ शयनासनादेर्घटादौ च व्यवसायजन्यानुव्यवसायस्मरणादिविषयत्वस्य व्यवहारयोग्यत्वस्य च क्रियाजन्येप्सितस्य सत्त्वात् ॥**

**न च शत्रुवधमुद्दिश्य विहिते श्येनादौ देवतोद्देशेन विहिते यागादौ च व्यभिचारः। तत्रापि शत्रुनिष्ठस्य ज्वरस्फोटादेः देवताप्रीतेश्च सत्त्वात्।**

**तस्मात् प्रोक्षणादिकं व्रीहिनिष्ठेप्सितजनकं तदुद्देशेन विहितत्वात्। पित्राद्युद्देशेन क्रियमाणगयाश्राद्धादिवत्।**

## न्यायदीपः

एवं द्वितीयाऽवगतेप्सितकर्मत्वान्यथाऽनुपपत्त्या व्रीहिष्वेवातिशयः कल्प्यो न त्वात्मनि परम्परासम्बन्धादिना गौरवप्रसङ्गादित्युक्तम्। तदयुक्तम्। ग्रामं गच्छतीत्यादौ का गतिरित्यादिना मणावेव व्यभिचारोक्तेरित्यतस्तदाशङ्क्य निराह ॥ **नचेत्यादिना** ॥ **व्यभिचार इति** ॥ द्वितीयाऽवगतेप्सितकर्मत्वबलेन कर्मकारक एवातिशयः कल्प्य इत्यस्य व्यभिचार इत्यर्थः। सर्वत्राप्युक्तकर्मकारकेऽतिशयरूपसाध्यसत्त्वात्तत्र व्यभिचारमुद्धरति ॥ **ग्रामादाविति** ॥ पङ्ग्वाद्यधिकारिभेदापेक्षयोक्तम् शयनासनादेरिति ॥

वक्ष्यमाणप्रयोगे व्यभिचारमुद्धरति ॥ **नच शत्रुवधमिति** ॥ **तस्मादिति** ॥ अन्यथोपपत्तिव्यभिचारयोरभावादित्यर्थः। तदुद्देशेन व्रीह्याद्युद्देशेनेत्यर्थः। विहितत्वमात्रस्य व्यभिचाराद् विशेषणोक्तिः। न च विशेषणासिद्धिः शङ्क्या। द्वितीयावगतकर्मत्वेनैव तत्सिद्धेरुक्तत्वादिति भावः ॥

## तर्कताण्डवम्

न च संस्काराणां प्रतिव्रीहि नानात्वे गौरवम्। प्रोक्षितसर्वव्रीहिष्वेकत्वे तदाश्रयत्रिचतुरादिव्रीहिनाशानामननुगतत्वेन संस्कारनाशं प्रत्यनाश्यत्वेनैव प्रयोजकत्वे एकव्रीहिनाशेऽपि संस्कारनाशाद्भाविकार्यं न स्यादिति वाच्यम्। उक्तरीत्या संस्कारस्य व्रीह्याश्रितत्वे प्रमितेऽनन्तरं प्रतिसन्धीयमानस्य नानात्वस्य फलमुखत्वेनादोषत्वात्। त्वन्मतेऽप्यनेकयजमानकसत्रयागादावपूर्वनानात्वस्य आवश्यकत्वाच्च॥

यद्वा एकैव शक्तिरस्तु प्रतिव्यक्ति वृक्षाणां सिद्धानाश्रयत्वेऽपि वनत्वावच्छिन्नस्य तदाश्रयत्ववत्प्रत्येकं व्रीहीणां तदनाश्रयत्वेऽपि कार्योपयोगित्वरूपधर्मावच्छिन्नस्य तदाश्रयत्वोपपत्त्यैकव्रीहिनाशे तदवच्छिन्नानाशेन संस्कारानाशात्॥

यद्वा यत्किञ्चिदाश्रयनाशेऽपि क्षिप्यमाणवाळुकपिण्डादौ वेगाख्यसंस्कारानाशवदिहाप्यनाशोऽस्तु॥ यत्तु-प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति कालान्तरभाविफलजनकत्वेन विहितत्वात् यागवदिति मण्युक्तमनुमानं, तत्र साध्येऽपूर्वपदं मानान्तरागम्यातिशयमात्रपरं चेद् व्रीहिनिष्ठस्यापि तथात्वेन सिद्धसाधनम्। आत्मनिष्ठत्वेन विशेषितपरश्चेदुक्तहेतोः विशेष्यमात्रेणोपपत्त्या विशिष्टं प्रत्यप्रयोजकत्वम्।

## न्यायदीपः

उक्तानुमानस्य मण्याद्युक्ततर्कपराहतिमाशङ्क्य निराह ॥**न च संस्काराणामिति**॥ सर्वव्रीहिष्वेकत्वमित्यापादकस्यैकव्रीहिनाशेऽपीत्यादिनाऽऽपाद्येऽन्वयः। नन्वेकव्रीहिनाशान्न सर्व-

व्रीह्यनुगतैकसंस्कारनाशः। किं तु द्वयोस्त्रयाणां चतुर्णां पञ्चादीनां वा नाश एवेत्यत उक्तं तदाश्रयेत्यादि ॥ **प्रयोजक इति** ॥ वक्तव्ये सतीति शेषः।

आत्मनिष्ठापूर्वकल्पनेऽपि क्वचिद्गौरवमस्त्येवेत्याह ॥ **त्वन्मत इति** ॥ ये यजमानस्त ऋत्विज इति यजमानानामेव सत्रयागे ऋत्विक्त्वेन सर्वेषामपि यागभाक्त्वादिति भावः ॥

एकपक्षेऽप्यधिकरणतावच्छेदकैक्यमादाय दोषं निराह ॥ **यद्वेति** ॥ अधिकरणतावच्छेदकैक्येनैकद्वित्रिनाशेऽप्यधिकरणतावच्छेदकावच्छिन्नसत्त्वेन वाऽश्रितसंस्कारानाश इति भावेन दृष्टान्तपूर्वमाह ॥ **प्रतिव्यक्तीति** ॥

व्रीहित्वादेरधिकरणतावच्छेदकत्वेऽपि न दोष इत्याह ॥ **यद्वेति** ॥ ननु प्रोक्षितव्रीहिष्ववघातादिनैकैकावयवापगमे सति पीलुपाकप्रक्रियया द्रव्यान्तरोत्पत्त्या तत्र संस्काराभावस्याभावेनोत्तरकार्यानुपयोगापत्त्याऽऽत्मनिष्ठतैवापूर्वस्य वाच्येत्यतो वाह ॥ **यद्वेति** ॥ इदं च रीतित्रयं तृणारणिमणीनामेकशक्तिमत्त्वमित्यत्रानुसन्धेयमिति वदन्ति ॥

॥ **अपूर्वजनकमिति** ॥ धर्मजनकमित्यर्थः। तथा च निषिद्धकर्मण्यव्यभिचाराय हेतौ विहितत्वादित्युक्तम्। प्रायश्चित्ते व्यभिचारनिरासाय कालान्तरेत्यादि।

''कृषिवाणिज्यगोरक्षा वैश्यस्यैव विधीयते'' ॥

इत्यादिप्रत्येकं वर्णोपायविधिविहितकृष्यादावव्यभिचाराय दृष्टेत्यादिसत्यन्तम्।

## तर्कताण्डवम्

**किञ्च त्वन्मते जीवन्मुक्तावनुष्ठितप्रोक्षणादिनाऽदृष्टाजननात् कथं तस्य भाव्युपयोगः ॥**

**अपि च-द्वितीयाश्रुत्या किञ्चित्कारगर्भिते न शेषित्वेन श्रुते ह्यादौ न किञ्चित्कारः शेषित्वेनाश्रुते आत्मनि च किञ्चित्कार इति श्रुतहान्यश्रुतकल्पने स्याताम्। अन्यथा सक्तून् जुहोतीत्यादाविव विभक्तिविपरिणामः स्यात्। किञ्चैवं यागादिजन्यसंस्कारणामेव हविराद्यारम्भकपरमाणुनिष्ठत्वं किं न स्यात् ॥**

## न्यायदीपः

हेतोर्व्यभिचारं चाह ।। **किञ्चेति** ।। आत्मनिष्ठत्वेनापूर्वस्य विशेषितत्वपक्षे तर्कपराहतिं चाह ।। **अपि चेति** ।। द्वितीयाश्रुत्येत्यस्य श्रुत इत्यनेनान्वयः। किञ्चित्कारो नामोपकार्यत्वविशेषः। ।। **अन्यथेति** ।। व्रीहिषु कस्यचिदतिशयस्याभावः किन्त्वात्मन्येवेति पक्ष इत्यर्थः। इत्यादाविवेत्युपलक्षणम्। ''व्रीहिभिर्यजेते''त्यादौ द्वितीया च स्यात्। प्रोक्षतीत्यादाविव तत्राप्यदृष्टवदात्मसम्बन्धादेस्त्वदुक्तद्वितीयाविभक्तिहेतोः सुवचत्वादित्यपि ध्येयम्।

साध्यविकलो दृष्टान्त इति भावेनाह ।। **किञ्चैवमिति** ।। द्वितीयावगतस्य व्रीहिगतकिञ्चित्कारस्यात्मगतत्वे सति यागदानहोमादिजन्यापूर्वशब्दितसंस्काराणामेव परमाणुगतत्वं स्यात्, आत्मनस्तज्जन्यसुखभोगश्चादृष्टवत्परमाणुसम्बन्धादेवोपपत्तेः। दोषित्वबोधकद्वितीयाश्रुत्या व्रीहिगतत्वेन प्रोक्षणजन्यसंस्कारस्यावगमादित्यपि सुवचत्वाच्च।

## तर्कताण्डवम्

**किञ्च-प्रोक्षणादेरपूर्वजनकत्वे दर्शादिवत्प्रधनकर्मत्वं वा प्रयाजादिवदारादुपकारकत्वं वा स्यान्न तु सन्निपत्योपकारकत्वम्।।**

**अपि चातिशयस्यात्मनिष्ठत्वे व्रीहीणां चण्डालादिस्पर्शेन तन्नाशे न स्यात् व्यधिकरणत्वात्। पुत्रानृतभाषणादिना पित्रादेर्नरकादिकं तु- ''स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति।'' इत्यादिवचनात्। न चेह वचनमस्ति।।**

**किञ्च-ताम्रमाम्लेन शुध्यतीत्यादिस्मृतिविरोधः। तया शुद्धिरूपस्य तन्निवर्त्याशुद्धिरूपस्य चातीन्द्रियातिशयस्य ताम्रादिगतत्वोक्तेः। एवं देवताप्रतिमादावपि प्रतिष्ठादिजन्याधेयशक्तिः स्वीकार्या।**

**आधेयशक्तिः ।।१०।।**

## न्यायदीपः

प्रागुक्तानुमानस्य तर्कपराहत्यन्तराण्याह ॥ **किञ्च प्रोक्षणादेरित्यादिना** ॥ फलापूर्वे व्याप्रियमाणमारादुपकारकं यागस्वरूपनिष्पत्तावुपयुज्यमानं सन्निपत्योपकारकमिति ज्ञेयम्। पुत्रानृतवचनेन पितुः कथं दोष इत्यत आह ॥ **पुत्रेति** ॥ अतिशयस्य वस्तुनिष्ठत्वानङ्गीकारे बाधकान्तरं चाह ॥ **किञ्चेति** ॥

"रजसा शुन्धते नारी नदी वेगेन शुध्यति।
भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति" ॥

इति स्मृतिविरोधं स्पष्टयति ॥ **एवमिति** ॥ एवं च मण्याद्युक्तदिशा प्रतिमागतप्रतिष्ठाध्वंसादिर्वा प्रतिष्ठाजन्यादृष्टवदात्मसंयोगादिर्वा पूज्यत्वप्रयोजकः प्रतिमागत इत्याद्यप्रामाणिकं न कल्पनीयमिति भावः ॥

आधेयशक्तिः ॥ १० ॥

## अथ तमसो द्रव्यत्वसाधनम्।

## तर्कताण्डवम्

**यथा शक्तिः पदार्थान्तरमेवं तमो द्रव्यान्तरम्। तमो द्रव्यं रूपित्वात् क्रियाऽऽश्रयत्वात् परिमाणादियुक्तत्वाच्च घटवदित्यनुमानात्॥**

## न्यायदीपः

प्रसङ्गादाह ॥ **यथेति** ॥ **पदार्थान्तरमिति** ॥ द्रव्यगुणकर्मसामान्यसमवायरूपपदार्थादन्यः पदार्थस्तथा तदन्योऽपि पृथिव्यादिद्रव्यनवकादन्यद् द्रव्यमित्यर्थः ॥

एतेन तमसो द्रव्यत्वे पृथिव्यादिनवकान्तर्भावो वाच्यः। स च न युक्तः। गन्धरसभास्वररूपस्पर्शशब्दहीनत्वेन भूतपञ्चकान्तर्भावायोगात्। अनित्यत्वेन नित्यवस्त्वन्तर्भावायोगादिति निरस्तम्। अतिरिक्तद्रव्यत्वोपपत्तेः ॥

अन्तर्भावः शक्यश्चेदित्याद्यग्रेतनवाक्यं त्वनास्थेयमिति ध्येयम्। इत्यनुवादमहिम्नैव शक्तेरपि षट्पदान्तर्भावानुपपत्तिबाधकं प्रत्युक्तं ध्येयम्। मणौ तमसो द्रव्यत्वाभावस्याचिन्त्यत्वेऽपि शशधरादौ चिन्तितत्वात्। तत्खण्डनेन नविलक्षणत्वाधिकरणे प्राकृतेन्द्रियमनोभेदादित्येतद्व्याख्यानसुधायां मनो नित्यं स्पर्शरहितद्रव्यत्वादित्यत्र तमसास्माकमनैकान्त्यादित्युक्तहेतुसमर्थनार्थोयं प्रयत्नः।

क्रियाऽश्रयत्वादित्ययं च हेतुर्द्रव्यत्वसाधकः पररीत्यैव बोध्यः। तेन मिथ्यात्वानुमानटीका-भावप्रकाशिकायां ''गुणाद्वा लोकवत्'' इत्यत्र चन्द्रिकायां च गुणादावपि क्रियावत्त्वसाधनान्न व्यभिचारः शङ्क्यः। पूत्यादीत्यादिपदेन गृह्यमाणत्वपङ्कभूतत्वपाट्यमानत्वादिग्रहः।

## तर्कताण्डवम्

**न चासिद्धिः। नीलं तमः छाया गच्छतीत्यबाधित-प्रत्ययात्। रामायणे ''हनूमच्छायायां वायुपुत्रानुगामिनी'' इत्यनेन क्रियायाः, ''दशयोजनविस्तीर्णा'' इत्यादिना परिमाणस्य ''छायायां सङ्गृहीतायां'' इत्यादिना ग्रहणस्य चोक्तेश्च॥**

**त्वन्मते आलोकाभावत्वमेव तमस्त्वमिति तमस्त्वेन प्रतीतिनैल्यारोपायोगाच्च। दोषाभावेनारोपायोगाच्च।**

## न्यायदीपः

॥ **छायेति** ॥ तस्यास्तमस्त्वस्य सर्वसम्मतेः तत्र क्रिया प्रत्यक्षसिद्धा। च्छायाहस्तचतुष्टय-परिमितेत्यादिपरिमाणप्रतीतिरादिपदार्थः ॥ **अबाधितेति** ॥ कदाऽपि न नीलं तम इत्यादिविपरीत-प्रत्ययाभावाद् यौक्तिकबाधस्य प्रत्यक्षप्रतीतितो दुर्बलत्वान्निरसिष्यमाणत्वाच्चेति भावः॥

वचनेननापि क्रियावत्त्वादिकं व्यनक्ति॥ **रामायण इति** ॥ वायपुत्रपदेन भीमभ्रान्तिनिरासायोक्तं हनुमच्छायायामिति। सुन्दरकाण्डे प्रथमसर्गे-

''श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी।
तस्य सा शुशुभे छाया वितता लवणाम्भसि'' इति॥

तथा-

"छायायां सङ्गृहीतायां चिन्तयामास मारुतिः" ॥

इति वाल्मीक्युक्तेश्चेत्यर्थः। सङ्गृहीतायां छायाग्रहेणेति योज्यम् ॥

न केवलं नैल्यादिधियोऽबाधादेव प्रमात्वं विशेषदर्शनेन कारणाभावेन च भ्रमत्वायोगाच्च इत्याशयेनाह ॥ **त्वन्मत इति** ॥ न हि शुक्तित्वेन ज्ञाते रजतारोपो युक्त इति भावः ॥

## तर्कताण्डवम्

**किञ्चान्धकारो नालोकाभावः। नात्रालोकः किन्तु तम इति पृथग्व्यवहारात्। आप्तोक्तेन तेजोऽभावेनान्धकारानुमानाच्च। प्रतियोगित्वेनाभिमतालोकाप्रतीतावपि प्रतीतेश्च। विरळनिबिडनिबिडतरत्वादिना उत्कर्षापकर्षादिप्रतीतेरबाधाच्च॥**

**"तमःसुघोरं गगनच्छदं महद्**
**विदारयद्भूरितरेण रोचिषा।**
**मनोजवं निर्विविशे सुदर्शनं**
**गुणच्युतो रामशरो यथा चमूम्" ॥**

**इति भागवते,**

**"ततः कदाचिद्दुःखेन रथमूहुस्तुरङ्गमाः।**
**पङ्कभूतं हि तिमिरमश्वानां जायतेऽनघ॥**
**अथ पर्वतभूतं तत्तिमिरं समजायत।**
**तदासाद्य हया राजन् निष्प्रयत्नास्ततः स्थिताः।**
**ततश्चक्रेण गोविन्दः पाटयामास तत्तमः" ॥**

**इति हरिवंशे च तमसश्चक्रविदार्यत्वपङ्कत्वपर्वतत्वाद्युक्त्या काठिण्यादिप्रतीतेश्च।**

## न्यायदीपः

ननु तमस आलोकाभावान्यथानुपपत्त्या भ्रमत्वादिकं कथञ्चित्कल्पनीयमित्यतस्तदेव असिद्धमित्याह ॥ **किञ्चेति** ॥ **अनुमानाच्चेति** ॥ लिङ्गलिङ्गिभावस्य भेदाभावेऽसम्भवादिति भावः ॥

॥ **प्रतियोगित्वेति** ॥ न च दोषवशात् प्रतियोगिनो भानाभावेऽपि तमसो भानं युक्तमिति वाच्यम्। तादृशक्लृप्तदोषस्य कस्यचिदभावात्। तमसः स्वरूपमेव दोष इति कल्पनं तस्याभावत्व-सिध्युत्तरकालीनत्वेनान्योश्रयादिति भावः ॥ **विरळेति** ॥ अभावे च नोत्कर्षादिधीरिति भावः। निर्विविशे प्रविवेश ॥ **भागवत इति** ॥ दशमस्कन्धेऽश्वमेधप्रकरणे ॥ **काठिण्यादिप्रतीतेश्चेति** ॥ अन्धकारो नालोकाभाव इत्यन्वयः ॥

## तर्कताण्डवम्

**तेजोऽभावबहुत्वादिनोत्कर्षादिधीश्चेत्सुखादावपि दुःखाभावादिबाहुळ्यादिनोत्कर्षादिधीः स्यादिति दुःखाभाव एव सुखं संयोगाभाव एव विभागोऽन्धकाराभाव एव चालोक इति स्यात्॥ एतेन तमो द्रव्यान्तरमिति मतेऽप्यालोकाभावस्य आवश्यकत्वात् स एव तम इति निरस्तम्। आलोको द्रव्यान्तरमिति मतेऽप्यन्धकाराभावस्यावश्यकत्वात्॥**

## न्यायदीपः

प्रागुक्तोत्कर्षादिप्रतीतिरूपहेतोरन्यथाऽनुपपत्त्याऽप्रयोजकत्वमाशङ्क्य निराह ॥ **तेज इति** ॥ एतेनेत्युक्तं व्यनक्ति ॥ **आलोक इति** ॥ नचालोकस्य द्रव्यत्वमननन्यथासिद्धत्वरूपवत्त्वादि-प्रमाणसिद्धमिति वाच्यम्। तमोद्रव्यत्वस्यापि प्रागुक्तरूपवत्त्वादिप्रमाणसिद्धत्वादिति भावः ॥

## तर्कताण्डवम्

**ननु-तमसो रूपित्वे आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यात्। तस्मात् प्रौढप्रकाशकयावत्तेजःसंसर्गाभावो वा, उद्भूतरूपयोग्ययावत्तेजःसंसर्गाभावो वा, तमस्तेजोविरोधि**

**द्रव्यमिति मते यत्तेजःसंसर्गाविरोधि तदभावो वा, तम इति चेन्न। रात्रिञ्चराणामुलूकादीनां ज्ञातॄणामिवान्धकारस्य ज्ञेयस्याप्यालोकनिरपेक्षचाक्षुषसाक्षात्कारसम्भवात्। आलोके व्यभिचाराच्च। तत्र विषयीभूतस्यालोकस्य सत्त्वेऽपि विषयसंस्कारकस्यालोकान्तरस्याभावात्।**

## न्यायदीपः

ननु तानि प्रमाणानि तर्कपराहतानि न द्रव्यत्वसाधनकानीति भावेन शशधराद्युक्तं तर्कविरोध-रूपवत्त्वं हेतौ तावदाशङ्क्य निराह ॥ **नन्वित्यादिना नवच्छायायां गतेरित्येतत्पर्यन्तेन ग्रन्थेन।** ॥ **तस्मादिति** ॥ आलोकनिरपेक्षचक्षुर्ग्राह्यत्वेन द्रव्यत्वायोगादित्यर्थः। तारादितेजसि सत्यपि तमोव्यवहाराद्युक्तं प्रौढेति। रूपित्वादिना विविच्य प्रकाशनसामर्थ्यं प्रौढत्वम्। विद्यमानेऽपि प्रौढतेजसि तेजोन्तराभावमादाय तमोव्यवहारापत्तेरुक्तं यावदिति। तत्रैव तदन्योन्याभावसत्त्वात्
्तमोव्यवहारोपपत्तेरुक्तं संसर्गेति। संसर्गारोपपूर्वकोऽभाव इत्यर्थः। तेन संसर्गान्योन्याभाववति न तमोव्यवहारापत्तिस्तत्र संसर्गतादात्म्यस्यैवारोपात् ॥ **उद्भूतेति** ॥ उद्भूतरूपयोग्यं यावत्तेजः तत्संसर्गाभाव इत्यर्थः। यावदादिपदकृत्यं पूर्ववत्। परमाण्वादितेजसि सत्यपि तमोव्यव-हाराद्योग्य-मित्युक्तम्। ग्रीष्मोष्मादौ सत्यपि तमोव्यवहारादुद्भूतेत्युक्तम् ॥ **विरोधीति** ॥ तमोविरोधीत्यर्थः ॥

॥ **ज्ञातॄणामिति** ॥ रात्रौ रूपवत्पदार्थद्रष्टृभिरालोकनिरपेक्षयैव घटादिपदार्था उपलभ्यन्त इत्येतावता घटादयोऽर्था रूपवन्तो नेति कल्प्यन्ते। उलूकादयो वा चक्षूरहिता इति कल्प्यते। किन्तूलकादिप्राणिचक्षुषामेव तादृशस्वभाव इत्युच्यते। एवं केषाञ्चिद्रूपवद्वस्तूनामालोक-सापेक्षचक्षुर्ग्राह्यत्वेऽपि तमोरूपवस्तुनोऽपि तन्निरपेक्षचक्षुर्ग्राह्यत्वमस्त्वित्यर्थः ॥

यत्तु रात्रिञ्चरादीनामपि बाह्यालोकनिरपेक्षचक्षुग्रार्हकमित्यसिद्धमेव। तत्रापि तेजोन्तरस्य सत्त्वादिति शशधरोक्तम्। तन्न। तादृशतेजोन्तरसत्त्वे मानाभावात्। तथैव तमसोऽपि तादृशतेजः-सापेक्षचक्षुर्ग्राह्यत्वसम्भवाच्चेति भावः ॥

प्रागुक्ततर्कस्याप्रयोजकत्वमुक्त्वा व्यभिचारं चाह ॥ **आलोक इति** ॥ आलोकान्यत्वे सतीत्यापादकविशेषणे च तमोन्यत्वे सतीत्यपि विशेष्यताम्। अद्याप्यालोक एव द्रव्यं तमस्तु नेत्यस्यासिद्धेरिति भावः। आपाद्यभिप्रायव्यक्तीकरणेन व्यभिचारं व्यनक्ति ॥ **तत्रेति** ॥ आलोक-साक्षात्कार इत्यर्थः ॥

## तर्कताण्डवम्

ननु तत्राप्यालोकावयवग्रहे महत आलोकावयविनः तद्ग्रहे च महतोऽवयवस्यापेक्षाऽस्ति जलस्थतेजस्त्र्यसरेणुग्रहे तु सौरालोक एवास्तीति चेत्। न तावदालोकसम्बन्धस्य साक्षात्परम्परासाधारणसम्बन्धत्वेन हेतुत्वम्। अतिप्रसङ्गात्॥

नापि संयोगसमवायसाधारणसाक्षात्सम्बन्धत्वेन। तदपेक्षया संयोगत्वजातेर्लघुत्वात्। अवयवावयविनोश्च संयोगाभावात्॥

किञ्च-तमस आलोकाभावत्वेऽपि नीलं तम इति धीर्न स्यादिति बाधकं सममेव। रूपसाक्षात्कारस्यालोक-सापेक्षचक्षुर्जन्यत्वनियमात्। न च प्रमारूपविशेष एवायं नियमः। सामान्ये बाधकाभावात्। शुक्लपटादौ चाक्षुषस्य नील इति भ्रमस्याप्यालोकं विनाऽनुत्पत्तेश्च॥

## न्यायदीपः

किं महालोके व्यभिचारस्त्र्यणुकरूपालोके वा। आद्येप्यवयविन्युत अवयव इति विकल्पद्वय-क्रमेण व्यभिचारोद्धारमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ त्र्यसरेण्ववयवस्य अप्रत्यक्षादाह ॥ **सौरालोक एवेति** ॥ आलोकस्य विषयसंस्कारकत्वं संयोगसम्बन्धेनैव वाच्यम्। एवं च रूपित्वे संयोगसम्बन्धेन विषयसंस्कारकालोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यादित्यापाद्यार्थः स्यात्। तथा च त्र्यसरेणौ व्यभिचाराभावेऽपि महालोके व्यभिचारस्तदवस्थ एवेति भावेन प्रसक्तपक्षप्रतिषेधपूर्वमाह ॥ **न तावदित्यादिना** ॥ **अतिप्रसङ्गादिति** ॥ आलोकसम्बन्धकुड्यसम्बन्धान्धकारस्य साक्षात्कारोदयप्रसङ्गादित्यर्थः॥

॥ **संयोगाभावादिति** ॥ तथा च तत्र व्यभिचारायालोकान्यत्वे सति रूपित्वमेव तादृशालोकसापेक्षचक्षुर्ग्राह्यत्वे प्रयोजकमित्युपेत्योक्तापादकस्यालोकेऽभावान्नोक्ततर्कस्तत्र व्यभिचारीति वाच्यम्। एवं सति तमोन्यत्वे सति रूपित्वमेवालोकापेक्षचक्षुर्ग्राह्यत्वे प्रयोजकमि-

त्युपेयताम्। एवं तमसो रूपित्वेऽपि नोक्ततर्कबाधः। आलोकस्येव तमसोप्यनन्यथासिद्धोक्तप्रमाण-सिद्धद्रव्यत्ववत्त्वादिति भावः॥

अस्त्वेवं कथंचिदुक्तन्यायेनालोके व्यभिचाराभावस्तथाऽपि तमोन्यरूपित्वमेवालोकसापेक्ष-चक्षुर्ग्राह्यत्वप्रयोजकमिति त्वयाऽपि वाच्यम्। अन्यथा तव मते तमसि रूपधीर्न स्यादिति भावेन परपक्षेऽपि बाधकमुपपादयति ॥ **किञ्चेत्यादिनैवं च त्वयापीत्यन्तेन ग्रन्थेन** ॥ **नियमादिति** ॥ आलोकरूपसाक्षात्कारे त्वदुक्तदिशा व्यभिचारादिति भावः॥

## तर्कताण्डवम्

**यत्तु-वर्धमानोक्तं वस्तुतो रूपवतो विशेष्यस्य चाक्षुषत्वे आलोकापेक्षा, भ्रमाधिष्ठानभूतः पटादिश्च वस्तुतो रूपीति तत्र विशेष्यस्य ग्रहार्थमेवालोकापेक्षा न तु रूपग्रहणार्थं, मन्मते चालोकाभावरूपं तमो वस्तुतो नीरूपमिति नीलं तम इति साक्षात्कारे नालोकापेक्षा, त्वन्मते तु तमो वस्तुतो रूपीति तत्रालोकापेक्षा स्यादेवेति। तन्न। दधि धवळमाकाशं नीलमाकाशमित्यादौ नीरूपाकाशविशेष्यकभ्रमे, आकाशे धवळिमा आकाशे नीलिमेत्यादौ रूपविशेष्यकभ्रमे चालोकापेक्षादर्शनात्॥**

**नन्वाकाशे धावळ्यादिधीर्गृह्यमाणारोपरूपा, ग्रहणा-त्मकं चारोप्यज्ञानं रूपवद्द्रव्यविषयकमित्यारोपकारणस्य रूपवद्द्रव्यज्ञानस्यैवालोकापेक्षा, न तु साक्षादारोपस्येति चेन्न। तत्रानुभूयमानारोपोऽन्धकारे तु स्मर्यमाणारोप इत्यत्र निया-मकाभावात्।**

## न्यायदीपः

रूपभ्रमेऽपि रूपप्रमायामिव न सर्वत्रालोकापेक्षा, येन शुक्लपटादौ नीलरूपभ्रमे तदपेक्षायां तमसि रूपभ्रमेऽपि तदपेक्षा स्यात्। धर्मिणो रूपित्वारूपित्वाभ्यां तन्नियमोपपत्तेरिति भावेनोक्तमनूद्य

निराचष्टे ॥ **यत्त्वित्यादिना** ॥

नीरूपे वस्तुनि रूपभ्रमे आलोकापेक्षा नेति किं निरूपवस्तुविशेष्यकरूपविशेषणकभ्रमे वा रूपविशेष्यकवस्तुविशेषणकभ्रमे वा। उभयमप्ययुक्तम् व्यभिचारादित्याह ॥ **दधि धवळमिति** ॥ शुभ्राभावदशापन्नोऽयं भ्रमः ॥ **दर्शनादिति** ॥ तथा च तमस्यपि रूपभ्रमे तदपेक्षा स्यादेवेति भावः ॥

आकाशरूपभ्रमतमोरूपभ्रमस्य गृह्यमाणत्वस्मर्यमाणत्वकृतवैषम्यमाशङ्क्य निराह ॥ **नन्विति** ॥ यद्वा नीरूपे रूपभ्रमे नालोकापेक्षेत्यत्राकाशरूपारोपे व्यभिचारोक्तिरयुक्ता, तत्राप्यालोका-पेक्षायां रूपारोपकारणं यद्रूपवदद्रव्यान्तरज्ञानं तत्रोपयोगादिति भावेनाशङ्क्य तमोरूपारोपेऽपि तथैव तदपेक्षा दुर्वारेत्याह ॥ **नन्वित्यादिना** ॥ **न तु साक्षादिति** ॥ द्रव्यं विना कृतकेवलरूपारोपलक्षणे स्मर्यमाण-ारोपेत्यर्थः। तमोरूपारोपश्च स्मर्यमाणारोप इति भावः ॥

## तर्कताण्डवम्

**किञ्च गृह्यमाणरूपस्य संसर्गारोपार्थमेव रूपग्रहस्यापेक्षितत्वात् रूपग्रहे आलोकापेक्षेति मदिष्टसिद्धिः। न च तत्र रूपवदभेदस्यैवारोपः न तु रूपसंसर्गस्येत्यत्र मानमस्ति।**

**न च रूपग्रहो न तदाश्रयग्रहं विनेत्याश्रयग्रहार्थमेव आलोकापेक्षेति वाच्यम्। त्वन्मते नयनगतपित्तपीतिमादेः तदाश्रयग्रहं विनाऽपि ग्रहात्।**

**तस्माद्रूपज्ञानस्य रूपवद्विशेष्यकत्वे रूपविशेष्यकत्वे भ्रमत्वे प्रमात्वे च रूपभानप्रयुक्तैवालोकापेक्षेति तमसोऽभावत्वेऽपि नीलं तम इति तमसि नैल्यमिति वा ज्ञाने आलोकापेक्षा दुष्परिहरा॥**

**एवं च त्वयाऽपि तमोनिष्ठत्वेन रूपसाक्षात्कारे तेजोपेक्षेति वाच्यम्। ततो वरं तमोभिन्नरूपवत्साक्षात्कारे तदपेक्षेति तमो द्रव्यमेवास्तु।**

## न्यायदीपः

अङ्गीकृत्यापि स्मर्यमाणारोपत्वमालोकसापेक्षत्वमावश्यकमित्याह ॥ **किञ्चेति** ॥ **मदिष्टेति** ॥ तमोरूपारोपेप्यालोकापेक्षा स्यादित्यापादनसिद्धिरित्यर्थः ।

इष्टासिद्धिमाशङ्क्य परिहरति ॥ **न च तत्रेति** ॥ गृह्यमाणारोपस्थळ इत्यर्थः । अभ्युपेत्यापि रूपसंसर्गारोपमालोकापेक्षाया अन्यथासिद्धिमाशङ्क्य निराह ॥ **न च रूपेति** ॥

## तर्कताण्डवम्

किञ्च रूपिणो घटादेरिव रूपिघटाद्यभावस्य ग्रहोऽपि आलोकसापेक्षो दृष्ट इत्यभावत्वपक्षेऽपि तदपेक्षाऽऽवश्यकी ॥

ननु-तेजोऽभावग्रहे न तेजोऽपेक्षा । अन्यथा घटाभावग्रहेऽपि घटापेक्षा स्यादिति चेत् । तेजोऽनपेक्षा हि न तेजोऽभावप्रत्यक्षत्वेन । तेजोऽभावव्यापकभास्वररूपविरहप्रत्यक्षस्यापि तेजोऽनपेक्षत्वदर्शनात् ।

नापि तेजोविरोध्यभावप्रत्यक्षत्वेन । गौरवात् । किं तु तेजोविरोधिप्रत्यक्षत्वेनैव । तथा च तमस्तेजोविरोधि द्रव्यमेवास्तु । तेजोऽपेक्षाप्रसङ्गस्य विरोधेनैव समाधानात् । एवं च रूपित्वादिप्रतीतिरप्यनुकूलिता भवति ॥

एतेन-तमोग्राहकं तेजोऽनपेक्षं चक्षुर्भिन्नमिन्द्रियान्तरमेवास्तु, अधिष्ठानं तु तस्यापि नयनगोळकमेव, सर्पाणां चक्षुःश्रोत्रयोरिवैकाधिष्ठानत्वसम्भवादिति निरस्तम् । उक्तरीत्या चक्षुर्ग्राह्यत्वेनैवोपपत्ताविन्द्रियान्तरकल्पकाभावात् । धर्मिग्राहकमानेन चक्षुष एव रूपग्राहकत्वेन सिद्धेश्च ।

## न्यायदीपः

तमोऽन्यरूपित्वमेवालोकसापेक्षचक्षुर्ग्राह्यत्वप्रयोजकमित्युपपाद्य तमसो द्रव्यत्वे प्रागुक्त-तर्कबाधो निरस्तः। अधुना तेजोविरोधिप्रत्यक्षत्वमेवालोकनिरपेक्षत्वे प्रयोजकं, तच्चास्ति तमः प्रत्यक्षत्वेपीत्युपपादयंस्तर्कबाधं प्रकारान्तरेणोद्धरति ॥ **किञ्चेत्यादिना एतेनेत्यन्तेन** ॥ **अभावत्वेति** ॥ तमस्तेजोभावत्वपक्षेऽपीत्यर्थः ॥

॥ **एतेनेति** ॥ तमोभिन्नरूपवत्साक्षात्कार एवालोकापेक्षेति कथनेन। तथा तेजोविरोधि-प्रत्यक्षत्वेनैव तेजोनपेक्षेति कथनेनेत्यर्थः। तदेव व्यनक्ति ॥ **उक्तरीत्येति** ॥ रूपग्रहणान्यथानुपपत्तिरेव कल्पिकेत्यत आह ॥ **धर्मीति** ॥ रूपज्ञानं करणसाध्यं कार्यत्वादिति मानेनेत्यर्थः ॥

## तर्कताण्डवम्

**न च छायायां गतेः स्वाभाविकत्वे आवरकछत्रादि-द्रव्यानुविधानानुपपत्तिः। स्थाणावचलेऽपि तच्छायायां गतिदर्शनात्। मण्याद्यनुविधायिमण्यादिप्रभावदुपपत्तेश्च। रूपादिधीस्तु प्रभायामिव तमस्यप्यबाधिता ॥**

**न च तमसः क्रियावत्त्वे क्रियावतः प्रत्यक्षस्य स्पर्शवत्त्व-नियमात् स्पर्शवत्त्वं स्यादिति वाच्यम्। विपक्षे बाधकाभावेन स्पर्शवतोऽपि वायोर्नीरूपत्ववत्क्रियावतोऽप्यस्य निःस्पर्श-त्वोपपत्तेः। आलोकादाविव स्पर्शस्यानुद्भूतत्वेनानुपलम्भ-सम्भवेनेष्टापत्तेश्च ॥**

## न्यायदीपः

एवं तर्कपराहत्यादिदोषनिरासेन रूपवत्त्वादित्युक्तहेतुं समर्थ्येदानीं क्रियाश्रयत्वादित्युक्तहेतुमपि शशधराद्युक्तबाधकोक्तिमुखेनासिद्धिमाशङ्क्य साधयति ॥ **न च छायायामिति** ॥ **गतिदर्शनादिति** ॥ सूर्यादिगत्यनुरोधेनेति भावः ॥ **प्रामाण्यादिभावादिति** ॥ प्रभाचत्वन्मते द्रव्यमेवेति भावः।

ननु शशधरादौ कुड्याद्यपसरणादिरूपकारणवशादन्यत्रापि प्रभाचलनोपलम्भात्तदनु-

विधायित्वं तत्रासिद्धमित्युक्तमिति चेन्न। च्छायायामपि तदनुविधानाभावस्योक्तत्वादिति भावः॥

ननु-प्रभायामन्यानुविधायिगतित्वेऽपि तत्र रूपत्वाद्यन्यथासिद्धमानावगतं द्रव्यत्वमित्यत आह ॥ **रूपादीति** ॥ **अबाधितेति** ॥ न नीलं तम इति कदाऽप्यप्रतीतेर्यौक्तिकबाधस्य च निरस्यत्वादिति भावः। बाधकान्तरमाशङ्क्य द्वेधा निराह ॥ **न च तम इत्यादिना** ॥

## तर्कताण्डवम्

**न च स्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्य-जातेरुद्भूतस्पर्शसामानाधिकरण्यनियमान्नैवमिति वाच्यम्। विपक्षे बाधकाभावात्॥**

**भोगविशेषसम्पादनार्थं हि स्पर्शोद्भवः, न चास्मादादिभिः प्रकृते भोगविशेषसम्पादनप्रयोजनकत्वं निर्णेतुं शक्यम्। पुराणेषु तमसः काठिन्योक्त्योद्भूत-स्पर्शस्यापि इष्टत्वाच्च॥**

**यत्तु छायायाः तेजोविरोधिद्रव्यत्वे प्रभाऽऽश्रये रत्नविशेषे छाया नोपलभ्येतेति चोद्यं, तदालोकाभावत्वेऽपि समम्। तत्रालोकस्य विरळत्वाद्वाऽऽवरणीयतेजोऽन्तराभावस्य छायात्वाद्वा छायात्वोपपत्तिरिति समाधानं च भावत्वेऽपि समम्॥**

## न्यायदीपः

इष्टापत्तेश्चेत्ययुक्तमित्याशङ्क्य द्वेधा समाधिमाह ॥ **न च स्पर्शेत्यादिना** ॥ **नियमादिति** ॥ पृथिवीत्वजलत्वादिजातेस्तथादर्शनात्तमसो द्रव्यत्वपक्षे तमस्त्वस्य पृथिवीत्वादेरिव द्रव्यत्वसाक्षाद्व्याप्यजातित्वापत्त्योद्भूतस्पर्शसामानाधिकरण्यं स्यादेवेत्यर्थः। प्रभादावव्यभिचाराय साक्षाद्व्याप्य-जातेरित्युक्तम्। प्रभात्वादेर्द्रत्वव्याप्यतेजस्त्वव्याप्यत्वात् ॥ **विपक्ष इति** ॥ उक्तरूपजातेरपि तादृशस्पर्शसमानाधिकरण्याभाव इत्यर्थः॥

तमेव व्यनक्ति ॥ **भोगेति** ॥ स्पर्शोद्भवः स्पर्शस्योद्भतत्वमित्यर्थः ॥ **प्रयोजकत्वमिति** ॥ तमःस्पर्शस्येत्यर्थः ॥ **पुराणेष्विति** ॥ तमस्सुघोरमित्यादिप्रागुक्तवचनेष्वित्यर्थः ॥

## तर्कताण्डवम्

यत्तु-वर्धमानादिभिरुक्तं प्रौढालोकमध्ये सर्वतो घनतरावरणे छाया न स्यात्, तेजोविरोधेन तत्र तमोऽवयवानां पूर्वमनवस्थानात्। सर्वतस्तेजःसङ्कुलेऽन्यतोऽपि तदागमनासम्भवादिति। तन्न। पिहितप्रदीपागमनानन्तरं प्रासादव्याप्यालोकमण्डलवदावरणानन्तरं छायाया दीपनाशानन्तरमन्धकारस्य चारम्भसम्भवात्॥

ननु- तम आलोकाभावो न चेदालोकाभावाविषयबुध्यविषयो न स्यादिति चेन्न। आलोकाभावग्रहे प्रतियोगिस्मरणादेः अधिकस्यापेक्षितत्वेनेष्टापत्तेः॥

एतेन तमो द्रव्यं चेत्तदवयवानां तमोऽवयव्यारम्भकत्वं वाच्यम्। न च तद्युक्तम्। आरम्भकत्वे स्पर्शवत्त्वस्य प्रयोजकत्वेन निःस्पर्शस्य तमसोऽनारम्भकत्वात्।

न च मूर्तत्वमेवारम्भकत्वे तन्त्रम्। मनसोऽप्यारम्भकत्वापातादिति शशधराद्युक्तं निरस्तम्। निःस्पर्शत्वमसिद्धमित्युक्तत्वात्॥

तम आरम्भकं अन्त्यावयविभिन्नत्वे सति रूपवत्त्वादित्यनेन सत्प्रतिपक्षत्वाच्च। अस्पर्शत्वरूपसाधनावच्छिन्नसाध्यव्यापकस्य नीरूपत्वस्योपाधित्वाच्च। अस्पर्शस्यापि पुरुषार्थसाधकत्वेनारम्भकत्वसम्भवेन अप्रयोजकत्वाच्च॥

## न्यायदीपः

तमः तेजोविरोधिद्रव्यमेवास्तु इति पक्षे बाधकमाशङ्क्य निराह ॥ **यत्त्विति** ॥ तमसस्तेजोविरोधिद्रव्यत्वे बाधकान्तरमनूद्य निराह ॥ **यत्तु वर्धमानादिभिरिति** ॥

शशधराद्युक्तबाधकमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **अपेक्षितत्वेनेति** ॥ तमसो ग्रहे तदनपेक्षितत्वेनेत्यपि ज्ञेयम् ॥

बाधकान्तरं च निराह ॥ **एतेनेति** ॥ स्पर्शकथनेनेत्यर्थः। तदेव व्यनक्ति ॥ **निःस्पर्शत्वमिति** ॥ **सत्प्रतिपक्षत्वाच्चेति** ॥ अवयवाख्यं तमोऽवयवरूपतमोनारम्भकं निःस्पर्शत्वादिति परोक्तस्यानुमानस्येति भावः। अन्त्यावयविनि घटादावव्यभिचाराय हेतौ सत्यन्तम् ॥

न च तस्यापि स्वगतगुणकर्मारम्भकत्वान्न व्यभिचार इति शङ्क्यम्। आरम्भकानारंभकपदाभ्यां द्रव्योपादानत्वतदभावयोरभिमतत्वात्। अत एव पटादावन्त्यावयविनि साध्यव्यापकत्ववारणाय साधनावच्छिन्ने साध्यव्यापकस्य नीरूपत्वस्योपाधित्वाच्चेत्युच्यते। अस्पर्शत्वात् तमोरूपद्रव्यान्तरानारम्भकं तम इत्यस्य दोषान्तरमाह ॥ **अस्पर्शस्यापीति** ॥ **पुरुषार्थेति** ॥ छायायाः सुखहेतुत्वेन पुरुषार्थसाधनत्वं ध्येयम् ॥

## तर्कताण्डवम्

**मनस्तु नारम्भकं प्रयोजनाभावात्। अनारम्भ एव च प्रयोजनाभावे प्रमाणम्। अन्यथाऽऽरम्भकत्वे रूपवत्त्वमेव तन्त्रम्, वायुस्त्वनुद्भूतरूपा पृथिवी वा स्यादनारम्भको वा स्यात्, अद्रव्यं वा स्यात् ॥**

## न्यायदीपः

मनसो द्रव्यारम्भकत्वं स्यादित्यत आह ॥ **मनस्त्विति** ॥ हेतोरसिद्धिमाशङ्क्याह ॥ **अनारम्भ इति** ॥ कुत एषा कल्पनेत्यत आह ॥ **अन्यथेति** ॥ स्पर्शवत्त्वादिमानसिद्धान्ततो रूपवत्त्वमात्रं न प्रयोजकं चेत्तमसोऽपि तथात्वं सिद्धमिति न स्पर्शवत्त्वमारम्भकत्वे प्रयोजकं किन्तु प्रयोजनवत्त्वमेवेति सममिति भावः ॥

## तर्कताण्डवम्

एतेनालोकज्ञानाभाव एव तमः। तत्काले तद्देशे आलोकसाक्षात्काराभावस्य सर्वसम्मतत्वात्। आलोकवद्गर्भगृहं प्रविशतः प्रथममालोकाज्ञाने तमःप्रत्ययाच्च।

आलोकविरोधिद्रव्यान्तरस्यालोकाभावस्य वा तमस्त्वे तदानीं द्वयोरप्यभावात्तमःप्रत्ययो भ्रमः स्यादित्यपास्तम्। नीलं तम इत्यबाधितप्रतीतिविरोधात्। तमःसाक्षात्कारस्य चक्षुरन्वयव्यतिरेकानुविधानविरोधाच्च। न हि ज्ञानाभावो नीलः। न वा चाक्षुषः। प्रदीपादिमत्यपि गर्भगृहे तमोधीभ्रान्तिर्बाधितत्वात्॥

किञ्च-रूपाज्ञानाद्गौणं व्यवहारमात्रं वा। एतेनैवारोपितं नीलरूपमेव तम इति निरस्तम्। नीलं रूपं तम इत्यननुभवात्। नीलरूपवदित्येवानुभवाच्च। आलोकमध्यस्थे शुक्ले वस्तुनि नैल्यारोपे तमोव्यवहारापाताच्च॥

किञ्चारोपस्योपलक्षणत्वेऽनारोपदशायामपि तमोव्यवहारः स्यात्। विशेषणत्वे आरोपस्यापि तमःशरीरप्रविष्टत्वेनाचाक्षुषत्वं स्यात्॥

तस्मात्तम आलोकाभाव इति, आलोकाज्ञानमात्रमिति, आरोपितं नीलरूपमेवेति च पक्षत्रयमप्ययुक्तम्॥

एवं च तमसो द्रव्यत्वे सिद्धे प्रसिद्धद्रव्यान्तर्भावः शक्यश्चेत्तथैवास्तु न चेद्द्रव्यान्तरमस्तु। न तत्रास्माकमाग्रह इति।

इति तमसो द्रव्यत्वसाधनम्॥ ११॥

## न्यायदीपः

कस्यचिन्मतमपाकरोति ॥ **एतेनेति** ॥ आलोकस्मृतिमतः तमः प्रत्ययदर्शनात्कथमेतदित्यतो ज्ञानं साक्षात्कार इति भावेनाह ॥ **तत्काल इति** ॥ असिद्धिं निरस्य युक्तिं चाह ॥ **आलोकवदिति** ॥ सूक्ष्मप्रदीपालोकयुक्तेत्यर्थः। पक्षान्तरे बाधकं चाह ॥ **आलोकेति** ॥ विरोधद्वयं व्यनक्ति ॥ **न हीति** ॥ परोक्तयुक्तिं निराह ॥ **प्रदीपेति** ॥

एतेनैवेत्येतद्व्यनक्ति ॥ **नीलरूपमिति** ॥ अनुभवविवादिनं प्रत्याह ॥ **आलोकेति** ॥

तादृशभ्रमेऽपि विप्रतिपन्नं प्रत्याह ॥ **किञ्चेति** ॥ एवं तर्हि नवैव द्रव्याणीति नियमात् क्वान्तर्भाव इत्यत आह ॥ **एवं चेति** ॥ **न तत्रेति** ॥ न चैवं भानाभावादिति भावः।

इति तमसो द्रव्यत्वसमर्थनम् ॥ ११ ॥

## अथ परमते सुवर्णस्य योग्यानुपलब्धिबाधः।

### तर्कताण्डवम्

**सुवर्णं तु न द्रव्यान्तरं, नापि तैजसं, किन्तु पार्थिवमेव। पीतत्वात्। अजलत्वे सति गुरुत्वात्। नैमित्तिकद्रवत्वाधिकरणत्वाच्च। घृतादिवदित्याद्यनुमानात्। ''दिव्यं पार्थिवं वस्त्वि''त्यादिश्रुतेश्च।**

**जम्बूनदीरोधसो मृत्तिका जम्बूफलरसानुविध्यमाना वाय्वर्कसंयोगविपाकेन जाम्बूनदं नाम सुवर्णं भवतीति, तावती भूमिः काञ्चन्यादर्शतळोपमेत्यादिभागवतादि-वचनाच्च॥**

**''अग्नेः प्रजातं प्रथमं हिरण्य''मिति श्रुतिस्त्वग्नेराप इत्यादिश्रुतिवदग्नेर्हिरण्यनिमित्तत्वमाह। न तु हिरण्यस्य अग्न्यात्मकताम्॥**

## न्यायदीपः

तमोवत्सुवर्णमपि नवभ्यो द्रव्यान्तरं किमित्यत आह ॥ **सुवर्णन्त्विति** ॥ न्यायमत इव तेजस्यन्तर्भावः किन्नेत्याह ॥ **नापीति** ॥ **तैजसमिति** ॥ पयस्यव्यभिचारायैव जलान्यत्वे सतीति नैमित्तिकेति चोक्तिः। अनुमानानुग्राहकश्रुत्याद्याह ॥ **दिव्यमिति** ॥

''यत्सोमचित्रमुक्थ्यं दिव्यं पार्थिवं वसु। तन्नः पुनान आभर''

इति बह्वृचशाखायां श्रवणादित्यर्थः॥

पञ्चमस्कन्धवाक्यान्याह ॥ **जाम्बूनदीति** ॥ मेरुसमीपस्थाकाचिन्नदीतीरयोर्मृत्तिकेत्यर्थः। पूर्ववाक्योक्तस्यानुवादो जाम्बूनदीति। अन्यसमं द्यावन्मानसोत्तरमेर्वोरन्तरं तावतीति षण्णवतिलक्ष-योजनपरिमिता काञ्चनी सुवर्णमयी दर्पणतलवदतिश्लक्ष्णतमेति स्वादूदकसमुद्रात्परतो लोकालोक-पर्वतादर्वाग्भागभूमिरित्यर्थः। परोक्तश्रुतिगतिमाह ॥ **अग्नेरिति** ॥

## तर्कताण्डवम्

**ननु-पीतरूपगुरुत्वाश्रयाविनिर्भागवर्ति तैजसं भागान्तरमेव सुवर्णम्। तत्र च पीतत्वादिकमसिद्धमिति चेन्न। तादृशभागान्तरस्याननुभवात्। तत्कल्पकस्य चाभावात्। न चानुद्भूतस्पर्शवत्त्वान्नानुभवः। त्वन्मते सुवर्णरूपस्योद्भूतत्वेन अपसिद्धान्तात्॥**

**न च-सोपि भागश्चक्षुषा सुवर्णत्वेनानुभूयते, तस्य शुक्लभास्वररूपं तूपष्टम्भकपीतरूपाभिभूतत्वान्नानुभूयत इति वाच्यम्। पार्थिवरूपेण तेजोरूपाभिभवे घटादिरूपेण तत्प्रकाशकालोकरूपाभिभवापातात्॥**

## न्यायदीपः

सुवर्णद्विभागम्। तत्र पार्थिवभागपक्षीकारे सिद्धसाधनम्। भागान्तरपक्षीकारे हेतूनामसिद्धिरिति भावेन शङ्कते ॥ **नन्विति** ॥ नैमित्तिकद्रव्यत्वाश्रयेत्यपि ज्ञेयम्॥ **अवनिभागवर्तीति** ॥ संश्लिष्टतया

वर्तमानेत्यर्थः ॥

शुक्लभास्वरोष्णस्पर्शवद्द्रव्याननुभवेऽप्यनुमीयत इत्यत आह ॥ **तत्कल्पकस्येति** ॥ तथाचैक एव भाग इति तस्यैव च पक्षत्वान्नासिद्धिः । अन्यथा घटादावपि भागान्तरकल्पनेन तैजसत्वादिकल्पनं तत्रापि स्यादिति भावः ।

अननुभवस्यान्यथासिद्धिमाशङ्क्य निराह ॥ **नचेति** ॥ किं रूपानुभवो नेत्युच्यते अथ द्रव्यानुभवः । आद्य आह ॥ **त्वन्मत इति** ॥ रूपं सुवर्णस्योद्भूतमेवेति मण्युक्तेरिति भावः ।

## तर्कताण्डवम्

**न च-पार्थिवं रूपं स्वाश्रयाविनिर्भागवर्तिन एव तेजसो रूपाभिभावकमिति वाच्यम्। मण्यादिमध्यवृत्तितेजोरूपस्य मणिरूपेणानभिभवात्। तथा च सुवर्णमुपष्टम्भकपीतद्रव्य-संयुक्तमप्यनभिभूतोद्भूतरूपवत्तेजस्त्वादङ्गारवह्निरिवान्धकारे स्वपरप्रकाशकं स्यात्। न चाङ्गारादावनभिभूतरूपं प्रभाऽन्तर-मनुभूयते येन तदेव प्रकाशकं न त्वङ्गारवह्निरिति स्यात्॥**

**अत्रोक्तं मणौ-मणिप्रभायामङ्गारवह्नौ च रूपगत-शुक्लत्वमेवाभिभूतं, न तु रूपं, न वा तद्गतं भास्वरत्वं, अत एवाङ्गारवह्न्यादिकं नीलारुणादिरूपवत्त्वेनैव भासते, एवं च स्वपरप्रकाशकत्वोपयुक्तभास्वरत्वस्यानभिभवादङ्गारवह्निः स्वपरप्रकाशकः, सुवर्णे तु रूपमुद्भूतं, तद्गते शुक्लभास्वरत्वे चाभिभूते इति न तत्स्वपरप्रकाशकमिति।**

**तन्न। रत्नात्प्रभाया इव काष्ठाद्वह्नेरिव चोपष्टम्भकपीत-द्रव्याद् भिन्नस्य त्वदभिमतस्य सुवर्णस्य कदाऽप्यननुभवेन कल्पकाभावात्। अन्यथा-अभिभवकल्पनेनानुपलब्धि-विरोधे परिहृते तेजोभागसिद्धिः सिद्धे च तस्मिन् फलबलाद-भिभवकल्पनमित्यन्योन्याश्रयः स्यात्।**

## न्यायदीपः

द्वितीयमाशङ्कते ॥ **न चेति** ॥ ॥ **मण्यादिमध्य इति** ॥ तत्रापि तेजोभागस्य तव सम्मतत्त्वात् तत्राप्यभिभवे परप्रकाशकत्वाभावप्रसङ्गादिति भावः। संयुक्तमपीत्यपिपेदनाभ्युपगमं सूचयति।

सर्वस्यापि पार्थिवत्वस्यैवाभिमतत्वादत्रोक्तमिति च तथाचेत्यादिनोक्तप्रमेये समाधानं प्रत्यक्षखण्डे सुवर्णतैजसत्ववादे उक्तमित्यर्थः ॥ **अन्यथेति** ॥ कल्पकाभावेप्येवं कल्पन इत्यर्थः ॥ **तस्मिन्निति** ॥ तेजोभाग इत्यर्थः ॥ **फलेति** ॥ अनुपलब्धिरूपकार्यबलेनेत्यर्थः।

## तर्कताण्डवम्

**किं चास्तु सुवर्णरूपमभिभूतं तथाऽपि महत्त्वे सत्युद्भूतरूपवत्तेजस्त्वस्यैव व्यञ्जकत्वे तन्त्रत्वेन सुवर्णमपि व्यञ्जकं स्यात्। यदि ह्युद्भूतरूपमप्यभिभूतरूपत्वेनानभिव्यञ्जकं किञ्चित्तेज उभयसिद्धं स्यात्। तदा तत्रानतिप्रसङ्गायानभिभूतत्वविशेषणमर्थवद्भवेत्। न च तदस्ति। अनभिव्यञ्जकानां ग्रीष्मोष्मादीनामनुद्भूतरूपवत्त्वात्॥**

**किञ्चैवं सुवर्ण(अनु)उष्णस्पर्शोप्युद्भूत एवाभिभूतः कल्प्यताम्। न चैवं स्पर्शोद्भवे सुवर्णमन्धकारे त्वचा गृह्येत, तथा च सुवर्णं न वेति संशयो न स्यादिति वाच्यम्। तव सुवर्णत्वजातेरुपष्टम्भकाभिमतरूपविशेषग्रहव्यङ्ग्यत्वेन ब्राह्मणव्यक्तिग्रहेऽपि ब्राह्मणत्वजातिसन्देहवदुपपत्तेरिति सुवचत्वात्। तेजःस्पर्शोऽन्यस्पर्शानभिभाव्य इति तु रूपेऽपि तुल्यम्। तस्मात्त्वचा चक्षुषा वा पीतगुरुद्रव्यातिरिक्तस्य भागान्तरस्याग्रहेण धर्मिण एव बुद्ध्यनारोहान्न तद्रूपेऽभिभवादिकल्पनं युक्तम्॥**

**पराभिप्रेतसुवर्णस्य योग्यानुपलब्धिबाधः॥ १२॥**

### न्यायदीपः

अस्तु वा रूपमभिमतं तथाऽपि दीपादिवत्परप्रकाशकं स्यादेव प्रयोजकस्य समत्वादिति भावेनाह ॥ **किञ्चेति** ॥ ननु महत्वे सत्यनभिभूतोद्भूतरूपवत्तेजस्त्वमेव प्रयोजकमतः सुवर्णे तादृशतेजस्त्वाभावान्न दोष इत्यत आह ॥ **यदि हीति** ॥ ग्रीष्म ऊष्माद्येव तादृशं तेज इत्यत आह ॥ **अनभिव्यञ्जकानामिति** ॥

अस्तु वाऽनभिभूतोद्भूतरूपवत्तेजस्त्वमेव व्यञ्जकत्वे प्रयोजकं, अथापि सुवर्णं तेजश्चेदुपेयते तर्हि स्यादेव तत्परप्रकाशकं तद्रूपाभिभवस्यायुक्तादिति भावेन स्पर्शप्रतिबन्दीमाह ॥ **किञ्चेति** ॥

यद्वा तेजः स्पर्शवत्तेजोरूपस्याप्यभिभवायोगात्प्रागुक्तप्रयोजकेनाभिभूतत्वाविशेषण-मसम्भवदुक्तिकम्। सम्भवव्यभिचाराभ्यामेव विशेषणस्यार्थवत्त्वादिति भावेनाह ॥ **किञ्चेति** ॥ नैवं कल्पना युक्तेत्याशङ्क्य निराह ॥ **न चैवमिति** ॥ **तवेति** ॥ उपष्टम्भकमस्तीति वदत इत्यर्थः। तेजः स्पर्श एव सर्वाभिभावको न स्वयमन्येनाभिभवितुं शक्य इत्यत आह ॥ **तेज इति** ॥ तस्मादित्यस्य विवरणं त्वचेत्यादिपञ्चम्यन्तपर्यन्तम् ॥

पराभिप्रेतसुवर्णस्यानुपलब्धिबाधः ॥ १२ ॥

## अथ सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधाऽन्यथोपपत्तिसमर्थनम्।

### तर्कताण्डवम्

**अत्र मणावुदयनोक्तं मतमुक्तं-**

**''अवश्यं भागान्तरं स्वीकार्यम्। अत्यन्तानलसंयोगि-रूपाधिकरणं पार्थिवं पूर्वरूपविजातीयरूपप्रतिबन्धकद्रव-द्रव्यसंयुक्तं अत्यन्तानळसंयुक्तत्वेसति पूर्वरूपविजातीय-रूपानधिकरणपार्थिवत्वात्। क्वाथ्यमानजमध्यस्थपटवदि-त्यनुमानात्।**

**चातिव्याप्त्यभावेन पार्थिवद्रवत्वत्वस्याग्निसंयोगनाश्यत्वे तन्त्रत्वसिद्धिरित्यन्योन्याश्रयः स्यात्। दृष्टानुसारिणी हि कल्पना।**

## न्यायदीपः

तत्रोक्तरूपहेतोरेवाभावान्न व्यभिचार इति भावेन बाधोक्तिपूर्वं पीतं द्रुतमिति बुद्धेर्भ्रमत्वमाशङ्कते ।। **नन्विति** ।। द्रवत्वस्याग्निसंयोगनाशत्वेन द्रवत्वमात्रं तन्त्रम्। जलगतद्रवत्वे व्यभिचारात्। किं तु पार्थिवद्रवत्वं वा लाक्षाद्रवत्वं घृतद्रवत्वमित्यादिकं वाच्यम्। तत्राद्यमेव युक्तं न त्वन्यदिति निराह ।। **पार्थिवेति** ।।

अस्तु किं तत इत्यत आह ।। **एवं चेति** ।। **त्वदभिमत इति** ।। उपष्टभ्यत्वेनाङ्गीकृत इत्यर्थः ।। **अन्यथेति** ।। अनुभवसिद्धस्यापि पार्थिवद्रवत्वस्य बाधकेनापलाप इत्यर्थः ।।

ननु लक्षादिद्रवत्वं तन्त्रमित्युक्तावननुगमः प्राप्नोतीत्यतः प्रामाणिकत्वान्न दोष इति भावेनाह ।। **दृष्टेति** ।। पीतपार्थिवभागे द्रुतत्वस्य दृष्टत्वेन तदनुसारेण पार्थिवद्रवत्वादन्यदेव किं चिदग्निसंयोग-नाश्यतायां प्रयोजकं कल्प्यमित्यर्थः ।।

## तर्कताण्डवम्

**किञ्च पीतभागोन द्रुतश्चेत्तत्र काठिन्यधीः स्यात्।।**

**न च जलस्थमषीक्षोदादाविव प्रशिथिलावयवसंयोग-वत्त्वान्न तद्धीरिति वाच्यम्। एवं हि घृतादावपि द्रवत्वं न सिध्येत्। त्वन्मते घृते स्नेहप्रतीत्यर्थ मावश्यकाप्यद्रव्य-संयोगकृतावयवसंयोगशैथिल्येनैव काठिण्याप्रतीतिरिति सुवचत्वात्। एवं जलेऽपि सांसिद्धिकद्रवत्वं न सिध्येत्। आवश्यकेनावयवसंयोगशैथिल्यविशेषेणैव द्रवत्वधीरिति सुवचत्वात्।**

**अन्यथा पार्थिवान्तरे द्रवत्वानुच्छेदादर्शनात् सुवर्णम-**

**पार्थिवं चेत्तेजोन्तरे द्रवत्वादर्शनात्सुवर्णं तैजसं न स्यात्। तेजो विशेषस्वभावात् तदुपपत्तौ च पार्थिवविशेषस्वभावादिद-मप्युपपद्यताम्। कृतं पीतिमगुरुत्वाश्रयातिरिक्तभागान्तरं कल्पयित्वा तत्र स्वभावविशेषकल्पनेन पीतत्वप्रतीतेः भ्रमत्वकल्पनेन च।।**

## न्यायदीपः

ननु दृष्टिर्भ्रान्तिरित्युक्तमिति चेन्न। तस्या भ्रमत्वे तद्विपरीत प्रत्ययरूपबाधावतारः स्यादिति भावेनाह ।। **किं चेति** ।। यदा द्रवत्वानुच्छेदरूपहेतोरभावान्नोपष्टम्भकपार्थिवभागे व्यभिचारस्तदा न केवलं दृष्टहान्याद्यापात इति भावेनाह ।। **किं चेति** ।। काठिण्यबुद्ध्यभावोऽन्यनिमित्तक एव न तु तदभावहेतुक इति भावेन मण्युक्तमेवाशङ्क्य निराह ।। **न चेति** ।। अपां नेत्राञ्जनन्यायमते घृतस्य पार्थिवत्वेन स्वतः स्नेहाभावादाह ।। **त्वन्मत इति** ।।

ननु काठिण्यबुद्धेरभावेऽपि लाक्षादौ पार्थिवान्तरेऽत्यन्ताग्निसंयोगे द्रवत्वानुच्छेदादर्शनादिह च तद्दर्शनात्स्वर्णादौ प्रतीतद्रवत्वं नोपष्टम्भकपार्थिवगतं किं तु तदुपष्टभ्यभागान्तरगतमिति कल्पनीयः। अत एव मणौ घृतादौ द्रवत्वे बाधकाभावादित्युक्तमित्यत आह ।। **अन्यथेति** ।। तस्यैव विवरणं चेदित्यन्तम्।। **इदमपीति** ।। **द्रवत्वानुच्छेददर्शनमपीत्यर्थः** ।। कृतं अलमित्यर्थः। कल्पनेन कल्पनेन चेत्याभ्यामन्वयः। कल्पनाद्वयं व्यर्थमिति फलितोऽर्थः ।।

## तर्कताण्डवम्

**अन्ये तु-अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वा-धिकरणं पीतं पार्थिवं द्रवत्वोच्छेदप्रतिबन्धकद्रवद्रव्यसंयुक्तं अत्यन्तानळसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपार्थिवत्वात् क्वाथ्यमानजलमध्यस्थघृतवदित्यनुमानेन द्रवद्रव्यं सिध्य-ज्जलत्वे पृथिवीत्वे चोक्ततर्कबाधात्तैजसं सिध्यति।।**

## न्यायदीपः

एवं मणावुक्तं लीलावत्यभिमतमुपष्टम्भकभागे द्रवत्वं नास्त्येवेत्युपेत्य प्रवृत्तं सुवर्णस्य

अपार्थिवत्वसाधकहेतुमसिद्धिव्यभिचाराभ्यां निरस्योपष्टम्भके द्रवत्वमुपेत्य प्रवृत्तमन्येत्वित्यादिना मण्युक्तमेवान्यदपि मतत्रयं तावदनूद्य निराह ।। **अन्ये त्वित्यादिना** ।। **एतदपि निरस्तमित्यनेन** ।। अन्येत्वित्यस्याहुरित्यनेनान्वयः।

एतन्मतं पार्थिवगतं भवत्येव पीतद्रुतमिति प्रतीतेर्दुरपह्नवत्वात्, प्रागुक्तबाधस्य चोक्तदिशा अप्रयोजकत्वेन काठिण्यप्रतीत्यापातेन च द्रवत्वप्रतीतेर्भ्रमत्वायोगाच्च अनुच्छिद्यमानद्रवत्वाधिकरणं पीतं पार्थिवमिति पक्षनिर्देशः। उपष्टम्भकत्वेनोपगतमित्यर्थः। जले बाधनिरासाय पार्थिवमित्युक्तिः। तावत्युक्ते बाधः। अतः पीतमिति। घटादावबाधाय द्रवत्वाधिकरणमिति। लाक्षादावबाधाय अनुच्छिद्यमानेति। आश्रयासिद्धिनिरासायात्यन्ताग्निसंयोगेति। अप्रतिबन्धाग्नीत्यर्थः। जलपरमाणु-संयोगेनार्थान्तर वारणाय साध्ये प्रतिबन्धकान्तं विशेषणम्। स्वावयवावयवसंयोगेनार्थान्तरवारणाय प्रतिबन्धकान्तम्। हेतावव्यभिचाराय पार्थिवत्वादित्युक्तिः। घटादावव्यभिचारायद्रवत्वाधिकरणेति। लाक्षादावव्यभिचारायानुच्छिद्यमानेति। असिद्धिनिरासायात्यन्तेत्यादि ।। **उक्ततर्केति** ।। जलत्वे नैमित्तकद्रवत्वं न स्यात्। स्नेहवत्त्वं च स्यात्। पृथिवीत्वे च लाक्षादाविव द्रवत्वोच्छेदः स्यात् इति तर्केत्यर्थः ।।

## तर्कताण्डवम्

**यद्वा प्रतिबन्धकतया सिद्धं द्रुतद्रव्यं तैजसं असति द्रव-द्रव्यसम्बन्धेऽत्यन्ताग्निसंयोगेनानुच्छिद्यमानानित्यद्रवत्वाधि-करणत्वात् यन्नैवं तन्नैवं यथा घृतमिति व्यतिरेक्यन्तरात् तैजसत्वसिद्धिः ।।**

**नचात्रासाधारण्यम्। तस्य विपक्षे बाधकादर्शन-दशायामेव दोषत्वात्। प्रकृते च पृथिवीत्वादौ बाधकस्योक्त-त्वात् ।।**

**यद्वा द्रुततेजस्त्वमेव साध्यम्। इदं च साध्यं विशिष्टं क्वापि न प्रसिद्धमिति नासाधारण्यम्। न चैवमप्रसिद्धविशेषणत्वम्। तेजस्त्वं नाद्रवरूपवन्मात्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्य-**

**जातित्वात् द्रुतवृत्ति वा रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्य-जातित्वात् जलत्ववदिति सामान्यतो द्रुततेजस्सिद्धि-रित्याहुः ॥**

## न्यायदीपः

पर्यवसानत्या तैजसत्वं प्रसाध्य साक्षादेव तैजसत्वमथवेत्यादिना मण्युक्तप्रकारेणान्वाह ॥ **यद्वेति** ॥ जलपरमाण्वादावव्यभिचाराय हेतावनित्येति द्रवत्वविशेषणम्। लाक्षादावव्यभि-चारायानुच्छिद्यमानेति। असिद्धिनिरासायात्यन्तेत्यादि। क्वथ्यमानजलस्थघृतादावव्यभिचाराय सतीत्यादि ॥ **असाधारण्यमिति** ॥ तेजोन्तरे सत्यपि तैजसत्वे हेतोरभावादिति भावः। असाधारण्यस्य दोषत्वे संशयः सत्प्रतिपक्षो वा द्वारम्। स च विशेषादर्शनस्थळे सम्भवति न त्विहेत्याह ॥ **तस्येति** ॥ **बाधकस्येति** ॥ लाक्षादाविव द्रवत्वोच्छेदः स्यादित्यादिबाधकस्येत्यर्थः ॥

ननु द्रुततेजस्त्वमेव साध्यम्। तथा च पक्षाभावान्न साधारण्यमपि। किं तद्दोषतानिरासाय विपक्षे बाधकतर्कानुसारणायासेनेत्यतोऽन्येत्वितिमण्युक्तमेव प्रकारान्तरमाह ॥ **यद्वेति** ॥ प्रतिबन्धकतया सिद्धद्रुतद्रव्यस्येत्यनुषङ्गः ॥ **नाद्रवेति** ॥ अद्रवं यद्रूपवत्तन्मात्रावृत्ति रूपवद्द्रुतवृत्तीति फलितोर्थः। घटत्वादावव्यभिचाराय हेतौ साक्षाद्व्याप्येत्युक्तिः। तस्य द्रव्यत्वव्याप्यपृथिवीत्वव्याप्यत्वात्। अत्मनोऽन्यतरत्वादावव्यभिचाराय जातिपदम्। मणौ रूपवृत्तिद्रव्यत्वसाक्षाद्व्याप्येत्युक्तावप्येति हेत्वनुवादस्तु रूपवद्द्रुतवृत्तीतिपर्यवसितसाध्ये मनस्त्वे व्यभिचारेण तन्निरासाय रूपवत्पदसार्थक्येऽपि यथाश्रुतसाध्ये व्यभिचाराभावेन व्यर्थत्वमभिप्रेत्येति ध्येयम्। रूपवदित्यंशस्य साध्ये गुरुत्वादाह ॥ **द्रुतवृत्तित्वेति** ॥ मनस्त्वादावव्यभिचाराय हेतौ रूपवृत्तीति द्रव्यविशेषणम्। घटसौरालोका-न्यतरत्वादावव्यभिचाराय जातिपदम्।

## तर्कताण्डवम्

**एतदपि प्रागेव निरस्तम्। करकादाविवादृष्टविशेषस्यैव प्रतिबन्धकत्वोपपत्तेरनुपलब्धिबाधितभागान्तरकल्पनायोगात्। तैजसत्वसाधकव्यतिरेकिणि तु पक्ष एवासिद्धः। अत एव तर्कोऽपि निरालम्बनः। यच्चाप्रसिद्धविशेषणत्वनिरासाय अनुमानद्वयमुक्तम्।**

## न्यायदीपः

नन्वेवं प्रागुक्तद्रव्यसंयुक्तसाधकधर्मिग्राहकमानबाध इत्यत आह ॥ **न हीति** ॥ स्पृशति-अनुमापयतीत्यर्थः। सिद्ध्यसिद्धिभ्यां तादृशद्रव्यसिद्धौ तेजस्त्वेनैव सिद्ध्या तदभावसाधनं व्याहतम्। तदसिद्धौ चाश्रयस्यैवासिद्ध्या तस्य तेजोन्यत्वसाधनं व्याहतमित्यर्थः। कुतो न स्पृशतीत्यत आह ॥ **द्रुतेति** ॥ दाहविरोधित्वेनैवोपष्टभ्यद्रुत भागस्य तेजोन्यत्वानङ्गीकारे बाधः ॥ **अन्यथेति** ॥ **विरोधेति** ॥ द्रुतभागस्य दाहविरोधित्वात्कथं पृथिवीत्वमिति शङ्कायां तत्समाधानस्य यथा तेजस्त्वं कथमिति शङ्का धर्मिग्राहकमानेन तथैव सिद्धेरिति तथैव समाधीयते तथैव धर्मिग्राहकमादायैवावनित्वं सिद्धमित्यपि कर्तुं शक्यत्वादित्यर्थः ॥ **उभयत्रेति** ॥ अवनित्वे तेजस्त्वे चेत्यर्थः ॥

अयं भावः। दाहविरोधित्वेन कल्पितद्रुतभागस्य धर्मिग्राहकमानसिद्धत्वेन तेजस्त्वावगमश्चेत्तर्हि स भागः पृथिव्यात्मक एवास्तु। न च पृथिव्याः दाहाविरोधित्वादस्य च उपष्टम्भकद्रव्यविरोधित्वात् कथं पृथिवीत्वं तस्येति वाच्यम्। एवं सति तेजसोपि दाहाप्रतिबन्धकत्वादस्य च भागस्य दाहप्रति-बन्धकत्वात् कथं तेजस्त्वमिति साम्यात्॥

ननु-अत्यन्तानलेत्यादिप्रागुक्तानुमानरूपधर्मिग्राहकमानेनैव द्रुतभागस्य तेजस्त्वं सिद्धमिति तेजोन्तरेनुपलब्धमपि दाहविरोधित्वमत्रैवोपेयत इति चेत्। तर्हि तेनैव धर्मिमानेनावनित्वं सिद्धमिति पृथिव्यन्तरेऽदृष्टमपि दाहविरोधित्वमत्रैवोपेयत इति साम्यात्। तेनैवावनित्वं न सिद्धं चेत्तेजस्त्वं न सिद्धमिति॥

## तर्कताण्डवम्

**ननु-धर्मिग्राहकमानेनैव तैजसत्वसिद्धिः। उक्तरीत्या द्रुतभागे सिद्धे स भागः पृथिवी तेजो वेति सन्देहे पृथिवी-द्रवत्वत्वस्य लाक्षाद्रवत्वादावतिप्रसक्तत्वेन सुवर्णरजत-ताम्राद्युपष्टम्भकावनिभागवर्ति तत्तत्पृथिवीद्रवत्वत्वं दाह-प्रतिबन्धकतावच्छेदकं कल्प्यमिति गौरवम्। तेजोद्रवत्वत्व-मात्रं तु लघ्विति लाघवतर्कसहकारेण धर्मिग्राहकस्यैव तैजसत्वपर्यन्तं व्यापारादिति चेन्न। तेजोद्रवत्वस्य प्रकृत-प्रमाणप्रवृत्तेः प्रागसिद्धत्वेन लाघवानुपस्थितेः॥**

**किं च सुवर्णस्य तैजसत्वे स्मृतिषु ''कृष्णलं स्नपये''दिति, श्रुतिषु च तुलापुरुषादिदानेषु शरीरपरिमितत्व-सहस्रपलपरिमितत्वाद्युक्तिः श्रपणाद्युक्तिश्च न स्यात्। न च तत्रोपष्टम्भकपरमेव सुवर्णपदम्। अशक्यपरत्वे लक्षणाऽऽ-पत्तेः। तस्यापि शक्यत्वे नानार्थकत्वात्॥**

## न्यायदीपः

द्रुतभागस्य पृथिवीत्वसाधनं तेजोन्यत्वसाधनं वा धर्मिग्राहकमानबाधितमिति भावेनाशङ्कते ॥ **नन्विति** ॥ **तेजस्त्वसिद्धिरिति** ॥ द्रुतभागस्येति शेषः ॥ **उक्तेति** ॥ अत्यन्तानलेत्युक्तरीत्येर्थः ॥ **लाक्षाद्रवत्वादाविति** ॥ तस्य दाहप्रतिबन्धकत्वादिति भावः ॥ **तेजोद्रवत्वमात्रमिति** ॥ तस्य दाहाप्रतिबन्धके क्वाप्यनतिप्रसक्तत्वादिति भावः ॥ **लाघवतर्केति** ॥ कार्यतानुमानस्य कर्त्रैक्यपर्यन्ते व्यापारवदिति भावः ॥ **प्रकृतेति** ॥ अत्यन्तानलेत्युक्तप्रमाणेत्यर्थः।

एवमत्यन्तानलेत्याद्युक्तमनुमानं द्रवद्रव्यसंयुक्तत्वसाधने तस्य तेजस्त्वसाधने च न क्षममप्रयोजकत्वादेरित्युक्तम्। तर्कपराहतं च तदिति भावेन प्रतिकूलतर्कानाह ॥ **किं चेति** ॥ **स्मृति-ष्विति** ॥ स्मृतिषु शरीरपरिमितत्वाद्युक्तिः। श्रुतिषुश्रवणाद्युक्तिरित्यन्वयः ॥

''सुवर्णं रजतं वाथ वस्त्रं वान्यदभीप्सितम्।
यावत्साम्यं भवेद्राजन्नात्मनोभ्यधिकं तु वा।
तावत्तुलायामारोप्य सर्वं दद्याद् द्विजातये॥

इति स्कान्दे।

''तत्रैकत्र तुलाभागे सुस्नाते धौतवाससि।
स्वङ्गधरे भूते सम्यक्पद्मासने स्थितः।
ततोपरं तुलाभागे न्यसेयुर्द्विजपुङ्गवाः।
सममभ्यधिकं यावत्काञ्चनं चाभिनिर्मलम्॥

इति मात्स्ये स्मरणात्। तथा मात्स्य एव स्वर्णकामधेन्वादिदानप्रस्तावे-

''काञ्चनस्यापि शुद्धस्य धेनुं वत्सं च कारयेत्।
उत्तमा पलसाहस्रैस्तदर्धेन तु मध्यमा।

कनीयसी तदर्धेन कामधेनुः प्रकीर्तिता॥

इति स्मरणादिति भावः॥ **कृष्णलमिति**॥ स्वर्णमसिः। प्रजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रुतेरर्थात्प्राप्तस्य वा चोदकप्राप्तश्रवणस्य वाऽनुवादः। "कृष्णलंश्रये"दिति शाखान्तरवाक्यं वा। अत एव दशमे द्वितीये पादे "कृष्णलेष्वर्थलोपादपाक" इत्यधिकरणे कृष्णलेष्ववयवविक्लृप्तादिकार्याभावादपाक इति प्राप्ते श्रपणवचनापथानुपपत्त्या उष्मीकरणमात्ररूपः पाकोऽवश्यं कर्तव्य इति सिद्धान्तितमिति भावः॥

॥ **तत्रेति** ॥ शरीरपरिमितत्वाद्युक्तिस्थळ इत्यर्थः। उपष्टम्भकेऽपि सुवर्णपदस्य शक्तिर्नास्ति उतास्ति। आद्य आह॥ **अशक्यपरत्व इति**॥ अन्त्य आह॥ **तस्यापि शक्यत्वेति**॥ **नानार्थत्वेति**॥ तस्य न्यायश्चानेकार्थत्वमितिन्यायेनान्याय्यत्वादितिभावः।

## तर्कताण्डवम्

**एतेन–**

**पीतिमा च गुरुत्वं च दाहे यत्र च रक्तता।**
**तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते॥**

**अविच्छिन्नद्रवत्वं च वस्तु यत्त्विह भासते।**
**सुवर्णव्यवहारोऽयं यत्र शास्त्रे प्रवर्तते॥**

**वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यं प्रवर्तते।**
**रसस्वभावो मधुरो ध्वनिश्च मधुरो यथा॥**

**इति लीलावत्युक्तं निरस्तम्। वस्तुभेदस्यैवासिद्धेः। पार्थिव एव शास्त्रीयव्यवहारस्य दर्शितत्वाच्च। सम्भवत्येकार्थत्वे नानार्थत्वायोगाच्च॥**

**किं च सिध्यतु दाहप्रतिबन्धकस्य द्रुतभागस्य तैजसत्वम्। तथाऽपि स भाग आवश्यकवह्निगत एवास्तु। न तु स्वर्णरजतताम्रादिरूपोपष्टम्भकभागगतः। गौरवात्॥**

## न्यायदीपः

**॥ एतेनेति ॥** सुवर्णे द्रव्यान्तराभावत्वकथनेनेत्यर्थः। निरस्तमित्यन्वयः। अत्र वस्तुनि पीतिमा गुरुत्वं च दाहनिमित्तरक्तता चोपलभ्यते तस्येत्यर्थः। तस्मिन् पीतिमाद्यधिकरणे कस्य सुवर्णत्व-व्यवहारो मुख्यः कस्यामुख्य इत्यत आह **॥ अविच्छिन्नेति ॥** अवच्छिन्नद्रवत्वमिति बहुव्रीहिः। वस्तुविशेषणं दाह इत्यनुषङ्गः। शब्दसाम्यं सुवर्णशब्दसाम्यमुष्टम्भकेऽपि प्रवर्तते। मधुरशब्दः रसे मुख्योऽपि वीणाध्वनिर्मधुरः वेणुध्वनिर्मधुर इति यथा तथेत्यर्थः **॥ दर्शितत्वादिति ॥** शरीरपरि-मितत्त्वादिकथनेनेत्यर्थः

**॥ नानार्थत्वेति ॥** उपष्टम्भकस्याशक्यत्वेन लक्षणापत्त्यशक्यत्वेऽवश्यम्भाविनि नानार्थत्वापात इति भावः **॥ आवश्यकेति ॥** द्रवत्वार्थं वह्निसंयोगस्यापेक्षितत्वादिति भावः **॥ वह्निगत इति ॥** उपष्टम्भकपार्थिवसम्बद्धो यो वह्निस्तद्गत इत्यर्थः।

व्यक्तिमादाय गौरववदवच्छेदकैक्येन लाघवस्यापि साम्यात् कोऽत्र पक्षे विशेष इत्याक्षिपति **॥ यद्यपीत्यादिना ॥**

## तर्कताण्डवम्

**यद्यपि द्रुततेजोऽधिकरणीभूतव्यक्तिबहुत्वमधिकरणता-वच्छेदकधर्मैक्यं चोभयत्र समम्। उपष्टम्भकसुवर्णादि-व्यक्तीनामिव वह्निव्यक्तीनामपि बहुत्वात्। बहुषु वह्निषु वह्नित्वस्यैवोपष्टम्भकेषु सुवर्णादिष्वप्यधिकरणता-वच्छेदकस्य पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्व-स्यैकत्वात्।**

**तथाप्युपष्टम्भकेष्वधिकरणतावच्छेदकमौपाधिकधर्म-त्वाद् गुरु वह्नित्वं तु जातित्वाल्लघु। वह्निगतस्यापि तस्योप-ष्टम्भकसंयुक्तत्वात्तत्र रूपपरावृत्तिप्रतिबन्धकता च युक्ता। न चाविनिर्भागवर्तिन एव संयोगः प्रतिबन्धकः। जलसम्बन्धेन जलमध्यस्थपटादौ रूपपरावृत्तिप्रतिबन्धदर्शनात्। वह्नौ**

**तादृशभागस्यानुपलब्धिबाधस्तूपष्टम्भकेऽपि समः। वह्निगतत्वे तत्सम्बद्धपटादिरूपस्यापि प्रतिबन्धः स्यादिति चोद्यं स्वभावादुपष्टम्भकस्यैव रूपं प्रतिबध्नातीति समाधानं चोपष्टम्भकगतत्वे च समम्॥**

## न्यायदीपः

द्रुततेजोलक्षणभागस्याधिकरणीभूतव्यक्तयो यास्तासां बहुत्वमित्यर्थः ॥ **अधिकरणतेति** ॥ द्रुततेजोभागाधिकरणतेत्यर्थः ॥ **उभयत्रेति** ॥ द्रुतभागः वह्निगत इति पक्षे उपष्टम्भकगतपक्षे चेत्यर्थः। सममित्युक्तं व्यनक्ति ॥ **उपष्टम्भकेति** ॥ उपष्टम्भकसुवर्णरजतताम्रादिव्यक्तीनामिवेत्यर्थः। तज्जन्यतया रजादावपि रजतादिपदवाच्यतया द्रुतभागस्य तेजस्त्वोपगमात् रजतादेरप्युपादानम्। अन्यथा तत्रेवात्राप्युपष्टभ्यभागान्तरं विनोपष्टम्भकद्रवत्वादिनैव पूर्वोक्तदिशोपपत्तौ तत्संयुक्तद्रव्यान्तरकल्पनाभावप्रसङ्गादिति भावः।

॥ **वह्नीति** ॥ उपष्टम्भकसम्बद्धसुवर्णादिपदवाच्यवह्निव्यक्तीनामित्यर्थः ॥ **वह्निष्विति** ॥ उपष्टम्भकसम्बद्धद्रुततेजोधिकरणवह्निव्यक्तिष्वित्यर्थः। अवच्छेदकलाघवेविशेष इति समाधत्ते ॥ **तथापीति** ॥ **उपष्टम्भकेष्विति** ॥ उपष्टम्भकत्वेनत्वदङ्गीकृतेषु सुवर्णादिपदवाच्यद्रुततेजोभागाधिकरणेष्वित्यर्थः ॥

ननु-वह्निगतस्य द्रुततेजोभागस्य कथमुपष्टम्भकभूतपार्थिवरूपापरावृत्तिहेतुत्वं व्यधिकरणत्वादित्यत आह ॥ **वह्निगतस्यापीति** ॥ ननु पृथग्भूत वह्निसंयोगः प्रतिबन्धकः कथमित्याशङ्क्य निराह ॥ **न चेति** ॥ तत्र हेतूनाह ॥ **जलेति** ॥ **उपष्टम्भकेति** ॥ उपष्टम्भकगत एव तादृशो द्रुतभाग इत्यत्रापि पूर्वोक्तदिशाऽनुपलम्भबाध एवेत्यर्थः ॥ नन्वस्त्वेतावता न सुवर्णस्य पार्थिवत्वं भवदभिमतं प्राप्तमिति चेन्न। परमतासिद्धेरेव अभिलषितत्वादिति भावः ॥

## तर्कताण्डवम्

**किञ्चास्तूपष्टम्भकाविनिर्भावगवर्त्येव स भागः। तथाऽपि तस्य सुवर्णत्वादिजातिमत्त्वे न मानम्। लोकसिद्धसुवर्णरजतादौ विजातीयरूप प्रतिबन्धकत्वेन सिध्यतस्तस्य नानाजातीयत्वे गौरवादेकजातीयत्वेनैव सिद्धेः।**

तस्माल्लोकसिद्धसुवर्णरूपपरावृत्तिप्रतिबन्धस्य क्लृप्तेन आवश्यकेन भोजकादृष्टेनैव वा द्रवत्वस्य प्रतिबन्धकत्वेऽपि क्लृप्तेन समानाधिकरणद्रवत्वेनैव वा व्यधिकरणस्य द्रवत्वस्य प्रतिबन्धकत्वेपि द्रवत्वाधिकरणान्तरस्य क्लृप्तेन पार्थिवत्वेनैव वा तैजसत्वेऽपि लाघवात्तस्य दाहकवह्नि-गतत्वेनैव वोपष्टम्भकसुवर्णाद्यविनिर्भागवर्तित्वेऽपि तस्यासुवर्णत्वेनैव वोपपत्तेर्न सुवर्णस्य तैजसत्वसिद्धिः।

सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधाऽन्यथोपपत्तिसमर्थनम्॥ १३ ॥

## न्यायदीपः

ननु द्रुतत्वमुपष्टम्भकस्थमेवोपलभ्यत इति तदद्रुत एव कश्चिद्भागः कल्प्यत इत्यत आह ॥ **किं चास्त्विति** ॥ न मानमिति पदविभागः ॥ **नानेति** ॥ सुवर्णरजतताम्रादिजातीयत्व इत्यर्थः ॥

प्रागुक्तं सर्वं बुद्ध्यारोहायोपसंहारव्याजेन दर्शयति ॥ **तस्मादिति** ॥ तस्य विवरणं लोकेत्यादिनोपपत्तेरित्यन्तेन। किं चास्तु द्रवद्रव्यत्वमित्यादिनोक्तमाह ॥ **द्रवत्वस्येति** ॥ किञ्चास्तु द्रुतमित्यादिनोक्तमाह ॥ **व्यधिकरणस्येति** ॥ किं चास्त्वित्यादिनोक्तमाह ॥ **उपष्टम्भकेति** ॥

सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधान्यथोपपत्तिसमर्थनम् ॥ १३ ॥

## अथसुवर्णस्य तैजसत्वे मण्याद्युक्तप्रकारद्वयभङ्गः ।

## तर्कताण्डवम्

यदपि मणौ लीलावत्युक्तं मतमुक्तमत्यन्ताग्निसंयोगे नानुच्छिद्यमानद्रवत्वाधिकरणं रूपवत् बहिरिन्द्रियप्रत्यक्ष-द्रव्यत्वात्, पृथिव्यादित्रयान्तर्गतं च रूपत्वात्, तत्रापि न जलम् पूर्वोक्तहेतुद्वयात्, नापि पार्थिवम् असति द्रव-

**द्रव्यसम्बन्धेऽत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्, जलवदिति परिशेषात्तेजस्त्वसिद्धिरिति। तन्न। सुवर्णे द्रुतद्रुततरत्वादेः क्रमशः प्रतीत्या द्रवत्वानुच्छेदस्य असिद्धेः।**

**नच द्रवत्वप्रागभावासमानाधिकरणध्वंसाप्रतियोगिद्रवत्वाधिकरणत्वं हेतुः, स च नासिद्ध इति वाच्यम्। प्रबलानळसंयोगेन द्रव्यस्य नष्टतया द्रवत्वध्वंसस्य द्रवत्वप्रागभावासमानाधिकरणत्वेन हेत्वसिद्धेः॥**

## न्यायदीपः

**॥ मतमुक्तमिति ॥** नवीनास्त्वित्यादिनोक्तमित्यर्थः। तदर्थं निष्कृष्यानुवदति **॥ अत्यन्तेति ॥** अधिकरणमित्यन्तं पक्षः। सुवर्णरजतताम्रादिकं विशेष्यं ध्येयम्। रूपवदिति साध्यम्। आश्रयासिद्धिनिरासाय सत्यन्तम्। जीवात्मनि गगने रूपादौ चाव्यभिचाराय बहिरिन्द्रियेति प्रत्येक्षेति द्रव्यत्वादिति च हेतावुक्तिः। अस्मिन्नेव पक्षनिर्देशे साध्यहेत्वन्तरे आह **॥ पृथिव्यादीति ॥** रूपित्वहेतोरसिद्धिनिरासाय पूर्वप्रयोगः **॥ तत्रापीति ॥** पृथिव्यादित्रया-न्तर्गतत्वेऽपीत्यर्थः **॥ पूर्वोक्तेति ॥** नैमित्तिकद्रवत्ववत्त्वात्, स्नेहशून्यत्वाच्च, स्नेहवत्त्वे तदधीनसङ्ग्रहप्रसङ्गादिति पूर्वभङ्गोक्तहेतुद्वयादित्यर्थः। लाक्षावदिति भावः॥

**॥ नापि पार्थिवमिति ॥** उक्तरूपद्रवत्वाधिकरणं वस्त्वित्यनुषङ्गः। अत्र सति द्रवद्रव्यसम्बन्ध इति पक्षो विशेषणीयः। तेन क्वथ्यमानजलमध्यस्थघटादावव्यभिचाराय हेतावसति द्रवद्रव्यसम्बन्ध इत्युक्तिः। असिद्धिनिरासायात्यन्ताग्निसंयोगेऽपीत्युक्तिः। अप्रयोजकत्वनिरासायानुच्छिद्यमानेति। यद्वा लाक्षाघृतादावव्यभिचारायानुच्छिद्यमानेत्युक्तिः॥

असिद्ध्युद्धारं मण्युक्तमाशङ्क्य निराह **॥ न च द्रवत्वेति ॥** एकस्य द्रवत्वस्य नाशे पूर्वपूर्वस्मादुत्कृष्टोत्कृष्टतरोत्कृष्टतमद्रवत्वानामुत्तरोत्तरेषां तत्र जायमानत्वेन पूर्वपूर्वद्रव्यत्वध्वंसस्योत्तरोत्तरद्रवत्वप्रागभावसमानाधिकरणत्वेन तदसमानाधिकरणध्वंसाप्रतियोगित्वाद्द्रवत्वानां तादृशद्रवत्वाधिकरणत्वं नासिद्धमित्यर्थः **॥ नष्टतयेति ॥** पीलुपाकप्रक्रियावयवक्रियया तत्संयोगनाशेन परमाणु-

द्रव्यनाशे सति पुनर्भोजकादृष्टेन परमाणुक्रियया तत्संयोगद्वारा द्रव्यान्तराणामुत्पत्तेस्तत्रोपगमादिति भावः ।।

## तर्कताण्डवम्

**अथ सुवर्णद्रवत्वमाश्रयनाशान्नश्यति न त्वग्निसंयोगात्। तथात्वे घृत इव द्रवत्वान्तरं नोत्पद्येत। एवं चाग्निसंयोगे सत्यपि तद्धेतुकनाशाप्रतियोगिद्रवत्वाधिकरणत्वं हेतुः स च नासिद्ध इति चेन्न। तथाप्युपष्टम्भके पीते पार्थिवे उक्तरूपस्य द्रवत्वानुच्छेदस्य दर्शनेन व्यभिचारात्।।**

## न्यायदीपः

मण्युक्तमेवासिद्धिशून्यहेत्वन्तरमाशङ्कते।। **अथेत्यादिना** ।। **अग्निसंयोग इति** ।। आश्रयानाशाद्यत्र घृते द्रवत्वानाशस्तत्राव्यभिचाराय सत्यन्तम् ।। **तथापीति** ।। असिद्ध्यभावेऽपीत्यर्थः। पार्थिवत्वोपपादनाय पीतेत्युक्तिः। साध्याभावोपपादनाय पार्थिव इत्युक्तिः।

## तर्कताण्डवम्

**ननु-पार्थिवद्रवत्वत्वमेवाग्निसंयोगनाश्यत्वे तन्त्रम्। न तु जन्यद्रवत्वत्वम्। सुवर्णादिद्रवत्वेतिप्रसक्तेः। नापि घृतलाक्षादिद्रवत्वम्। अननुगमात्। एवं च पीते पार्थिवे द्रवत्वाङ्गीकारे तस्योच्छेदापत्त्या पीतं द्रुतमिति प्रतीतिः भ्रान्तिरिति चेन्न।**

**अनुभवसिद्धं पीते द्रवत्वमपलप्य तदसिद्धस्य त्वदभिमततेजसि द्रवत्वस्य स्वीकारे दृष्टहान्यदृष्टकल्पनाप्रसङ्गात्।**

**अन्यथा-पार्थिवद्रवत्वस्याग्निसंयोगनाश्यतायां तन्त्रत्वे सिद्धे पीते पार्थिवेऽनुच्छिद्यमानद्रवत्वा भावसिद्धिः तत्सिद्धौ**

**न चाप्रयोजकम्। द्रवद्रव्यसम्बन्धं विना पार्थिवेऽप्यत्यन्तानळसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वनियमात्।**

**तच्च द्रवद्रव्यं न जलम् नैमित्तिकद्रवत्ववत्त्वात् स्नेहशून्यत्वाच्च, स्नेहवत्त्वे तदधीनसङ्ग्रहप्रसङ्गात्, नापि पार्थिवम् दाहविरोधित्वात्, तद्द्रव्यं रूपवच्च द्रवत्ववत्त्वादेव, तैजसं च पृथिवीजलान्यत्वे सति रूपवत्त्वादिति धर्मिग्राहकमानसिद्धं तेजस्त्वम्'' इति॥**

## न्यायदीपः

एवं सुवर्णस्य पार्थिवत्वे प्रयुक्तहेतूनामसिद्धिसिद्धसाधनतयोर्निरासाय तत्र पराभिमतभागान्तरे अनुपलब्धिबाधमुक्त्वा तत्साधकतया पराभिमतानुमानमप्यनूद्य निराह **॥ अत्रेत्यादिना ॥** मण्युक्तस्य निरासेन प्राचीनमतं च प्रत्युक्तमिति ज्ञापनायोक्तम् **॥ मणावुदयनोक्तमतमुक्तमिति ॥** प्रत्यक्षखण्डे सुवर्णतैजसवादे एतत्प्रयोगोक्त्यनन्तरमित्याचार्योक्तेरिति मणावुक्तेरिति भावः **॥ भागान्तरमिति ॥** सुवर्णा पार्थिवभागसम्पृक्तं भागान्तरमित्यर्थः। तथा च तत्र प्रागुक्तहेतवोऽसिद्धा इति भावः

**॥ अत्यन्तेति ॥** पार्थिवमित्यन्तं पक्षः। पार्थिवमित्येवोक्ते घटादौ बाधः। तन्निरासायात्यन्तेत्यादिविशेषणम्। तादृशस्यामघटादौ बाधासिद्ध्योर्निरासाय पीतरूपाधिकरणमिति। आपादकदशायां अबाधायात्यन्तानळसंयोगीति। पार्थिवमिति स्वरूपोक्तिः। जलपरमाण्वादिसंयुक्तत्वेनार्थान्तर-निरासाय साध्ये प्रतिबन्धकान्तरोक्तिः। स्वावयवावयव एव पूर्वरूपपरावृत्तिप्रतिबन्धकोस्तु। तथा च तत्संयुक्तत्वेनार्थान्तरवारणाय द्रवद्रव्येत्युक्तिः। स्वावयवावयवस्तु न द्रवद्रव्यमित्याहुः।

स्तम्भादावव्यभिचाराय हेतौ सत्यन्तम्। पच्यमानघटादावव्यभिचाराय पूर्वरूपविजातीयरूपानधिकरणेति विशेषणम्। जले व्यभिचारवारणाय पार्थिवत्वादित्युक्तिः। दृष्टान्तेऽत्यन्तानळेत्यादिहेत्वंशोपपादनाय क्वथ्यमानेत्युक्तिः। साध्योपपादनाय जलमध्यस्थेत्युक्तिः। जलमध्यस्थेत्युक्त्यैव पूर्वरूपविजातीयरूपानधिकरणस्य स्फुटत्वात्पार्थिवत्वलाभाय घटवदित्युक्तिः **॥ अप्रयो-**

**जकमिति ॥** अनुमानमित्यन्वयः ॥

नन्वेतावता द्रवद्रव्यं तैजसमिति कुत इत्यतः परिशेषादिति भावेनाह **॥ तच्चेति ॥ सङ्ग्रहेति ॥** यथा जलं पार्थिवरजांसि पिण्डीभूततया सङ्गृह्णाति, एवं द्रवीभूतं सुवर्णं न सङ्गृह्णाति किञ्चिदिति न स्नेहरूपचिक्कणतालक्षणजलासाधारणधर्माभावान्न जलमित्यर्थः

**॥ नापीति ॥** तच्च द्रवद्रव्यम्पार्थिवं न भवति। पार्थिवस्य स्वसंयुक्तोपष्टम्भकभागे यो भस्मीभावलक्षणो दाहस्तदविरोधित्वादस्य च द्रवद्रव्यस्य तद्विरोधित्वादित्यर्थः ॥

तर्हि तद्द्रव्यं वाय्वादिरूपं कुतो नेत्यत आह **॥ रूपवच्चेति ॥** तत्र हेतुमाह **॥ द्रव्यत्ववत्त्वादिति ॥** जलवदिति भावः **॥ तैजसं चेति ॥** द्रव्यमित्यनुषङ्गः।

ननु-तेजोन्तरे नैमित्तिकद्रवत्वविजातीयरूपे प्रतिबन्धकत्वयोरदृष्टेरत्र कथं तदधिकरणस्य तैजसत्वकल्पनमित्यत आह **॥ इति धर्मिग्राहकेति ॥** दाहविरोधित्वनैमित्तिकद्रवत्वरूपत्वहेतुभिः सहकृतप्राचीनेन द्रवद्रव्यसंयुक्तत्वसाधकेनानुमानेन सिद्धमित्यर्थः ॥

## तर्कताण्डवम्

**तन्न। त्वदुक्तं रूपापरावृत्तिरूपं लिङ्गं हि रूपपरावृत्ति प्रतिबन्धककिञ्चिद्द्रत्वेनैवोपपन्नं सन्न प्रतिबन्धकस्य द्रवत्वपर्यन्तं धावति। येन द्रवत्ववतो रूपित्वमित्यादि-त्वदुक्तरीत्या तेजस्त्वं सिध्येत्। सम्भवति चेह क्लृप्तं प्रतिबन्धकान्तरम्। करकादौ सांसिद्धिकद्रवत्वस्येवात्यन्ता-नळसंयुक्ते पार्थिवे वज्रे पूर्वरूपविजातीयरूपस्येव सुवर्णेऽपि विजातीयरूपस्य भोजकादृष्टविशेषादेव प्रतिबन्धोपपत्तेः।**

**अन्यथा करकादौ द्रवत्वप्रतिबन्धकं कठिनं भागान्तरं वज्रेऽपि रूपपरावृत्तिप्रतिबन्धकं द्रुतं भागान्तरं कल्प्यं स्यात्। तत्र वज्राद्यतिरिक्तं भागान्तरमनुपलब्धिबाधितं चेदिहापि पीतिमाश्रयातिरिक्तं द्रुतमनुपलब्धिबाधितमिति समम्।**

**स्वीकृतं च त्वयाऽपि तेजोऽन्तरेऽदृष्टमप्यग्निसंयोगाद् द्रवत्वम-दृष्टविशेषोपबन्धात्तेजोरूपे सुवर्णे॥**

**किं चास्तु द्रवत्वमेव प्रतिबन्धकम्। तत्तु द्रवत्वं पीत-पार्थिवद्रवभागगतमेवास्तु। क्लृप्तत्वात्। समानाधि-करणत्वाच्च। न तूपष्टम्भगतं धर्मिणा सह कल्प्यत्वाद्व्यधि-करणत्वाच्च। अन्यथा क्वाथ्यमानजले रूपापरावृत्त्यर्थं द्रव-द्रव्यान्तरसंयोगः कल्प्यः स्यात्॥**

## न्यायदीपः

आद्यानुमाने हेतोरुक्तसाध्येन विनाऽन्यथोपपत्त्याऽप्रयोजकत्वेन धर्मिग्राहकमानं निराह ॥ **त्वदुक्तमित्यादिना** ॥ ननु-द्रवत्वहीनमन्यत्तादृशप्रतिबन्धकं वस्तु नास्त्येवेत्यत आह ॥ **सम्भवति चेति** ॥ किं तददृष्टं चेत्कथं च प्रतिबन्धकता क्वाप्यदृष्टेरित्यतो दृष्टान्तपूर्वं व्यनक्ति ॥ **करकेति** ॥

नन्वदृष्टं दृष्टसामग्रीसम्पत्तावेवोपयुक्तमुपलब्धम् न तु किञ्चित्करमित्यत आह ॥ **स्वीकृतं चेति** ॥ द्रवत्वद्वारैव दृष्टस्य रूपपरावृत्तिप्रतिबन्धकता न साक्षात्क्वथ्यमानजलान्तरस्थघटादौ तथैव दृष्टेः। अन्यथादृष्टकल्पनाऽऽपत्तेः। करकादावनन्यगत्यैव तथाऽऽश्रयणमित्यत आह ॥ **किं चास्त्विति** ॥ **पीतपार्थिवेति** ॥ त्वयोपष्टम्भकत्वेनोपात्तपार्थिवेत्यर्थः ॥ **क्लृप्तत्वादिति** ॥ धर्मिणो धर्मस्य चोभयोरपि प्रमितत्वात्प्रतिबद्ध्यरूपेण सह प्रतिबन्धकत्वाभिमतद्रवत्वस्यैकाधिकरणत्वाच्चेत्यर्थः ॥ **न तूपष्टम्भेति** ॥ त्वदभिमततेजो मतमित्यर्थः

॥ **धर्मिणेति** ॥ तदनुपलम्भस्य प्रागुपपादितत्वादिति भावः ॥ **व्यधिकरणत्वाच्चेति** ॥ प्रतिबन्धेन पार्थिवरूपेण भिन्नाधिकरणमेव द्रवत्वं द्रव्यान्तरगतरूपपरावृत्तिप्रतिबन्धकं तथैव कल्पनादित्यत आह ॥ **अन्यथेति** ॥ तत्रानुपलम्भबाधश्चेदिहापि तथैवानुपलब्धेरुक्तत्वात्। क्लृप्तेनैवोपपत्तौ नाक्लृप्तकल्पनेत्यस्यापि साम्यादिति भावः।

## तर्कताण्डवम्

**ननु-पार्थिवद्रवत्वस्य स्वसमानाधिकरणरूपपरावृत्ति-प्रतिबन्धकत्वे लाक्षादिद्रवत्वमपि तथा स्यादिति चेन्न।**

**त्वदभिमतद्रुततेजसः स्वसंयुक्ते पीतद्रव्ये रूपपरावृत्तिप्रतिबन्धकत्वे स्वसंयुक्ते पटादावपि तथा स्यादिति साम्यात्। स्वभावविशेषकल्पनेन समाधानं तु प्रकृतेऽपि समम्॥**

**किं चास्तु द्रुतं द्रव्यान्तरमेव प्रतिबन्धकम्। तथाऽपि कथं तस्य तेजस्त्वम्। पृथिव्यन्यत्वसाधकेन दाहविरोधित्वेनैव तेजोन्यत्वस्य सुतरां सिद्धेः।**

## न्यायदीपः

कुसुमाञ्जल्याद्यभिमतमाशङ्कते ॥ **नन्विति** ॥ क्वचिद्व्यभिचारदृष्टमात्रेणाप्रतिबन्धकत्वे त्वदभिमतोपष्टम्भकस्यापि तथात्वमस्त्विति भावेनाह ॥ **त्वदिति** ॥

ननु तस्योपष्टम्भक एव प्रतिबन्धकत्वं स्वभाव इत्यत आह ॥ **स्वभावेति** ॥ एवं द्रवद्रव्यसंयुक्तमिति साध्ये द्रवत्वं वा तादृशद्रव्यसंयुक्तत्वं विना वा हेतुरुपपन्न इत्यादिना हेतुरप्रयोजक इत्युक्तमिदानीं तदुपेत्यापि परिशेषतस्तेजस्त्वोक्तिरयुक्तेत्याह ॥ **किञ्चेति** ॥ **प्रतिबन्धकमिति** ॥ पूर्वरूपविजातीयरूपप्रतिबन्धकमित्यर्थः ॥ **तेजोन्यत्वस्येति** ॥ उपष्टभ्यतया त्वदभिमतं द्रवद्रव्यान्तरं न तेजो भवितुमर्हति दाहविरोधित्वात् जलवदिति प्रयोगसम्भवात्तेजसश्च दाहानुकूलत्वेन तद्विरोधित्वाभावादिति भावः॥

## तर्कताण्डवम्

**न हि द्रवद्रव्यसाधकं धर्मिग्राहकं मानं तस्य द्रवत्वसमानाधिकरणं पार्थिवत्वं विहाय नियमेन द्रवत्वव्यधिकरणं तेजस्त्वं स्पृशति। येन दाहविरोधित्वेन तेजोन्यत्वसाधनं धर्मिसिद्ध्यसिद्धिभ्यां व्याहतं स्यात्। द्रुततेजसोप्रसिद्ध्या व्याप्त्यग्रहात्। अन्यथा पृथिव्यात्मक एव स भागोस्तु। धर्मिग्राहकमानमादाय विरोधशङ्कासमाधानस्य उभयत्र साम्यात्॥**

**तदपि न। तेजस्त्वं नागुरुरूपवन्मात्रवृत्ति द्रव्यत्व-साक्षाद्व्याप्यजातित्वात् गुरुवृत्ति वा रूपवद्वृत्तिद्रव्यत्व-साक्षाद्व्याप्यजातित्वात् जलत्ववत् इत्यादिना तेजस्त्वस्य गुरुवृत्तित्वस्याप्यापत्त्याप्रयोजकत्वात्॥**

## न्यायदीपः

प्रागेव पूर्वभङ्ग एवेत्यर्थः। तद्व्यनक्ति **॥ कारणादाविति ॥** एतदपि योग्यानुपलब्धिबाधेन अन्यथैवोपपत्तिपश्चकेन च प्रागेव निरस्तमिति क्वचित्पाठः।

**॥ पक्ष एवासिद्ध इति ॥** सुवर्णे द्रुतद्रुततरत्वादेः क्रमशः प्रतीत्या द्रवत्वानुच्छेदस्यासिद्धेरित्युक्त-दिशाऽनुच्छिद्यमान द्रवत्वाधिकरणत्वस्यासिद्ध्या पक्ष एवासिद्धः। किं दोषान्तरेणेत्यर्थः। अत एवानुच्छिद्यमानद्रवत्वाधिकरणत्वासिद्ध्या पक्षासिद्धेरेव। द्रुतद्रव्यसंयुक्तत्वरूपसाध्यस्यासिद्धत्वात् यदि तादृशद्रुतद्रव्यं पार्थिवं स्याद्द्रुतत्वोच्छेदः स्यात् इति तर्को निरालम्बनः इत्यर्थः **॥ नागुरुरूप-वन्मात्रवृत्तीति ॥** गुरुत्वहीनरूपवन्मात्रवृत्ति नेत्यर्थः॥

## तर्कताण्डवम्

**एतेन सुवर्णं तैजसं समानाधिकरणद्रवत्वसामग्र्यसम-वहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिद्रवत्वत्वव्याप्यजाति-मद्द्रवत्ववत्त्वात् व्यतिरेकेण घृतवत्,**

**सुवर्णारम्भकाः परमाणवो न पार्थिवाः अत्यन्ताग्नि-संयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्। जलपर-माणुवत्। तैजसा वा उक्तहेतोः। व्यतिरेकेण घृतपरमाणु-वदित्यादीन्यपि निरस्तानि। पीते व्यभिचारादप्रयोजक-त्वाच्च॥**

**सुवर्णस्यतैजसत्वे मण्याद्युक्तप्रकारद्वयभङ्गः ॥ १४॥**

## न्यायदीपः

अथ वा घटे द्रुतत्वोच्छेदसमय समानाधिकरणद्रवत्वसामग्रीसमवधानं नास्ति सुवर्णत्व-मस्तीत्यादिना मण्युक्तान्येव प्रयोगान्तराण्यनूद्य निराह ।। **एतेनेति** ।। सुवर्णमित्यादिनोपष्टभ्यद्रुतभागो गृह्यते।

।। **समानेति** ।। समानाधिकरणं यद्द्रवत्वं तत्सामग्र्यसमवहितो योऽग्निसंयोगस्तज्जन्योध्वंस-प्रतियोगीनि घृतादिनिष्ठद्रवत्वानि तदवृत्तिर्जातिः सुवर्णद्रवत्व एवेति नासिद्धिः । अत्र नञ्द्वयाप्रवेशेन तादृशसामग्रीसमवहिताग्निसंयोगजन्यध्वंसप्रतियोगिवृत्तीत्युक्तावग्निसंयोगप्रयोज्यनैमित्तिक-द्रवत्वमात्रनिष्ठजातिविशेषमादाय घृते व्यभिचारापातात्। इत्यादीत्यादिपदेन सुवर्णमपार्थिवारब्धं तैजसारब्धं वा अपार्थिवं तैजसां वा अत्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वा-रब्धत्वादित्यादिसङ्ग्रहः ।

।। **पीत इति** ।। उपष्टम्भकपार्थिवभाग इत्यर्थः। तत्रापि द्रवत्वस्योपपादितत्वादिति भावः। तेजस्त्वेन विनाऽपि हेतूनामुपपत्तेः प्रागुक्तरीत्यासम्भवादाह ।। **अप्रयोजकत्वाच्चेति** ।। **प्रकार-द्वयेति** ।। उपष्टम्भकेद्रवत्वनास्तित्वास्तित्वप्रकारद्वयभङ्ग इत्यर्थः ।।

सुवर्णतैजसत्वे मृण्याद्युक्तप्रकारद्वयभङ्गः ।। १४।।

## अथ सुवर्णस्य पार्थिवत्वसमर्थनम् ।

## तर्कताण्डवम्

**अन्यस्त्वाह-**

**सुवर्णं द्रव्यान्तरमेव। तथा हि द्रवत्वाधिकरणं न तेजः पीतत्वात्। न च पीतत्वात्पार्थिवमेवास्त्विति वाच्यम्। पृथिव्यां शुक्लरूपवत्त्वेऽपि शुक्लरूपस्य जलस्य सांसिद्धि-कद्रवत्वादिनेव सुवर्णस्य पीतत्वेऽप्यनुच्छिद्यमानद्रवत्वा-धिकरणत्वेन पृथिवीतो वैलक्षण्यसम्भवात्।**

**न च पृथिवीजलान्यत्वे सति रूपवत्त्वात्तेजः। अप्रयो-**

जकत्वात्। अन्यथा जलतेजोन्यत्वे सति स्पर्शवत्त्वेन वायुरपि पृथिवी स्यात्। न च पृथिव्येवास्तु धर्मिकल्पनातो धर्म-कल्पनाया लघुत्वादिति वाच्यम्। द्रव्यान्तरत्वपक्षेऽपि धर्मिणः सुवर्णस्य सिद्धत्वेनातिरिक्तत्वमात्रस्य कल्पना-दिति॥

एतदपि प्रागेव निरस्तम्। द्रवत्वोच्छेदप्रतिबन्धकस्य करकादाविवादृष्टविशेषादेवोपपत्त्या पीतस्य पृथिवीभेदा-योगात्। अन्यथा करकोऽपि द्रव्यान्तरं स्यात्॥

यदि च जलत्वव्याप्यधर्मदर्शनात्करको जलं, तर्हि स्वर्णमपि पृथिवीत्वव्याप्यपीतत्वदर्शनात्पृथिव्येवास्तु। अन्यथा पीतत्वान्न तेज इत्यपि न युक्तम्। पीतत्वस्य तेजोऽन्यत्वेनेव पृथिवीत्वेनापि व्याप्तिग्रहात्॥

## न्यायदीपः

॥ **द्रव्यान्तरमेवेति** ॥ नवद्रव्यातिरिक्तमित्यर्थः। पृथिव्या इत्यादेरयमर्थः। यथा पृथिवीजलयोः द्वयोः शुक्लरूपत्वेनाविशेषेपि नैमित्तिकसांसिद्धिकद्रवत्ववत्त्वभेदेन वैलक्षिण्यं तथा पीतत्त्वा-विशेषेऽपि द्रवत्वोच्छित्त्यनुच्छित्तिभेदाद्वैलक्षण्यमिति प्रागुक्तमण्यादिमतं निराह ॥ **नचेति** ॥ **तेज इति** ॥ सुवर्णमित्यनुकर्षः। एवं पृथिव्येवास्तु इत्यत्रापि ॥ **धर्मीति** ॥ द्रव्यान्तररूपधर्मिकल्पनापेक्षया क्लृप्तपृथिवीत्वमेवोपादाय तस्यैव द्रवत्वानुच्छेदरूपधर्मकल्पनाया लघुत्वादित्यर्थः। इतिपदस्याहेति पूर्वेणान्वयः

॥ **प्रागेवेति** ॥ उदयनाद्युक्तभङ्ग एवेत्यर्थः ॥ **पृथिवीभेदेति** ॥ पृथिवीतो भेदेत्यर्थः ॥ **जलत्व-व्याप्येति** ॥ शुक्लरूपवद्द्रवत्वादिकमित्यर्थः ॥ **अन्यथेति** ॥ पीतत्वस्य पृथिवीत्वाव्यप्यत्व इत्यर्थः।

## तर्कताण्डवम्

तस्मादुपष्टम्भकद्रव्यगतपीतरूपपरावृत्तिप्रतिबन्धक-

**त्वेन द्रुततेजः सिद्धिरिति वा, उपष्टम्भके द्रवत्वानङ्गीकारेण अनुच्छिद्यमानद्रवत्वाधिकरणस्य द्रव्यान्तरस्य अनुच्छिद्यमानद्रवत्वाधिकरणत्वादेव तैजसत्वासिद्धिरिति वा, उपष्टम्भके द्रवत्वाङ्गीकारेण तदुच्छेदप्रतिबन्धकत्वेन द्रुततेजस्सिद्धिरिति वेति सुवर्णस्य तैजसत्त्वे पक्षत्रयं सुवर्णं द्रव्यान्तरमिति चतुर्थपक्षश्चायुक्त इति सुवर्णं पार्थिवमेव।**

**तस्माच्छक्तिः पदार्थान्तरं चेत्सुवर्णमपि द्रव्यान्तरं स्यादिति प्रतिबन्द्या असम्भवादनन्तगुणान्विते विष्णौ वेदानां शक्तितात्पर्ये युक्ते इति।।**

**सुवर्णस्य पार्थिवत्वसमर्थनम्।। १५।।**

**न्यायदीपः**

अत्र मणावुदयनोक्तं मतमित्यादिनोक्तभङ्गत्रयार्थं सङ्क्षेपेण दर्शयन्नुपसंहरति ।। **तस्मादिति** ।। सर्वेष्वप्यपार्थिवत्वपक्षेषु दोषसद्भावात्साधकाभावाच्चेत्यर्थः। उदयनादिमतमाह ।। **उपष्टम्भ्यके-त्यादि** ।। मण्युक्तलीलावतीमतमाह ।। **उपष्टम्भक इति** ।। अन्ये त्वित्यादिनोक्तमतान्तरमाह ।। **उपष्टम्भके द्रवत्वेति** ।। अन्यस्त्वाहेत्यादिनोक्तमाह ।। **सुवर्णमिति** ।।

प्रासङ्गिकमुपसंहृत्य पूर्वप्रकृतप्रमेयमुत्तरप्रसङ्गाक्षेपायोपसंहरति ।। **तस्माच्छक्तेरिति** ।। वैदिकपदानां विष्णौ शक्तत्वाद्वेदानां शक्तितात्पर्येत्युक्तम्। यद्यपि तमोद्रव्यं सुवर्णं पार्थिवमिति च न मूलग्रन्थादौ कण्ठतः क्वाप्युक्तमथापि वास्तवनिरूपणमेतदितिध्येयम्।।

सुवर्णपार्थिवत्वसमर्थनम् ।। १५ ।।

## अथ अन्विताभिधाने साधनषट्कम्।

### तर्कताण्डवम्

**ननु कथमन्विते शक्तिः। पौनरुक्त्यादिदोषात्। पदार्थेषु**

शक्तैरेव पदैः पदार्थस्मृत्यवान्तरव्यापारैःराकाङ्क्षादिसहकारि-वशादन्वयविशेषवदन्वयसामान्यस्यापि लाभेन तत्र शक्ति-कल्पनायोगाच्च। अत एव न प्रमाणान्तरापत्तिः। शब्दस्यैवान्वये प्रमाणत्वात्।

एतेन तदन्वयबोधजनकं तत्राशक्तं चेति व्याहतमिति निरस्तम्। न ह्यत्राशक्तशब्देनाजनकत्वं विवक्षितम्। किन्त्व-भिधारूपवृत्तिराहित्यमात्रमिति चेत्॥

उच्यते। न तावदन्वये शक्तिरेव नास्तीति युक्तम्। प्राथ-मिकव्युत्पत्तिहेतुनान्वितविषयकेण व्यवहारेण सामान्यतो योग्येतरान्वित एव शक्तिग्रहात्।

अनन्तरभाविनश्च व्याकरणोपमानकोशाप्तवाक्यवाक्य-शेषविवरणप्रसिद्धपदसमभिव्याहाररूपव्युत्पत्तिहेतवः, तदनुसारितया क्लृप्तेऽन्वित एव शक्तिग्राहकाः। अन्यथाकल्पने गौरवात्।

तदुक्तं भगवत्पादैः-

"शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते।
अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा" इति।

## न्यायदीपः

एवं ननु स्वरूपसहकार्यतिरिक्तशक्तौ मानं नेत्युपक्रम्य प्रकरणसप्तकेन शक्तिरस्तीति समर्थ्य प्रसङ्गागतं तमसो द्रव्यत्वं सुवर्णस्य पार्थिवत्वं च प्रकरणपञ्चकेन समर्थ्येदानीमन्वये शक्तिरित्यर्थं प्रकरणसप्तकेन साधयितुकाम आक्षिपति ॥ **नन्विति** ॥ **शक्तिरिति** ॥ पदानामिति शेषः ॥ **पौनरुक्त्येति** ॥ गामानयेत्यादौ गोपदेन बोधितस्य गवानयनान्वयस्यानयनपदेनापि बोधनात् पुनरुक्तत्वम्। आदिपदेनोत्तरभङ्गे शङ्किष्यमाणदशविधबाधकानां ग्रहः। सामान्यान्वये शक्तिर्न तु

विशेष्यान्वय इति सिद्धान्त्याभमितत्वात्तद्दृष्टान्तेनालभ्यत्वाच्छक्तिकल्पनमयुक्तं चेति भावेन पदं करणं पदार्थस्मरणं व्यापारः आकाङ्क्षादिसहकारिवशात् स्मारितार्थान्वयानुभवः फलं इति मण्युक्तमाह **।। पदार्थेष्विति ।।** नन्वन्यत्र शक्तानां कथमशक्यान्वयबोधकत्वमित्यत उक्तं पदार्थेत्यादि। बहुव्रीहिः। अन्वयविशेषवदन्वयविशेषस्यैव। लाभेन बोधसम्भवेत्यर्थः। तत्र सामान्यान्वये। अन्यथाऽन्वय-विशेषेऽपि शक्तिकल्पनाप्रसङ्ग इति भावः।।

नन्वन्वयस्य पदशक्त्यविषयत्वे तद्बोधकं शब्दादन्यत्प्रमाणं स्यादित्यत आह **।। अत एवेति ।।** पदार्थमात्रशक्तपदप्रमाणकत्वादेवान्वयस्येत्यर्थः। तदेवाह **।। शब्दस्यैवेति ।।**

दोषोस्तीत्येतन्निरसिष्यत इति भावेनाह **।। न तावदिति ।। प्राथमिकेति ।।** प्रथमं तावद्वृद्ध-व्यवहार एव शक्तिग्रहहेतुः। स च व्यवहारो न पदार्थमात्रे, किन्त्वन्वित एवेति तेनान्वित एव शक्तिग्रहादित्यर्थः। आनयनाद्यन्वयानां व्यभिचारात्कथमन्वये शक्तिरित्यत उक्तं सामान्यतो योग्ये-तरान्वित इति। आनयनबन्धनादिविशेषमपहाय क्रियान्वितं कारकं कारकान्विता क्रियेत्येवं रूपेण गवादिपदानां शक्तिग्रह इत्यर्थः **।। व्याकरणेति ।।** ''श्रोत्रियं श्छन्दोऽधीत'' इत्यादिसूत्रैः श्रोत्रियादि-शब्दानां छन्दोध्ययनकर्त्राद्यर्थे शक्तिग्राहकं व्याकरणम् अतिदेशवाक्यार्थस्मरणसहकृतगोसादृश्यादि-विशिष्टपिण्डज्ञानमुपमानं गवयादिपदशक्तिग्राहकम्। कोशोऽमरादिनिघण्टुः प्रसिद्धः। इयं गौरित्याद्याप्तवाक्यं गवादिपदशक्तिग्राहकम्।

''यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्।''

इति वाक्यशेषः स्वर्गपदस्य सुखविशेषे शक्तिग्राहकः।

तथा यवमयश्चरुर्भवतीत्यादौ यवशब्दस्य-

''वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च दृश्यन्ते यवाः कणिशशालिनः।।''

इति वाक्यशेषो दीर्घशूके शक्तिग्राहकः।।

''उग्रं वचोऽपावधीं स्वाहेति'' श्रुतस्योग्रं वच इदि शब्दस्य ''अशनाया पिपासे ह वा उग्रं वच'' इत्यादिविवरणमशनापिपासयोः शक्तिग्राहकम्। ''सहकारतरौ मधुरं रौति पिक'' इत्यादौ पिकपदस्य कोकिले सहकारादिप्रसिद्धपदसमभिव्याहारः शक्तिग्राहकः।।

यद्यप्यसाधारणधर्मरूपलक्षणज्ञानमपि शक्तिग्राहकम्। तथापि तस्यापि तस्य धर्ममात्रोपमान-रूपत्वादुपमानपदेनैव तस्य ग्रहणं प्राप्तमिति न पृथग्लक्षणस्य ग्रहः ॥

"शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"

इति प्राचीनोक्तिरिति भावः ॥ **व्युत्पत्तीति** ॥ वाच्यवाचकभावसम्बन्धज्ञानहेतव इत्यर्थः ॥ **अन्यथेति** ॥ क्लृप्तत्यागेनाक्लृप्तस्य पदार्थमात्रशक्तिग्राहकत्वस्य कल्पन इत्यर्थः

॥ **तदुक्तमिति** ॥ जिज्ञासाधिकरणानुव्याख्याने इत्यर्थः ॥ **शक्तिश्चेति** ॥ उपलक्षणमेतत्। तच्च नाभिहितान्वय इत्यादि शब्दा अन्वितवाचकाः इत्यन्तः भक्तिपादीयानुव्याख्यानसुधयोरुक्तम्। तद्विवरणमग्रे यथायोगं ध्येयम्। व्यवहारादिना शब्दशक्तिमवधारयता पुरुषेण शब्दानां शक्तिश्चन्वित एव स्वार्थेऽनुभूते। अतोऽनुभवबलाच्छब्दानामन्वितस्वार्थाभिधायित्वमभ्युपेयम्। शक्तिग्रहानु-सारित्वादभिधानस्यानुभवानादरेण स्वार्थमात्रशक्तिकल्पने गौरवमित्यर्थः। न केवलं पदानां किन्तु प्रकृतिप्रत्ययानामपीति द्योतनाय शब्दानामित्युक्तिः ॥

## तर्कताण्डवम्

**किं चेश्वरसङ्केतरूपायाः स्वाभाविकसम्बन्धरूपाया वा शक्ते-रभावे वृत्त्यन्तराविषयस्यान्वयस्य शाब्दधीविषयत्वं न स्यात्।**

**किं च शब्दस्यापि करणत्वेन चक्षुरादेरिव विषयप्रत्या-सन्नस्यैव क्रियाजनकत्वेन पदार्थेनेवान्वयेनापि शक्तिरूप-प्रत्यासत्तिरङ्गीकार्या। अन्यथाकल्पने गौरवात् ॥**

**न च चक्षुषो रूपेण संयुक्तसमवाय इव शब्दस्यान्वयेन शक्यपदार्थसम्बन्ध एव प्रत्यासत्तिरिति वाच्यम्। साक्षात् सम्बन्धसम्भवेऽपि परम्परया सबन्धाश्रयणे गौरवात्। अन्यथा चक्षुःसंयुक्तकपालसमवेते घटे संयोगः प्रत्यासत्तिर्न स्यात् ॥**

## न्यायदीपः

नन्वन्यलभ्येप्यन्वयशक्तिकल्पन एव गौरवमित्यतो ''न चाशक्याभिधायित्वम्'' इत्यनुव्याख्यानांशस्य शब्दानामशक्यान्वयबोधजनकत्वं न चेत्यर्थमुपेत्याह ॥ **किञ्चेत्यादिना** ॥ परमतेनाह ॥ **ईश्वरसङ्केतेति** ॥ स्वमतेनाह ॥ **स्वाभाविकेति** ॥ **शक्तेरभाव इति** ॥ वाक्यार्थरूपान्वय इति योज्यम्। वृत्तिमात्रमन्वये नास्तीति मतेनोक्तं वृत्त्यन्तराविषयस्येति। लक्षणाऽवृत्तिरन्वयेऽस्तीति पक्षस्याग्रेऽन्वयलक्ष्यत्वभङ्गे निरसिष्यमाणत्वाच्च। तथा च नान्यलभ्यत्वमिति भावः।

यद्वाऽन्विते शक्तिरित्यत्र प्राथमिकव्युत्पत्तिरूपमेकं मानमुक्त्वाऽन्वयः शब्दशक्तिविषयः वृत्त्यन्तराविषयत्वे सति शाब्दधीविषयत्वात् शक्तिविषयपदार्थवत् इत्यनुमानं च मानमुपेत्य तस्याप्रयोजकत्वनिरासाय विपक्षे हेतूच्छित्तिरूपबाधकतर्कमाह ॥ **किं चेश्वरेत्यादिना** ॥ अर्थस्तु प्राग्वत्। एतेन पदं करणं, पदार्थस्मरणं व्यापारः, अन्वयानुभवः फलं, इति मण्युक्तं निरस्तं ध्येयम्। वृत्तेरभावे पदजन्यानुभवविषयत्वादिति ॥

शब्दोऽर्थप्रत्यासन्नो भवितुमर्हति बोधरूपक्रियाजनकत्वात्, जनकत्वं च कारणत्वाच्चक्षुरादिवदिति सामान्यतोऽर्थेन शब्दस्य सम्बन्धस्य सिद्धावन्यस्यायोगाच्छक्तिरेव प्रत्यासत्तिः सामान्यपरिशेषाभ्यां सिध्यतीति भावेन-

''प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य च''

इत्यत्र ''स्वत एव स्वाभाविकसम्बन्धेनैव'' इत्यादिसुधोक्तदिशाऽऽह ॥ **किं च शब्दस्येति** ॥ हेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ सम्बद्धस्यैव क्रियाजनकत्वमिति क्लृप्तत्याग इत्यर्थः। यद्वा शब्दार्थयोः संयोगसमवायतादात्म्यरूपसम्बन्धान्तरकल्पन इत्यर्थः। द्रव्यत्वायुतसिद्धत्वादेरपि शब्दार्थयोरङ्गीकारप्रसङ्गाद्गौरवमिति भावः।

क्रियाजनकत्वहेतोरशक्यान्वयस्य स्वरूपसतो नियामकत्वादित्यादिमण्युक्तान्यथोपपत्तिमाशङ्क्य निराह ॥ **न चेत्यादिना** ॥ **शक्येति** ॥ शक्तिवषयेत्यर्थः। पदार्थसम्बन्धः पदार्थकर्मत्वादिरित्यर्थः।

॥ **अन्यथेति** ॥ परम्परासम्बन्धेन साक्षात्सम्बन्धापलाप इत्यर्थः ॥ **संयोग इति** ॥ चक्षुष इति शेषः। तत्रापि घटोपलम्भरूपकार्यस्यैव परम्परासम्बन्धेनोपपत्तेः सुवचत्त्वादिति भावः।

## तर्कताण्डवम्

किञ्चैवं शक्यघटसम्बन्धिगुरुत्वादेरपि घटपदात्प्रतीतिप्रसङ्गः। न च गुरुत्वादिकं प्रत्यक्षस्येव शब्दस्याप्ययोग्यम्। नापि शक्यसम्बन्ध्यन्वयत्वं प्रत्यासत्तिः। अन्वयत्वविशेषणस्यान्वयाशक्यत्वनिश्चयोत्तरकालं कल्प्यत्वेन तत्कल्पने गौरवात्। शक्यसम्बन्धेन च प्रतीतावन्वयस्य लाक्षणिकत्वप्रसङ्गाच्च। व्यक्तेरपि शक्यजातिसम्बन्धेनैव प्रतीत्युपपत्त्या जातिविशिष्टव्यक्तावपि शक्त्यसिद्धिप्रसङ्गाच्च॥

एतेन प्रथमं गृहीताऽप्यन्वये शक्तिः कार्यान्विते शक्तिरिव पश्चाद् बाधकात्त्यज्यताम्। बाधकं चात्रान्यलभ्यत्वमेवेति निरस्तम्। अन्यलभ्यत्वेऽन्वयस्य शाब्दत्वं न स्यादित्युक्तत्वात्॥

न च वृत्त्यविषयस्याप्यन्वयस्याकाङ्क्षादिसहकारिवशात् शब्दजन्यधीविषयत्वेन शाब्दत्वमिति वाच्यम्। इन्द्रियासन्निकृष्टस्यापि वह्नेर्धूमज्ञानादिसहकारिवशादिन्द्रियजन्यधीविषयत्वेनैन्द्रियकत्वापातात्। तत्रेन्द्रियसन्निकर्ष एवैन्द्रियकत्वमर्यादाहेतुरित्यसन्निकृष्टो वह्निर्नैन्द्रियक इति चेत्तर्हि शब्दवृत्तिरेव शाब्दत्वमर्यादाहेतुरिति वृत्त्यविषयोन्वयो न शाब्द इति समम्॥ अन्यथाकल्पने गौरवात्॥

## न्यायदीपः

शक्यसम्बन्धस्य शाब्दबोधहेतुत्वेऽतिप्रसङ्गं चाह॥ **किञ्चैवमिति**॥ **अयोग्यमिति**॥ तथात्वे शब्दादतीन्द्रियधीर्न स्यादिति भावः॥ **शक्यसम्बन्ध्यन्वयत्वमिति**॥ तथा च गुरुत्वे प्रागुक्तदोषो नेति भावः। न चक्षुष इत्यादिनोक्तार्थे दोषान्तरमाह॥ **शक्येति**॥ **व्यक्तेरपीति च**॥ **लाक्षणि-**

**कत्वेति** ॥ गङ्गापदशक्यप्रवाहसम्बन्धेन पदात्प्रतीतिरस्त्येवेति भावः। कार्यान्विते शक्तिरित्येत् परमतेन ध्येयम्। स्वमते च सिद्धार्थ एव प्रथमं व्युत्पत्तेरुपगमात्।

॥ **अन्यलभ्यत्वमेवेति** ॥ पदार्थेष्वित्यादिना प्रागुक्तदिशेति भावः ॥ **उक्तत्वादिति** ॥ किं चेश्वरेत्यादिनेत्यर्थः। प्रागुक्तमयुक्तमित्याशङ्क्य प्रतिबन्द्या निराह ॥ **न च वृत्तीति** ॥ परमुखेन समाधिं वाचयति ॥ **तत्रेन्द्रियेति** ॥

''गौरवं कल्पनेऽन्यथे''त्येतदन्वयमुखेनानुवदन्मूलारूढमेवैतदिति दर्शयति ॥ **अन्यथा कल्पन इति** ॥ मर्यादामुल्लङ्घ्य कल्पन इत्यर्थः।

## तर्कताण्डवम्

**किं चैवं जातावेव शक्तिः व्यक्तेस्त्वाकाङ्क्षादिवशाद्धीरिति स्यात्॥**

**किञ्च घटमित्यनेन क्रियासामान्यान्वितस्वार्थानभिधाने सामान्यज्ञानसाध्या क्रियाविशेषजिज्ञासा न स्यात्॥**

**न च जम्बीरादौ रूपविशेषाक्षिप्ते रससामान्ये रसविशेषस्येव घटनिष्ठकर्मत्वाक्षिप्ते क्रियासामान्ये तद्विशेषस्य जिज्ञासा युक्तेति वाच्यम्। व्यभिचारादर्शनसहचारदर्शनादिरूपभिन्नसामग्रीवेद्याया व्याप्तेर्घटमिति पदोच्चारणकाले उपस्थितिनियमाभावेनाक्षेपासम्भवात्॥ अननुभूतस्याप्युपस्थितिनियमस्य कल्पने गौरवात्।**

## न्यायदीपः

अन्वयस्यान्यलभ्यत्वे व्यक्तेरपि तथात्वापत्त्या शब्दशक्यता न स्यादित्याह ॥ **किं चेति** ॥ विवरिष्यते चैतत् षट्कान्तर्गतव्यक्तिप्रतिबन्दी न युक्तेत्यादिना। क्रियाविशेषजिज्ञासान्यथानुपपत्तिं चान्विते शक्तौ मानमित्याह ॥ **किं चेति** ॥**क्रियाविशेषेति** ॥ दर्शनस्पर्शनादिक्रियाविशेषेत्यर्थः।

सामान्यान्वयस्य शब्दशक्त्यविषयत्वेऽपि तज्ज्ञानसम्भवाद्विशेषजिज्ञासा युक्तेति भावेन

दृष्टफलादौ रसविशेषजिज्ञासावदित्यादिना मण्युक्तमाशङ्क्याह ॥ **न चेत्यादिना** ॥ तेजोव्यावृत्तता-दिरूपस्य रसव्याप्तत्वाद्रूपविशेषाक्षिप्तेत्युक्तम् ॥ एतदपि मूलारूढं दर्शयति ॥ **अननुभूतस्यापीति** ॥

## तर्कताण्डवम्

**किं च त्वयाऽपि घटमिति द्वितीयाविभक्त्यर्थकर्मत्वान्वितस्यैव प्रातिपदिकार्थस्य क्रियान्वये प्रतियोगिता खण्डवाक्यार्थभूतस्यान्वितस्य च महावाक्यार्थभूतान्वये प्रतियोगिता वाच्या। वृत्त्यविषयश्च नान्वयप्रतियोगी कर्मत्वान्विते प्रातिपदिकार्थे खण्डवाक्यार्थरूपेऽन्विते न च लक्षणेत्यन्विते शक्तिः क्लृप्तेत्यन्यत्रान्विते शक्तिसिद्धिः। अन्यथा कल्पने गौरवात् ॥**

**न च खण्डवाक्यार्थस्य न महावाक्यार्थेऽन्वयः, किं तु महावाक्यस्थसर्वपदगोचरसमूहालम्बनस्मृतिरूपं करणं शुद्धतावत्पदार्थगोचरसमूहालम्बनस्मृतिरूपावान्तरव्यापारसहितमेकदैव महावाक्यस्थान् सर्वान् पदार्थानन्विततया बोधयतीति वाच्यम्। अनुभवविरुद्धस्यास्य प्रकारस्य कल्पने गौरवात्।**

**तथात्वे हि दिनेदिने श्रुतेन शास्त्ररूपमहावाक्यैकदेशरूपखण्डवाक्येन तत्तदर्थबोधोदयो न स्यात्। कुळकादावित्युवाचेत्यादौ खण्डवाक्यार्थकर्मक्रियान्वयबोधश्च न स्यात्। प्रतिज्ञावाक्येन विशिष्टस्वार्थाबोधने कुत इत्याकाङ्क्षानुदयेन हेतुवाक्यस्यान्वयश्च न स्यात् ॥**

## न्यायदीपः

एकत्रान्विते शक्तेः क्लृप्तत्वात्सर्वत्रापि तथेत्याह ॥ **किं चेति** ॥ **द्वितीयेति** ॥ ''कर्माणि

द्वितीयेति'' पाणिन्युक्तेर्द्वितायाविभक्त्यर्थकर्मत्वेत्युक्तम् ।। **प्रतियोगितेति** ।। घटमानयेत्यादाविति योज्यम्। वाच्येत्यन्वयः। अन्यथाऽऽनयनादिक्रियाऽनन्वयापातादिति भावः ।। **क्रियान्वय इति** ।। पदार्थान्तरेणान्वितपदार्थस्यैव वाक्यार्थत्वादिति भावः ।। **खण्डेति** ।। पर्वतोऽग्निमानित्यादिहेत्वादि-रूपावान्तरवाक्यार्थभूतस्यान्योन्यपदार्थेनान्वितस्येत्यर्थः ।।

।। **महावाक्यार्थेति** ।। वह्न्यादिनिरूपितव्याप्तिपक्षधर्मतयोर्लिङ्गनिष्ठतारूपमहावाक्यार्थभूता-न्वय इत्यर्थः। तावता शब्दवृत्तिविषयत्वमन्वयस्य कुतः, तथात्वे वा शक्तिविषयत्वं कुत इत्यत आह ।। **वृत्तीति** ।। कुमार्यादिप्रदर्शितकलमबीजादेरन्वयाप्रतियोगित्वादिति भावः ।। **न लक्षणेति** ।। तत्पक्षस्याग्रे निरसिष्यमाणत्वादिति भावः ।। **अन्यत्रेति** ।। क्रियाकारकभावादिस्थळेऽपीत्यर्थः।

अन्वये शक्तिं विनैव महावाक्यार्थबोधप्रकारमाशङ्क्य निराह ।। **न चेति** ।। **शुद्धेति** ।। अन्वयविनाकृतेत्यर्थः ।। **दिने दिन इति** ।। एकस्मिन्नेव दिने सर्वशास्त्रश्रवणायोगेन प्रत्यहं यावदव-धारणं शक्यं तावत एव शिष्यैः श्रूयमाणत्वात्तावन्मात्रश्रवणस्यार्थाबोधकत्वे शास्त्रमेव व्यर्थमापद्येतेति भावः ।। **इत्युवाचेत्यादाविति** ।। माघे चतुर्थे सर्गे ''उत्कन्धरं दारुक इत्युवाचे''त्यत्रत्यस्य ''इत्युवाचे''त्यस्य आसर्गसमाप्ति प्रतिश्लोकमन्वयेन तत्तच्छलोकार्थविषयकक्रियान्वयबोधश्च न स्यादित्यर्थः ।। **विशिष्टेति** ।। धर्मविशिष्टधर्मिरूपस्वार्थेत्यर्थः।

## तर्कताण्डवम्

**तस्मादन्विते प्राथमिकी व्युत्पत्तिः, अन्वयस्यानभिधाने तस्य शाब्दत्वानुपपत्तिः, अन्वयांशशक्त्यभावेऽन्वयस्य शब्देन सहप्रत्यासत्त्यनुपपत्तिः, व्यक्तिप्रतिबन्दी, अन्वय-सामान्ये शक्त्यभावे विशेषे जिज्ञासाऽनुपपत्तिः, अन्यत्रान्विते शक्तेः क्लृप्तत्वमिति युक्तिषट्केनान्विताभिधानं सिद्धम्।।**

## अन्विताभिधाने साधनषट्कम्।। १६।।

## न्यायदीपः

प्रागुक्तं सर्वं बुद्ध्यारोहाय सङ्ग्रहेणानुवदन्नुपसंहरति ।। **तस्मादिति** ।। तस्यार्थोन्वित इत्यादिना युक्तिषट्केनेत्यन्तेन विवृतः। प्राथमिक इत्यादिनोक्तार्थोक्तिरन्वित इत्यादि। किं चेश्वरेत्यादिनोक्ता-

र्थोक्तिः अन्वयस्येत्यादि। किं च शब्दस्येत्यादिनोक्तार्थोक्तिः अन्वयांश इत्यादि। किं चैवं जाताविवेत्यादिनोक्तार्थोक्तिः व्यक्तीति। किं च घटमित्यादिनोक्तार्थोक्तिरन्वयेति। किं च त्वयाऽपीत्यादिनोक्तार्थोक्तिरन्यत्रेति। अन्विताभिधानं पदानामिति शेषः॥

अन्विताभिधाने साधकषट्कम्॥ १६॥

## अथ अन्विताभिधाने उदयनाद्युक्तबाधकदशकोद्धारः।

### तर्कताण्डवम्

**नन्वन्विताभिधाने घटमानयतीत्यादौ कारकपदेनान्वयप्रतियोगितया क्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात्पर्यायता स्यादिति चेन्न। कारकपदे क्रियान्वितकारकत्वस्य क्रियापदे च कारकान्वितक्रियात्वस्य प्रवृत्तिनिमित्तस्य भेदेन पुत्रपितृशब्दयोरिवापर्यायत्वात्। न हि प्रवृत्तिनिमित्तयोर्भेदेऽपि तयोस्समनियततामात्रेण पर्यायत्वम्॥**

**नन्वेवमपि पदान्तरवैयर्थ्यम्। एकेनैवेतरान्वितस्वार्थोपस्थापनाद्विशेषणविशेष्यविपरिवृत्तिमात्रेणावैयर्थ्ये दण्डी पुरुषः पुरुषस्य दण्ड इत्यत्राप्येकस्य वैयर्थ्यं न स्यादिति चेन्न।**

**मीमांसकमते धवखदिराविति द्वन्द्वे धवशब्दलक्षितसाहित्यनिरूपकद्वितीयस्य विशेषसमर्पणेन खदिरशब्दस्येवेहापि पदापेक्ष्यतत्तद्विशेषोपस्थापनेन सार्थक्यात्। प्रयोजनान्तरेण सार्थकेऽपि पदे सामग्रीवशागतार्थिकपुनरुक्तेरदोषत्वात्॥**

## न्यायदीपः

एवं साधकान्युक्त्वाऽन्विताभिधाने बाधकान्यप्याशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ विशिष्यान्विताभिधानं भ्रान्त्याह ॥ **कारकपदेनापीति** ॥ पर्यायता क्रियाकारकपदयोरिति शेषः। स्यादयं दोषो यदि घटः करीर इत्यादाविव पदप्रवृत्तिनिमित्तैक्यं भवेत्। नचैवमस्तीत्याह ॥ **कारकपद इति** ॥ **पुत्रेति** ॥ पुत्रादिशब्दस्य सम्बन्धिशब्दत्वेन पित्राद्युपस्थापकत्वेऽपि पुत्रत्वादिनिमित्तभेदाद् यथा न पर्यायत्वं तथेत्यर्थः ॥

ननु क्रियात्वकारकत्वादेः परस्पराविनाभावात्तद्वाचिनोरपि पर्यायत्वमित्यत आह ॥ **न हीति** ॥ पुत्रादिशब्देऽपि तथात्वापत्तेरिति भावः ॥ **एवमपीति** ॥ अपर्यायत्वेऽपीत्यर्थः। कारकन्विता क्रिया क्रियान्वितं कारकमिति क्रियाकारकयोर्भानार्थं पदद्वयमर्थवदित्यत आह ॥ **विशेषणेति** ॥ विपरिवृत्तिर्व्यत्यासः ॥ **एकस्येति** ॥ वाक्यस्येत्यर्थः ॥

विशेषान्वयप्रतिपत्त्यङ्गतयोपयोगाच्चेति दृष्टान्तोक्तिपूर्वकमाह ॥ **मीमांसकमत इति** ॥ तन्मते हि धवखदिराविति द्वन्द्वे धवादावैकैकस्मिन्विभक्त्यर्थद्वित्वस्यानन्वयेन सहितयोर्द्वयोरेव तदन्वयेन द्वित्वान्वयार्थं धवपदमेव सहितो भयलक्षकमित्यभ्युपगमात्तदा खदिरपदावैयर्थ्याय धवपदलक्षित-धवसाहित्याश्रयसामान्यस्य खदिरत्वरूपविशेषसमर्पकत्वस्वीकारादित्यस्याग्रे द्वन्द्वसमासप्रस्तावे वक्ष्यमाणत्वादिति भावः। सुधोक्तमाह ॥ **तत्तद्विशेषेति** ॥

## तर्कताण्डवम्

**न चैवमपि क्रियापदेनानयनरूपे क्रियाविशेषेऽभिहिते घटपदेन तदन्वितघटाभिधानं, एवं घटपदेन घटरूपे कारकविशेषेऽभिहिते क्रियापदेन तदन्वितक्रियाभिधान-मित्यन्योन्याश्रय इति वाच्यम्। विशेषान्विताभिधानमतेऽस्य अन्योन्याश्रयस्य सम्भवेऽपि सामान्यतोऽन्विताभिधानमिति मन्मते पदानां प्रत्येकमेव योग्येतरसामान्यान्वितस्वार्थाभि-धाने सामर्थ्येन पदान्तरनिरपेक्षतयाऽन्योन्याश्रयाऽभावात्॥**

**अन्योन्याश्रयार्थमननुभूयमानविशेषान्विताभिधान-कल्पने गौरवात्॥**

## न्यायदीपः

नन्वेवमपि पुनरुक्तिरूपबाधकमपरिहार्यमित्यतः ''आर्थिकी तु पुनरुक्तिरदूषणम्। यश्चार्थादर्थो न स चोदनार्थ'' इति न्यायादिति सुधोक्तमेव व्यञ्जयन्नाह ॥ **प्रयोजनेति** ॥ समभिव्याहार-रूपसामग्रीवशादित्यर्थः। बाधकान्तरमाशङ्कते ॥ **न चैवमिति** ॥ **अन्योन्येति** ॥ यावत्पूर्वपदं स्वार्थं नाभिधत्ते तावदुत्तरपदस्य पूर्वपदार्थान्वितस्वार्थाभिधानं नास्ति। यावच्चोत्तरपदं स्वार्थं नाभिधत्ते तावत्पूर्वपदस्योत्तरपदार्थान्वितस्वार्थप्रतिपादनं न भवतीति स्वस्वार्थाभिधानेऽन्योन्याभिधाना-पेक्षाऽवश्यम्भावेनान्योन्याश्रयान्न किमपि पदं कमप्यर्थमभिदध्यादित्यर्थः। ''वयं तु ब्रूमः स्यादिदं विशेषान्विताभिधानवादिनां, दूषणा''मित्यादिना सुधोक्तमाह ॥ **विशेषेति** ॥ योग्यं यदितरत्सामान्यं तदन्वितेत्यर्थः ॥ **पदान्तरेति** ॥ तस्य विशेषोपस्थितावेवोपयोगोक्तेरिति भावः ॥

''गौरवं कल्पनेऽन्यथा'' इति प्रागुक्तमूलारूढमेतदिति दर्शयितुमाह ॥ **अन्योन्येति** ॥ अन्योन्याश्रयमस्मान्प्रतिवक्तुमभिहितान्वयवादिना नैयायिकेन विशेषान्विताभिधानकल्पन इत्यर्थः। गौरवादित्युपलक्षणम्। छलोत्तरत्वापातादित्यपि ध्येयम्।

## तर्कताण्डवम्

**न चैवमपि कारकपदजन्या क्रियासामान्यान्वितरूप-विशिष्टधीः क्रियासामान्यान्वय-रूपविशेषणधीसाध्या इह तद्धीहेतुरन्यो नास्तीति क्रियापदेन तद्धीः, एवं क्रियापदजन्या कारकसामान्यान्वितरूपविशिष्टधीरपि कारकसामान्या-न्वयरूपविशेषणधीसाध्या तद्धीश्च कारकपदेनैवेति पुनरप्यन्योन्याश्रय इति वाच्यम्।**

**मन्मते प्रत्यक्षाया अपि विशिष्टधियो विशेषणज्ञाना-साध्यत्वात्। त्वन्मतेऽपि -**

**त्रिशुक्लः कृशवृत्तिश्च घृणाळुस्सकलेन्द्रियः ॥**
**वियुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥**

**इत्यादिवचनैर्विशिष्टाभिधायकपात्रश्रोत्रियस्वर्गकारणादि-**

**पदैरिव जात्याकृतिविशिष्टाभिधायिघटादिपदैरिव च विशेषणोपस्थितिं विनैव कारकादिपदैः क्रियासामान्याद्यन्विताभिधानानुभवात्।**

**अनुभवविरुद्धस्य कल्पने गौरवात्। अन्वयविशेषसिद्धिस्तु पदान्तरसमभिव्याहारात्॥**

## न्यायदीपः

सामान्यान्वितस्वार्थाभिधानपक्षेऽप्युदयनाद्युक्तमन्योन्याश्रयमाशङ्कते ॥ **न चैवमपीति** ॥ कारकपदजन्येति धीरित्यस्य विशेषणम् ॥ **विशिष्टेति** ॥ अन्वयविशेषणककारकविशेष्यकधीरित्यर्थः। ततः किमित्यत आह ॥ **इह चेति** ॥ क्रियाकारकादिप्रयोगस्थळ इत्यर्थः ॥ **तद्धीति** ॥ विशेषण-धीहेतुरित्यर्थः ॥ **अन्योन्याश्रयेति** ॥ क्रियाकारकपदयोः स्वस्वार्थबोधनेऽन्योन्यार्थाभिधानसापेक्षत्वादन्योन्याश्रय इत्यर्थः।

॥ **प्रत्यक्षाया अपीति** ॥ किमुत शाब्दादिस्थळ इत्यपेरर्थः। यथा चैतत्तथोक्तं निर्विकल्पकभङ्ग इति भावः ॥ **त्रिशुक्ल इति** ॥ याजनाध्यापनविशिष्टप्रतिग्रहरूपशुक्लत्रयवानित्यर्थः ॥ **सकळेन्द्रिय इति** ॥ न त्वन्धपंग्वादिरित्यर्थः। योनिदोषेभ्यो विमुक्त इत्यनेन बीजक्षेत्रशुद्धिरुच्यते। इत्यादीत्यादिपदेन ''श्रोत्रियं छन्दोऽधीत'' इति,

''यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्''॥

इति, अनन्यथासिद्धनियतपूर्ववृत्तिकारणमित्यादिवचनग्रहः।

॥ **विशिष्टेति** ॥ त्रिशुक्लत्वादिविशिष्टाभिधायि पात्रपदं, छन्दोध्ययनकर्तृत्वविशिष्टाभिधायि श्रोत्रियपदं, दुःखासम्भिन्नत्वादिविशिष्टसुखाभिधायि स्वर्गपदमन्यनथासिद्धत्वादिविशिष्टाभिधायि कारणपदमित्येवं ध्येयम्। तत्र हि विशेषणोपस्थापकपदान्तरस्याभावात्पदस्मारितस्यैव पदार्थेऽन्वयप्रतियोगित्वात्तत्र विशेषणोपस्थितेरभावेऽपि यथा विशिष्टबोधस्तथेहापीत्यर्थः। व्यक्त्याकृतिजातयः पदार्थ इति न्यायमतत्वाज्जात्याकृतिविशिष्टेत्युक्तिः॥

''गोरवं कल्पनेऽन्यथे''ति मूलारूढतां दर्शयति ॥ **अनुभवेति** ॥ ''सामान्यान्विते शक्ता-

वुपेतायां विशेषान्वयबोधायोग इत्यतो विशेषान्वयप्रतिपत्त्यर्थं च पदान्तरसमभिव्याहारोपयोग'' इति सुधोक्तमाह ।। **अन्वयविशेषेति** ।। एतेन विशेषप्रतिपत्तिरिति शशिधराद्युक्तं प्रत्युक्तम् ।।

## तर्कताण्डवम्

नन्वेवं चोक्तिमनया सामान्यान्विते शक्त्या, स्वार्थमात्रे शक्तैः पदैराकाङ्क्षादिमत्पदान्तरसमभिव्याहारादेव विशेषान्वयसिद्धेरिति चेन्न। सङ्गतिग्रहणकाले सामान्यान्विते शक्तेः गृहीतत्वेन गोव्यक्तिवत्त्वन्मते जात्याकृतिविशिष्टगोव्यक्तिवच्च सामान्यान्वितस्यापि पदान्तरसमभिव्याहाराकाङ्क्षादिनिरपेक्षेणैव गोप्रातिपदिकेनोक्त्या सामान्यान्विते शक्तेः त्यागायोगात्।

अन्यथा जातावेव शक्तिर्व्यक्तेस्त्वाकाङ्क्षादिवशाद्धीरिति स्यात्। प्रत्युत पदान्तरार्थे क्रियाविशेषे आकाङ्क्षार्थमेव कारकपदस्य क्रियासामान्यान्विते शक्तिरावश्यकी। अत एव विशेषान्वये शक्त्यभावात्तस्य शाब्दत्वं न स्यादिति निरस्तम्। या शक्तिः पदान्तरसमभिव्याहाराकाङ्क्षादिनिरपेक्षा सामान्यान्वयबोधिका तस्या एवान्यसापेक्षाया विशेषान्वयबोधकत्वात् ।।

एतदेवाभिप्रेत्योक्तं पद्धतौ ''प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधती''ति।

पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थः। न तु पदान्तरसन्निधानेनाहितशक्त्यन्तरमाधेयशक्तिर्येषामित्यर्थः। शक्तिद्वयाङ्गीकारे गौरवात्। पदान्तर-

**समभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुः। न पुनरविद्यमानशक्त्याधान इति सुधाविरोधाच्च।।**

**केचित्तु-''न पुनरविद्यमानशक्त्याधान'' इति सुधैव पदान्तरसमभिव्याहारात्पूर्वमन्वयसामान्ये शक्तिर्नेत्येतन्निषेधपरेति न विरोध इत्याहुः।।**

## न्यायदीपः

मण्याद्युक्तमाशङ्कते ।। **नन्विति** ।।

''अन्वयस्यान्यतः प्राप्तेरन्यथाऽनुपपत्तितः।
अनन्यलभ्यमात्रार्थे शक्तान्येव पदानि नः।।

इति प्राचीनोक्तेरिति भावः ।। **अन्विते शक्तेर्गृहीतत्वेनेति** ।। एतच्च पूर्वत्रैवोपपादितमिति भावः। व्यक्तौ शक्तिरिति मतेनाह ।। **शक्तिवदिति** ।। व्यक्तेरिवेत्यर्थः। जात्यादिविशिष्टव्यक्तौ सेति मतेनाह ।। **जात्याकृतीति** ।। समभिव्याहारश्चाकाङ्क्षादि च तन्निरपेक्षेणैवेत्यर्थः। तत्सापेक्षत्वे सत्येवान्वयस्यान्यलभ्यत्वं स्यान्नचैवमित्यर्थः।

न केवलं प्रतिबन्दीमात्रमित्याह ।। **प्रत्युतेति** ।। एतदपि पूर्वभङ्ग एव ''किञ्च घटमित्यनेन'' इत्यादिनोपपादितमिति भावः ।। **अत एवेति** ।। सामान्यान्वये शक्तिस्वीकारादेवेत्यर्थः ।। **एतदेवेति** ।। सामान्यान्वयशक्तिरेवान्वयविशेषबोधकेत्येतदेवेत्यर्थः। कथमिदमुक्तार्थसंवादीत्यतोर्थमाह ।। **पदान्तरेति** ।। कुत एवमर्थान्तरकल्पनेत्यत आह ।। **शक्तिद्वयेत्यादि** ।।

यद्यपि सुधायां जिज्ञासाधिकरणे ''शक्तिश्चैवान्वित'' इति श्लोकव्याख्यावसरे पदानामौत्सर्गिकी सामान्यान्वये शक्तिः, पदान्तरसन्निधानाच्चागन्तुकी विशेषविषया शक्तिः, पदान्तरे च पदाधानशक्तिरिति शक्तित्रयं कल्प्यमित्युक्तम्। तथाऽपि सहजशक्त्याधेयशक्त्यपेक्षया शक्तिद्वयेत्युक्तमित्यदोषः। प्रामणिकत्वाद्गौरवं न दोषायेत्यत आह ।। **पदान्तरेति** ।। **सुधेति** ।। ''शक्तिश्चैवान्विते'' इति श्लोकव्याख्यानसुधेत्यर्थः।

## तर्कताण्डवम्

**नन्वेवमप्यानयनान्वितो घटो घटान्वितमानयनमित्य-**

**न्वयरूपस्य विशेष्यरूपस्यार्थस्य च भेदेन तद्भेदनिबन्धनो वाक्यभेदः स्यादिति चेन्न। तथाऽपि चैत्रो घटमानयतीत्यत्र घटप्रातिपदिकस्य जात्यादिविशिष्टव्यक्तिवाचित्वात् जात्याकृत्यन्वितो घटः प्रकृतिप्रत्ययार्थयोः पूर्वमन्वयाद् घटान्वितं कर्मत्वं, कर्मान्वितं चानयनं, आनयनान्विता च वर्तमाना कृतिः, कृत्यन्वितश्चैत्र इत्यन्वयरूपस्य विशेष्य-रूपस्य चार्थस्य भेदेन वाक्यभेदः स्यात्॥**

**इयांस्तु भेदः। मन्मते प्रकृतिप्रत्ययार्थयोरन्वयः शक्यः, तव त्वशक्योऽपि महावाक्यार्थभूतान्वयवत्सहकारिवशात् शाब्द इति॥**

**ननु पदार्थस्थानीयानामुक्तानामन्वयानां भेदेऽपि तद् बोधमात्रेण नैराकाङ्क्ष्याभावेन घटकर्मकानयनानुकूलवर्त-मानयत्नवांश्चैत्र इति वाक्यार्थभूतान्वयस्याभेदेनैकवाक्यत्व-मिति चेत्समं ममापि॥**

## न्यायदीपः

बाधकान्तरमाशङ्कते ॥ **नन्वेवमपीति** ॥ **तद्भेदेति** ॥ अर्थभेदनिबन्धनः। अर्थैकत्वादेकं वाक्यमिति जैमिन्युक्तेरिति भावः।

परमुखेन समाधिं वाचयितुं प्रतिबन्दीमाह ॥ **तवापीति** ॥ जात्याकृत्यन्वितो घट इत्यादि प्रथमान्तस्य इत्यन्वयरूपस्येत्यनेनान्वयः ॥ **पूर्वमिति** ॥ क्रियान्वयात्पूर्वमित्यर्थः। पूर्वमन्वये सिद्धमर्थमाह ॥ **घटान्वितं कर्मत्वमिति** ॥ आनयतीत्यत्र प्रकृतिप्रत्यययोरन्वयमाह ॥ **आनयनान्विता चेति** ॥ प्रत्ययस्यैव लट्त्वाख्यातत्वरूपेण प्रतिपाद्यार्थयोरन्वयमाह ॥ **वर्तमानेति** ॥ **कृतिरिति** ॥ चैत्रपदसमभिव्याहारलब्धार्थमाह ॥ **कृतीति** ॥

ननु न्यायमते अन्वयस्याशक्यत्वाद्वाक्यभेदो न दोषस्तव तु शक्यत्वाद्दोष इति एतद्वैषम्यम-प्रयोजकम्। शाब्दत्वस्य त्वयाऽप्यङ्गीकारादित्याह ॥ **इयांस्त्विति** ॥

परेणैव समाधिं वाचयति ।। **नन्विति ।। समं ममापीति ।।** वाक्यार्थीभूतस्य पटानयनान्वयस्य एकत्वेनैकवाक्यत्वसम्भवादित्य

एतेन क्रियाकारकपदयोः प्रत्येकमितरान्वितस्वार्थबोधकत्वे वाक्यार्थद्वयधीप्रसङ्गादिति मण्युक्तं, कारकन्विता त्रिया क्रियाऽन्वितं च कारकमिति धीप्रसङ्गेन वाक्यभेदः स्यादिति शशधरोक्तं च प्रत्युक्तम्। क्रियाकारकान्वयरूपवाक्यार्थस्यैकत्वेनैकवाक्यत्वोपपत्तेः। क्रियान्वितो घटो घटान्विता क्रियेति बोधस्य सर्वसाक्षित्वेनादोषापत्तेरिति ।।

## तर्कताण्डवम्

**नन्वन्वितस्य घटस्य घटपदार्थत्वे घटमानयेत्युक्ते अन्वितस्यैव घटस्य पुनरानयनाद्यन्वयधीः स्यादिति चेन्न। तव जात्याकृतिभ्यामिव मम योग्येन कर्मत्वादिना धर्मेणान्वितस्यैव घटस्यानयनाद्यन्वयप्रतीताविष्टापत्तेः। घटप्रतिपदिकार्थस्य प्रत्ययार्थीभूतकर्मत्वान्वयात्पूर्वं क्रियासामान्यान्वययोग्यत्वे पूर्वं क्रियासामान्यान्वयधीरिष्टैव, अयोग्यत्वे तु तत एव न पूर्वमन्वयधीः। अन्वयांशे आनयनाद्यनन्वयस्तु तव जात्याकृत्यंश इव एकपदोपात्तत्वेन प्रथमान्वितकर्मत्वांश इव चाकाङ्क्षाद्यभावाद्युक्तः ।।**

**ननु तथाऽपि घटपदजनिते जनकज्ञाने आनयनान्वितो घट इति घटं प्रत्युपसर्जनतया भातस्यानयनस्य कथं जन्यज्ञाने घटकर्मकानयनमिति प्राधान्येन घटं प्रति भानम्। गुणप्रधानभावविपरिवृत्तौ विरोधेन जन्यजनकभावस्यैवायोगात्।**

**मम तु घटः कर्मत्वमानयनं कृतिरिति जनकज्ञानेऽपि घटस्यानयनं प्रति प्राधान्येनाभानान्न विपरिवृत्तिरिति चेन्न। पुरुषस्य दण्ड इति ज्ञानस्य विशेषणज्ञानतया जनकत्वेऽपि तज्जन्ये दण्डी पुरुष इति ज्ञानेऽपि विपरिवृत्तिदर्शनात् ।।**

## न्यायदीपः

अन्विताभिधानवादे घटमानयेत्यादौ अन्वितान्वयापत्तिरूपबाधकमाशङ्कते ॥ **नन्विति** ॥ किमत्र कर्मत्वादिरूपयत्किञ्चिद्योग्येतरान्वितस्य क्रियाऽन्वयश्चोद्यतेऽथ कर्मत्वाद्यन्वयात्पूर्वमेव क्रियासामान्यान्वयः, कर्मत्वान्वयात्पश्चादानयनादिक्रियाविशेषान्वित इति। आद्य आह ॥ **तवेति** ॥ जात्याद्यन्वितस्य यथा क्रियाऽन्वयः एकपदोपात्तत्वात्, जात्यादिव्यक्तीनां तथा कर्मत्वान्वितस्यैव क्रियाऽन्वय इत्यर्थः। द्वितीय आह ॥ **घटेति** ॥

नन्वन्वितान्वय इत्यस्य लम्बकर्णमानयेत्यादाविव विशेषणीभूतान्वयरूपविशेषणेप्यानयनान्वयः स्यादित्यर्थः। विशेषणान्वयिनोऽन्वितरूपविशिष्टान्वयायोगात्। विशिष्टस्य च पदार्थत्वादित्यत आह ॥ **अन्वयांश इति** ॥ यथा जात्याकृतिविशिष्टव्यक्तिरूपे पदार्थे आनयनादिक्रियान्वयेऽपि न जात्याद्यंशे तदन्वयः, यथा वा कर्मत्वविशिष्टस्यानयनान्वयेऽपि न कर्मत्वांशेऽन्वयः तथैवेत्यर्थः।

जन्यजनकज्ञानयोर्गुणप्रधानविपरिवृत्तिरूपबाधकमाशङ्कते ॥ **ननु तथाऽपीति** ॥ आनयनान्वितो घट इति ज्ञाने सत्येव घटान्वितमानयनमिति ज्ञानं (घट)मानयेत्यादिवाक्ये जायत इति वाच्यम्। घटपदस्य पूर्वं अयोगात्। तत्र च पूर्वज्ञानं जनकमुत्तरज्ञानं जन्यमित्यपि वाच्यम्। उत्तरज्ञानेऽस्य विशेषणत्वेन तज्ज्ञानस्य विशेषणज्ञानत्वात्। एवं च जनकज्ञानेऽन्वयप्रतियोगितया विशेषणत्वेन भातमानयनं घटश्च विशेष्यत्वेन भातः तत्कथमुत्तरज्ञाने घटोऽन्वयप्रतियोगितया विशेषणत्वेनानयनं विशेष्यत्वेन भायादित्यर्थः। विपरिवृत्तौ विनियमे सतीत्यर्थः ॥ **मम त्विति** ॥ अभिहितान्वयवादिनस्त्वित्यर्थः।

## तर्कताण्डवम्

**ननु ज्ञानस्य यद्विषयत्वेन जनकत्वं तन्मध्ये यद्यस्य विशेषणं तत्तत्र फलीभूते ज्ञाने तस्य विशेष्यं नेति नियमः, पुरुषस्य दण्ड इति ज्ञानं च न पुरुषविषयतया जनकं, किं तु दण्डविषयतया, तत्र च दण्डं प्रति दण्डत्वं विशेषणं, तस्य च न विपरिवृत्तिरिति चेन्न। भूतले घटाभाव इति ज्ञानेन घटाभाववद् भूतलमिति ज्ञानदर्शनात्। तत्राधिकरणज्ञानसाध्या-**

**भावज्ञाने भूतलज्ञानस्यापि हेतुत्वात्। न च परोक्षज्ञाने अयं नियमः। अप्रयोजकत्वात्। पर्वते वह्निव्याप्यो धूम इति परामर्शेनापि पर्वतो वह्निमानित्यनुमितिदर्शनाच्च॥**

## न्यायदीपः

गुणप्रधानाविपरिवृत्तौ जन्यजनकभावो नेत्येतत्परामर्शवादान्ते मण्युक्तरीत्या व्यभिचारीत्याह ॥ **पुरुषस्येति** ॥ व्यभिचारोद्धारं विवक्षामुखेनाशङ्कते ॥ **नन्विति** ॥ **तस्य च न परिवृत्तिरिति** ॥ दण्डीत्यत्र पुरुषं प्रति दण्डस्य विशेषणत्वेऽपि नियमो नेत्याह ॥ **भूतल इति** ॥ अभावनिर्विकल्पकानभ्युपगमेनाभाववद्भूतलमिति विशिष्टज्ञानं प्रत्यभावरूपविशेषणज्ञानस्य हेतुत्वात्तदर्थं भूतले अभाव इति विशेष्यतयाभावज्ञानानन्तरमेवाभावविशिष्टज्ञानमिति प्रामाण्यवादादौ तत्र तत्र मण्यादावुक्तत्वादिति भावः। अस्त्वेवं तावतोक्तस्य कथं व्यभिचार इत्यत आह ॥ **तत्रेति** ॥ तस्यैव विवरणमधिकरणेत्यादि

॥ **अभावज्ञान इति** ॥ पटाभाववद्भूतलमित्येवंरूपेऽभावविशिष्टज्ञान इत्यर्थः। अधिकरणज्ञानसाध्येति विशेषणं प्रागुक्तनियमभङ्गोपपादनायोक्तम्। भूतले घटाभावज्ञानं जनकं तच्च भूतलघटाभावोभयविषयकत्वेनैवाभाववद्भूतलमिति ज्ञाने हेतुरिति वाच्यम्। विशेषणज्ञानत्वेन हेतुत्वार्थमभावविषयकत्वस्याधिकरणज्ञानत्वेन हेतुत्वार्थं भूतलविषयकत्वस्यावश्यकत्वात्। एवं च जनकज्ञानस्य यद्विषयत्वेन हेतुत्वं तन्मध्ये एव विशेषणविशेष्यतया प्रतीतयोर्भूतलाभावयोर्जन्यज्ञाने विशेष्यविशेषणभावदर्शनमस्तीति कथं न नियमभङ्ग इति ॥ **न च परोक्षेति** ॥ इदं चापरोक्षज्ञानमिति भावः ॥ **अप्रयोजकत्वादिति** ॥ एतेन अभावबुद्ध्यन्यबुद्धावेवायं नियम इत्यपि प्रत्युक्तम्। परोक्षादाविव सर्वत्रोपपत्तौ गुणप्रधानभावविपरिवृत्तौ न जन्यजनकभाव इति नियमग्राहकप्रमाणाभावादिति भावः। अत एव शाब्दबोध एवायं नियम इत्यपि प्रत्युक्तम् ॥ **अप्रयोजकत्वादिति** ॥ **पर्वत इति** ॥ जनकज्ञाने विशेषणत्वेन भातस्यापि पर्वतस्य जन्यानुमितौ विशेष्यत्वदर्शनेन परोक्षज्ञानेऽयं नियम इत्यपि नेत्यर्थः।

## तर्कताण्डवम्

**तस्मात् पर्यायत्वापत्तिः, वैयर्थ्यापत्तिः, पुनरुक्त्यापत्तिः, अन्योन्याश्रयद्वयापत्तिः, विशेषान्वयप्रतिबन्दी, वाक्य-**

**भेदापत्तिः, अन्वितस्यैव पुनरन्वयापातः, अन्वयांशस्यापि आनयनाद्यन्वयापत्तिः, जन्यजनकज्ञानयोर्गुणप्रधानभावस्य विपरिवृत्तिरिति बाधकदशकमपि न युक्तमिति। तस्मात् पदान्यन्विते शक्तान्येव।**

**अन्विताभिधाने उदयनाद्युक्तबाधकदशकोद्धारः ॥ १७॥**

**न्यायदीपः**

उपपादितं सर्वं बुद्ध्यारोहाय सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ बाधकानां समाहितत्वादित्यर्थः। नन्वेवमपीत्यादिनोक्तमाह ॥ **वैयर्थ्येति** ॥ आर्थिकपुनरुक्तेरदोषत्वादित्युक्तमाह ॥ **पुनरिति** ॥ न चैवमपि क्रियापदेनेति, न चैवमपि कारकपदेति चोक्तमाह ॥ **अन्योन्याश्रयद्वयेति** ॥

नन्वेवं चेत्यादिनोक्तामाह ॥**विशेषान्वयेति** ॥ नन्वेवमपीत्यादनोक्तमाह ॥ **वाक्यभेदेति** ॥ नन्वन्वितस्येत्यादिनोक्तमाह ॥ **अन्वितस्यैवेति** ॥ अन्वयांश इत्यादिनोक्तमाह ॥ **अन्वयांशस्येति** ॥ ननु तथाऽपीत्यादिनोक्तमाह ॥ **जन्येति** ॥ भङ्गद्वयार्थमुपसंहरति ॥ **तस्मादिति** ॥ साधकभावाद् बाधकाभावाच्चेत्यर्थः ॥

अन्विताभिधाने बाधकदशकोद्धारः ॥ १७॥

## अथ अन्विताभिधाने युक्तिदशकम्।

### तर्कताण्डवम्

**अथ मतम्-**

**अस्त्येवान्वये शक्तिः, किं तु सा स्वरूपसत्येव हेतुः, न तु ज्ञाता। पदार्थे शक्तिज्ञानादेवान्वयबोधोपपत्तेः।**

**न च वैपरीत्यं शङ्क्यम्। अन्वयस्य पदार्थनिरूप्यत्वेन नागृहीतविशेषणान्यायेन तत्रैव शक्तिग्रहस्य हेतुत्वात्। व्यवहारेण लिङ्गेनान्विते शक्तिग्रहेऽपि गौरवान्यल्लभ्यत्वा-**

**भ्यामन्वयांशमपहाय पदार्थमात्रविषयत्वेनैव शक्तिग्रहस्य शाब्दबोधहेतुत्वकल्पनात्।।**

यत्तु मणौ पदशक्तिवादपूर्वपक्षे प्राभाकरमतानुवादप्रस्तावे जातिव्यक्तिज्ञानजनकत्वादुभयत्रापि शब्दशक्तिः जात्यंशे सा ज्ञाता, व्यक्त्यंशे तु स्वरूपसती हेतुः लाघवादिति कुब्जशक्तिवादस्त्वया नैयायिकेनाप्यन्वये कुब्जशक्तिस्वीकारादिति दृष्टान्तमुखेनान्वये कुब्जशक्तिरुपक्षिप्ता तां तन्माताभिमतोपपादनपूर्वमनुवदति ॥ **अथ मतमित्यादिना** ॥ कुत इत्यतोऽन्यतो लभ्यत्वान्न तत्र ज्ञातोपयुज्यत इत्याह ॥ **पदार्थ इति** ॥ **वैपरीत्यमिति** ॥ अन्वये ज्ञाता पदार्थे स्वरूपसतीति वैपरीत्यमित्यर्थः **नागृहीतेति** । नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते इति न्यायेन प्रथमोपस्थितपदार्थरूपविशेषणांश एव शक्तिग्रहस्य हेतुत्वादित्यर्थः । व्यवहारलिङ्गकान्वितशक्तिग्रहविरोध इत्यत आह ॥ **व्यवहारेणेति** ॥

## तर्कताण्डवम्

**न चैवं पदार्थे ज्ञाता शक्तिरुपयोगिन्यन्वये त्वज्ञातेति शक्तिद्वित्वे गौरवमिति वाच्यम्। गुरुमते जातिविशिष्टव्यक्तिविषयायाः शक्तेरेकत्वेऽपि जात्यंशमात्रे ज्ञातोपयोगित्ववदिहाप्यन्वितविषयायाः शक्तेरेकत्वेऽपि पदार्थांशमात्रे ज्ञातोपयोगित्वस्योपपत्तेः। अत एव कुब्जशक्तिवाद इति। उच्यते। अस्मिन्नपि पक्षेऽन्विते प्राथमिकी व्युत्पत्तिरित्यादि सिद्धान्तसाधकं युक्तिषट्कं सुस्थिरमेव।। न चान्वये शक्तेः सत्त्वमात्रेण तस्य शाब्दत्वं तस्याः प्रत्यासत्तित्वं च युक्तमिति वाच्यम्। शक्तिभ्रमेणाऽपि शाब्दयोर्भ्रमप्रमयोर्दर्शनेन शक्तिज्ञानस्यैव शाब्दत्वे तन्त्रत्वात्। प्रत्यासत्तित्वाच्च।। किं च धूमोस्तीति वाक्ये धूमशब्दस्य वह्नौ लक्षणारूपवृत्तिज्ञाने सत्येव शाब्दधीरन्यथानुमितिरित्यन्वयांशे वृत्त्यज्ञाने कथमन्वयस्य शाब्दत्वम्।**

## न्यायदीपः

ननूभयत्र शक्तेरेकत्वे ज्ञातत्वाज्ञातत्वयोर्विरोधेन शक्तिभेदे गौरवमिति शङ्कते ॥ **न चेति** ॥

शक्त्यैक्येऽप्यवच्छेदकभेदादविरोध इति सदृष्टान्तमाह **॥ गुरमत इति ॥ जात्यंश इति ॥** नागृहीत-विशेषेणान्यायेनेति भावः **॥ ज्ञातोपयोगित्ववदिति ॥** जातिविशिष्टव्यक्तिज्ञानहेतुत्वं यथा तथेत्यर्थः। ज्ञाताया उपयोगित्वं ज्ञातोपयोगित्वं तद्वत्, ''तदशिष्यं प्रमाणत्वा''दितिवदयं निर्देशः साधुः। एवमग्रेऽपि **॥ अत एवेति ॥** अंशभेदेनाज्ञातत्वादेवेत्यर्थः **॥ सिद्धान्तसाधकमिति ॥** प्रागन्विते शक्तिरित्यत्रोक्त-साधकषट्कमेवान्वयेऽपि शक्तिग्रहो हेतुरिति पक्षेऽपि समानमित्यर्थः।

ननु यत् प्रागन्वयस्याशक्यत्वे तद्धियो शाब्दत्वमुक्तं, यच्च शब्दरूपकरणस्यान्वयांशे प्रत्यासन्नत्वं स्यादित्युक्तं तद्द्वयमप्यन्वयांशे शक्तिग्रहस्य न हेतुत्वसाधकं, अन्यथैव तत्सिद्धेरिति शङ्कते **॥ न चान्वय इति ॥ भ्रमेणापीति ॥** स्वरूपसत्त्या एव शक्तेः शाब्दधीहेतुत्वे प्रत्यासत्तित्वे च तद्भ्रमेण शब्दभ्रमो न स्यात्। दृश्यते चायमतः तज्ज्ञानमेव तत्र हेतुः। ज्ञातैव च सा तत्र प्रत्यासत्तिरित्यर्थः। क्वचिच्छाब्दप्रमाभ्रमयोर्दर्शनेनेति पाठः, स तु गाव्याद्यसाधुशब्दशक्तिग्रहे प्रमाया अपि दृष्टेस्तदभिप्रायः। केचित्तु यादृच्छिकप्रमाग्रह इत्याहुः॥ एवं प्रागुक्तसाधकषट्कमध्येयुक्तत्वेन भ्रान्तं साधकद्वयमुपपाद्येदानीं युक्तिं च चतुष्टयमधिकं विवक्षुः अन्यत्र क्लृप्तत्वाच्छक्तिस्थळेऽपि तज्ज्ञानमन्वयांशेप्यावश्यकमित्याह **॥ किञ्चेति ॥** शाब्दधीविषयः स्वविषयशक्तिज्ञानविषयः तज्जन्यज्ञानविषयत्वात्। न चासिद्धिः। पदार्थांशे शक्तिज्ञानस्य परेणापि हेतुत्वोपगमात्। न च दृष्टान्ताभावः।

## तर्कताण्डवम्

**अपि च परोक्षज्ञाने फलीभूतज्ञानविषयस्य सम्बन्धस्य जनकीभूतज्ञानविषयत्वनियमेन शाब्दफलीभूतज्ञान-विषयस्यान्वयस्य तज्जनकशक्तिज्ञानविषयत्वमावश्यकम्। भवति हि पक्षतादितरसाधारण्येन प्रवृत्तस्य वह्निधूम-सामानाधिकरण्यविशेषरूपव्याप्तिज्ञानस्य पर्वतवह्नि-सम्बन्धोऽपि सामान्येन विषयः॥**

**किं च यद्यन्वयांशे शक्तिज्ञानं न हेतुस्तर्हि घटमानयती-त्यादिपदजातादिव, घटः कर्मत्वमानयनं कृतिरित्यादिपद-जातादपि कथं नान्वयधीः। पदस्य पदार्थे शक्तेस्तत्स्मृतेस्त-त्साध्याया अनन्वितपदार्थस्मृतेः पदार्थेषु योग्यतादेश्च सत्त्वात्। नच तत्राकाङ्क्षा नास्तीति वाच्यम्। अन्वयविशेषाकाङ्क्षादा-**

**वहेतुभूतं सामान्याज्ञानं प्रत्यन्वयसामान्यशक्त्यज्ञानस्यैव तन्त्रत्वात्॥ न च तादृशं पदजातं शिलाशकलमङ्कुर इव क्रियाकारकभावेनान्वयबोधे स्वरूपायोग्यं, तेन कदाऽप्यन्वयबोधादर्शनादिति वाच्यम्। एवं हि घटः कर्मत्वमित्यादिवाक्यं श्रुतवतोऽभिज्ञस्य नामविभक्तिधात्वाख्यातस्मरणादुत्पन्नान्वयबोधस्य प्रयोज्यवृद्धस्य व्यवहारं पश्यतो बालस्य घटः कर्मत्वमित्यादावेव व्युत्पन्नस्य ततोऽन्वयबोधो न स्यात्। नच शक्तिभ्रमरूपसहकारिवशादन्वयधीः। स्वरूपायोग्यस्य सहकारिशतसमवधानेऽपि कार्याजनकत्वात्। तस्मात्स्वरूपयोग्यमेव तत् बालं प्रत्यन्वयांशे शक्तिज्ञानरूपसहकारिसहितत्वादन्वयबोधकम्। अन्यं तु प्रति तद्रहितत्वन्नेत्यन्वयांशे शक्तिज्ञानसहकारिता सिद्धा॥**

## न्यायदीपः

परोक्षानुमानस्थळे जन्यज्ञानविषयसम्बन्धस्य जनकज्ञानेपि विषयत्वनियमादिति युक्त्यन्तरमाह ॥ **अपि चेति** ॥ सविकल्पकविषयसम्बन्धस्य निर्विकल्पकाविषयत्वात्परोक्षेत्युक्तम्। नियमेनेत्येतदसिद्धमित्यतो व्यनक्ति ॥ **भवति हीति** ॥ **सामानाधिकरण्यविशेषेति** ॥ अव्यभिचरितसामानाधिकरण्येत्यर्थः ॥ **सामान्येन विषय इति** ॥ अन्यथा पर्वतीयधूमदर्शनात् पर्वतीयवह्निज्ञानानुदयापत्तेरिति भावः। घटः कर्मत्वमित्यादावन्वयाप्रतीतिरप्यन्वयांशेऽपि शक्तिज्ञानस्य हेतुत्वे मानमित्याह ॥ **किं च यदीति** ॥ सामग्र्यभावान्नान्वयधीरित्यत आह ॥ **पदस्येति** ॥ तत्साध्यायाः शक्तिस्मृतिसाध्याया इत्यर्थः ॥ **अनन्वितेति** ॥ अन्वयाविषयकपदार्थस्मृतेरित्यर्थः। योग्यतादेरित्यादिपदेनाकाङ्क्षासत्त्योर्ग्रहः। सामान्याज्ञानं अन्वयसामान्याज्ञानं प्रतीत्यर्थः ॥ **शक्त्यज्ञानस्येति** ॥ तथा च शक्तिज्ञानमाकाङ्क्षासद्भावार्थमवश्यमुपेयमिति भावः। योग्यता नेति शङ्कते ॥ **न चेति** ॥ **शिलेति** ॥ शिलाशकलमङ्कुरे यथा न योग्यं तथेत्यर्थः ॥ **एवं हीति** ॥ स्वरूपायोग्यत्व इत्यर्थः ॥ **नामेति** ॥ घटेति नाम, द्वितीया विभक्तिः, आनयेत्यानयनधातुः, लुप्ताख्याताख्यतिङ्प्रत्ययरूपहि शब्दः एतेषां स्मरणादित्यर्थः ॥ **अन्वयेति** ॥ घटकर्मकानयनरूपान्वयबोधस्येत्यर्थः ॥ **इत्यादावेवेति** ॥ स्मारितनामविभक्त्या व्यवहारहेतुत्वमजानतो घटः कर्मत्वमित्येतद्धटकर्मेत्यर्थे, आनयनं कृतिरित्येतदानयनं कुर्वित्यर्थे, शक्तमिति ज्ञानवत इत्यर्थः। ततः घटः कर्मत्वमित्यादिवाक्यादित्यर्थः। एतेनैवाकाङ्क्षाभावोऽपि प्रत्युक्तः।

अयोग्येपि वाक्येऽन्वयधीरन्यहेतुकेत्याशङ्क्याह ॥**न चेति**॥**तदिति**॥ घटः कर्मत्वमित्यादि-वाक्यमित्यर्थः। ततश्च किं प्रकृत इत्यत आह ॥**बालं प्रतीति**॥

## तर्कताण्डवम्

**किं च पदार्थांशे शक्तिज्ञानमपि पदार्थस्मृतिद्वारा शक्तिधीहेतुरिति ते मतम्। न च तत्स्मृतौ शक्तिरूपसम्बन्धस्य शक्तित्वेन ज्ञानमपेक्षितं, तदभावेऽपि हस्तिरूपसम्बन्धि-दर्शनजन्यं हस्तिपकस्मरणं प्रति सम्बन्धांशे ज्ञानस्य सम्बन्धत्वप्रकारकस्यैव हेतुत्वदर्शनात्। किं तु सम्बन्धत्वेनैव ज्ञानमपेक्षितम्। एवं चाकाशमस्तीति वाक्यादाकाश-शब्दसमावायित्वेनाकाशस्मृतिमत आकाशशब्दे व्युत्पत्ति-हीनस्यापि पुंस आकाशास्तित्वबोधः स्यात्। न चात्र नाम-विभक्त्याख्यातयुक्ते स्वरूपायोग्यत्वं शङ्कार्हम्॥ अथ सम्बन्धत्वप्रकारकज्ञानेनैवाकाशस्य स्मरणे सिद्धे अनुभवार्थं शक्तित्वेन ज्ञानमपेक्ष्यत इति चेत्तर्ह्यन्वयानुभवार्थं तत्रैव शक्तिज्ञानापेक्षेति मदिष्टसिद्धिः॥**

## न्यायदीपः

शक्तित्वेन शक्तिज्ञानस्यानन्यथासिद्धत्वं चान्वयधीहेतुत्वे मानमित्याह ॥**किं चेति**॥**ते मतमिति**॥ सिद्धान्ते शक्तिज्ञानवाक्यार्थज्ञानयोर्मध्ये पदार्थस्मृतेरनभ्युपगमादिति भावः। अस्त्वेवं ततः किमित्यत आह ॥**एवं चेति**॥ सम्बन्धत्वेन शक्तिज्ञानस्य पदार्थस्मृतिहेतुत्वे सतीत्यर्थः ॥**आकाशा-स्तित्वबोधः स्यादिति**॥ शक्तित्वेन शक्तिज्ञानरूपकारणं विनान्यस्य पदार्थस्मृत्यादिरूपकारणस्य सर्वस्य सत्त्वादिति भावः। योग्यताविरहादन्वयबुद्ध्यभाव इत्यत आह ॥**नचात्रेति**॥ आकाशमस्तीति वाक्यमित्यर्थः ॥**तर्हीति**॥ अनुभवार्थकत्वपक्षे केवलपदार्थे तदयोगेनान्वयसहित एवानुभवस्य वाच्यत्वेन तदर्थमेवान्वये शक्तिज्ञानमपेक्षितमित्युक्तं भवतीत्यर्थः।

## तर्कताण्डवम्

**एवं चान्विताभिधाने न केवलं पूर्वोक्तं षट्कम्। किं तु**

**वृत्तिज्ञाने सत्येव शाब्दधीः, परोक्षज्ञाने फलीभूतज्ञानविषयस्य सम्बन्धस्य जनकीभूतज्ञानविषयत्वनियमो घटः कर्मत्वमित्यादावन्वयाप्रतीतिः, पदार्थस्मृतेरन्यथाऽपि सिद्ध्या अन्वयानुभावार्थं तत्रैव शक्तिज्ञानापेक्षेति युक्तिचतुष्टयमपि ॥**

**अन्विताभिधाने युक्तिदशकम् ॥ १८ ॥**

## न्यायदीपः

एवमुपपादितं सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **एवं चेति** ॥ **अन्वितेति** ॥ अंशद्वयेऽपि शक्तिज्ञानेनैव पदार्थतदन्वयाभिधान इत्यर्थः। स्पष्टोऽयं ग्रन्थः।

अन्विताभिधाने प्रागुक्तेन सह युक्तिदशकम् ॥ १८ ॥

## अथ व्यक्तिप्रतिबन्द्या दुष्परिहरत्वम्।

## तर्कताण्डवम्

**ननु- षट्कान्तर्गता व्यक्तिप्रतिबन्दी न युक्ता। व्यक्तौ शक्तिज्ञानस्याहेतुत्वे जाताविव व्यक्तावपि शक्तत्वेन ज्ञातत्वस्यैव प्रयोजकत्वसम्भवे शक्यत्वेन ज्ञातजातिसम्बन्धिव्यक्तित्वरूपप्रयोजकान्तरकल्पने गौरवमिति चेत् सममन्वयेऽपि प्रयोजकान्तरकल्पनेऽनुव्याख्यानोक्तं गौरवम् ॥**

**ननु गोत्वे गोपदं शक्तमिति ज्ञानं प्रति विषयतया जातेः अवच्छेदकत्वं नागृहीतविशेषणान्यायेन विशेषणीभूतव्यक्तिमादायैव युक्तम्। व्यक्तिं विना जातेरनुपस्थितेः। अन्वये तु नैवम्। तं विनाऽपि पदार्थोपस्थितेरिति चेन्मैवम्। अन्वितविषयकव्यवहाररूपलिङ्गजन्ये शक्तिग्राहके ज्ञाने नियमोप-**

**स्थितेरन्वयेऽपि सत्त्वात्। अन्यत्र नियमेन प्रतीतेस्तु नित्यादि-पदजन्यज्ञाने गोत्वप्रतीतावपि गवादिव्यक्तेः अप्रतीत्या व्यक्तावप्यसत्त्वात्। एवं व्यक्त्यन्वययोस्साम्येऽपि वैरूप्य-कल्पने गौरवम्॥**

## न्यायदीपः

ननु-यदुक्तं शक्तिः पदार्थे ज्ञातोपयुज्यते, अन्वये तु स्वरूपसतीति कुब्जशक्तिपक्षे साधकषट्कं स्थिरमेवेति तत्रान्वयस्य शाब्दत्वं करणरूपशब्दस्य प्रत्यासन्नत्वं च शक्तिज्ञानं विना न युक्तमिति साधकद्वयस्योपपादनेऽपि शक्तिर्जाताविव व्यक्तावपि तद्विशिष्टव्यक्तिबोधे ज्ञातोपयुज्यते न तु व्यक्त्यंशे अज्ञातेति यथोच्यते तथाऽन्वयांशेऽपीति यत्साधकमभिहितं तदयुक्तम्। येन जाति-व्यक्तिप्रतिबन्द्याऽन्वयांशेऽपि शक्तिर्ज्ञातोपयुक्ता शाब्दबोधे स्यादिति भावेन शङ्कते **॥नन्विति॥**

पदशक्तिवादसिद्धान्ते मण्युक्तमाह **॥व्यक्ताविति॥** व्यक्त्यंशे या शक्तिस्तज्ज्ञानस्य जातिविशिष्टव्यक्तिज्ञानहेतुत्वे व्यक्त्यंशे शक्तेः स्वरूपसत्या एव हेतुत्वे गौरवमित्यन्वयः। कथमित्यत उक्तं जाताविवेत्यादि। गवादिशब्देन गोत्वादिज्ञाने जनयितव्ये जातेर्गोपदशक्यत्वेन ज्ञातत्वं यथा प्रयोजकं तथा गोव्यक्तिज्ञाने जनयितव्येऽपि गोपदशक्यत्वेन ज्ञातत्वस्यैव प्रयोजकत्वसम्भवे तत्त्यागेन गोपदादिशक्यत्वेन ज्ञाता या गोत्वादिजातिस्तत्सम्बन्धिव्यक्तित्वादिरूपप्रयोजकान्तरस्य कल्पनीयत्वादित्यर्थः।

**॥प्रयोजकान्तरेति॥** पदार्थ इवान्वयेऽपि शब्दशक्यत्वेन ज्ञातत्वरूपक्लृप्तप्रयोजकत्यागेन शक्यत्वेन ज्ञातपदार्थान्वयत्वरूपप्रयोजकान्तरकल्पने ''गौरवं कल्पनेऽन्यथे''ति साधकषट्क-वादोदाहृतानुव्याख्यानोक्तगौरवमिति मूलारूढताप्रदर्शनायनुव्याख्यानेत्युक्तम्॥

पदशक्तिवादसिद्धान्ते मण्युक्तदिशा शङ्कते **॥नन्विति॥** गोत्वे गोपदं शक्तमितिज्ञाने गोत्वं विशेष्यत्वेन विषयः। अत एव ज्ञाने व्यावर्तकापरपर्यायमवच्छेदकं जातौ च गोव्यक्तिर्विशेषणम्। तया विना जातेरप्रतीतेः। तथा च नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायेन गोत्वे गोपदं शक्तमिति ज्ञानं योव्यक्तिं गोत्वं च विषयीकरोतीति तादृशज्ञानं प्रति जातिव्यक्त्योर्द्वयोरपि विषयतयावच्छेदकत्वं न्याय्यमिति जात्यंश इव व्यक्त्यंशेऽपि शक्तिज्ञानं जातिविशिष्टव्यक्तिज्ञाने हेतुरिति युक्तम्। अन्वये तु नैवम्। तद्व्यनक्ति **॥तमिति॥ज्ञान इति॥** इतरान्विते शक्तमित्येवंरूपज्ञानस्यैव वृद्धव्यवहार-

जन्यत्वस्य प्रागुपादानात्। तादृशज्ञाने च पदार्थस्येवान्वयस्यापि नियमेनोपस्थित्या तं विना पदार्थोपस्थितेरित्यस्यासिद्धिरितिभावः॥

ननु व्यवाहररूपलिङ्गजन्यप्राथमिकशक्तिज्ञानेऽन्वयस्य नियमेनोपस्थितावपि व्याकरणोपमान-कोशादिजन्यपाश्चात्यशक्तिज्ञाने अन्वयप्रतितेरसत्वमेवेत्यतो व्यक्तावपि तथेत्याह ॥**अन्यत्रेति**॥ गौर्नित्येत्यादौ व्यक्तेर्बाधेन जातेरेव प्रतीत्या व्यक्तिप्रतीतेरसत्त्वादित्यर्थः॥

## तर्कताण्डवम्

**एतेन जातिव्यक्त्योस्समानसंवित्संवेद्यतया व्यक्तिज्ञानत्वेन ज्ञात एव जातिज्ञाने शक्तिग्रहाद्व्यक्तेरप्यवच्छेदकतया शक्यत्वं, न त्वन्वयस्येति निरस्तम्। शक्तिग्राहके ज्ञाने समानसंवित्संवेद्यत्वस्यान्वयेऽपि सत्त्वात्। अन्यत्र तदसत्त्वस्य अकिञ्चित्करत्वादित्युक्तत्वात्। जातिव्यक्त्योः समानसंवित्संवेद्यत्वेऽपि तज्ज्ञानत्वयोस्तदभावाच्च।**

## न्यायदीपः

"गौरवं कल्पनेऽन्यथा" इति मूलारूढतां दर्शयति ॥**एवमिति**॥ अपि च यद्धर्मवत्तया ज्ञात एव यत्र यस्य ज्ञानं स तत्रावच्छेदक इत्यादिमण्युक्तं हृदि कृत्वा वैषम्यान्तरमनूद्य निराह ॥**एतेनेति**॥ गोत्वाद्यर्थे गवादिपदं शक्तमित्येकं मतम्। गोत्वादिज्ञाने शक्तमित्यपरं मतम्। तन्मतावष्टम्भेन व्यक्तिज्ञानत्वेन ज्ञात एव, जातिज्ञान इत्यनुवादः। जातिव्यक्त्युभयविषयज्ञानस्यैकत्वात्। अस्मिन् पक्षे शक्तिपदं कारणत्वपरम्। अर्थे शक्तमिति पक्षे चेश्वरसङ्केतपरमिति ध्येयम्। परमते इन्द्रियशक्तेरभावात्।

॥**उक्तत्वादिति**॥ प्राथमिकव्युत्पत्तितोऽन्यत्र व्याकरणादिव्युत्पत्तिस्थळे समानवित्ति-वेद्यत्वासत्त्वस्यान्यत्र नियमेन प्रतीतेस्त्वित्यादिपूर्ववाक्ये जातिव्यक्त्योरपि तदसत्त्वस्योक्त्या एकिञ्चित्करत्वादित्युक्तप्रायत्वादित्यर्थः ॥**तज्ज्ञानत्वयोरिति**॥ जातिज्ञानत्वव्यक्तिज्ञानत्वयो-रित्यर्थः। तथाच व्यक्तिज्ञानत्वेन ज्ञात एव जातिज्ञान इत्ययुक्तमिति भावः॥

## तर्कताण्डवम्

**न च जातिविशिष्टव्यक्तौ शक्त्यभावे तयोर्विशिष्टा धीर्न स्यादिति वाच्यम्। त्वन्मते पदार्थयोरिव जातिव्यक्त्योरपि प्रथमं पदादनन्वितयोरेवोपस्थितावपि पश्चादाकाङ्क्षादिसहकारेण वैशिष्ट्यरूपान्वयधीसम्भवात्॥**

**न चैकपदोपस्थाप्ययोः परस्परमन्वयो न व्युत्पन्न इति वाच्यम्। जीर्णनैयायिकमते एकलिङ्प्रत्ययोपात्तयोरपि कृतीष्टसाधनत्वयोः सर्वेषां मते एकलट्प्रत्ययोपात्तयोः कृतिवर्तमानत्वयोरन्वयधीदर्शनात्॥**

## न्यायदीपः

ननु-जातवेव शक्तिरितिपक्षे जातिविशिष्टव्यक्तिबुद्ध्यनुपपत्त्या तत्र विशिष्टे शक्तिरस्तु। न त्वन्विते। अन्वयधियोऽन्यलभ्यत्वादिति भावेनाशङ्क्याह **॥न चेति॥** जातिविशिष्टव्यक्तिबुद्धेरपि तथैवान्यलभ्यत्वान्न विशिष्टे शक्तिरस्त्वित्याह **॥त्वन्मत इति॥** गामानयेत्यादौ गवानयनादिरूपपदार्थयोरिवेत्यर्थः। अनन्वितयोरन्वयविनाकृतयोरित्यर्थः। वाक्ये पदद्वयोपस्थाप्यपदार्थयोस्तथा अन्वयबोधयोगेऽपि न जातिव्यक्त्योरेकशब्दोपस्थाप्यत्वादिति शङ्कते **॥न चेति॥**

**॥एकलिङिति॥** ननु तत्र वाचकैक्येपि लिङाख्यातत्वरूपवाचकतावच्छेदकभेदोस्तीति चेन्न। तस्याप्रयोजकत्वादिति भावः।

## तर्कताण्डवम्

**नच व्यक्तेरन्यलभ्यत्वसम्भवेऽपि विभक्त्यर्थीभूतसङ्ख्याकर्मत्वाद्यन्वयार्थं व्यक्तेः पदार्थत्वमुपेयं, सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पन्नत्वादिति वाच्यम्। अन्वयस्य शब्दवृत्त्यविषयत्वेऽपि शाब्दत्ववद्व्यक्तेरपि प्रकृतिवृत्त्यविषयत्वेऽपि प्रकृत्यर्थत्वस्य सम्भवेन विभक्त्यर्थान्वयोपपत्तेः॥**

## तर्कताण्डवम्

अन्यथा दण्डिनमानयेत्यादौ दण्डिशब्दप्रतिपाद्ये दण्डविशिष्टपुरुषे कर्मत्वाद्यन्वयो न स्यात्। तन्मते दण्डिशब्दस्य तत्र वृत्त्यभावात्॥

ननु ज्ञातकरणे सम्बन्धो यावत्प्रतियोगिकत्वेन ज्ञात एव ज्ञानहेतुः, व्याप्तिरूपे सम्बन्धे तथा दर्शनादिति व्यक्त्यंशेऽपि शक्तिरूपसम्बन्धज्ञानं हेतुरिति चेत्तत्तुल्यमन्वयांशेऽपि। अन्यथा गौरवम्॥

तस्माल्लाघवं, नागृहीतविशेषणन्यायः, एकवित्तिवेद्यत्वं, वृत्त्यभावेऽपि शाब्दत्वसिद्धिः, सम्बन्धज्ञानस्य यावत्सम्बन्धिविषयत्वनियमः, इति युक्तिपञ्चकं व्यक्त्यन्वययोः समम्॥

व्यक्तिप्रतिबन्द्या दुष्परिहरत्वम्॥ १९॥

## न्यायदीपः

ननु व्यक्तेरशब्दार्थत्वे शब्दार्थभूतैकत्वादिसङ्ख्याद्यन्वयो न स्यादतस्तत्र शक्त्यैवोपस्थितिः अपेक्षितेत्याशङ्कते ॥ **न चेति** ॥ अन्वय प्रतिबन्दीमाह ॥ **अन्वयस्येति** ॥ **प्रकृतिवृत्तीति** ॥ प्रातिपदिकनिष्ठशक्त्यादिरूपवृत्त्याविषयत्वेऽपि शक्यपदार्थान्वयत्वेनान्वयस्येव शक्यजातिसम्बन्धव्यक्तित्वेनोपस्थितस्य प्रातिपदिकरूपप्रकृतिशब्दार्थत्वं स्यादेवेत्यर्थः।

प्रकारान्तरेण व्यक्त्यंशशक्तिज्ञानं जातिविशिष्टव्यक्तिधीहेतुरिति शङ्कते ॥ **नन्विति** ॥ ज्ञातं यत्करणं गोशब्दादिरूपं तत्सम्बन्धोजातिव्यक्त्यादिरूपयावत्प्रतियोगिकत्वेनेत्यर्थः ॥ **तथेति** ॥ व्याप्यव्यापकरूपयावत्प्रतियोगिकत्वेन ज्ञाने सत्येवानुमितिहेतुत्वदर्शनादित्यर्थः ॥ **अन्यथेति** ॥ प्रकारान्तरेण यत्किञ्चित्प्रतियोगिकत्वेन ज्ञात इति कल्पन इत्यर्थः॥

प्रागुपपादितं सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ **लाघवमिति** ॥ शक्तत्वेन जातत्वरूपैक-

प्रयोजककल्पनाख्यमित्यर्थः। ननु गोत्व इत्यादिनोक्तमाह ॥**नागृहीतेति**॥ एतेनेत्यादिनोक्तमाह ॥**एकेति**॥ न च व्यक्तेरित्यादिनोक्तमाह ॥**वृत्तीति**॥ ननु ज्ञानेत्यादिनोक्तमाह ॥**सम्बन्धेति**॥ **सममिति**॥ शक्तिविषयत्वे तदंशेपि शक्तिज्ञानं प्रयोजकमित्यत्रापीति योज्यम्।

व्यक्तिप्रतिबन्द्या दुष्परिहरत्वम् ॥ १९ ॥

## अथ मण्याद्यभिमतकुब्जशक्तिभङ्गः।

### तर्कताण्डवम्

**ननु तथाऽपि ज्ञातकरणे सम्बन्धः संसर्गिप्रतियोगिकतयैव ज्ञातो हेतुः। न तु संसर्गप्रतियोगितयाऽपि, व्याप्तौ तथा दर्शनात्। न हि वह्निव्याप्तिर्वह्निप्रतियोगिकतयेव वह्निसंसर्गप्रतियोगिकतया विज्ञायते। एवं च शक्तिः संसर्गीभूतपदार्थप्रतियोगिकतयैव ज्ञाता हेतुः। न त्वन्वयप्रतियोगिकतयेति चेन्मैवम्। व्याप्तिग्राहकमानेन वह्निनैव सह व्याप्तिग्रहः, अन्वितविषयकव्यवहाररूपेण शक्तिग्राहकमानेन त्वन्वयेनापि सह शक्तिग्रह इति वैषम्यात्॥**

**अन्यथा संसर्गेण सह व्याप्तिः स्वरूपेणैव नास्तीति अन्वयेपि शक्तिः स्वरूपेणैव न स्यात्। व्याप्तिर्व्यापकतावच्छेदकप्रतियोगिकतयाऽपि न ज्ञायत इति शक्तिरपि शक्यतावच्छेदकजातिप्रतियोगिकतयाऽपि न ज्ञातव्या, गौरवादित्यपि स्यात्॥**

### न्यायदीपः

प्रकारान्तरेणान्वयांशे शक्तिज्ञानं न शब्दाधीहेतुरित्याक्षिप्य समाधत्ते ॥**ननु तथापीति**॥ व्यक्तिप्रतिबन्द्या दुष्परिहरत्वेपीत्यर्थः। तथा दर्शनादित्युक्तं व्यनक्ति ॥**नहीति**॥ ततः किमित्यतः पक्षे योजयति ॥**एवं चेति**॥ ज्ञातकरणसम्बन्धस्य संसर्गप्रतियोगिकतयैव ज्ञातस्य हेतुत्वे सतीत्यर्थः।

हेतुः, शाब्दधीहेतुरित्यर्थः। शब्दशक्तेरपि ज्ञातकरणसम्बन्धत्वादिति भावः। एतदुक्तम्भवति-शब्दशक्तिः संसर्गप्रतियोगिकतयैव ज्ञाता ज्ञानहेतुः। ज्ञातकरणसम्बन्धत्वात्। लिङ्गसम्बन्ध-रूपव्याप्तिवदिति। जातिव्यक्त्योरुभयोरपि संसर्गितयोभयांशे ज्ञाता शब्दशक्तिः जातिविशिष्ट-व्यक्तिज्ञानहेतुश्चेदपि न तत्र व्यभिचार इति भावः। ज्ञातकरणसम्बन्धत्वाविशेषेऽपि यथाप्रमाणं हेतुत्वं कल्प्यमिति भावेन समाधिमाह ॥**व्याप्तीति**॥**व्यवहाररूपेणेति**॥ मानेनेत्यन्वयः। संसर्गप्रति-योगिकतया व्याप्तिग्राहकमानाभावादेव तेन रूपेणाज्ञाताया अपि तस्या अनमितिहेतुत्वेपीह शक्तौ संसर्गिप्रतियोगिकतयाऽपि प्रागुक्तदिशा ग्राहकमानभावेन तेन रूपेण ज्ञाताया एव शाब्दधीहेतुत्वोप-पत्तेरित्यर्थः॥

एतेन संसर्गप्रतियोगिकतया ग्राहकमानवैधुर्यमुपाधिः प्रागुक्तानुमानस्योक्तो भवति ॥**स्वरूपेणैव नास्तीति**॥ तेन सह व्याप्तिग्राहकमानाभावादिति भावः॥

ननु तत्रापि यत्र धूमस्तत्र वह्निसंसर्ग इत्यस्त्येव व्याप्तिरिति वदन्तं प्रति व्याप्तिशरीरप्रविष्टसम्बन्धेन व्याप्त्यभावरूपदोषे सत्यपि जातिप्रतिबन्दीमप्याह ॥**व्याप्तिरिति**॥ अन्यथेत्यनुषङ्गः ॥**इत्यपि स्यादिति**॥ तथा च पदशक्तिवादसिद्धान्ते जातिव्यक्त्युभयप्रतियोगिकतया ज्ञातैव हेतुरिति त्वदुपपादनविरोध इति भावः।

## तर्कताण्डवम्

**न चान्वयस्यापि प्रागुपस्थितौ पदार्थस्येवान्वयस्यापि संसर्गः शाब्दबोधे भासेतेति वाच्यम्। मन्मते शब्दस्य शक्तिज्ञानसीमकत्वेन तदविषयस्यान्वयप्रतियोगिकसंसर्गस्य अभानसम्भवात्॥**

**न च त्वन्मतेऽप्ययं नियमः यः कारणीभूतधीविषयः तत्संसर्गः कार्यभूतज्ञाने भासत इति। विशेषणज्ञानतया हेतुभूताया धारावाहिकप्रथमादिबुद्धेर्विषयो यः संसर्गः तत्प्रतियोगिकसंसर्गस्य द्वितीयादिबुद्धावभानात्॥**

**न च परोक्षज्ञानेऽयं नियमः। अनुमितिहेतुभूतव्याप्ति-**

**ज्ञानस्य यो विषयः पर्वतवह्निसंयोगस्तत्समावयस्यानुमिता-वभानात्॥**

## न्यायदीपः

अन्वयप्रतियोगिकतयाऽपि शक्तेर्ज्ञानस्य शाब्दधीहेतुत्वे बाधकान्तरमाशङ्क्य निराह ॥ **न चेति** ॥ **प्रागिति** ॥ शाब्दबोधात्पूर्वं पूर्वगृहीतशक्तिस्मृतिदशायामेवान्वयस्यापि स्मृतौ सत्यामित्यर्थः। उभयप्रतियोगिकतया शक्तेर्व्युत्पत्तिदशायां ग्रहणे सति शाब्दबोधात्पूर्वं शक्तिस्मृतिदशायामप्युभयप्रतियोगिकत्वेन स्मृतेरावश्यकत्वेनान्वयस्याप्युपस्थित्याऽन्वयनिरूपितसंसर्गोऽपि शाब्दबोधे भायात्। पदात्पदार्थस्य प्रागुपस्थित्या शाब्दबोधे तन्निरूपितसंसर्गवत्प्रागुपस्थितेः कारणतया तज्जन्यज्ञाने कारणीभूतज्ञानविषयनिरूपितसंसर्गस्यापि भाननियमात्। तथा चानयानान्यवान् घट इति धीप्रसङ्ग इति भावः।

॥ **शक्तिज्ञानसीमकत्वेनेति** ॥ शक्तिज्ञानमर्यादाकत्वेनेत्यर्थः। यद्विषये शक्तिज्ञानं तद्विषय एव ज्ञानजनकत्वं शब्दस्य स्वभावः। शक्तिज्ञान च पदार्थे तदन्वये च प्रागसीदिति तयोरेव शाब्दबोधे भानं, न तु संसर्गस्यापि। हेत्वभावादिति भावः॥

न्यायमते ज्ञानयोः कार्यकारणभाव एव पूर्वज्ञानविषयसंसर्गभाने हेतुः। घटत्वनिर्विकल्पजन्ये तत्सविकल्पके तथा दर्शनात्। दण्डज्ञानजन्ये दण्डीति विशिष्टज्ञाने च दर्शनाच्चेत्यत आह ॥ **न च त्वन्मतेऽपीति** ॥ **अयमिति** ॥ वक्ष्यमाणः किमयं नियमोपरोक्षज्ञानेऽथ परोक्षज्ञानस्थळे। आद्य आह ॥ **विशेषणेति** ॥ हेतुभूतत्वे हेतुर्विशेषणज्ञानतयेति ॥ **यः संसर्ग इति** ॥ अयं घट इत्यादिधारावाहिकस्थळे घटपटत्वसंसर्ग इत्यर्थः ॥ **अभावादिति** ॥ अन्यथा ज्ञानानामविशेषानुभवविरोध इति भावः।

अन्त्यमाशङ्कते ॥ **न चेति** ॥ तत्रापि किमनुमितिस्थळेऽथ शाब्दबोधस्थळे। आद्य आह ॥ **अनुमितीति** ॥ **पर्वतवह्निसंयोग इति** ॥ यो यो धूमवानसावसावग्निमानिति महानसादौ व्याप्तिग्रहदशायां सामान्यलक्षणप्रत्यासत्त्योपस्थितसमस्तधूमवह्निव्यक्तीनां व्याप्तिग्रहनियमेन पर्वतीयधूमस्यापि पर्वतीयवह्निना व्याप्तिग्रहणे पर्वतवह्निसंसर्गस्यापि सामान्याकारेण ज्ञानविषयत्वादिति भावः ॥ **अभानादिति** ॥ अन्यथा पर्वतो वह्निसंयोगवानित्येव धीः स्यान्न तु वह्निमानितीति भावः।

## तर्कताण्डवम्

नापि शाब्दज्ञानेऽयं नियमः। हेतुभूतस्य पदार्थज्ञानस्य विषयो जातिव्यक्त्योर्वैशिष्ट्यरूपो यः सम्बन्धः तत्संसर्गस्य शाब्दप्रमायामभानात्॥

एतेन यथा प्रत्यक्षे विशिष्टज्ञाने विशेष्येन्द्रियसन्निकर्षो विशेष्यभानसामग्री, विशेषणज्ञानं तु विशेषणभानसामग्री, इति सामग्रीद्वयसन्निविष्टादसंसर्गाग्रहादेव संसर्गभानमेवं शाब्देऽपि विशिष्टज्ञाने प्रथमान्तादिपदजन्यपदार्थधीर्विशेष्यभानसामग्री, तदितरा तु धीर्विशेषणभानसामग्रीति सामग्रीद्वयसन्निविष्टादासंसर्गाग्रहादेव संसर्गभानं, ततो नान्वयांशे शक्तिज्ञानापेक्षेति निरस्तम्। अन्वये शक्तिज्ञानाभावे बाधकानामुक्तत्वात्॥

मन्मते प्रत्यक्षेऽपि विशेषणविशेष्याभ्यामिव तत्संसर्गेणापीन्द्रियप्रत्यासत्तेर्हेतुत्वेनेहाऽपि प्रत्यासत्तिस्थानीयस्य शक्तिज्ञानस्याप्यन्वयांशेऽप्यपेक्षितत्वाच्च॥

## न्यायदीपः

अन्त्ये द्वितीयमाशङ्क्य निराह ॥ **नापीति** ॥ **हेत्विति** ॥ वाक्यार्थज्ञानहेतुभूतस्येत्यर्थः ॥ **विशेष्यभानेति** ॥ घटादिरूपविशेष्यभानसामग्रीत्यर्थः। निर्विकल्पकादिरूपं घटत्वादिविशेषणज्ञानं तु घटत्वादिविशेषणभानसामग्री वैशिष्ट्यभानसामग्री तु सामाग्रीद्वयसहिता तदुभयासंसर्गाग्रहरूपैव, न त्वन्यास्ति यथा तथा शाब्दविशिष्टज्ञानेपीत्यर्थः। तदुपपादयति ॥ **प्रथमान्तादीति** ॥ घटोस्ति घटमानय घटेन जलमाहर ब्राह्मणाय गां देहीत्यादौ प्रथमान्तादिपदजन्येत्यर्थः ॥ **विशेष्येति** ॥ वाक्यार्थभूतसंसर्गप्रतियोगिरूपविशेष्येत्यर्थः ॥ **तदिति** ॥ विशेष्यभूतपदार्थधीभिन्ना क्रियादिपदार्थरूपविशेषणभानसामग्रीत्यर्थः। सन्निविष्टात्, सहितात्। घटानयनादिपदार्थासंसर्गाग्रहणादित्यर्थः।

एतेनेत्युक्तं व्यनक्ति ॥ **अन्वय इति** ॥ **उक्तत्वादिति** ॥ अथ मतमित्यादिनान्वयांशेपि शक्तिज्ञानस्याहेतुत्वमाशङ्क्य बाधकानामुक्तत्वादित्यर्थः ॥ **तत्संसर्गेणापीति** ॥ यद्यपि सिद्धान्ते घटादौ तद्धर्माणां घटादिना न संसर्गः। अभेदोपगमात्। तथाऽपि दण्डीत्यादौ दण्डदेवदत्तसंयोगोपगमेन दण्डदेवदत्ताभ्यामिव तदुभयसंयोगेनापीन्द्रियस्य संयोगरूपप्रत्यासत्तेरङ्गीकारादिति भावः। प्रत्यासत्तीति शब्दस्यान्वयेन सह प्रत्यासत्तीत्यर्थः॥

## तर्कताण्डवम्

**किं च प्रमाणान्तरेऽपि प्रत्यक्षमर्यादानुसरणस्यावशकत्वे अनुमितावपि पक्षरूपविशेष्यज्ञानं कारणं न स्यात्। प्रत्यक्षे विशिष्टज्ञाने विशेष्यज्ञानस्याहेतुत्वात्।**

**अनुमितिशाब्दज्ञाने प्रति लिङ्गशब्दयोर्ज्ञानं व्याप्ति-शक्त्योर्ज्ञानं च हेतुर्न स्यात्। प्रत्यक्षं प्रतीन्द्रियतत्सन्निकर्षयोः ज्ञानस्याहेतुत्वात्।**

**तस्मादन्वयः पदशक्यो वृत्त्यन्तरं विना शाब्दत्वात् पदार्थवदिति ॥**

**मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥**

## न्यायदीपः

ननु न्यायमते प्रागुक्तसामग्रीद्वयसहितादसंसर्गाग्रहादेव प्रत्यक्षस्थळ इव संसर्गाग्रहोपपत्तौ नाधिककल्पनावसर इत्यत आह ॥ **किं चेति** ॥

शब्दादिरूपप्रमाणान्तरेऽपीत्यर्थः ॥ **तस्मादिति** ॥ अनेकसहकारिसाधकभावाद्विपक्षे बाधका-भावाच्चेत्यर्थः ॥ **अन्वय इति** ॥ शब्दार्थनिरूपितोन्वयः शब्दशक्तिविषय इत्यर्थः। तेन प्रकृति-प्रत्ययार्थान्वयस्यापि शक्यतासिद्धिः। गङ्गायां घोष इत्यादौ घोषतीराद्यन्वये व्यभिचारनिरासाय हेतौ विनेत्यन्तोक्तिः।

मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥

## अथ भट्टाभिमताभिहितान्वयभङ्गः।

### तर्कताण्डवम्

एतेन पदं पदार्थस्मृतिमात्रोपक्षीणं नान्वितबोधकं स्मृतपदार्थ एव तु तद् बोधक इति भाट्टमतमपास्तम्। एवं हि शब्दस्य स्मारकमात्रत्वात्पदार्थस्यैवान्वयप्रमाकरणत्वमिति वाच्यम्। न च तद्युक्तम्॥

प्रसिद्धं शब्दं त्यक्त्वाऽप्रसिद्धस्य पदार्थाख्यप्रमाणान्तरस्य कल्पनेऽनुव्याख्यानोक्तगौरवात्। तस्यातीतानागतादिरूपत्वेन फलभूतमन्वयानुभवं व्यापाराभिमतां पदार्थस्मृतिं च प्रति कारणत्वस्यैवासम्भवेन तद्विशेषस्य करणत्वस्य दूरापास्तत्वाच्च।

नच पदजन्या पदार्थस्मृतिरेव करणं प्रसिद्धत्यागादिदोषद्वयात्। निर्व्यापारत्वाच्च। करणस्य च सव्यापारत्वनियमात्।

### न्यायदीपः

ननु-यदुक्तं अन्वयः पदशक्यः वृत्त्यन्तरं विना शाब्दत्वात्पदार्थवदिति। तन्न। अनन्यलभ्यत्वस्य उपाधित्वात्। पदशक्तिं विनाऽप्यन्वयबोधसम्भवात्। न च पदान्वयव्यतिरेकानुविधानायोगः। तस्यान्यत्रोपक्षयादित्यत आह ॥ **एतेनेति** ॥ यद्वा शाब्दत्वादित्यसिद्धं अन्वयबोधस्य पदार्थकरणकत्वात् शब्दानुविधानस्यान्यत्रोपक्षयादिति मतान्तरं चानूद्य निराह ॥ **एतेनेति** ॥ पदार्थ एवेत्येकवचनं जात्यभिप्रायम्। "पदार्थास्तन्मतिर्वा स्यादिति" भाट्टोक्तेर्निर्व्यापारस्य कथं करणतेत्यत उक्तं स्मृत इति। स्मृतिरेवावान्तरव्यापार इति भावः। तैरपि पदार्थानामान्वयबोधकत्वं क्वाप्यनुपलब्धं तावत्कल्पनीयमेवेति सुधोक्तिं हृदि कृत्वाऽऽह ॥ **एवं हीति** ॥

"पदमभ्यधिकाभावत् स्मारकान्न विशिष्यते"

इत्युक्तेः स्मारकमात्रत्वादित्युक्तम् ॥ **अनुव्याख्यानेति** ॥ ''गौरवं कल्पनेऽन्यथा'' इत्यनुव्याख्यानोक्तेत्यर्थः। दोषान्तरं चाह ॥ **तस्येति** ॥ पदार्थस्येत्यर्थः। वृष्टिरासीद्वृष्टिर्भविष्यतीत्यतीतादिरूपत्वेनेत्यर्थः। कारणत्वासम्भवदोषपरिहारमाशङ्क्याह ॥ **न चेति** ॥ **करणमिति** ॥ अन्वयबोधं प्रतीत्यर्थः। एवमग्रेऽपि। पदानुविधानानुभवाविरोधायोक्तं ॥ **पदजन्येति** ॥ **प्रसिद्धेति** ॥ प्रसिद्धशब्दत्यागाप्रसिद्धपदार्थस्मृतिरूपसप्तमप्रमाणकल्पनारूपदोष-द्वयादित्यर्थः। मण्युक्तं दोषमाह ॥ **निर्व्यापारत्वाच्चेति** ॥ **तस्या इति** ॥ शक्तिस्मृतेरित्यर्थः। तज्जन्यत्वे सति तज्जन्यजनकस्यैव इन्द्रियसन्निकर्षादौ व्यापारत्वदर्शनादिह च शक्तिस्मृतेः पदार्थस्मृतिपूर्वभावित्वेन तदजन्यत्वादिति भावः ॥

## तर्कताण्डवम्

**नच शक्तिः स्मृतिरेवावान्तरव्यापारः। तस्याः पदार्थस्मृत्यजन्यत्वात्। व्युत्पत्तिकाले शब्दस्यैव कारणत्वग्रहणाच्च। शब्देनायमर्थो ज्ञात इत्यनुभवे बाधकाभावाच्च। कारणत्वसम्बन्धेनाकाशपदजनिताकाशस्मृतितः आकाशान्वयबोधप्रसङ्गाच्च। घटः कर्मत्वमानयनं कृतिरित्यादिपदजनितपदार्थस्मृतितोप्यन्वयबोधप्रसङ्गाच्च ॥**

**न च पदविशेषजनिता पदार्थस्मृतिरन्वयबोधाङ्गम्। तथात्वे प्रथमोपस्थितपदविशेषस्यैव हेतुत्वावश्यम्भावात् ॥**

**नच पदं विनाऽपि पदार्थज्ञानमात्रात् काव्यादिमूलान्वयबोधदर्शनाद्धेषादिश्रवणानन्तरं श्वेताश्वो धावतीति धीदर्शनाच्च, पदार्थज्ञानमेव कारणमिति वाच्यम्। योगजसाक्षात्कारे योगजधर्मसहकृतस्य मनस इव काव्यादिमूलसंसर्गानुभवे उत्प्रेक्षासहकृतस्य तत्तदर्थस्मृतिव्यापारकस्य मनस एव करणत्वात् ॥**

**अन्यथा गौरवात् ॥**

## न्यायदीपः

ननु क्रियाया अयोगव्यवच्छेदेन सम्बन्धित्वं करणत्वमस्तु। एवं च निर्व्यापारमपि स्मरणं करणं स्यात्। स्मरणव्यापारकं मन एववास्तु करणमित्यतो दोषान्तरमाह ॥ **व्युत्पत्तीति** ॥ शब्दस्यैव कारणत्वग्रहणाच्च न पदार्थस्मृतिरन्वयबोधं प्रति कारणमित्यनुषङ्गः। प्रथमगृहीतमपि शब्दकारणत्वं त्यज्यताम्। न च शब्देनायमर्थो ज्ञायत इत्यनुभवविरोधान्न त्यागो युक्त इति वाच्यम्। तस्य भ्रमत्वोपपत्तेरित्यत आह ॥ **शब्देनेति** ॥

पदार्थस्मृतेरेव स्मृतपदार्थान्वयबोधहेतुत्वेऽतिप्रसङ्गं चाह ॥ **कारणत्वेति** ॥ शब्दगुणकमाकाशमित्यादावाकाशे आकाशपदशक्तिग्रहहीनस्याप्याकाशस्य शब्दमात्रं प्रति कारणत्वादाकाशमिति पदं प्रति कारणत्वसम्बन्धेनाकाशस्मृतिमतो आकाशशब्दगुणकत्वाद्यन्वयबोधः स्यादित्यर्थः।

पदार्थस्मृतेः करणत्वे मण्युक्तं दोषान्तरं चाह ॥ **घट इति** ॥ **पदविशेषेति** ॥ घटमानयेत्यादिद्वितीयाविभक्त्यन्तपदविशेषेत्यर्थः। चिन्तावशोपनीतपदार्थानामन्वयबोधात्काव्यादिरिति मण्युक्तं चोद्यमनुवदति ॥ **न च पदमिति** ॥

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः।
खुरनिष्पेषशब्दं च श्वेतोश्वो धावतीति धीः॥

इत्युक्तन्यायेनास्त्येव पदार्थानामन्वयबोधकत्वमिति सुधोक्तचोद्यं सङ्क्षिप्याह ॥ **हेषेति** ॥ करणमन्वयबोधं प्रतीत्यर्थः। पदं विनाऽपीति कृतचोद्यस्य मण्युक्तमेव समाधिं स्पष्टमाह ॥ **योगजेति** ॥ उत्प्रेक्षानामाहेजस्तर्कजं ज्ञानमित्याहुः। ॥ **गौरवादिति** ॥ प्रसिद्धत्यागादिदोषद्वयगौरवादिति मूलारूढतोक्तिः।

## तर्कताण्डवम्

**अत एव नोत्प्रेक्षादेर्मानान्तरत्वापत्तिः। तस्यालोकवन्मनःसहकारित्वात्। श्वेतो धावतीति धीस्तु, तवार्थापतत्त्या, मम तु अयं कालागुरुवह्निमान् नीलसुरभिधूमवत्त्वादितिवदयं श्वेतो धावदश्वो हेषाखुरनिष्पेषवत्त्वादित्यनुमानेन। अन्यथा अनुमानमात्रोच्छेदः स्यात्॥**

**वस्तुतस्तु मन्मते वाक्यस्थपदज्ञानान्वयानुभवयोर्मध्ये पदार्थस्मृतिरेव नास्ति। कदापि स्मरामीत्यनुव्यवसाया-भावात्॥**

**कल्पने च गौरवात्। अवाक्यस्थपदं तावत्स्मारक-मेवेतिचेत्किं तावता। न ह्यसहायस्य यत्कार्यं तदेव स सहा-यस्याऽपि। तथात्वे हीन्द्रियसहितसंस्कारजन्या प्रत्यभिज्ञाऽपि स्मृतिः स्यात्।**

## न्यायदीपः

अत एवेत्युक्तं व्यनक्ति ॥ **तस्येति** ॥ अन्यथाऽऽलोकस्यापि पृथङ्भानत्वापत्तिरिति भावः। हेषादीत्यादिचोद्यस्यानुमानादर्थापत्तेर्वा तत्रान्वयप्रतीतेरिति सुधोक्तसमाधिं स्पष्टयति ॥ **तवेति** ॥ पक्षधराद्युक्तदिशा प्रयोगं व्यनक्ति ॥ **श्वेत इति** ॥ श्वेत इति पक्षः धावदश्व इति साध्यम् ॥ **अन्यथेति** ॥ तत्रापि पदार्थानमेवान्वयबोधकत्वे सर्वत्रानुमानस्थळे स्मृतव्याप्त्यादिपदार्थस्यैव साध्यान्वया-नुभावकत्वसम्भवादिति भावः। उक्तं च मणिकृताऽपि श्वेतोऽश्वो धावतीति धीस्तु लिङ्गजेति॥

नन्वेवं वाक्ये पदार्थस्मरणमभ्युपेत्य तस्योक्तदिशा निर्व्यापारत्वादिनाऽन्वयबोधं प्रत्यकरणत्वोक्तौ न्यायमत इव वाक्ये पदार्थे स्मृतिरङ्गीकृता स्यात्। तथा च पदनिचयश्रवणेत्यादिवक्ष्यमाणसुधा-वाक्यविरोध इत्यत आह ॥ **वस्तुतस्त्विति** ॥

यद्वा पदकदम्बश्रवणसमनन्तरं कुतश्चिन्मानसापराधादनुपजातपदार्थस्मृतेर्वाक्यार्थबोधानुदया-दुपजातपदार्थस्मृतेःस्तदुदयादन्वयव्यतिरेकाभ्यां पदस्मारितपदार्थानां वाक्यार्थबोधकत्वमुपेयमित्यतः शक्तिस्मरणभावाभावाभ्यामन्यथोपपत्तेरिति भावे नाह ॥ **वस्तुतस्त्विति** ॥ **अन्यथेति** ॥ अननुव्यवसीयमानपदार्थस्मृतिकल्पने "गौरवं कल्पनेन्यथा" इत्यनुव्याख्यानोक्तगौरवादित्यर्थः॥

ननु वाक्ये पदार्थन्स्मरामीत्यनुव्यवसायाभावेऽपि वाक्यस्थं पदं पदार्थस्मारकं पदत्वादेकैकशः श्रूयमाणवाक्यस्थपदवदित्यनुमानात्स्मारकत्वसिद्धिरिति शङ्कते ॥ **अवाक्यस्थमिति** ॥ असहायपदत्वमुपाधिरिति भावेन सुधोक्तमेव समाधिमाह ॥ **किं तावतेत्यादिना** ॥ अस्तु को दोष इत्यत आह ॥ **तथात्व इति** ॥ असाहयस्य यत्कार्यं तत्ससहायस्याप्यङ्गीकार इत्यर्थः॥

## तर्कताण्डवम्

**इन्द्रियलिङ्गाभ्यां सन्निकर्षव्याप्त्योरिव शब्देनापि शक्तेरनुभवरूपे स्वफले जनयितव्य एव स्वविषयेण सह सम्बन्धत्वेनापेक्षितत्वाच्च।**

## न्यायदीपः

ननु प्रत्यभिज्ञायाः संस्कारजन्यत्वेऽपीन्द्रियप्रत्यासत्तित्वेनैव संस्कारजन्यता न तु संस्कारत्वेन तथात्वेन तज्जन्यस्यैव स्मृतित्वं शब्दे त्ववाक्यस्थळ इव वाक्यस्थळेऽपि शक्तित्वेन शक्तेः पदार्थोपस्थितिहेतुत्वात्स्मृतित्वमेव युक्तमित्यत आह ॥ **इन्द्रियेति** ॥ इन्द्रियलिङ्गाभ्यस्वविषये ज्ञाने जनयितव्ये यथाक्रमं सन्निकर्षव्याप्त्योर्यथा सम्बन्धत्वेनापेक्षितत्वं तथा वाक्यस्मृतशब्देनापि स्वार्थगोचरानुभवे जनयितव्ये शक्तेः सम्बन्धत्वेनैवापेक्षितत्वेन स्मृतित्वानापत्तेरित्यर्थः ॥

## तर्कताण्डवम्

**अन्यथा व्याप्तिरपि वह्नेः स्मारिका स्यात्। व्युत्पत्तिकाले अनुभवहेतुत्वेन गृहीतया शक्त्येदानीमप्यनुभवस्यैव जनयितव्यत्वाच्च। हस्तिना हस्तिपकस्मृतेरिव पदेन पदार्थस्मृतेरपि व्युत्पत्तिकाले सहानुभूतत्वरूपसम्बन्धादेव सम्भवेन स्मरणार्थं शक्तेरनपेक्षितत्वाच्च। सम्बन्धज्ञानस्य सम्बन्धिज्ञानपूर्वकत्वनियतिस्तु प्रत्यक्ष एव। न तु शब्दे। संयोगोऽस्तीत्यादि शब्दात्संयोगिज्ञानं विनाऽपि संयोगानुभवात्।**

## न्यायदीपः

ननु शब्द एव शक्तेः स्मारकत्वनियमो नान्यत्रेति मन्वानं प्रत्याह ॥ **व्युत्पत्तीति** ॥ वृद्धव्यवहारादिना शक्तिग्रहणकाल इत्यर्थः। न चैवं केवळपदस्यापि स्मारकत्वं न स्यादिति वाच्यम्। व्युत्पत्तिकाले ससहायत्वेनैव श्रुतस्य शब्दस्यानुभावकशक्तिमत्वेन ग्रहणेन वाक्य एवानुभवजनकत्वोपपादनस्याभिमतत्वेनासहाये अनुभवसामग्र्यभावादेव स्मारकत्वोपपत्तेः।

ननु तु स्मारकत्वेनागृहीतायाः शक्तेरवाक्यस्थळे कथं स्मारकत्वां मित्यतस्तत्र शक्तेर्न स्मारकत्वं किं तु शब्दज्ञानमेव शब्दार्थस्मारकमिति सदृष्टान्तमाह ।। **हस्तिनेति** ।। **स्मृतेरपीति** ।। सम्भवेनेत्यन्वयः। पदार्थस्मरणार्थं शक्तेरनपेक्षितत्वादित्यर्थः। स्मारकत्वेन साहचर्यइनयमो नावश्यक इति सूचनाय हस्तिनेति दृष्टान्तोक्तिः। तथा चानन्यथासिद्धत्वादनुभव एव शक्तेरुपयोगः स्वीकार्य इति भावः।।

नन्वन्वयरूपपदार्थसम्बन्धस्य घटमानयेत्यादिवाक्यार्थरूपान्वयस्य पदार्थसम्बन्धरूपत्वात्तत्र च पदार्थयोः सम्बन्धित्वात्सम्बन्धज्ञानस्य च सम्बन्धिज्ञानपूर्वकत्वस्य घटपटसंयोगादिप्रत्यक्षे दर्शनात्पूर्वं पदार्थज्ञानं पश्चादन्वयरूपसम्बन्धज्ञानं वाच्यम्। तथा च कथं मध्ये पदार्थस्मृतिरेव नेत्युक्तिरित्यत आह ।। **सम्बन्धेति** ।। एतेन विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्येति पदार्थस्मृतिरावश्यकीति निरस्तम्। विशेषणज्ञानहेतुताया निरासात्।।

## तर्कताण्डवम्

**न चैवं पदार्थस्मृतिरूपावान्तरव्यापाराभावाच्छब्दस्य कथं प्रमाकरणत्वमिति वाच्यम्। शक्तिस्मृतेरेव व्यापारत्वात्। स्वीकृता हि त्वयाऽपि शब्दज्ञानार्थस्मृत्योर्मध्ये शक्तिस्मृतिः ।।**

**उक्तं हि सुधायाम् - ''पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात्'' इति ।।**

**तस्मादनन्यलभ्यत्वात्सिद्धं शब्दस्यान्विताभिधायित्वम्।**

## न्यायदीपः

यत्तु मणौ पदार्थस्मरणं व्यापारः, आकाङ्क्षादिसहकारिवशात्स्मारितार्थान्वयानुभवः फलमित्युक्तं तद्धृदि कृत्वा शङ्कते ।। **न चैवमिति** ।। मध्ये पदार्थस्मृतेरभाव इत्यर्थः ।। **सङ्गति स्मृतेरेवेति** ।। शब्दज्ञानस्य करणत्वात्सङ्गतिस्मृतेश्च शब्दज्ञानजन्यत्वाच्छब्दज्ञानजन्यान्वयानुभवजनकत्वाच्च व्यापारत्वमिति भावः।।

ननु शक्तिरन्वयांशे स्वरूपसती पदार्थांशे तु ज्ञातोपयुज्यत इति कुब्जशक्तिपक्षे पदज्ञानान्वय-

बोधयोर्मध्ये शक्तिज्ञानं नास्त्येवेति कथं तस्य व्यापारतेत्यत आह ।। **स्वीकृताहि इति** ।। पदार्थस्मृत्यर्थं त्वयाऽप्यङ्गीकृतत्वादस्माभिश्चान्वयांशेऽपि शक्तिज्ञानमावश्यकमिति साधितत्वाच्च भवति शक्तिज्ञानमवान्तरव्यापार इति भावः ।। **उक्तं हीति** ।। पदज्ञानवाक्यार्थबोधयोर्मध्ये पदार्थस्मृतिर्नेत्येतत् ''गौरवं कल्पनेऽन्यथे''त्येतद्व्याख्यावसरे जिज्ञासाधिकरणसुधायामुक्तमित्यर्थः। बोधाविति द्वितीया द्विवचनम्। ''अन्तरान्तरेणयुक्त'' इत्यन्तराशब्दयोगे द्वितीया विधानात्।

## तर्कताण्डवम्

**तस्मात्पदार्थस्मृतेः कारणत्वे**

**प्रसिद्धत्यागः,**

**अप्रसिद्धस्वीकारः,**

**अवान्तरव्यापाराभावः,**

**प्राथमिकव्युत्पत्तिविरोधः,**

**अनुभवविरोधः,**

**कारणत्वेन सम्बन्धेनाकाशस्मृतितोप्यन्वयधीप्रसङ्गः,**

**घटः कर्मत्वमित्यादिपदजनितस्मृतितोप्यन्वयधीप्रसङ्गः,**

**पदार्थस्मृतौ प्रमाणाभावश्चेति, दोषाष्टकम्।**

**भाट्टाभिमताभिहितान्वयभङ्गः ।। २१ ।।**

## न्यायदीपः

भङ्गार्थं साध्योक्तिपूर्वमुपसंहरति ।। **तस्मादिति** ।। तस्यार्थः अनन्यलभ्यत्वादिति। उपपादित-दोषान् बुद्ध्यारोहार्थम् सङ्ग्रहेणानुवदति ।। **तस्मादिति** ।। पदार्थस्य तत्स्मरणस्यान्वयबोधकरणत्व-स्वीकाराद्देषाष्टकमित्यन्वयः। यद्वोक्तमध्ये कस्याप्यपरिहार्यत्वादित्यर्थः। यद्वा शब्दस्यान्विता-भिधायित्वात्तदनभ्युपगमे दोषाष्टकमित्यर्थः। प्रसिद्धत्यागादिदोषद्वयादित्युक्तमाह ।। **प्रसिद्धेति** ।। निर्व्यापारत्वाच्चेत्युक्तमाह ।। **अवान्तरव्यापारेति** ।।

व्युत्पत्तीत्यनेनोक्तमाह ॥ **प्राथमिकेति** ॥ शब्दे(ने)त्यनेनोक्तमाह ॥ **अनुभवेति** ॥ कारणत्वेत्यनेनोक्तमाह ॥ **कारणत्वेति** ॥ घटः कर्मत्वमित्यादिनोक्तमाह ॥ **घट इति** ॥ वस्तुतस्त्वित्यादिनोक्तमाह ॥ **पदार्थेति** ॥

भाट्टाभिमताभिहितान्वयभङ्गः ॥ २१ ॥

## अथ अन्वयस्य लक्ष्यत्वभङ्गः ।

### तर्कताण्डवम्

**एतेन–पदार्थमात्रे शक्तस्य पदस्य पदार्थ सम्बन्धिन्यन्वये लक्षणैवेति निरस्तम्। उक्तरीत्यान्वयेऽपि शक्तेः परम्परासम्बन्धरूपलक्षणाङ्गीकारेऽनुव्याख्यानोक्तगौरवात्।**

### न्यायदीपः

नन्वनन्यलभ्यत्वादित्यसिद्धम्। लक्षणयाऽपि तद् बोधसम्भवादित्यत आह ॥ **एतेनेति** ॥ गौरवदोषेणेत्यर्थः। यथा प्रवाहे शक्तस्य गङ्गापदस्य तत्सम्बन्धिनि तीरे लक्षणा तथेति भावः ॥ **उक्तेति** ॥ ननु कथमन्विते शक्तिरित्यादिनोक्तरीत्येत्यर्थः ॥ **परम्परेति** ॥ शक्यार्थसबन्धित्वरूपपरम्परेत्यर्थः। एकयैव शक्त्यैव पदार्थतदन्वययोरभिधानसम्भवाल्लाघवं शक्तिपक्ष इति भावः ॥

ननु लक्षणापक्षे हस्तिना हस्तिपस्मृतेरिवेत्यादिना पूर्वोक्तिदिशा शक्तिं विनाऽपि पदार्थस्मृतिसम्भवेन पदार्थेष्वपि शक्तिर्नोपेयेति लाघवमिति चेन्न। तथात्वे क्वाप्यभिधानवृत्तेरभावेन लक्षणामात्रोच्छेदापत्तेः। वाच्यार्थसम्बन्धपूर्वकत्वात्सर्वत्र लक्षणायाः। अत एव प्राक्पदार्थमात्रे शक्तस्येत्युक्तम्। या तु सुधाया ''मन्वयोलक्ष्यत इति चेत्तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रम्। अन्वये तु लक्षणेति पदानां न कुत्राप्य भिधावृत्तिरिति स्या''दित्युक्तिः सा साहचर्यात् स्वार्थान् स्मारयन्त्यपराणि पदानीति पूर्वप्रकृतमतान्तराभिप्रायेति ज्ञातव्यम्॥

### तर्कताण्डवम्

**किंचैवं ''वेला तत्तीरनीरयो''रित्यनुशासनात्केवलतीरे**

शक्तस्य वेलापदस्य केवलमात्सर्ये शक्तस्य मत्सरपदस्य विशिष्टे लक्षणासम्भवेन, तत्र शक्तिर्न स्यात्। एवं जातिमात्रे शक्तस्य गवादिपदस्य जात्याकृतिविशिष्टव्यक्तौ शक्तिश्च न स्यात्। एवं जातिमात्रे शक्तस्य गवादिपदस्य जात्याकृति-विशिष्टव्यक्तौ च लक्षणासम्भवेन जात्याकृतिविशिष्टव्यक्तौ शक्तिश्च न स्यात्। यदि च वेलादिपदस्य नीरादौ तद्विशिष्ट-तीरादौ च प्रयोगप्राचुर्यान्नीराद्यनुपपत्त्यनुसन्धानं विनैव विशिष्टप्रतीतेश्च न तत्र लक्षणा; तर्हि तत एवान्वय विशिष्टेपि न लक्षणा॥

किं च वाच्यार्थसम्बन्धितया धीस्थ एवार्थे लक्षणा। न तान्वयविशेषो वाच्यार्थसम्बन्धितया धीस्थः। अपि च प्रतीतान्वयानुपपत्त्यैव लक्षणेति लक्षणातः प्रागन्वये धीः स्वीकार्येति कथं लक्षणयाऽन्वयधीः॥

तस्मादन्वयस्य लक्ष्यत्वे वृथैव क्लृप्तशक्तित्यागोऽति-प्रसङ्गो वाच्यार्थसम्बन्धितयोपस्थितिरूपलक्षणाहेत्वभावः प्रतीतान्वयानुपपत्तिरूपलक्षणाबीजाभावश्चेति दोषचतु-ष्टयम्॥

**अन्वयस्य लक्ष्यत्वभङ्गः॥२२॥**

**न्यायदीपः**

अतिप्रसङ्गं चाह॥ **किं चैवमिति**॥ एकैकत्र शक्तस्यान्यत्र तत्सम्बन्धिनि प्रयोगप्राचुर्यसत्त्वे लक्षणामुपेत्य शक्त्यपलापे सतीत्यर्थः॥ **तत्तीरेति**॥ नीरविशिष्टतीरेत्यर्थः॥ **विशिष्टे ति**॥ नीरविशिष्टे मात्सर्यविशिष्टे चेत्यर्थः। परमुखेनैव हेतुद्वयोक्तिपूर्वं समाधिं वाचयति॥ **यदि चेति**॥ **तत एवेति**॥ त्वदुक्तहेतुद्वयादेवेत्यर्थः।

द्विविधं हि लक्षणाबीजम्। वाच्यार्थसम्बन्धित्वेन धीस्थत्वं, अन्वयानुपपत्तिश्चेत्येतद्

द्विविधलक्षणाबीजाभावान्न लक्षणा युक्तेत्याह ॥ **किं चेति** ॥ **अपि चेति च** ॥ **न चान्वयविशेष इति** ॥ तस्यापूर्वत्वेन वाक्यैकबोधस्य प्रागनुपस्थितेरिति भावः। शेषस्तु स्पष्टः।

अन्वयस्य लक्ष्यत्वभङ्गः ॥ २२ ॥

## अथ प्राभाकरोक्तपदशक्तिभङ्गः

### तर्कताण्डवम्

**पदार्थस्तु व्यक्तिरेव। शक्तिग्राहकस्यानयनादि व्यवहारस्य तत्रैव सम्भवात्। अन्यथा शब्दात्तत्प्रतीतेरसम्भवाच्च।**

**अत्र प्राभाकराः।**

**अनिर्धारितयत्किञ्चिद्व्यक्तेः शक्यत्वे का व्यक्तिः शक्येत्यनध्यवसायेन गां दद्यादित्यादि वाक्यात्प्रवृत्तिर्न स्यात्। सर्वस्याः प्रत्येकं शक्यत्वे यत्र शक्तिग्रहस्तत्रैव शाब्दधीः स्यात्। अन्यत्र तु तदग्रहादपूर्वव्यक्तिधीर्न स्यात्। सर्वत्वेन शक्यत्वे गां दद्यादित्यादिशास्त्रमशक्यानुष्ठानार्थोपदेशकं स्यात्। तस्माच्छक्यव्यक्त्यनुगमायाशक्यव्यक्तिव्यावृत्तये च सर्वैकौदासीन्येन विशेषणेन वोपलक्षणेन वा गोत्वेनावच्छिन्ना व्यक्तिः शक्येति शक्तिग्रहो वाच्यः। तथा च स्वत एवान्यव्यावृत्तगोत्वस्य प्रथमोपस्थितत्वाल्लघुत्वाच्च नागृहीतविशेषणन्यायेन जातिरेव शक्या ॥**

### न्यायदीपः

नन्वन्विते पदार्थे पदानां शक्तिरित्युक्तम्। तत्र कः पदार्थः किं जातिरुत व्यक्तिरिति तत्राह ॥ **पदार्थस्त्वित्यादिना** ॥ प्रकरणपञ्चकेन। पदस्य शक्यान्वयप्रतियोग्यर्थस्त्वित्यर्थः। व्यक्तय एव वाच्या इति पद्धत्युक्तेरिति भावः। अत्रैवकारः पराभ्युपगतानुगतजातिव्यावर्तको न तु घटत्वादि-

तत्तदसाधारणधर्मनिरासकः। तस्यापि वाच्यत्वात्। यद्वा घटत्वादेर्वाच्यत्वेऽपि वाच्यतावच्छेदकत्वेनैव न तु प्राधान्येनेति तदभिप्रायेणैवकारः। न तु तस्यावाच्यत्वेनेत्यग्रे व्यक्तम्॥ **अन्यथेति**॥ व्यक्तौ शक्तेरभाव इत्यर्थः। पदशक्तिवादपूर्वपक्षे मण्युक्तं निष्कृत्याह॥ **अनिर्धारितेत्यादिना उच्यत इत्यन्तेन**॥

व्यक्तौ शक्तिरिति वदता वक्तव्यम् किमेकस्यां व्यक्तावथसर्वासु व्यक्तिष्विति। अन्त्येपि किं प्रत्येकं तत्तद्व्यक्तिषु पृथक्पृथक्शक्तिरुत सर्वत्वेन रूपेण सर्वास्वपि व्यक्तिष्वेकैव। आद्ये दोषोनिर्धारितेति। द्वितीय आह॥ **सर्वस्या इति**॥ एकदा सर्वासामुपस्थित्ययोगेन प्रत्येकं सर्वासु शक्तिग्रहायोगेन क्वचिदेवेति वाच्यत्वादिति भावः। तृतीय आह॥ **सर्वत्वेनेति**॥ गामिति पदेन सर्वगोव्यक्त्युपस्थित्या सर्वासामपि दानकर्मत्वप्रतीतेरिति भावः।

एवं व्यक्तिपक्षे बाधकमुक्त्वा स्वपक्षमुपसंहारमुखेन सयुक्तिकमाह॥ **तस्मादिति**॥ केवलव्यक्तौ शक्तिपक्षस्यायोगादित्यर्थः॥ **शक्येति**॥ शक्यानां व्यक्तीनामनुगमाय सङ्ग्रहाय, अशक्यानामश्वादीनां व्यवच्छेदाय चेत्यर्थः। विशिष्टं शक्यमिति पक्ष आह॥ **विशेषणेनवेति**॥ गोत्वेनेत्यन्वयः। व्यक्तिमात्रमेव शक्यमिति पक्ष आह॥ **उपलक्षणेनवेति**॥ किं तत इत्यत आह॥ **तथाचेति**॥ गोत्वरूपधर्मेणैव गोव्यक्तीनामनुगतत्वान्यव्यावृत्तत्वयोः सपाद्यत्वे सतीत्यर्थः॥ **स्वत एवेति**॥ व्यक्तिवदनुगतधर्ममुखापेक्षां विनैवेत्यर्थः।

## तर्कताण्डवम्

**ननु व्यक्तौ शक्त्यभावे कथं शब्दात्तद्धीरिति चेत्। सत्यम्। पदेन जातिविशिष्टव्यक्तिज्ञानजननाद्विशिष्टे शक्तिरस्त्येव। किं त्वगृहीतशक्तिकस्य बालस्यार्थाबोधात्कुत्र चिच्छक्तिज्ञानं सहकारि कल्पनीयम्। तत्र जात्यंशे शक्तिज्ञानस्यैव जातिशक्तिज्ञानत्वेन कारणता कल्प्यते। कार्यता तु जातिविशिष्टशाब्दज्ञानत्वेन। न तु जातिविशिष्टशक्तिज्ञानत्वेन कारणता। जात्यंशे शक्तिज्ञाने सति जातिविशिष्टे शक्तिज्ञानव्यतिरेकेण जातिविशिष्टव्यक्तिविषयकशाब्दबोधव्यतिरेकादर्शनात्।**

**यद्वा जातिशक्तिज्ञानत्वेनैव कारणता। जातिशब्द-ज्ञानत्वेनैव कार्यता च। जातिभानसामग्री तु जातेर्व्यक्ति-घटितमूर्तित्वेन व्यक्तिमनादाय जातिबोधनाशक्ता तामादायैव जातिं बोधयति। यथा बुद्धिमद्धेतुकानुमितित्वेन कार्यत्वे बुद्धिमद्धेतुकव्याप्यत्वेन च कारणत्वे सिद्धे क्षित्यादौ कार्यत्वेन हेतुना जायमानानुमितिर्बुद्धिनित्यत्वमादाय पर्यवस्यति। एतदेव हि समानसंवित्संवेद्यत्वम्। यदन्यबुद्धित्वावच्छिन्न-कार्यताप्रतियोगिककारणादन्यत्र बुद्धिर्भवतीति ॥**

## न्यायदीपः

अन्यशक्तात्पदादन्यज्ञानायोगाद्गोपदाद्गोव्यक्तिधीरनुभवसिद्धा न स्यादिति भावेन शङ्कते ॥ **नन्विति** ॥ यत्तु मणौ प्राभाकरमतानुवादप्रस्तावे कुतस्तर्हि व्यक्तिधीरित्याशङ्क्य गोपदं हि नियमतो जातिव्यक्ती बोधयतीत्यादिना प्राभाकरमतमनूदितं तन्निष्कृष्याह ॥ **सत्यमित्यादिना** ॥ शक्तिज्ञानस्य सहकारित्वे युक्तिरगृहीतेत्यादि। पक्षधरोक्तं निष्कर्षमाह ॥ **तत्रेति** ॥ जात्यंशे शक्तिज्ञानस्यैव। न तु व्यक्त्यम्शे शक्तिज्ञानस्यापीत्येवकारार्थः ॥

नन्वन्यज्ञानेनान्योत्पत्तावतिप्रसङ्ग इत्यतस्तद्विशिष्टत्वं नियामकमिति भावेनाह ॥ **जाति-विशिष्टेति** ॥ कुत इत्यतो विशिष्टशक्तिज्ञानत्वेन कारणताग्राहकमानाभावादित्याह ॥ **जात्यंश इति** ॥ अन्यज्ञानेनान्यज्ञानोत्पत्तावतिप्रसङ्गनिरासाय तद्विशिष्टत्वं नियामकमेकमुक्तम्। सामानसंवित्-संवेद्यत्वरूपनियामकान्तरं च। अथ वा जातिशक्तिज्ञानाज्जतिधीर्भवन्ती व्यक्तिमपि बोधयतीत्यादिना मण्युक्तमाह ॥ **यद्वेति** ॥ **व्यक्तिघटितेति** ॥ गोत्वादेर्गवादिव्यक्तिनिष्ठधर्मविशेषरूपत्वादिति वाऽनेकव्यक्तिवृत्तित्वरूपत्वादिति वा तात्पर्यम्।

स्वयं दृष्टान्तमाह ॥ **यथेति** ॥ क्षित्यादिकं बुद्धिमद्धेतुकं कार्यत्वात् घटवदितीश्वरानुमाने क्षित्यादिनिष्ठकार्यत्वहेतुना क्षित्यादेः सिद्ध्यद् बुद्धिमज्जन्यत्वं नित्यबुद्धिमज्जन्यत्वं सिध्यति। बुद्धेर्नित्यत्वं विना क्षित्यादिनिष्ठकार्यत्वस्यायोगात्। लोके घटादिकार्ये च बुद्धिमद्धेतुकत्व-गोचरानुमितित्वेन बुद्धिमज्जन्यत्वव्याप्यकार्यत्ववत्त्वेन कार्यकारणभावग्रहो न नित्यत्वगर्भितबुद्धि-मद्धेतुकत्वानुमितित्वेनापि। तथाऽपि यथा क्षित्यादौ विशेषसिद्धिस्तथेत्यर्थः ॥

किमनेन नियामकमुक्तं स्यादित्यत आह ।। **एतदेव हीति** ।। एतदित्युक्तं व्यनक्ति ।। **यदिति** ।। जातिशाब्दज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणाज्जातिविशिष्टे बुद्धिरित्यर्थः ।।

## तर्कताण्डवम्

**उच्यते-**

**येन रूपेणोपस्थिते सम्बन्धिनि यस्य सम्बन्धो गृह्यते तेन रूपेणैकसम्बन्धिप्रतीतिरपसम्बन्धिनं ज्ञापयतीत्यनुमित्यादौ क्लृप्त कार्यकारणभावसामान्यमतिक्रम्य सामग्र्यन्तरकल्पना न युक्ता। सामान्ये बाधकाभावेऽपि स्वार्थे व्यक्तौ सामग्र्य-न्तरकल्पनेऽनुव्याख्यानोक्तगौरवात् ।।**

## न्यायदीपः

ईश्वरानुमानेऽपि बुद्धिमज्जन्यत्वानुमितिं विशिष्टव्यक्तौ शब्दशक्तिमुपेत्यापि शक्तिज्ञानस्य जातिशक्तिज्ञानत्वेनैव जातिविशिष्टव्यक्तिज्ञानं प्रति कारणत्वं तत्र च तद्विशिष्टत्वं वा तदेकवित्तिवेद्यत्वं वाऽतिप्रसङ्गभञ्जकं नियामकद्वयम्, तदुभयमपि निराह ।। **येन रूपेणेति** ।। धूमत्वादिना रूपेणोपस्थितो धूमादौ सम्बन्धिनि यस्य सम्बन्धः यन्निरूपितः सम्बन्धो वह्निनिरूपितो व्याप्तिलक्षणः सम्बन्धो गृह्यते, तेन रूपेण धूमरूपैकसम्बन्धिप्रतीतिः वह्निलक्षणमपरसम्बन्धिनं ज्ञापयतीत्य-नुमितिस्थळे हस्ति हस्तिपादिस्मृत्यादिस्थळे च क्लृप्तम्। तथैव शब्दस्थळेऽपि गोपदत्वेन रूपेण गोपदरूपे सम्बन्धिन्युपस्थिते गोत्वविशिष्टगोव्यक्तिनिरूपितः शक्तिलक्षणः सम्बन्धोगृहीत इति गोपदत्वेन रूपेण गोपदरूपैकसम्बन्धिप्रतीतिरपरं गोरूपं जातिविशिष्टमर्थं ज्ञापयतीत्युपपद्यते, तथा च गोपदज्ञानत्वेनैव गोरूपार्थज्ञानत्वेन कारणभूतजातिशक्तिज्ञानरूपसामग्र्यन्तरकल्पने गौरव-मित्यर्थः। स्वार्थे व्यक्तावित्युक्त्या-

शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते।
अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ।।

इति श्लोकस्य जात्यन्वितो स्वार्थे व्यक्तौ शक्तिरनुभूयते शब्दानां अतो जात्यन्वितव्यक्त्यभिधायित्वं, जात्यन्वितव्यक्तिप्रत्यायकत्वम्। अन्यथा सामग्र्यन्तरकल्पन इत्यर्थोऽभिप्रेतः।

## तर्कताण्डवम्

**किं चैवं व्यक्त्यंशे शक्तिज्ञानत्वेन कारणता, जातिविशिष्टव्यक्तिविषयकशाब्दज्ञानत्वेन कार्यतेति विपरीतं किं न स्यात्। एवं पदार्थशक्तिज्ञानत्वेन कारणता, योग्येतरान्वितपदार्थविषयकशाब्दज्ञानत्वेन कार्यतेत्यापत्त्याऽन्विते शक्तिज्ञानस्य कारणता न स्यात्।**

## न्यायदीपः

नन्वन्यलभ्येपि व्यक्तिज्ञाने व्यक्तिशक्तिज्ञानत्वेनापि कारणत्वकल्पने गौरवं तुल्यमेवेत्यत आह ॥ **किं चैवमिति** ॥ लाघवादन्यतरांशशक्तिज्ञानस्यैव हेतुत्व इत्येवंशब्दार्थः।

ननु जातेर्व्यक्तिघटितमूर्तित्वाज्जतिभानं व्यक्तिभानं विना न युक्तम्। न तु व्यक्तिभानं जातिं विनेति। वैषम्यमिति चेत्तर्हि जातिव्यक्त्योरेकवित्तिवेद्यत्वभङ्गः स्यात्। अन्यबुद्धित्वावच्छिन्नकार्यताप्रतियोगिककारणादन्यत्र बुद्धिर्भवतीत्यस्यैवैकवित्तिवेद्यत्वशब्दार्थत्वात्॥

ननु व्यक्तौ जातेर्विशेषणत्वान्नागृहीतविशेषणन्यायेन जातिशक्तिज्ञानत्वेनैव हेतुत्वमिति चेन्न। व्यक्तेरपि जातौ विशेषणत्वात्क्रमिकोपस्थितिस्थळ एव नागृहीतेतिन्यायावतारेण तुल्यवित्तिवेद्यजातिव्यक्तिस्थळे तदनवताराच्च॥

दोषान्तरमाह ॥ **एवमिति** ॥ अन्वयांशेपि शक्तिज्ञानहेतुत्वस्य प्राभाकरैः स्वीकाराद्भवतीदमनिष्टमितिभावः।

## तर्कताण्डवम्

**किं च मुण्डिते गोत्वे न शक्तिग्रहः, यत्किंचिच्छक्यमिति ज्ञानेनाश्वत्वादिव्यावृत्तगोत्वस्य शक्यत्वासिद्धेः। किं तु व्यक्त्या विशेषिते गोत्वे शक्तिग्रह इति नागृहीतविशेषणन्यायो विपरीतः॥**

**न च गोत्वस्य स्वत एव विलक्षणत्वात्स्वतः सिद्धेनेतर-**

**व्यावृत्तत्वेन ज्ञाते गोत्वे शक्तिग्रह इति वाच्यम्। गोत्वं शक्यमिति ज्ञानेपीतरव्यावृत्तेरनुल्लेखात्। उल्लेखे वा सैव प्रवृत्तिनिमित्तं स्यात्। न च गोत्वत्वेन ज्ञाने गोत्वे शक्तिग्रहः। गवेतरावृत्तित्वे सति गोवृत्तित्वादन्यस्य गोत्वत्वस्याभावेन गोत्वत्वे व्यक्तेर्द्विरनुप्रवेशात्॥**

**किं चैवं त्वदभिमता गङ्गाशब्दादेस्तीरादौ लक्षणा मण्डपं भोजयेत्यादौ मण्डपशब्दस्य गृहविशेषसम्बन्धिनि पुरुषे रूढिपुर्विका लक्षणा च न स्यात्। तत्रापि तीरत्वपुरुषत्वे एव लक्ष्ये, तीरपुरुषौ तु लक्षणां विना नागृहीतविशेषणन्यायेन वा एकवित्तिवेद्यतया वा प्रतीयेते इत्येव स्यात्॥**

**किं च व्यक्तेरशक्यत्वेप्येकवित्तिवेद्यतया प्रकतिप्रतिपाद्यत्वाद्विभक्त्यर्थान्वय इति वाच्यम्। तथात्वे हि पूर्वात्वापरत्वादेरप्येकवित्तिवेद्यतयैवान्योन्यं विभक्त्यर्थान्वयसम्भवेन पूर्वापरप्रातिपदिकयोरपरपूर्वप्रातिपदिकार्थविषया विपरीतलक्षणा न स्यात्।**

## न्यायदीपः

नागृहीतेति न्यायमभ्युपेत्यापि दोषान्तरमाह॥ **किं च मुण्डित इति**॥ व्यक्त्यविशेषिते गोत्व इत्यर्थः। स्वत एवान्यव्यावृत्तेति प्रागुक्तमाशङ्क्य निराह॥ **न चेति**॥ **अनुल्लेखादिति**॥ अश्वत्वादिव्यावृत्तं गोत्वमित्याकाराभावादिति भावः॥ **सैवेति**॥ इतरव्यावृत्तिरेव गौपदप्रवृत्तिनिमित्तं स्यादित्यर्थः। नागृहीतविशेषणन्यायात्। नत्वितरव्यावृत्तत्वविशिष्टं गोत्वमिति भावः।

॥ **त्वदभिमतेति**॥ लक्षणेत्यन्वयः ॥ **रूढिपूर्वकेति**॥ मण्डपशब्दस्य गृहविशेषे रूढत्वात्तत्पूर्विकेत्यर्थः। परोक्तं नियामकद्वयं लक्षणास्थळेऽप्याह॥ **नागृहीतेति**॥ **विभक्त्यर्थेति**॥ घटमानयेत्यादौ कर्मत्वादिरूपविभक्त्यर्थान्वय इत्यर्थः। सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाद्व्यक्तेश्चाशक्यत्वेन घटादिप्रातिपदिकार्थत्वाभावात्॥

ननु प्रकृतितात्पर्यविषयेऽर्थे विभक्त्यर्थान्वय इति चेन्न। लक्षणोच्छेदापत्तेः। गौरवाच्चेति भावः। यद्यपि प्राग्विशिष्टे शक्तिरस्त्येवेत्युक्त्या व्यक्तेरपि शक्यत्वमस्ति। तथाऽपि तदंशे शक्तिज्ञानस्याहेतुत्वेऽशक्यत्वप्रायत्वादिति वा, जातावेव शक्तिः व्यक्तिधीस्त्वेकवित्तिवेद्यत्वेन भविष्यतीति मतेन वास्यावताराददोषः ॥ **तथात्वे हीति** ॥ एकवित्तिवेद्यत्वमात्रेण विभक्त्यर्थान्वये सति यत्र विपरीतलक्षणयाऽपराभिप्रायेण पूर्वमानयेति पूर्वपदं प्रयुङ्क्ते तत्र पूर्वप्रातिपदिकस्य अपरपदार्थलक्षणा न स्यात्। लक्षणां विनैव द्वितीयाविभक्त्यर्थकर्मत्वस्य पूर्वपदार्थेनैकवित्तिवेद्ये परपदार्थे अन्वयसम्भवेनापरमानयेत्यर्थोपपत्तेः। एवमेवापरमानयेत्यत्राप्युक्तदिशा पूर्वमानये-त्यर्थोपपत्तेः। पूर्वापरशब्दार्थयोश्चान्योन्यसापेक्षत्वेनैकवित्तिवेद्यत्वादित्यर्थः। न चेष्टापत्तिः। सर्व-तान्त्रिकलौकिकविरोधात्।

## तर्कताण्डवम्

**अपि च पूर्वमानयेति मुख्यप्रयोगेऽपरस्यापि विभक्त्य-र्थान्वयः तदधीनः क्रियान्वयश्च स्यात्।**

**अपि च जातिमात्रस्य पदार्थत्वे गोपदाज्जातिविशिष्ट-व्यक्तिधीर्न स्यात्। न च समानसंवित्संवेद्यतयैव तद्धीः। तद्वैशिष्ट्यांशे तदभावात्। तत्रापि तथात्वे निर्विकल्पकोच्छेदः स्यात्।**

## न्यायदीपः

अभ्युपेत्यापि बाधकमाह ॥ **अपि चेति** ॥ लक्ष्याभिप्रायं विनैव यत्र पूर्वमानयेति मुख्यार्थप्रयोगस्तत्र स्थळे पूर्वप्रातिपदिकात्परत्रश्रुतिविभक्त्यर्थकर्मत्वान्वयोऽपरपदार्थे स्यात्। पूर्वपदार्थेनैकवित्तिवेद्यत्वस्य त्वदुक्तविभक्त्यर्थान्वयप्रयोजकस्य सत्त्वात्। अस्तु को दोष इत्यत आह ॥ **तदधीन इति** ॥ तथा च पूर्वमानयेत्युक्ते अपरस्यानयनप्रसङ्गोपरमानयेत्युक्ते पूर्वस्यानयनप्रसङ्ग इत्यर्थः ॥ **निर्विकल्पकेति** ॥ जातिविषयकनिर्विकल्पकज्ञानस्यैकवित्तिवेद्यतया व्यक्तिविषयकत्व-मिव वैशिष्ट्यस्यापि जातिवित्तिवेद्यत्वे वैशिष्ट्यविषयकत्वस्याप्यापत्त्या वैशिष्ट्याविषयकनिर्वि-कल्पकोच्छेदः स्यादित्यर्थः। एतच्च निर्विकल्पकास्तित्वमतेनोक्तम्।

किञ्चोक्तन्यायेन व्यक्तिविशेषणकगोत्वे शक्तिर्ज्ञातेति तज्जन्या शाब्दधीरपि व्यक्तिविशेषितगोत्वविशेषणक-व्यक्तिविषया स्यात्। न च तथाऽनुभवः। गौरित्यनेन गोत्व-विशेषणकव्यक्तेरेव प्रतीतेः॥

तस्माज्जात्यंश एव शक्तिज्ञानस्य हेतुत्वे -

सामग्र्यन्तरकल्पनापत्तिः,

व्यक्त्यंश एव शक्तिज्ञानं हेतुरिति वैपरीत्यापत्तिः,

अन्वयप्रतिबन्दी,

गोत्वे शक्तिग्रहदशायां व्यक्तेर्द्विरनुप्रवेशापत्तिः,

गवादिपदानां जातावेव शक्तौ गङ्गादिशब्दानां तीरत्वादावेव लक्षणाप्रसङ्गः,

एकवित्तिवेद्यत्वमात्रेण विभक्त्यर्थान्वये पूर्वमानयेत्यादौ परादेरपि तत्प्रसङ्गः,

जातिवैशिष्ट्यांशप्रतीत्यनुपपत्तिः,

गोशब्देन व्यक्तिविशेषितगोत्वविशेषणकव्यक्तिधीप्रसङ्गश्च इत्यष्टौ दोषाः।

**प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३॥**

## न्यायदीपः

तदभावमते तु दोषान्तरमाह ॥ **किं चोक्तेति** ॥ मुण्डिते गोत्वे न शक्तिग्रह इत्यादिनोक्त-न्यायेनेत्यर्थः। तज्जन्या शक्तिजन्येत्यर्थः। अस्त्वित्यत आह ॥ **न च तथेति** ॥ प्रागुक्तं सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ स्पष्टो ग्रन्थः।

प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३॥

## अथ भाट्टोक्तव्यक्तिलक्षणाभङ्गः ।

### तर्कताण्डवम्

**भाट्टास्तु-आनन्त्यव्यभिचाराभ्यां व्यक्तौ शक्तिग्रहासम्भवाज्जातिरेव शक्या, जातिविशिष्टाव्यक्तिस्तु लक्ष्या। एवं च व्यक्तेस्तीरवत्प्रकृतिवृत्तिविषयत्वाद्विभक्त्यर्थान्वयो युक्तः। यद्वा व्यक्तिस्त्वाक्षेपलभ्येति न तत्र वृत्तिः कल्प्या इत्याहुः। तदपि न। उक्तरीत्या स्वार्थे व्यक्तौ शक्तिसम्भवे परम्परासम्बन्धरूपलक्षणाङ्गीकारेऽनुव्याख्यानोक्तगौरवात्। वाक्यस्थसर्वपदानां लक्षकत्वेन लक्षकस्याननुभावकत्वपक्षे व्यक्तेरनुभवायोगाच्च।।**

### न्यायदीपः

लक्षणाया आक्षेपतो वा व्यक्तिधीसम्भवादनन्यलभ्यजातावेव शक्तिरिति मतमप्यनूद्य निराह ।। **भाट्टास्त्विवति** ।। **आनन्त्येति** ।। व्यक्तौ शक्तिरिति पक्षे प्रतिव्यक्ति शक्तिग्रहो न सम्भवति। तासामानन्त्यात्। एकस्यां व्यक्तौ शक्तिग्रहे च शब्दश्रवणतो व्यक्त्यन्तरस्याप्युपस्थितिदर्शनेन तत्र शक्तिग्रहो व्यभिचारि। तेन विनापि तदुपस्थितेः। अतो व्यक्तौ शक्तिग्रहायोगात् सर्वानुगताया-मेकस्यामेव गोत्वादिजातौ गोपदादिशक्तिग्रह इत्यर्थः। कथं तर्हि व्यक्तिधीः शब्दाज्जायेतेत्यतः पक्षद्वयमाह ।। **लक्ष्येति** ।। **आक्षेपलभ्येति च** ।। आक्षेपज्ञेयेत्यर्थः ।।

यद्यपि मणौ भट्टमते तु व्यक्तिस्त्वाक्षेपलभ्येत्युक्त्वाऽऽक्षेपपक्ष एव दोषानुक्त्वा-

जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्ष्यति।
नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे।।

इति मण्डनश्लोकं सम्मतित्वेनोक्त्वा लक्षणापक्षं मण्डनमतत्वेनोपन्यस्य खण्डितवान्। तथाऽपि मण्डनस्य भट्टशिष्यत्वाद्भाट्टास्तु लक्ष्येत्याहुरित्युक्तम्। आकुत्यधिकरणे च वार्तिकमते व्यक्तिलक्षणापक्षस्य स्फुटत्वाच्च।। उक्तं च शास्त्रदीपिकायमपि-

"लक्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता" इति।

लक्ष्येति पक्षे प्रागुक्तदोषो नेत्याह ।। **एवं चेति** ।। **प्रकृतिवृत्तीति** ।। प्रातिपदिकनिष्ठ-लक्षणारूपवृत्तिविषयत्वादित्यर्थः ।। **आक्षेपेति** ।। व्यक्तेर्जात्यविनाभूतत्वाच्छब्दाज्जातिबुद्ध्यनन्तरं क्रमेण व्याप्त्याद्यनुसन्धानेन व्यक्तिबुद्धिरित्यर्थः। जातिव्यक्त्योरेकवित्तिवेद्यत्वं त्वसिद्धमिति भावः। अनुव्याख्यानस्थत्रिपाद्यास्तात्पर्यार्थमाह ।। **स्वार्थ इति** ।। उक्तरीत्येति पाठे पूर्वभङ्गोक्तरीत्येत्यर्थः।

"गौरवं कल्पनोऽन्यथा" इति चतुर्थपादस्थान्यथाशब्दस्यार्थमाह ।। **परम्परेति** ।। शब्दसम्बन्धिजातिसम्बन्धरूपपरम्परासम्बन्धरूपेत्यर्थः। मूलारूढताद्योतनायानुव्याख्यानोक्ते-त्युक्तम्। सुधायामेवमाद्यर्थाव्युत्पादनं शिष्यैरेवोह्यतामिति भावेन ग्रन्थगौरवभयादेव। न तु ग्रन्थकृतो-ऽनभिमतत्वात्। "ग्रन्थोऽयमपि बह्वर्थ" इति मूलकारैरेवोक्तेरतो न विरोधः शङ्क्यः। लक्ष्यकत्वेन इत्यस्य व्यक्तेरनुभवायोगाच्चेत्यन्वयः। कुत इत्यतो लाक्षणिकं पदं नानुभावकमिति यन्मतं तत्पक्ष इति ।।

## तर्कताण्डवम्

**किं च गङ्गात्वादिरूपात्स्वार्थादन्येन तीरत्वादिना रूपेणोपस्थित एव तीरादौ गङ्गादिपदस्य लक्षणा दृष्टा। न चात्र व्यक्तिर्जातिं विना रूपान्तरेणोपस्थिता। गौरिति प्रतीत्या जातिव्यक्त्योरेवोल्लेखात्। काकेभ्यो दधि रक्ष्यतामि-त्यादावपि काकत्वादन्येन दध्युपघातकत्वादिनोपस्थित एव लक्षणा ।।**

**किं च गां पश्य गौस्तिष्ठतीत्यादौ सत्यपि जातेरन्वय-योग्यत्वेऽनुपपत्त्यनुसन्धानं विनैव जातिविशिष्टव्यक्तिप्रतीतेर्न तत्र लक्षणा, प्रत्युत गौर्नित्या गौर्जातिरित्यादौ व्यक्त्य-न्वयानुपपत्त्यैव जातिधीरिति तत्रैव लक्षणा ।।**

**किं च यस्यां व्यक्तावानयनादिव्यवहारेण शक्तिग्रहः एवं गौर्नष्टा गौर्दीर्घा गौः शुक्ला गौः सास्नादिमती गौरनेका गौर्गच्छति गामानय गां बधानेत्यादौ प्रयोगप्रतीत्योः प्राचुर्यं**

**च, तस्यां व्यक्तौ लक्षणा तद्विपरीतायां जातौ शक्तिरिति साध्वीयं व्यवस्था। न हि जातौ नाशाद्यस्ति।**

## न्यायदीपः

लक्षणाबीजाभावान्न लक्षणेतिभावेन मण्युक्तदोषं चाह ॥ **किञ्चेति** ॥ अन्येन रूपेणोपस्थित एव लक्षणेत्यस्य व्यभिचारमाशङ्क्याह ॥ **काकेभ्य इति** ॥ न केवलमन्येन रूपेणोपस्थितिरूपबीजा-भावो मुख्यार्थानुपपत्ति प्रतिसन्धानरूपमपि लक्षणाबीजं नास्तीत्याह ॥ **किं च गामिति** ॥

प्रमितत्यागाप्रमितस्वीकाररूपदोषौ चाह ॥ **किं च यस्यामिति** ॥ तस्यामित्यनेनान्वयः। गवानयनादिवृद्धव्यवहारेण हि प्राथमिकशक्तिग्रह इत्युक्तं प्राक्। स च व्यवहार आनयनादि-योग्यव्यक्तावेवैतस्यां लक्षणा चेत् कथं न प्रमितत्यागः। तद्रहिते जातौ शक्तिग्रहश्चेत् कथं नाप्रमित-स्वीकार इत्यर्थः।

॥ **एवमिति** ॥ यथा व्यक्तौ शक्तिग्रहस्तथा प्रयोगप्रतीत्योः प्राचुर्यं च यस्यां व्यक्तौ तस्यां लक्षणेति योजना ॥ **साध्वीयमिति** ॥ काकुस्वरेणासाधुत्वमुच्यते। गौर्नष्टेत्यादिधीर्जातिविषया अस्त्वित्यत आह ॥ **न हीति** ॥

## तर्कताण्डवम्

**किं चानित्यत्वनित्यत्वानुमानयोर्घटे दृष्टान्तिते घटशब्द-मुख्यार्थस्य घटत्वस्य नित्यत्वात्क्रमेण साध्यवैकल्यतदभावौ स्याताम्। तस्माद्व्यक्तौ मुख्यवृत्तिसम्भवेऽपि लक्षणाश्रयणं, व्यक्तेरनुभवानुपपत्तिः, मुख्यार्थादन्येन रूपेणोपस्थितिरूप-लक्षणाबीजाभावः, जातावनुपपत्यनुसन्धानं विनैव व्यक्ति-धीः, प्रत्युत व्यक्तावनुपपत्त्यनुसन्धाने सत्येव जातिधीः, प्रमितत्यागाप्रमितस्वीकारौ, अनित्यत्वानुमाने घटवदिति दृष्टान्तोक्तिप्रसङ्गश्चेति दोषनवकम् ॥**

**भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४॥**

## न्यायदीपः

॥ **किं चानित्यत्वेति** ॥ शब्दोऽनित्यः कृतकत्वात् घटवदित्यनुमाने घटपदमुख्यार्थस्य घटत्वस्यैव दृष्टान्तत्वापत्त्या साध्यवैकल्यदोषः स्यात्। तथा पृथिवी नित्या गन्धवत्त्वादित्यनुमाने च साध्यवैकल्याभावः स्यात्। न चेष्टापत्तिः। सर्वतान्त्रिकविरोधादिति भावः। प्रागुक्तदोषान् बुद्ध्यारोहाय सङ्क्षिप्यानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥

भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४॥

## अथ भाट्टोक्तव्यक्त्याक्षेपभङ्गः ।

## तर्कताण्डवम्

**आक्षेपपक्षेऽपि व्यवहारादिना गृहीतशक्तेर्व्यक्तेः शब्दात् साक्षाद्धीसम्भवेन शब्दबोधितजात्या व्यक्त्याक्षेपेऽनुव्याख्यानोक्तगौरवं तदवस्थमेव।**

**किं च धूमाक्षिप्तवह्नेरिव व्यक्तेरशाब्दत्वेन विभक्त्यर्थान्वयो न स्यात्॥**

## न्यायदीपः

यद्वेत्यादिनोक्ताक्षेपपक्षं च निराह ॥ **आक्षेपेति** ॥ व्यवहारव्याकरणोपमानकोशादिनेत्यर्थः। गृहीतशक्तेरिति बहुव्रीहिः। शक्तिश्चैवेत्यादित्रिपादीतात्पर्यार्थोक्तिः सम्भव इत्यन्तेन। गौरवं कल्पनेऽन्यथेश्रतत्यत्रत्यान्यथाशब्दोक्तिः शब्दबोधितेत्यादि।

मण्युक्तं दोषमाह ॥ **किं चेति** ॥ **न स्यादिति** ॥ विभक्तीनां प्रकृतिरूपशब्दार्थान्वितस्वार्थबोधकत्वात्। व्यक्तेराक्षेप्यत्वे शब्दार्थत्वाभावात्। तथा चानयनादिक्रियान्वयोपि न स्यात्। अन्यथा पूर्वमानयेत्यादौ पूर्वपदादिनाऽऽक्षिप्तापरपदार्थेऽपि विभक्त्यर्थान्वयः स्यात्। तथा च गामानयेत्यादावाक्षिप्तगोव्यक्तेरिव अपरपदार्थस्य आनयनप्रसङ्गः। न च पूर्वादिपदार्थस्थळे समानवित्तिवेद्यत्वमेव न त्वाक्षेप्याक्षपकभाव इति शङ्क्यम्। जातिव्यक्त्योरपि तथात्वादिति॥

## तर्कताण्डवम्

**किं च जातिर्व्यक्त्याश्रितेत्याक्षेपे जातिरूपपक्ष-विशेषणीभूताश्रितत्वोपसर्जनीभूताया व्यक्तेः शाब्दत्वेऽपि उपसर्जनत्वाद्राजपुरुषमानयेत्यत्र राज्ञइवानयनान्वयो न स्यात्॥**

**अपि च वह्न्यविवक्षया प्रयुक्तेन धूमपदेन वह्नेरिव गौरस्तीत्यादौ व्यक्त्यविवक्षया प्रयुक्तेन गोपदेन व्यक्तिधीर्न स्यात्। आक्षेपे बीजस्यानुपपत्तेरभावात्।**

**किं च गोत्वेन न तावद्गोत्वादिविशिष्टा व्यक्तिराक्षेप्या। गोत्वस्याक्षेपकत्वेनाक्षेप्यशरीरे प्रवेशायोगात्। नाप्यन्य-विशिष्टा व्यक्तिराक्षेप्या। गौरिति ज्ञाने जातिव्यक्त्योरेव उल्लेखात्। अत एव न मुण्डितमश्वादिसाधारणव्यक्ति-मात्रमाक्षेप्यम्। गौरित्युल्लेखायोगात्।**

## न्यायदीपः

ननु-जातेरानयनानुपपत्तेर्व्यक्तेरानयनबलाच्च शब्दादाक्षिप्तस्यापि कथं चिच्छाब्दमुपेत्य विभक्त्यर्थान्वयो वाच्य इति चेन्न। शब्दशक्यत्वेन व्यक्तेरपि शब्दार्थत्वेनैव विभक्त्यर्थान्वयोपपत्तेः। शब्दतात्पर्यविषयत्वमात्रेण शाब्दत्वे लक्षणोच्छेद इति भावः। अस्तु वा शाब्दत्वं कथञ्चित् तथापि व्यक्तेरशक्यत्वपक्षे गोत्वादिजातिर्व्यक्त्याश्रिता जातित्वादित्येवं रूपेण हि जात्याव्यक्त्याक्षेपो वाच्यः। तत्र च त्रियान्वयो व्यक्तेदुर्लभ इत्याह ॥ **किञ्च जातिरिति** ॥ **इत्याक्षेपे** ॥ एवं प्रकारेण व्यक्तिप्रतीतौ सत्याम्। गोत्वादिजातिरूपपक्षे विशेषणीभूतं यदाश्रितत्वं तत्र निरूपकतया उपसर्जनीभूताया इत्यर्थः।

पूर्वत्र ह्याक्षेपाद्व्यक्तिबुद्धिमुपेत्य सुबर्थान्वयस्तथा क्रियान्वयश्च न युक्त इत्युक्तम्। अधुना व्यक्तिधीरेवाक्षेपपक्षे न युक्तेत्याह ॥ **अपि चेति** ॥ वह्निविवक्षया धूममात्रविषयोक्ते यथा न वह्निधीस्तथा गौरस्ति गां पश्येत्यादौ जातिमात्रविवक्षया प्रयुक्तेन व्यक्तिधीर्न स्यात्। व्यक्तितात्पर्यानु-

पपत्त्या वा अन्वयानुपपत्त्या वा आक्षेपो व्यक्तेर्वाच्यः। सा तु नास्ति। जातिमात्र एव तात्पर्यात्। अस्तित्वादियोग्यक्रियान्वयसम्भवाच्चेति भावः। न केवलं व्यक्तिप्रतीत्यनुपपत्तिः। अपि त्वाक्षेप्यानुपपत्तिश्च। तत्किं गोत्वादिना धर्मेण विशिष्टाक्षिप्यते व्यक्तिः, उत धर्मान्तरेण, अथ सर्वधर्मरहितव्यक्तिस्वरूपमात्रं गोत्वादिजात्याक्षेप्यम्। न त्रयामपि युक्तम्। आद्ये आक्षेपकत्वायोगः अन्त्ययोरनुभवविरोध इति भावेनाह ॥ **किं च गोत्वेनेति** ॥

॥ **प्रवेशायोगादिति** ॥ ननु-लिङ्गोपहितलैङ्गिकभानपक्षे लिङ्गस्यानुमितिविषयत्ववदाक्षेपकस्याप्यस्त्वाक्षेप्यशरीरप्रविष्टत्वमितिचेन्न। तस्यैव प्रामाण्यवादे दूषितत्वात्। वैषम्याच्च। लिङ्गेन विनाऽपि वह्नित्वादिना धर्मेण तत्र लैङ्गिकस्योपस्थितिसम्भवेऽपि सामग्रीबलाल्लिङ्गस्यापि तत्र भानम्। नह्येवं प्रकृते। गोत्वादिरूपलिङ्गेन विना व्यापकतावच्छेदकधर्माभावात्। अत एवाक्षेप्यशरीर इत्युक्तमिति भावः ॥

## तर्कताण्डवम्

**किं च गोत्वमपि न स्वरूपमात्रेण बुद्धमाक्षेपकम्। अतिप्रसङ्गात्। किं तु व्याप्यतावच्छेदकावच्छिन्नत्वेन बुद्धम्। न च व्यक्तिं विना तदवच्छेदकमस्तीति व्यक्तेः प्रागेव बुद्धतया कथमाक्षेप्यत्वम्। अन्यथा गौरिति प्रत्यक्षज्ञानस्यापि जातिरेव विषयो व्यक्तिस्त्वाक्षेप्येति स्यात्। तस्माद्व्यक्तेः शब्दादेव धीसम्भवे आक्षेपकल्पनम्, आक्षिप्तस्य विभक्त्यर्थान्वयानुपपत्तिः, उपसर्जनीभूताया व्यक्तेः क्रियान्वयानुपपत्तिः, गौरस्तीत्यादावाक्षेपबीजाभावेन व्यक्तिप्रतीत्यनुपपत्तिः, आक्षेप्यानुपपत्तिः, आक्षेपकानुपपत्तिश्चेति दोषषट्कम्।**

**भाट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥**

## न्यायदीपः

॥ **अन्येति** ॥ गोत्वान्यसास्नादिमत्त्वादिरूपधर्मविशिष्टेत्यर्थः। मुण्डितं सास्नादिमत्त्वादिधर्मरहितमित्यर्थः ॥ **गौरित्युल्लेखेति** ॥ अश्वादिव्यावर्तकगोत्वविशिष्टत्वेनैव गोपदादिना

गोव्यक्तिप्रतीतेः मुण्डितव्यक्तिप्रतीतिरनुभवविरुद्धेतिभावः। एतेन व्यक्तित्वेनाक्षेप्यधीरित्यपि प्रत्युक्तम्। आक्षेप कत्वानुपपत्तिं चाह ॥ **किं च गोत्वमपीति** ॥ स्वरूपमात्रेण व्याप्यतावच्छेदकंविना कृतरूपेण ॥ **अतिप्रसङ्गादिति** ॥ प्रमेयत्वादिरूपेण ज्ञानेऽपि गवादिव्यक्तिविशेषाक्षेपप्रसङ्गादित्यर्थः ॥ **व्यक्तिं विनेति** ॥ गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वरूपत्वाद्गोत्वत्वरूपव्याप्यतावच्छेदकस्येति कथमाक्षेप्यत्वं सिद्धसाधनतापत्तेरिति भावः। प्रागुक्तसर्वपक्षेषु विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ शब्दशक्त्यैव व्यक्तिधीसम्भवेऽपि आक्षेपादेव व्यक्तिबुद्ध्याद्यङ्गीकार इत्यर्थः। उक्तं सङ्क्षिप्यानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ परेण जातेरेव शब्धार्थत्वेन स्वीकाराद्दोषषट्कमित्यर्थः ॥

भाट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥

## अथ नैयायिकोक्तपदशक्तिभङ्गः ।

### तर्कताण्डवम्

**नैयायिकास्तु-जात्याकृतिविशिष्टा व्यक्तिः पदार्थः। जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे एकवचनात्। यत्र गौर्नित्येत्यादौ जातिमात्र परत्वं, तत्रैकदेशे लक्षणा। पिष्टमय्यो गाव इत्यादौ तु गवाकृतिसदृशाकृतौ गौणी। अकृतिश्च अवयवसंयोगविशेष इत्याहुः॥**

**तन्न। गुणकर्मादिपदेषु तद्विशेषस्पर्शरूपोत्क्षेपणा-पक्षेपणादिपदेषु द्रव्यविशेषात्मादिपदेषु चावयवसंयोग-विशेषरूपाकृतेरेवाभावात्। द्रव्यादिपदेषु पृथिव्यबादिपदेषु ब्राह्मणक्षत्रियादिपदेष चानुगताकृतेरभावाच्च॥**

### न्यायदीपः

एवं पदार्थस्तु व्यक्तिरेवेति प्रतिज्ञातार्थसिद्धये प्राभाकरभाट्टमतं निरस्य न्यायमतमपि निरसितुं पदशक्तिवादान्ते जातिर्विशेषवदवयवसंयोगरूपाकृतिरपि पदशक्या, गोपदाज्जात्याकृतिविशिष्टस्यैव अनुभवादित्यादिना मण्याद्युक्तमनुवदति- **नैयायिकास्त्विति** ॥ वैशिष्ट्यस्यापि शक्यत्वसूचनायोक्तं,

विशिष्टा व्यक्तिरिति। मण्युक्तामेव सम्मतिमाह ॥ **इति सूत्र इति** ॥ गौतमसूत्र इत्यर्थः। अन्यथा जात्यादेः प्रत्येकं शक्यत्वे पदार्था इति बहुवचनोक्तिः स्यात्। तेन ज्ञायते विशिष्टव्यक्तावेकैव शाक्तिरितीति भावः ॥ **तत्रेति** ॥ जातिरूपैकदेश इत्यर्थः। यद्यपि मणौ जात्याकृतिव्यक्तीनां प्रत्येकमात्रपरत्वे लक्षणैवेत्युक्तम्। तथाऽपि गौरूत्पन्नेत्यादौ व्यक्तेः स्वातन्त्र्येणोपस्थितेः गोत्वस्यावच्छेदकतयाप्यन्वयेन लक्षणानापत्तेः जातिमात्रपरत्वमित्येवानुवादो न तु जात्यादिमात्रपरत्वमित्यनुवादः कृतः।

आकृतेरपि शक्यत्वे पिष्टमय्यो गाव इत्यादौ अमुख्यत्वं गोपदादेर्न स्यादित्यत आह ॥ **पिष्टेति** ॥**अवयवेति** ॥ कपालाद्यवयवानां यः संयोगविशेषः स इत्यर्थः। पृथुबुध्नोदराकारत्वादिरूप-संस्थानविशेष इति यावत्। किं सर्वत्राप्याकृतिरपि शब्दार्थ उत यत्रास्ति सा तद्वाचकपदेषु। आद्य आह ॥ **गुणकर्मादीति** ॥ जातिसमवायादिरादिपदार्थः ॥ **रूपेति** ॥ स्पर्शश्च रूपं चेति विग्रहः। वक्ष्यमाणादिपदस्यात्राप्यन्वयः। रसगन्धादिस्तदर्थः। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनरूपकर्म-विशेषवाचिपदेष्वित्यर्थः ॥ **आत्मादीति** ॥ आत्माकाशदिगादिपदेष्वित्यर्थः। आत्मादेस्तन्मते नित्यत्वेन निरवयवत्वादिति भावः।

द्वितीयपक्षे दोषमाह ॥ **द्रव्येति** ॥ आकृतिमद्वस्तुवाचकद्रव्यादिसामान्यपदेषु तद्विशेष-पृथिव्यादिपदेषु च वाच्यभूतार्थगताकृतिष्वनुगतजोतरप्रामाणिकत्वेनान्यतरकर्मजत्वादिना साङ्कर्यापातेन चानुगतोपाधेः अप्यनिरुक्त्या चानुगमकाभावेन तासां व्यक्तिवदननुगततयाऽऽनन्त्येन शक्यत्वग्रहणानुपपत्तेः आकृतेरशक्यत्वमेव वाच्यमित्यर्थः।

यत्तु-गवादाववयवसंयोगत्वादिकमेवानुगमकमिति। तन्न। तथात्वे तत्प्रकारकप्रतीतेरप्यापातेन अनुभवविरोधात्॥

## तर्कताण्डवम्

**किं च गवादिपदैर्जात्याकृतिवत्सर्षपादिपदैः परि-माणादेःर्द्रव्यादिपदैर्द्रव्यत्वसमनियतगुणादेः पृथिव्यादिशब्दैः पृथिवीत्वसमनियतगन्धादेरपि प्रतीत्या तत्तज्जात्याकृतिभ्या-मिव परिमाणगुणगन्धादिनाऽपि विशिष्टाव्यक्तिः सर्षपद्रव्य-पृथिव्यादिपदार्थः स्यात्। एवमाकाशादिपदेन शब्दाश्रयत्वा-**

**देरपि प्रतीत्या तद्विशिष्टा व्यक्तिराकाशादिपदार्थः स्यात्। तच्च त्वया नेष्यते। सर्षपादिशब्दैः परिमाणादेराक्षेपश्चेदाकृतेरपि स एवास्तु। अन्यलभ्याकृतौ शक्त्यङ्गीकारेऽनुव्याख्यानोक्त-गौरवात्॥**

## न्यायदीपः

ननु-जातिव्यक्त्योरिवाकृतेरप्येकवित्तिवेद्यत्वाज्जातिवदाकृतिरपि वाच्यैव। उक्तं च मणौ ''एकवित्तिवेद्यत्वनियमाज्जातिविशिष्टं शक्यमिति''। अन्यथा गोपदादाकृतेरपि व्यक्त्यैकवित्ति-वेद्यत्वं न स्यादित्यत आह ॥ **किञ्चेति** ॥ यद्वा आकृतेः शक्यत्वमसाधारण्येन निरस्य पराभिमतानुगतजातेरपि न शक्यत्वमिति भावेन तदुक्तयुक्तेर्व्यभिचारमाह ॥ **किं चेति** ॥ **शब्दाश्रयत्वेति** ॥ आकाशस्यैकव्यक्तित्वेनाकाशत्वजातेरयोगेन तस्य शब्दाश्रयरूपत्वादितिभावः। इष्टापत्तिमाशङ्क्याह ॥ **तच्च त्वयेति** ॥ **नेष्यत इति** ॥ अन्यतो लभ्येऽपि शक्यत्वोपगमे गौरवापातात्। अन्यथा पदानामन्वयेऽपि शक्तिस्वीकारापत्तेश्चानिष्टमेतदिति भावः॥

एतदपि ''गौरवं कल्पनेऽन्यथा'' इति मूलारूढमिति दर्शयति ॥ **अन्यलभ्येति** ॥ एतेनान्विते स्वार्थे व्यक्तिमात्ररूपे स्वार्थे इति पूर्वत्रिपादीस्थस्वार्थशब्दार्थ इति दर्शितम्। अत्र सर्वत्राकृतावित्युपलक्षणम्। अनुगतजातावित्यपि ध्येयम्। यद्वा अनुगतजातेः स्वरूपेणैवाग्रे निरस्यत्वादाकृतिमात्रोपादानम्।

नन्वाकृतेराक्षेपलभ्यत्वे तत्र विभक्त्यर्थानन्वयेनानयनादिक्रियान्वयोऽपि न स्यादिति चेत्। तर्हि परिमाणादेरपि तथात्वापत्तिः। व्यक्त्यानयनादिना परिमाणादेरप्यानुषङ्गिकतयाऽऽनयनादि-सिद्धाकृतेरपि तथाऽस्तु। अमूर्तस्य परिमाणादेरानयनादिक्रियान्वय एव नेति चेत्। संयोगविशेषाकृतेरपि तथास्त्विति भावः॥

## तर्कताण्डवम्

**किं चाकृतेरपि गोशब्दार्थत्वे गौः सास्नादिमतीत्यत्र सास्नादिमत्पदं पुनरुक्तम् स्यात्॥**

**किं च विशिष्टा व्यक्तिः पदार्थ इति कोऽर्थः। अनेका**

**व्यक्तय एकेन गोत्वेनेव जात्यादि त्रयमेकेन क्रोडीकृतमेकपदार्थ इति वा, यद्वा जात्यादिविशिष्टमेकमेव शक्यं प्रवृत्तिनिमित्तं विशिष्टत्वमिति, किं वा व्यक्तिरेव शक्या जात्याकृती तु प्रवृत्तिनिमित्ते इति। नाद्यः त्रिष्वनुगतस्यैकस्य क्रोडीकारकस्याभावादभानाच्च। द्वितीये व्यक्तिवद्विशिष्टस्याप्यानन्त्याद्विशिष्टत्वस्य चाजातित्वेनाननुगतत्वादनुगतस्य च गोत्वस्याननुगतशक्यशरीर एव प्रवेशादननुगमतादवस्थ्यम्॥**

**किं चैवं शाब्दधीर्विशिष्टविषयका विशिष्टत्वप्रकारिका च स्यात्। न चेष्टापत्तिः। गोव्यक्तिविशेष्यकगोत्वप्रकारकबुद्धेरेवानुभवात्। न तृतीयः। त्वन्मते आख्याते कृतित्वजातेरिवात्रापि लाघवाद्गोत्वजातेरेव प्रवृत्तिनिमित्तत्वौचित्यात्॥**

## न्यायदीपः

सह प्रयोगानुपपत्तिदोषं चाह॥ **किं चाकृतेरपीति**॥ सास्नादिमत्पदेनाकृतेरेवोक्तेरिति भावः। व्यक्तिमात्रस्य शक्यत्वं सुनिर्वाहं न तु विशिष्टस्य विकल्पासहत्वादिति भावेन त्रेधा विकल्प्य क्रमेण निराह॥ **किं च विशिष्टेति**॥ **व्यक्तय इति**॥ गोव्यक्तय इत्यर्थः। पूर्वोक्तसूत्रानुरोधादयं कल्पः। गोपदाज्जात्याकृतिविशिष्टस्यैवानुभवादित्यादिमण्युक्ते द्वेधाऽप्यभिप्रायसम्भवात्तदनुरोधेन यद्वेत्याद्युत्तरकल्पद्वयम्। प्रवृत्तिनिमित्ते शक्यतावच्छेदक इत्यर्थः॥

प्रतीतिरेव क्रोडीकारधर्मसत्त्वे मानमित्यत आह॥ **अभानाच्चेति**॥ यद्वा-एकवित्तिवेद्यत्वमेव त्रयाणां क्रोडीकारको धर्म इति चेन्न। परिमाणादावपि सर्षपादिपदजन्यैकवित्तिवेद्यत्वस्योक्तत्वेनातिप्रसञ्जकत्वात्। अस्तु वा यत्किञ्चत्। तथाऽपि तस्य पदार्थतावच्छेदकत्वे शब्दाच्छक्यतावच्छेदकप्रकारेण शक्यभाननियमेन तेनरूपेण जात्यादेर्भानं स्यात्। न च तदस्तीत्याह॥ **अभानाच्चेति**॥

ननु विशिष्टपदार्थे विशेषणस्यानुगतत्वमात्रेणास्तुविशिष्टमप्यनुगतमित्यतोऽभ्युपेत्याप्याह॥ **किं चैवमिति**॥ शाब्दबुद्धेः शक्यतावच्छेदकप्रकारेण शक्यविशेष्यकत्वनियमाद्विशिष्टस्य शक्यतावच्छेदकत्वे तत्प्रकारिका विशिष्टविशेष्यका धीः स्यादित्यर्थः। अस्त्वित्यत आह॥ **न चेति**॥ **आख्यात इति**॥ आख्यातशब्दिततिङ्वाच्यतावच्छेदकं कृतित्वं न तु कृत्यकृतिसाधारण-

व्यापारत्वं कृतिमत्त्वादिकं वा यथा तथाऽत्रापि जातिरेवावच्छेदिका न तूभयम्। गौरवादनतिप्रसङ्गाच्चेतिभावः।

## तर्कताण्डवम्

**किं च जात्याकृत्योर्मध्ये एकविशेषितमपरं प्रवृत्तिनिमित्तं, किं वा स्वतन्त्रे उभे अपि प्रवृत्तिनिमित्ते। नाद्यः। द्वयोरपि व्यक्त्यैव सम्बन्धस्य प्रतीत्याऽन्योन्यं विशेषणविशेष्यभावस्याप्रतीतेः। द्वितीये समुदितयोः प्रवृत्तिनिमित्तत्वे जातिवदाकृतेरपि प्रवृत्तिनिमित्तत्वेन गोशब्दोत्तरत्वप्रत्ययस्योभयवाचकत्वाद्गोत्वं नित्यं गोत्वं जातिरित्यादिकोभयविषया धीर्बाधिता स्यात्। आकृत्यंशे नित्यत्वादेरभावात्॥**

## न्यायदीपः

न केवलमौचित्यप्राप्तं युक्तं चैवमेवान्यथानुपपत्तेरित्याह॥ **किं चेति**॥ यद्वा जात्याकृत्योर्घटं प्रति दण्डचक्रयोरिवावधृतमेव निमित्तत्वमतो न दोष इत्यत आह॥ **किं चेति**॥

द्वयोर्निमित्तत्वं वदन् प्रष्टव्यः किं विष्णवे शिपिविष्टायेत्यादौ विशिष्टनिष्ठदेवतात्वमिव जात्याकृत्योरन्योन्यं विशेषणविशेष्यभावापत्त्या विशिष्टतापन्नत्वात्तन्निष्ठं निमित्तत्वमित्युच्यते इति प्रथमकल्पस्यार्थः द्वितीयेऽपि किमग्नीषोमयोर्मिलितयोर्देवतात्वमिव मिळितयो र्वा निमित्तत्वं उत दण्डचक्रादिरिव प्रत्येकमेवेति हृदि विकल्प्याद्य आह॥ **समुदितयोरिति**॥ **गोशब्दोत्तरेति**॥ गोशब्दादुत्तरः परतः श्रूयमाणो यः त्वप्रत्ययः तस्येत्यर्थः। ''तस्य भावस्त्वतला''विति पाणिनिसूत्रेण प्रवृत्तिनिमित्तपर्यायभावशब्दार्थेभिधेये त्वतलोर्विधानात्। त्वया च द्वयोर्निमित्तत्वोपगमेन द्वयोरपि त्वप्रत्ययशब्दार्थत्वादिति भावः।

॥ **उभयोरिति**॥ समुदितयोरित्यर्थः॥ **त्रिशङ्कुवदिति**॥ त्रिशङ्कुर्नाम राजा विश्वामित्रेण स्वर्गं प्रापितोपि देवैः पात्यमानो विश्वामित्रेण प्रतिरुध्यमानो न पतति देवैर्निष्कास्यमानो न स्वर्गं च प्राप्नोति यथा तथैव व्यक्तिरप्यननुगतत्वानुगतत्वबहिर्भूता स्यात्। तथा च व्यक्तौ शक्तिग्रहो दुःशक आपाद्येत

इत्यननुगताया आकृतेर्निमित्तत्वं विहाय केवलजातेरेव तदुपेयमिति भावः। अवयव-संयोगत्वादिना रूपेणाकृतेरप्यनुगमोऽस्तु एवं च नोक्तदोष इत्यत आह ॥ **अकृतेरपीति** ॥ पदादुभयप्रतीतिरन्यतराश्रयनिमित्तत्वेन युक्तेत्यत आह ॥ **उभयधीस्त्विति** ॥ पदाज्जायमाना जात्याकृत्युभयधीरित्यर्थः। द्वितीयेऽपि द्वितीयं प्रत्येकं निमित्तत्वपक्षं निराह ॥ **उभयोरिति** ॥

## तर्कताण्डवम्

**अपि चोभयोर्निमित्तत्वेऽनुगताननुगताभ्यां जात्याकृतिभ्यां कृष्यमाणा व्यक्तिः त्रिशङ्कुवन्नानुगता नाप्यननुगतेति स्यात्। आकृतेरपि कथं चिदनुगमे एकयैव व्यक्त्यनुगमसिद्धेरितरवैयर्थ्यम्। उभयधीस्त्वेकस्याक्षेपादपि युक्तेत्युक्तम्। उभयोः प्रत्येकं निमित्तत्वे पिष्टमय्यो गाव इत्यत्र गौणत्वं न स्यात्। आकृतेः सत्त्वात्॥**

**अपि च गोत्वमनित्यमित्याद्यपि प्रमाणं स्यात्। आकृतेः अनित्यत्वात्।**

**अपि च गोशब्दस्य गोत्वशब्दस्य चाक्षशब्दवदक्षत्वशब्दवच्च नानार्थत्वं स्यात्। उभयोर्धीस्तु श्लिष्टशब्द इव स्यात्॥**

## न्यायदीपः

नन्वाकृतिशब्देन मुख्याकृतिरेवावयवसंयोगविशेषरूप इत्यत आह ॥ **अपि चेति** ॥ जात्याकृत्योः पदार्थत्वपक्षे व्यक्तेरेव पदार्थत्वं तयोर्निमित्तत्वमेवेति पक्षे चोभयत्रापि दोषमाह ॥ **अपि च गोशब्दस्येति** ॥ अक्षत्वस्यापि विदेवनाक्षत्वविभीतिकाक्षत्वादिरूपेण नानात्वादक्षत्वादिशब्दवच्चेत्युक्तम्। अस्तु को दोष इत्यत आह ॥ **उभयोरिति** ॥ **श्लिष्टेति च** ॥

अक्षाण्यानयेत्यादावनेकविजातीयाक्षाभिप्रायेण प्रयुक्तस्थळे यथा युगपदुभयधी तथाऽत्रापि जात्याकृत्योऽरपि धीः। सा चानुभवबाधितेति भावः।

## तर्कताण्डवम्

**तस्माज्जात्याकृतिविशिष्टव्यक्तेः पदार्थत्वे गुणकर्मादिपदेष्वननुगमः, सर्षपादिशब्दानां परिमाणविशेषविशिष्टे शक्त्यापत्तिः, सहप्रयोगानुपपत्तिः, गौरवं, एकविशिष्टाया अन्यस्याः प्रवृत्तिनिमित्तत्वेऽनुभवविरोधः, स्वतन्त्रयोरुभयोः प्रवृत्तिनिमित्तत्वेपि समुदितयोः प्रवृत्ति तिमित्तत्वे गोत्वं नित्यमित्यादेरप्रामाण्यापत्तिः, त्रिशङ्कुवदुभयतः पाशारज्जुः, प्रत्येकं निमित्तत्वे दोषत्रयमिति दोषनवकम्।**

**नैयायिकोक्तपदशक्तिभङ्गः ॥ २६ ॥**

## न्यायदीपः

उपपादितं च सर्वं सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ त्रयाणां वाच्यत्वोपगमादेकम्यापि दोषस्यापरिहार्यत्वाद्वा दोषनवकमित्यन्वयः। पुनरुक्तं स्यादित्यस्य सङ्ग्रहः ॥ **सहप्रयोगानुपपत्तिरिति** ॥ **जात्याकृतीति** ॥ तु प्रवृत्तिनिमित्ते इति पक्षेजातेरेव प्रवृत्तिनिमित्तत्वौचित्यादित्यभिप्रेतमाह ॥ **गौरवमिति** ॥ द्वयोर्निमित्तत्वपक्षस्यैव पराभिमतत्वादेतद्दोषस्य सङ्ग्रहो न पूर्वकल्पद्वयस्येति ज्ञेयम्। यद्वा गौरवमिति पक्षत्रयदोषस्यापि सङ्ग्रहः। जातिनिमित्तेन व्यक्तावेव शक्तेर्लघुत्वादिति भावः। दोषदशकमिति पाठः साधुः। नवकमिति तु लेखकदोषमूलमित्याहुः।

॥ **दोषत्रयमिति** ॥ गौणत्वानुपपत्तिः, गोत्वमनित्यमित्यस्याप्रामाण्यापत्तिः, नानार्थत्वापत्तिश्चेति दोषत्रयम्॥

मण्याद्युक्तपदशक्तिभङ्गः ॥ २६ ॥

## अथ स्वमते पदशक्तिनिर्णयः।

## तर्कताण्डवम्

**तस्माद्व्यक्तय एव वाच्याः। जात्यादिकं तु प्रत्येकं तेषु**

तेषु शब्देषु प्रवृत्तिनिमित्तम्। उक्तं हि सुधायाम्। ''ते ते व्यावृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्मसामान्यैर्निमित्तैः तत्तच्छब्दवाच्याः'' इति। न च गोत्वस्य प्रवृत्तिनिमित्तत्वे शक्यतावच्छेदकत्वेन पृथिवीशब्दे न गन्धवत्त्वस्येवाशक्यत्वं स्यात्। ततश्च गोशब्दजन्यधीविषयत्वं न स्यादिति शङ्क्यम्।

अवच्छेदकं हि द्विविधम्। एकं सत्तया। यथा पृथिवीत्व-जातिनिमित्तके पृथिवीशब्दे गन्धवत्त्वं तस्य पृथिवीशब्द-शक्यतया समनियतत्वेऽपि गन्धवत्तयाऽज्ञात एव पृथिवी-शब्दशक्तेर्ग्रहात्।

अपरं ज्ञाततया। यथा गोत्वजातिनिमित्तके गोशब्दे गोत्वम्। गोत्ववत्तया ज्ञात एव गोशब्दशक्तिग्रहात्।

तत्राद्यं न प्रवृत्तिनिमित्तम्। किं तु द्वितीयम्। तच्च शक्य-मेव। यो ह्येतच्छब्दनिष्ठशक्तेरयं विषय इति ज्ञाने शक्तिं प्रति विषयतया भासते स एव शक्यः। शक्तिं प्रति विषयतया भानं च विशेष्यरूपायां व्यक्ताविव विशेषणभूते गोत्वेऽप्य-स्त्येव। तथा च कथं शक्यत्वव्याप्येन प्रवृत्तिनिमित्तत्वेन अशक्यत्वापादनम्। युक्तं च घटादिसाक्षात्कारजनकता-वच्छेदकस्याप्युद्भूतरूपस्य तज्जनकत्ववद्घटोऽयमिति ज्ञानं प्रति घटनिष्ठविषयतावच्छेदकस्यापि घटत्वस्य तद्विषयत्व-वच्च शक्यतावच्छेदकस्यापि शक्यत्वम्। शक्यत्वा-विशेषेपीदं प्रवृत्तिनिमित्तमिदं नेति व्यवस्था तु विशेषणत्व-विशेष्यत्वाभ्याम्।।

अत एव शक्यत्वे शक्यवृत्तित्वे च सति स्वभिन्नशक्यं प्रत्यनधिकरणत्वं प्रवृत्तिनिमित्तत्वमित्याहुः।।

## न्यायदीपः

नन्वेवं वाद्यन्तैरुक्तपक्षचतुष्टयस्याप्ययोगे कस्तर्हि पदस्यार्थ इत्यतः प्राक्प्रतिज्ञातमेव सप्रमाणं स्मारयति ।। **तस्मादिति** ।। प्राभाकराद्युक्तपक्षाणामयुक्ततया परिशेषप्रमाणादित्यर्थः।

नन्वेवं ब्राह्मण इत्यादयो जातिशब्दाः, गौरःशुक्ल इत्यादयो गुणशब्दाः, गच्छतीत्यादयः क्रियाशब्दा, इति व्यवस्था न स्यात्। सर्वत्र व्यक्तीनामेव वाच्यत्वादित्यत आह ।। **जात्यादिकं त्विितिप्रत्येकमिति** ।। जातिशब्दे जातिः गुणशब्देन गुण इत्येवं प्रत्येकमित्यर्थः। जात्यादिनिमित्ता व्यक्तय एव वाच्या इत्यत्र सम्मतिमाह ।। **उक्तं हीति** ।।

वैशेषिकाधिकरणे-

..................शक्तिः सादृश्यगा यतः।
तादृशोऽयं च तच्छब्द इति ज्ञापयति स्फुटम्।।

इति श्लोकव्याख्यावसर उक्तमित्यर्थः। तेते घटपटादय इत्यर्थः। व्यावृत्तैः-प्रतिवस्तु भिन्नभिन्नैः न तु सर्वत्रानुगतैरित्यर्थः ।। **द्रव्येति** ।। दण्डी कुण्डलीत्येवमादयः शब्दाः दण्डादिरूपद्रव्यनिमित्तका इति तदभिप्रायेण द्रव्येत्युक्तिः। अस्मिन् पक्षे गोशब्दाद्गोत्वविशिष्टप्रतीत्यभावरूपबाधकमाशङ्कते ।। **न चेति** ।। **अवच्छेदकत्वेनेति** ।। अन्यूनानधिकदेशतया शक्यतायां नियामकत्वेनेत्यर्थः अस्तु को दोषः इत्यत आह ।। **ततश्चेति** ।। **अशक्त्यत्वतश्चेति** ।। **न स्यादिति** ।। न चेष्टापत्तिः। गोशब्दाद्गोत्वविशिष्टगोव्यक्तिबुद्धेः साक्षिसिद्धत्वादिति भावः। गन्धवत्त्वस्यैवेत्युक्तदृष्टान्तवैषम्यं वक्तुमाह ।। **अवच्छेदकं हि द्विविधमिति** ।। शब्दशक्यत्वस्य कारणरूपमेकं ज्ञापकरूपमेकमित्यर्थः ।।

ननु गन्धवत्त्वस्यापि पृथिवीशब्दवाच्यत्वसमनियतत्वेनाव्यभिचारात्कुतो न निमित्तत्वमित्यत आह ।। **तस्येति** ।। गन्धवत्त्वस्य गुरुत्वेन तज्ज्ञानं विनैव लघुभूतपृथिवीत्वज्ञानेनैव तच्छब्दशक्तिग्रहादिति भावः ।। **गोत्वमिति** ।। न तु सास्नादिमत्त्वादिकमिति भावः ।। **तत्राद्यं न प्रवृत्तिनिमित्तमिति** ।। ''गन्धवत्त्वं हि न पृथिवीशब्दवाच्यं, नापि तत्प्रवृत्तिनिमित्त''मिति सुधोक्तेः शक्तिग्रहे तज्ज्ञानस्यानपेक्षिततत्वाद्गुरुत्वाच्चेति भावः। यद्वा नविलक्षणत्वाधिकरणे याथार्थ्यमेव मानत्वमित्येतद् व्याख्यानसुधायां, गन्धवत्त्वादिकं लक्ष्यस्वरूपप्रतिपत्तिकारणं भवत्तस्यान्यतोव्यवच्छेद तत्तच्छब्दव्यवहारकर्तव्यत्वे च प्रतिपादयति पृथिवीत्वादिकं च प्रवृत्तिनिमित्तं भवत्तद्व्यवहारमात्रकारणं भवतीत्युक्तदिशा शब्दव्यवहारासाधारण्याभावान्न निमित्तमात्रम्। द्वितीयं तु व्यवहारासाधारण्यान्निमित्तमिति भावः ।।

यद्वा आद्यद्वितीययोर्वक्ष्यमाणनिमित्तलक्षणायुक्तत्वायुक्तत्वाभ्यां अनिमित्तत्वनिमित्तत्वे इति भावः। कथं शक्यत्वंमित्यतो व्यनक्ति ॥ **योहीति** ॥ भासत इत्यन्वयः ॥ **एतच्छब्देति** ॥ बुद्धिस्थो गवादिशब्दः। अयं गोपिण्डादिः।

ननु-शक्यतावच्छेदकस्य शक्यत्वमयुक्तम्। तद्भावावच्छेदकस्यापि तद्भाव इत्यस्य क्वाप्यदृष्टेः। द्वयोः शक्यत्वे शक्यमिदं इदं तु शक्तौ निमित्तमिति व्यवस्थानुपपत्तेश्चेत्येत आद्यं तावन्निराह ॥ **युक्तं चेति** ॥ शक्यत्वमित्यन्वयः। महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं हि बहिर्द्रव्यप्रत्यक्षतायां तन्त्रमिति स्वीकारेणोद्भूतरूपस्य साक्षात्कारजनकतावच्छेदकस्यापि प्रत्यक्षे जनकत्वेन स्वस्यापि जनकत्वादर्शनादिति भावः।

जातावेदतद्भावो न दृष्ट इत्यत आह ॥ **घटोयऽमिति** ॥ व्यवस्थानुपपत्तिं निराह ॥ **शक्यत्वाविशेषेऽपीति** ॥ विशेषणत्वविशेष्यत्वाभ्यां युक्तेति विपरिणामेनानुकर्षः। कुत एवं कल्प्यं, शक्यत्वमेव नास्ति प्रवृत्तिनिमित्तत्वात्, शब्दात्तधीस्तु व्यक्तिशक्तादेवाक्षेपत इत्युपेयतामित्यत आह ॥ **अत एवेति** ॥ जातः शक्यत्वादेवेत्यर्थः। पृथिव्यादिशब्दप्रवृत्तिनिमित्ते गन्धवत्त्वादौ पृथिव्यादिशब्दशक्यपृथिव्यादिकं प्रत्यंनधिकरणे पृथिव्यादिवृत्तिमत्यतिव्याप्तिनिरासाय शक्यत्वे सतीत्युक्तिः। यत्पदप्रवृत्तिं प्रति निमित्तत्वमुच्यते तत्पदशक्यत्वे सतीति सम्बन्धिशब्दत्वादेवानुक्तिसिद्धमिति यत्किञ्चित्पदशक्यत्वाद्गन्धवत्त्वादौ पुनरतिव्याप्तिरिति शङ्कानवकाशः। व्यक्तावतिव्याप्तिनिरासाय शक्यवृत्तित्वे च सतीत्युक्तम्। तावत्येवोक्ते प्रमेयत्वमपि प्रमेयत्वशब्दप्रवृत्तिनिमित्तं प्राप्नोति। प्रमेयत्वस्य केवलान्वयित्वेन स्ववृत्तितया शक्यत्वे सति शक्यवृत्तित्वादतः स्वभिन्नं शक्यं प्रत्यनधिकरणत्वमित्युक्तम्। तस्य प्रमेयत्वरूपस्वभिन्नशक्यं प्रत्यधिकरणत्वादिति वदन्ति॥

## तर्कताण्डवम्

**यद्वा पूर्वोक्तज्ञाने शक्तिं प्रति विषयतया भासमानत्वे सति यद्विशेष्यं तदेव शक्यम्। तथा च गोत्वमशक्यमेव शक्यतावच्छेदकम्। शब्दात्तद्धीस्तु शक्यत्ववच्छक्यतावच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वाद्युक्ता। कथमन्यथा परमते पारिभाषिकाकाशादिपदादशक्यशब्दाश्रयत्वस्य धीः। कथं**

**च गङ्गापदाच्छक्यसम्बन्धरूपलक्षणावृत्त्यविषयस्य तीरत्वस्य धीः। न च तीरस्य संयोगेन तीरत्वस्य तु संयुक्त-समवायेन धीरिति वाच्यम्। युगपद्वृत्तिद्वयविरोधात्।**

**किं च गङ्गापदेन तीरतीरत्वयोर्भिन्नसम्बन्धेन नानार्थाक्षादिपदेन तदर्थानामिव तीरतीरत्वयोरपि स्वतन्त्रयोरेव बोधापत्त्या तीरत्वविशिष्टतीरधीर्न स्यात्।।**

## न्यायदीपः

व्यक्तिरेव वाच्येति पद्धतिगतैवकारस्वारस्यमनुरुद्ध्य पक्षान्तरमाह ।। **यद्वेति** ।। **पूर्वोक्तेति** ।। एतच्छब्दनिष्ठशक्तेरयं विषय इति पूर्वोक्तज्ञाने इत्यर्थः। सत्यन्तमात्रस्य विशेषणे गोत्वादावपि गतत्वाद्यद्विशेष्यमित्युक्तम्। विशेष्यतया भासमानत्वमित्येवोक्तावसिद्धिः। विषयत्वेनैव शक्तिं प्रति भासमानत्वात्। शब्दशक्त्यविषयत्वे गोशब्दाद्गौरिति विशिष्टधीर्न स्यादित्यत आह ।। **शब्दादिति** ।। **शक्यत्ववदिति** ।। शक्तिविषयत्वस्येवेत्यर्थः। कुतोवच्छेदकत्वेस्य शब्दधीविषयत्वे तन्त्रत्वमित्यत आह ।। **कथमन्यथेति** ।। **पारिभाषिकेति** ।। यथा डित्थादिशब्दः कस्मिंश्चित्सङ्केतो लक्षणादिमान् मुख्यवृत्तिमान्वा यथा न भवति, तथाऽऽकाशशब्दोप्याकाशे शक्त्यादिवृत्तिशून्यः केवलं साङ्केतिक इत्यभ्युपगमादिति भावः।।

ननु तत्राकाश बोधेऽपि वृत्तेरव्यापारत्वाद्व्यक्तिबोध इव शब्दाश्रयत्वरूपधर्मबोधोपि सेत्स्यपि। व्यक्त्यंशे वृत्तिद्वारा बोधकस्य गोत्वादिधर्मांशे वृत्तिं विना कथं बोधकत्वं शब्दस्येत्यत आह ।। **कथं चेति** ।। **वृत्तिद्वयेति** ।। लक्षणा लक्षितलक्षणा चेति वृत्तिद्वयेत्यर्थः। शक्यसम्बन्धस्य लक्षणात्वे लक्ष्यसम्बन्धस्य लक्षितलक्षणात्वादिति भावः। शक्यसम्बन्धस्य लक्षणात्वे लक्ष्यसम्बन्धस्य लक्षितलक्षणात्वादिति भावः। अस्तु गङ्गायां मीनघोषवित्यत्रेव वृत्तिद्वयमित्यत आह ।। **किं चेति** ।। यद्वा पूर्वं शक्यसंयोगेन तीरबोधे पश्चाच्छक्यसंयुक्तसमवायेन तीरत्वबोधोस्तु। एवं च न युगपद्वृत्तिद्वयापत्तिरित्यत आह ।। **किं चेति** ।। **नानार्थेति** ।।

नन्वक्षाण्यानयेत्यादौ विदेवनविभीतकरथचक्रादिरूपनानार्थबोधेऽन्योन्यानपेक्षवृत्तिद्वारकत्वेन तत्र शब्दात्तेषां स्वतन्त्राणामेवार्थानामुपस्थितावपि गङ्गायां घोष इत्यादौ शक्यसम्बन्धघटित-समवायसम्बन्धेनैव तीरत्वबोधनात्तीरान्वितत्वेनैव तीरत्वधीर्भविष्यतीति चेन्न। शब्दस्य विरम्य-

व्यापारापत्तेः। शब्दात्तीरगोचरनिर्विकल्पकधीप्रसङ्गाच्च। पूर्वं तीरबोधेपि तस्य विशेष्यत्वेन पश्चाज्ज्ञायमानविशेषणरूपतीरत्वस्य तीरविशिष्टेन बोधापत्तेश्च। संयोगसंयुक्तसमवायाभ्यां घटघटत्वयोरिव गङ्गायां घोष इत्यत्रापि शक्यसंयोगशक्यसंयुक्तसमवायरूपसम्बन्धद्वयेनापि तीरतीरत्वयोर्युगपद्बोधस्यैव वाच्यतया युगपद्वृत्तिद्वयविरोधापरिहाराच्चेति भावः ॥

## तर्कताण्डवम्

**न च प्रथमं स्मृतिः स्वतन्त्रपदार्थविषयिण्येवानन्तरं विशिष्टानुभव इति वाच्यम्। त्वन्मते लाक्षणिकस्याननु-भावकत्वात्। निर्विकल्पकस्य साक्षात्त्वनियमेन स्मृतेः निर्विकल्पकत्वायोगाच्च। त्वन्मते विरोधिविभक्त्यभावे नामार्थयोरभेदान्वयस्य व्युत्पत्तिसिद्धत्वेन संसर्गानुभव-विरोधाच्च। मन्मते मध्ये स्मृतेरभावाच्च।**

**अत्र चाद्ये पक्षे सुधायां "द्रव्यगुणकर्मसामान्यैर्निमित्तैः" इति, तृतीया सहयोगे, द्वितीये हेताविति द्रष्टव्यम्।**

**तस्माच्छक्तिज्ञानं प्रति विशेष्यत्वेन विषयत्वाद्व्यक्तय एव वाच्याः जात्यादिकं तु प्रवृत्तिनिमित्तमिति ॥**

**स्वमते पदशक्तिनिर्णयः ॥ २७ ॥**

## न्यायदीपः

ननु-पूर्वं स्वातन्त्र्येण तीरतीरत्वयोः शब्दाच्छक्यसंयोगादिसम्बन्धद्वयेनोपस्थितावपि पश्चाद्विशिष्टबोधः स्यादेव को दोषः। घटघटत्वनिर्विकल्पकबोधानन्तरं घटत्वविशिष्टधीवदित्याशङ्क्य निराह ॥ **न चेति** ॥ **स्वतन्त्रपदार्थेति** ॥ गङ्गापदलक्ष्यार्थभूततीर तीरत्वविषयिण्यिव गङ्गायां धोष इत्यत्र गङ्गा पदादन्योन्या नन्वित तीरतीरत्वस्मृतिर्जायत इत्यर्थः। पश्चात्तु घोषान्वयदशायां तरित्वविशिष्टानुभवो जायते गङ्गापदादेवेत्यर्थः। अनन्तरं विशिष्टानुभव इत्यंशं तावद्दूषयति ॥ **त्वन्मत इति** ॥

ननु-गङ्गापदस्याननुभावकत्वेऽपि घोषपदमेव घोषान्वयं तीरतीरत्ववैशिष्ट्यं चानुभावयत्विति चेन्न। तीरतीरत्वयोर्घोषपदार्थत्वाभावेन तद्वैशिष्ट्यबोधे तस्यासामर्थ्यात्। स्वतन्त्रपदार्थविषयिण्येव इत्याशङ्कां निराह ॥ **निर्विकल्पकस्येति** ॥ अन्योन्याानन्विततीरतीरत्वविषयत्वे स्मृतेर्निर्विकल्पकत्वापातात्। तस्य त्वन्मते प्रत्यक्षत्वनियमेनासाक्षात्कारत्वेन त्वदङ्गीकृतस्मृतेर्निर्विकल्पकत्वायोगादित्यर्थः॥

अस्तु वा सा निर्विकल्पकरूपा स्मृतिः। अथाप्यनन्तरं तयोरभेदान्वय एव स्यात्। न तु तीरत्ववत्तीरमिति विशिष्टधीः। राज्ञः पुरुष इत्यादाविवाभेदविरोधिविभक्त्यभावस्थळेऽभेदान्वयस्य व्युत्पत्तिबलसिद्धत्वोपगमेन तीरतीरत्वयोर्नीलोत्पलमित्यादाविवाभेदान्वय एव स्यात्। न तु तीरतीरत्वसमवायरूपसंसर्गधीरित्याह ॥ **तन्मत इति** ॥ प्रथमं स्मृतिरित्येतन्निराचष्टे ॥ **मन्मत इति** ॥ पदोपस्थित्यन्वयानुभवयोर्मध्य इत्यर्थः। यथा चैतत्तथोक्तं प्राक् भट्टाभिमतान्विताभिधानभङ्गे। गोत्वादिकं शक्यमिति पक्षेऽशक्यमिति पक्षे च प्रागुक्तसुधावाक्यमेव संवादयति ॥ **अत्र चेति** ॥ पक्षद्वय इत्यर्थः।

स्वमते पदशक्तिनिर्णयः ॥ २७॥

## अथ सङ्केतसम्बन्धभङ्गः।

### तर्कताण्डवम्

**यत्तूक्तं मणावस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छारूपः सङ्केत एव शक्तिर्न त्वौत्पत्तिकः सम्बन्ध इति। तन्न। गङ्गापदात् तीरं प्रत्येत्वितीच्छयैव गङ्गाशब्दस्य प्रयोगेन तीरेऽपि शक्तिप्रसङ्गात्॥**

### न्यायदीपः

एवं कथमन्विते शक्तिरित्युपक्रम्य प्रकरणसप्तकेन पदार्थस्त्वित्युपक्रम्य प्रकरणपञ्चकेन चान्वयव्यक्तिरूपेण पदशक्तिविषयस्वरूपनिर्णयं कृत्वेदानीमवसरप्राप्तं पदशक्तिस्वरूपनिर्णयं चिकीर्षुः-

"नित्ययोरपि शब्दानामर्थेनैव निषिध्यते"।

इत्यानुमानिकपादीयानुव्याख्याने "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध" इति जैमिन्युक्तार्थैः शब्दानां नित्ययोगोपि नैवास्माभिस्त्याज्य इति सुधाकृदभिहितां शब्दस्यार्थेन सह स्वाभाविक-सम्बन्धरूपां पदशक्तिं-

"प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि"।

इति जिज्ञासासूत्रानुव्याख्यानसुधायां सम्यक्प्रपञ्चितं मनसि निधाय पराभिमतसङ्केतपक्षे बाधक-मात्रमाह ॥ **यत्त्विति** ॥ शब्दखण्डे लक्षणा वादात्पूर्वं शब्दसाधुत्वोक्तिप्रस्तावे उक्तमित्यर्थः।

औत्पत्तिकः स्वाभाविकः। इच्छारूप इत्यत्र किमस्मदादीच्छासाधारणेच्छारूपोथेश्वर-मात्रेच्छारूपः। आद्येपि किं साक्षात्परम्परासाधारण्येन प्रत्येत्वितीच्छारूप उत साक्षात् प्रत्येत्विति। तत्राद्ये दोषमाह ॥ **गङ्गेति** ॥ अन्त्यमाशङ्क्याह ॥ **न चेति** ॥ **परम्परयेति** ॥ मुख्यार्थभूत-प्रवाहं प्रतीत्येतत्सम्बन्धितया तीरं प्रत्येत्वितीच्छैवेत्यर्थः ॥ **अतन्त्रत्वेनेति** ॥ पदाद्व्यवहिते तीरादौ स्मृतेरनुभवस्य वा जायमानत्वे पदस्यपदार्थस्मृत्यनुभवयोर्जन्मनि कार्ये साक्षात्वस्याप्रयो-जकत्वेनेत्यर्थः। यद्वास्मृतेरनुभवद्वारैव पदजन्यत्वादनुभवस्य साक्षात्तज्जन्यत्वात्साक्षात्त्वस्यस्मृतौ व्यभिचारेणान्त्रत्वात्। स्मृत्यनुभवसाधारण्येन पदार्थ प्रत्येत्वितीच्छामात्रस्यैव शक्तित्वादित्यर्थः॥

## तर्कताण्डवम्

**न चास्माच्छब्दादयं साक्षात्प्रत्येत्वितीच्छा शक्तिः तीरे च परम्परया प्रत्येत्विच्छेति वाच्यम्। साक्षात्त्वस्य स्मृत्यनुभवयोरतन्त्रत्वेन प्रत्येत्वितीच्छाया एव शक्तित्वात्॥**

**न च तादृशीश्वरेच्छा शक्तिः, सा च न तीर इति वाच्यम्। ईश्वरेच्छायाः सन्मात्रविषयत्वेन तस्या अपि तत्र सत्त्वात्। न हि गङ्गाशब्दात्तीरबुद्धौ सत्यामपि तादृशीश्वरेच्छा नेति युक्तम्। तस्याः कार्योन्नेयत्वात्।**

**न चास्मात्पदादमुमर्थमनुभवत्वितीश्वरेच्छा शक्तिः सा च तीरे नेति वाच्यम्। जानात्विति सामान्येच्छाया एवाधुनिक-**

सङ्केतितदेवदत्तादिशब्देष्विव सङ्केतत्वोपपत्तौ विशेष-कल्पकाभावात्। लाक्षणिकस्यानुभावकत्वपक्षे तस्या अपि तत्र सत्त्वाच्च॥

न च तादृशेच्छयेश्वरोच्चरितत्वं शक्तिः सा च न तीरेस्तीति वाच्यम्। उच्चारणतज्ज्ञानयोरभावेपीच्छाज्ञानमात्रेण पदार्थ-ज्ञानदर्शनेनोच्चारणांशस्य व्यर्थत्वात्। आधुनिकसङ्केतित-देवदत्तादिपदे तादृशेऽच्छयेश्वरोच्चरितत्वाभावेन शक्त्यभावा-पत्तेश्च। त्वया च तत्रापि शक्त्यङ्गीकारात्॥

न च द्वादशेऽहनि पिता नाम कुर्यादिति सामान्येनेश्वरो-च्चरितत्वं तत्राप्यस्तीति वाच्यम्। साधुभिर्भाषितव्यमिति सामान्येनेश्वरोच्चरीतत्वस्य लाक्षणिकेऽपि सत्त्वात्। घटोत्पत्तेरिव गङ्गाशब्दोच्चारणस्यापि द्विकर्तृकत्वेनेश्वरो-च्चरितत्वस्यापि सत्त्वाच्च। तस्मात्स्वाभाविकः सम्बन्धः शक्तिरित्यस्वीकारे लाक्षणिकेपि शक्तिर्दुवारा।

किं चैवं चक्षुषा घटं प्रत्येतु, धूमेन वह्निं प्रत्येत्वितीश्वरेच्छैव चक्षुर्धूमयोर्घटवह्निभ्यां सम्बन्धो न तु संयोगव्याप्ती इति स्यात्।

सङ्केतसम्बन्धभङ्गः ॥२८॥

## न्यायदीपः

उक्तदोषपरिजिहीर्षया द्वितीयमाशङ्कते ॥**न चेति**॥ आधुनिकसङ्केतितदेवदत्तादिशब्दे शक्त्यभावः स्यादिति दोषे सत्येव दोषान्तरमाह ॥**ईश्वरेच्छाया इति**॥**सा च न तीर इति**॥ लाक्षणिकस्याननुभावकत्वादिति भावः ॥**तस्या अपीति**॥ अनुभवत्वितीश्वरेच्छाया अपि। तत्र तीरादावित्यर्थः ॥**सा च न तीरेस्तीति**॥ लाक्षणिकपदप्रयोक्तृच्चरितत्वादिति भावः। तादृशेश्वरे-च्छयोच्चरितत्वं शक्तिरिति हि तदा कल्पनीयम् यदि तादृशेश्वरच्छयोच्चरितत्वं विना वा तज्ज्ञानं

विना वा पदात्पदार्थज्ञानं स्यात्। न ह्येवमस्तीत्याह ॥ **उच्चारणेति** ॥ अस्माच्छब्दादमुमर्थमयं जानात्वितीश्वरेच्छाज्ञानमात्रेणेत्यर्थः।

इष्टापत्तिरित्यत आह ॥ **त्वया चेति** ॥ देवदत्तादिपदार्थबुद्धौ सङ्केतज्ञानस्य कारणत्वावधारणादित्यत्रापि तत्कल्पनात् इत्यादिना मणौ तथैव स्पष्टं प्रतीतेरिति भावः। आधुनिकसङ्केतस्थळेऽप्याप्त्युद्धारमाशङ्क्य निराह ॥ **न च द्वादश इति** ॥ पुत्रजन्मदिनमारभ्य द्वादशेऽहनीत्यर्थः। तर्ह्यतिव्याप्तिः स्यादित्याह ॥ **साध्विति** ॥ विशिष्यापीश्वरोच्चरितत्वमस्त्वित्याह ॥ **घटोत्पत्तेरिति** ॥ ईश्वरेच्छया क्लृप्तशक्तित्यागेऽतिप्रसङ्गं चाह ॥ **किं चेति** ॥

सङ्केतसम्बन्धभङ्गः ॥ २८ ॥

## अथ अनुगतजात्यभावेपि शक्तिव्याप्त्यादिग्रहणसमर्थनम्।

### तर्कताण्डवम्

**ननु त्वन्मते—**

**सर्वगोव्यक्तिसङ्ग्राहकस्य शक्यतावच्छेदकस्यैकस्य गोत्वस्याभावेन शक्तिग्रहकाले सर्वगोवव्यक्त्युपस्थित्यसम्भवात् कथं गोशब्दस्य सर्वगोव्यक्त्युपसंहारेण शक्तिग्रहः। तद्ग्रहे च कथं गोशब्दादपूर्वगोव्यक्तिधीः। एवं सर्वधूमाग्निसङ्ग्राहकयोर्व्याप्यत्वव्यापकतावच्छेदकयोर्धूमत्वाग्नित्वयोः कार्यत्वकारणत्वावच्छेदकयोरनुगतयोः घटत्वदण्डत्वयोश्च अभावे कथं सर्वोपसंहारेण व्याप्तेः कार्यकारणभावस्य च ग्रहः। कथं च कारणाकारणविभागः। व्यक्त्यपेक्षया नियतत्वस्य रासभेऽपि सत्त्वाज्जात्यपेक्षया नियमस्य त्वन्मते दण्डादावप्यभावात्॥**

## न्यायदीपः

एवं शक्तिस्वरूपं निरूप्यावसरप्राप्तं तद् ग्रहप्रकारं–

"इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते"।

इत्यादिवैशेषिकाधिकरणानुव्याख्यानसुधयोः "समयप्रवृत्तौ तु सादृश्यमुपधान"मिति पद्धतौ चोक्तं समर्थयमानः सुधोक्तं पूर्वपक्षं सङ्क्षिप्यानुवदति ॥ **ननु त्वन्मत इति** ॥ **अभावेनेति** ॥ आगामिभङ्गे वक्ष्यमाणदिशेति भावः। अनुगतजातिपक्षे तु पुरोवर्तिचक्षुः संयुक्तघटादौ प्रत्यक्षावगतं घटत्वं प्रत्यासत्तीभूय स्वाश्रयभूतसमस्तघटव्यक्तीः प्रत्यक्षज्ञाने भासयतीति युगपदुपस्थितानन्तव्यक्तिषु शक्तिग्रहः सुशक इति भावः। तुल्यन्यायविषयत्वादाह ॥ **एवमिति** ॥ व्याप्यत्वावच्छेदकव्यापकत्वावच्छेदकयोरित्यर्थः। धूमत्वाग्नित्वयोरित्यनन्तरं एवमित्यनुषङ्गः ॥ **सर्वोपसंहारेणेति** ॥ सर्वेषां युगपदेकबुद्धिस्थत्वं सर्वोपसंहारः। तेन च धूमवह्निघटदण्डरूपसर्वव्यक्तिनिष्ठव्यापकभावग्रहः कार्यकारणभावग्रहो भवति स कथमित्यर्थः।

मास्तु को दोषः पुरोवर्तिनोरेव व्याप्यादिभावग्रहोस्त्वित्यत आह ॥ **कथं चेति** ॥ उपलक्षणमेतत्। व्याप्याव्याप्यविभागश्च कथमित्यपि ध्येयम्। कार्यकारणविभागायोगं व्यनक्ति ॥ **व्यक्तीति** ॥ नियतपूर्ववृत्तित्वादिहि कारणत्वादिकं वाच्यम्। तत्र नियमश्च दण्डे सति घटः तदभावे तदभाव इति वाच्यः। स च दण्डघटरूपव्यक्तिमादाय चेत्तदा कस्मिंश्चित् घटे जायमाने यत्र रासभोऽपि सन्निहितस्तत्र रासभे सति घट इत्यस्ति नियम इति रासभस्यापि कारणत्वग्रहः स्यात्।

अथ – दण्डत्वावच्छिन्ने सति घटत्वावच्छिन्नमित्येवं नियमस्तु सिद्धान्तिनो मते न युक्तः। अनुगतदण्डत्वादेरभावात्। एवं व्याप्यत्वादिग्रहेऽपि ज्ञेयम्। तथा च दण्डान्तरादौ कारणत्वाद्यग्रहेऽपि कारणत्वादिस्वीकारे रासभादेरपि स्वीकारापत्तेः कारणाकारणादिविभागो न स्यादित्यर्थः।

## तर्कताण्डवम्

**किं च क्रियावत्त्वं न द्रव्यलक्षणम् अव्याप्तेः, न सत्त्वाश्रयत्वं अतिव्याप्तेरित्यादिव्यवस्था न स्यात्। तत्तद्व्यक्तिमात्रविश्रान्तद्रव्यत्वावच्छिन्नस्यैव लक्ष्यत्वात्तत्रच तत्तद्व्यक्तिनिष्ठायाः क्रियायाः सत्त्वेन लक्ष्यासङ्ग्रहरूपाया अव्याप्तेः**

द्रव्यादिव्यक्तिषु प्रत्येकं विश्रान्तायाः सत्ताया गुणकर्माद्य-वृत्तित्वेन लक्ष्यातिरिक्तसङ्ग्रहरूपाया अतिव्याप्तेश्चाभावात्। तस्मादनुगतजात्यनङ्गीकारे सर्वव्यवहारविलोपः स्यादिति।।

उच्यते–

अनुगतजातेरभावे किं शक्यव्याप्यादिरूपसर्वव्यक्त्यु-पस्थितिरेव न सम्भवतीत्युच्यते, किं वा तत्सम्भवेऽपि क्रोडीकारकस्यैकस्य गोत्वधूमत्वादेरभावे सर्वगोव्यक्त्या-द्युपसंहारेण शक्तिव्याप्त्यादिग्रहो न सम्भवतीति।

नाद्यः। त्वन्मते सामान्यप्रत्यासत्तिभूतेन शक्यत्व-व्याप्यत्वावच्छेदकेनैकेन गोत्वेनेवमन्मतेप्युपदेशव्यवहार-भूयोदर्शनादिना शक्तिव्याप्यादिग्रहकाले उपस्थितगवादि-व्यक्तिविशेषधर्मिकेणातीतानागतगवादिसकलव्यक्तिप्रति-योगिकेनैकेन सादृश्येनातीतानागतसकलशक्यव्याप्यादि-व्यक्तीनामुपस्थितिसम्भवात्।

इयांस्तु भेदः। त्वन्मते जातिरतीताद्याश्रिता, मन्मते तु सादृश्यं ध्वंसादिवत्प्रतियोगित्वेन तत्तत्सम्बद्धमिति।

युक्तं च तदनाश्रितत्वेऽपि संस्कारवत्प्रत्यासत्तित्वेन तदुपस्थापकत्वम्। प्रत्युत त्वन्मते एवातीतादेरसत्त्वात् जात्याश्रयत्वमयुक्तम्।।

## न्यायदीपः

अनुगतजात्याभावे दोषान्तरमाह पूर्ववादी।। **किं चेति**।। गगनादावभावादाह।। **अव्याप्ते-रिति**।। गुणकर्मादावपि भावादाह ।। **अतिव्याप्तेरिति**।। इत्यादीत्यादिपदेन द्रव्यत्वपृथिवीत्वादेः सामान्यविशेषव्यवस्था न स्यादिति, केचिच्छब्दाः एकैकार्थाः केचित्त्वक्षादिशब्दा नानार्था

इत्यादिव्यवस्था न स्यादिति गृह्यते। एकानेकप्रवृत्तिनिमित्तकत्वादेकार्थकत्वादेरिति भावः। कुतो न स्यादित्यतः क्रमेण व्यनक्ति ॥ **तत्तदिति** ॥ **अव्याप्तेरिति** ॥ अभावादित्यन्वयः।

॥ **व्याप्त्यादीति** ॥ कारणमादिपदार्थः। भूयो दर्शनादिनेत्यादिपदं पूर्वेणाप्यन्वेति। इयं गौरिति व्यक्तिविशेष उपदेशेन गामानयेत्यादिवृद्धव्यवहारेण तत्रान्वितादिपदोपपत्तावुपमानकोशादिना शक्तिग्रहकाले भूयोदर्शनेन व्याप्तिग्रहकाले अन्वयव्यतिरेकदर्शनेन कारणत्वग्रहकाल इत्यर्थः। ॥ **सादृश्येनेति** ॥ सादृश्यं च पदार्थान्तरम्। न त्वनुगतजातिघटितमूर्तिकमिति भावः। व्याप्त्यादी-त्यादिपदेन कारणव्यक्तिग्रहः। उपस्थापकतायामविशेषद्योतनायाह ॥ **इयांस्तु भेद इति** ॥ इयानेव भेद इत्यर्थः। अतीतादेः कथं प्रतियोगित्वं नाम धर्मः। आश्रयाभावादित्यत उक्तम् ॥ **ध्वंसादि-वदिति** ॥ प्रागभाव आदिपदार्थः। तथात्वे ध्वंसादेरपि तत्प्रतियोगिकत्वं न स्यादिति भावः।

नन्वतीताद्यनाश्रितं पुरोवर्तिमात्राश्रितं सादृश्यं कथमतीताद्युपस्थापयेदित्यत आह ॥ **युक्तं चेति** ॥ **संस्कारवदिति** ॥ प्रत्यभिज्ञायां चन्दनखण्ड इत्याद्युपनीतभानादौ च संस्कारस्यान्तःकरणाद्याश्रितस्यापि यथा चक्षुरादिप्रत्यासत्तित्वं तथेत्यर्थः। एतच्च स्वमतावष्टम्भेनोक्तम्। परमते तु ज्ञानवदिति बोध्यम्। आत्मसमवेतस्यापि तत्तादिस्मृतिरूपज्ञानस्य प्रत्यभिज्ञादौ चक्षुरादिप्रत्यासत्तित्वं तथेति ध्येयम्। सामान्यप्रत्यासत्तिपक्ष एवोपस्थितिर्दुर्घटेत्याह ॥ **प्रत्युतेति** ॥

## तर्कताण्डवम्

**ननु त्वन्मते सादृश्येनातीतादेः प्रतियोगित्वरूपसम्बन्धो नानेति चेत्किं तावता। न ह्येकस्मिन् ज्ञाने एक एव सम्बन्धो हेतुरिति नियमः। समूहालम्बनज्ञाने रूपी घट इत्यादौ च तदभावात्। घटरूपरूपत्वैः सह सन्निकर्षाणां भेदात्।**

**किं च समवायाभेदवादिनः तवापि मते गोत्वादिसम-वायस्याश्वादावपि सत्त्वादाधाराधेयत्वमात्रस्य सर्वाधारे कालादावपि सत्त्वात्स्वरूपसम्बन्धरूपविशेषणता विशेष एव गौरित्यादिधीनियामक इति वाच्यम्। स च तत्तद्व्यक्ति-रूपोनन्त एवेति समं। स च सम्बन्धः स्वरूपसन्नेव प्रत्यासत्तिः न तु ज्ञात इत्यात्माश्रयपरिहारोप्यावयोः समानः॥**

## न्यायदीपः

ननु – पुरोवर्तिधर्मिनिष्ठसादृश्यप्रतियोगित्वमतीतादिषु सर्वत्र नानुगतमेकमस्ति। तथात्वे गोत्वादेरेव तथात्वोपपत्तौ किमेतत्कल्पनया। वक्ष्यमाणानुगतपक्षदोषग्रासाच्च। अतो यावन्ति प्रतियोगीनि तावस्तु प्रतीयोगित्वान्यपि तावन्त्येवेति भिन्नभिन्नानि। तथा चानन्तप्रतियोग्यनुयोगि-भावरूपसम्बन्धैरनन्तप्रतियोगिवस्तूनि युगपत्कथमुपस्थापयेदिति भावेन शङ्कते ॥ **नन्विति** ॥ सम्बन्धानेकत्वं युगपदुपस्थितौ न प्रतिबन्धकं व्यभिचारादित्याह ॥ **किन्तावतेत्यादिना** ॥

समूहालम्बनज्ञानस्थळे घटपटादिसंनिकर्षाणामन्यान्यत्वं स्पष्टमित्युपेक्ष्य रूपीत्यादिज्ञाने तद्व्यनक्ति ॥ **घटेति** ॥ संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायरूपसन्निकर्षाणामित्यर्थः। इदं च सम्बन्धनानात्वं सामान्यप्रत्यासत्तिपक्षेऽपि सममेवेत्याह ॥ **किं चेति** ॥ पुरोवर्तिनिष्ठस्य गोत्वस्यातीतादिव्यक्तिभिः समवाय आधाराधेयभावो वा जातौ व्यक्तेर्व्यावर्तकतया विशेषणत्वेन स्वविशेषणत्वरूपो वा सम्बन्धो वाच्यः।

तत्राद्य आह ॥ **समवायेति** ॥ एक एव समवायो न तु संयोगवन्नानेति पक्षे सर्वव्यक्तिभिर्जातेरेक एव सम्बन्ध इति युगपत्सर्वोपस्थितिः सम्भवति। तथाऽपि गोत्वेन सर्वगोव्यक्त्युपस्थितिवदश्वादि-व्यक्त्युपस्थितिरपि स्यात्। गोत्वसमवायस्यैकत्वेनाश्वादावपि गोत्वसमवायस्य समवायभङ्गोक्त-रीत्या सत्त्वादित्यर्थः।

द्वितीय आह ॥ **आधारेति** ॥ **कालादाविति** ॥ तथा च गोत्वेन देशकालयोरप्युपस्थितिः स्यादिति भावः। तृतीयः परिशिष्यत इति भावेनाह ॥ **स्वरूपेति** ॥ **गौरित्यादीति** ॥ अतीतानागत-सर्वगोविषयकधीनियामकमिति वाच्यमित्यर्थः।

ननु – प्रतियोगिनामुपस्थितावेव प्रतियोग्यनुयोगिभावरूपसबन्धज्ञानं सम्बन्धज्ञोन च प्रतियोगिनामुपस्थितिरिति प्रतियोगिनां ज्ञाने प्रतियोगिनां ज्ञानं कारणमित्यापन्नम्, सम्बन्धस्य स्वरूपत्वादित्यतः स्वरूपसन्नेव सम्बन्धः प्रतियोग्युपस्थितिहेतुः, न ज्ञातः, येनात्माश्रयः स्यात्, अन्यथा तवप्ययं दोषः स्यादिति भावेनाह ॥ **स चेति** ॥ विशेषणताविशेषरूपः प्रतियोग्यनुयोगि-भावरूपश्चेत्यर्थः।

## तर्कताण्डवम्

**ननु पुरोवर्तिगोव्यक्तौ मन्मते गोत्वमिव त्वन्मते तस्याः**

**स्वगतसादृश्यप्रतियोगित्वं नेति कथं तस्मादुपस्थिरिति चेन्न। तस्याः प्रत्यभिज्ञायामिदमंशस्येवेन्द्रियसंयोगादिनैवोपस्थितेः।**

**अपि च – त्रिविक्रम एकेन पादेनोर्ध्वलोकमन्येन अधरलोकमिव सादृश्यं प्रतियोगित्वरूपसम्बन्धेनातीतादिकं धर्मित्वरूपसम्बन्धेन पुरोवर्तिनमपि स्पृशति। न चैवं वैरूप्यम्। उभयानुगतस्य निरूपकत्वस्यैकरूपत्वात्।**

## न्यायदीपः

सामान्यप्रत्यासत्त्या साम्यं सादृश्यप्रत्यासत्तेरयुक्तम्। गोत्वस्य पुरोवर्तिव्यक्त्याऽतीतादि-व्यक्तिभिश्च विशेषणतारूप एव सम्बन्ध इति युक्तम्। तत्र गोत्वं पुरोवर्तिनः येन रूपेण सम्बद्धं तेनैव रूपेणातीतादिभिरपि सम्बद्धमिति पुरोवर्तिव्यक्तिमतीतादिव्यक्तिं युगपदुपस्तापयतीति, सादृश्यं तु पुरोवर्तिना धर्मित्वेन सम्बद्धमतीतादिभिः प्रतियोगित्वेनेति वैरूपात्कथं युगपत्सर्वमुपस्थापयेदिति भावेन शङ्कते ।। **नन्विति** ।। मन्मते तार्किकमत इत्यर्थः।

।। **स्वगतेति** ।। पुरोवर्तिव्यक्तिनिष्ठं यत्सादृश्यं तत्प्रतियोगित्वं नास्ति। किं तु धर्मित्वमेव। प्रतियोगित्वं त्वतीतादावेवेत्यर्थः ।। **तस्या इति** ।। पुरोवर्तिन्या इत्यर्थः ।। **इदमंशस्येवेति** ।। तत्तांश एव चक्षुषः संस्कारस्य ज्ञानस्य वा प्रत्यासत्तित्वेनेदमंशे संयोगादेरेव लौकिकसन्निकर्षस्य प्रत्यासत्तित्वेन सम्बन्धद्वयेनाप्युभयविषयकमेकं प्रत्यभिज्ञानं यथा जायते तथैव संयोगसादृश्य-रूपसम्बन्धाभ्यां पुरोवर्तितदन्यसर्वविषयकमेकं ज्ञानं भवत्येवेति भावः।।

नन्वथाप्येकरूपसम्बन्धो न लभ्यत इत्यत आह ।। **अपि चेति** ।। **उभयेति** ।। पुरोवर्तिन्य-तीतादौ च गतस्य निरूपकत्वस्येत्यर्थः। सादृश्यस्य धर्मिप्रतियोग्युभयनिरूप्यत्वादिति भावः। अतीतादौ पुरोवर्तिनि च निरूपकत्वमस्तीत्येतावतैवानुगतस्येत्युक्तम्। न त्वेकं व्यासज्यवृत्तितया अस्तीति भ्रमितव्यम्। तथात्वेऽनुगतजात्यपाकरणायोगात्।

## तर्कताण्डवम्

**अपि च सादृश्येञ्जनादिवत्सहकारित्वमात्रेण प्रत्या-सत्तिशब्दः। अत एव पद्धतावतीतादिज्ञानं भूयोदर्शनादि**

**सहकारिसामर्थ्येनेत्युक्तम्। न हि न्यायमतेऽप्यनुगतजातौ संस्कारे व्यवसाये योगजधर्मे भ्रान्तिहेतौ दोषे च मुख्यं प्रत्यासत्तित्वमस्ति। नवा योगजधर्मादेरतीतादिना सम्बन्धः अस्ति।**

**पद्धतावपि भूयोदर्शनादिजानितसंस्कारसचिवमिन्द्रियं स्वसन्निकृष्टव्यक्तिनिष्ठसादृश्यप्रतियोग्यतीतादिग्राहकमित्येव विवक्षितत्वान्नानुव्याख्यानोक्तसादृश्यत्यागः। अन्यथा विसदृशस्यापि ग्रहणापातात्। सादृश्यमुपधानमिति स्ववचनविरोधाच्च॥**

## न्यायदीपः

ननु – निरूपकत्वमपि नैकरूपम्। क्वचिद्धर्मित्वेन क्वचित्प्रतियोगित्वेनेति नानैव। शब्दानुगतिमात्रस्यातिप्रसङ्गादित्यत आह ॥ **अपि चेति** ॥ वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादिति चेन्न। सहकारिसामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य बहुळमुपलम्भादिति वाक्यमर्थतो निष्कृष्याह ॥ **पद्धतावित्यादिना** ॥ अस्य वाक्यस्य वक्ष्यमाणदिशा सादृश्यपर्यन्तत्वाद्भवत्युपष्टम्भकमिति भावः।

कुत एवं सामान्यप्रत्यासत्तिरेवोपेयतामित्यत आह ॥ **न हीति** ॥ **संस्कार इति** ॥ संस्कारपदं ज्ञानपरम्। ज्ञानस्यैव प्रत्यभिज्ञादौ प्रत्यासत्तित्वोपगमात्। प्राभाकरादिमतेन वा संस्कार इत्युक्तिः। अनुव्यवसायेन बाह्यार्थविषयीकरणे व्यवसायस्य प्रत्यासत्तित्वाद्व्यवसाय इत्युक्तम्

॥ **योगजधर्म इति** ॥ नित्यानुमेयादिज्ञाने तस्य प्रत्यासत्तित्वात्॥ **मुख्यमिति** ॥ संयोगादि-रूपलौकिकसन्निकर्षस्येव उभयसम्बन्धत्वरूपमित्यर्थः। पद्धतिवाक्यं कथमुक्तार्थोपष्ठम्भकमित्यत आह ॥ **पद्धतावपीति** ॥

''इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते।

इत्याद्यनुव्याख्यानोक्तस्येत्यर्थः ॥ **अन्यथेति** ॥ सादृश्यविवक्षाभाव इत्यर्थः ॥ **स्ववचनेति** ॥ अन्यथेऽत्यनुषङ्गः। ''व्यक्तय एव वाच्याः। समयप्रतिपत्तौ तु सादृश्यमुपधान''मिति पद्धत्युक्तशब्द-परिच्छेदगतवचनविरोधादित्यर्थः। न च शक्तिग्रह एव सादृश्यमुपधानमित्युक्तम् न तु व्याप्तिग्रह

इति वाच्यम्। तुल्यन्यायत्वादिति भावः।

## तर्कताण्डवम्

ननु तथाऽपि गवयोपि गोसादृश्यप्रतियोगीति तस्याप्युपस्थितिः स्यादिति चेत्तवाप्युपमितौ गोसदृशपश्वन्तरस्य गवयशब्दवाच्यताधीः स्यात्। अयं गौरित्युपदेशे च गोगतद्रव्यत्वादिजात्यन्तरस्य धीः स्यात्॥

यदि च तत्रावापोद्वापाभ्यामन्तरङ्गस्य सादृश्यस्य गोत्वादिजातेश्च ग्रहस्तर्हीहापि गवयादिव्यावृत्तमन्तरङ्गं सास्नादिमत्त्वगोत्वादिप्रयुक्तसादृश्यं प्रत्यासत्तिः। तस्माज्जातिवत् सादृशस्यापि पुरोवर्तिपिण्डनिष्ठस्येन्द्रियसन्निकृष्टस्योक्तसम्बन्धेनातीताद्युपस्थापकत्वं युक्तमेव॥

एतदेवाभिप्रेत्योक्तं सुधायां सादृश्यस्य व्यावृत्तत्वेऽपि प्रतियोगि निरूप्यत्वेनानुगतफलसाधकत्वानुभवादिति। अनुगतफलं सर्वव्यक्त्युपस्थितिः।

नापि शक्तिव्याप्त्यादिग्रहो न सम्भवतीति द्वितीयः। त्वन्मत एकया जात्येव मन्मतेप्युक्तरीत्या सर्वव्यक्तिसम्बन्धिना एकेन सादृश्येन क्रोडीकृतासुव्यक्तिषु शक्तिव्याप्त्यादिग्रहसम्भवात्॥

## न्यायदीपः

सादृश्यस्य सहकारित्वेन प्रत्यासत्तित्वेन वा यथाकथञ्चित्स्वनिरूपकसर्वोपस्थापकत्वेन अतीतादिसर्वोपस्थितावुपेतायां ''न च वाच्यं गोसादृश्यमश्वेप्यस्तीति तत्रापि गोशब्दवाच्यताऽनुमानप्रसङ्ग'' इत्यादिना सुधोक्तातिप्रसङ्गशङ्कोत्तरे व्यनक्ति ॥ **नन्वित्यादिना** ॥ गोनिष्ठसादृश्येत्यर्थः ॥ **उपमिताविति** ॥ गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवतो वनं गतस्य गोसादृश्यविशिष्ट-

पिण्डदर्शनात्तस्मिन् पिण्डे गवयशब्दवाच्यत्वविषयकोपमितिर्जायत इति मते गोसदृशे गवयभिन्ने पश्वन्तरे यत्किञ्चिद्गोसादृश्यविशिष्टत्वदर्शनेन तस्मिन् गवयशब्दवाच्यत्वोपमितिः स्यादित्यर्थः। वाच्यताधीः वाच्यत्वभानम्। उपमितिः स्यादिति योजना। प्रत्यक्षोपदेशेऽपि परस्याति-प्रसङ्गमापादयति **॥ अयमिति ॥** पुरस्थिते गोपिण्डे गौरित्युपदेशे गोत्वावच्छेदेन गोशब्दवाच्यत्वं गृह्णाति। तन्न स्यात्। किं तु गोत्वादिव्यापकबहिरङ्गद्रव्यत्वं पृथिवीत्वादिनैव वाच्यधीः स्यादित्यर्थः।

तेनैव समाधिं वाचयति **॥ यदि चेति ॥** अवापः प्रक्षेपः। उद्वापः उद्धारः। यत्किञ्चित्सदृशे महिष्यादौ गवयपदव्युत्पत्तिग्रहे सति महिषमानयेत्यादिव्यवहारे गवयपदस्योद्वापो महिषपदस्य आवापोस्ति स न स्यात्। तथा गवयानयनादौ गवयमानयेत्युच्यते तत्र गवयपदस्यावापोस्ति पदान्तरस्योद्वापः स न स्यात्। अतः पदन्तरावापोद्वापदर्शनेनान्तरङ्गमेव सादृश्यमुपमितौ नियामकम्। अयमित्याद्युपदेशेऽपि घटाद्युपदेशेऽपि घटाद्यानयने गामानयेत्यादिप्रयोगादर्शनादन्तरङ्गं गोत्वमेवा-वच्छेदकं गृह्णातीति यद्युच्यत इत्यर्थः

**॥ सुधायामिति ॥** वैशेषिकाधिकरणसुधायाम् **॥ उक्तरीत्येति ॥** व्याप्त्यादिग्रहणकाल इत्यादिनोक्तरीत्येत्यर्थः **॥ सम्बन्धिनेति ॥** निरूपकत्वेन रूपेण पुरोवर्त्यतीदिरूपसर्वव्यक्ति-सम्बन्धिनेत्यर्थः ॥

## तर्कताण्डवम्

**इयांस्तु विशेषः। त्वन्मते गोत्वं ज्ञातं सत्प्रत्यासत्तिः, मन्मते तु सादृश्यमज्ञातमेव प्रत्यासत्तिः। एवं त्वन्मते गोत्वं शक्तिग्रहे विशेषणत्वाच्छब्दज्ञाने विषयत्वेन प्रविशति। मन्मते तु सादृश्यं प्रत्यासत्तिमात्रत्वान्न तत्र प्रविशतीति गोशब्दाद् गोसदृश इति धीर्न भवतीति। गुण एव चाज्ञातकारणे प्रत्यासत्तेरज्ञाताया एव प्रत्यासत्तित्वम् स्वसाध्यज्ञाने विषयत्वेनाननुप्रवेशश्च। प्रत्यासत्तौ संयोगादौ तथा दर्शनात्।**

**न चैवं सादृश्येन मुण्डितव्यक्तीनामेवोपस्थापनात् शक्तिग्रहकाले गोत्वप्रकारिकोपस्थितिर्नेति शब्दबोधोऽपि गोत्वप्रकारको न स्यादिति शङ्क्यम्। त्वन्मते तादृश्या अपि**

**प्रत्यासत्तेः स्वप्रकारकधीजनकत्वस्वभावस्येव मन्मतेऽपि सादृश्यरूपप्रत्यासत्तेः स्वप्रयोजकगोत्वादिप्रकारकधी-जनकत्वस्वभावस्य फलबलेन कल्पनात्॥**

## न्यायदीपः

नन्वेवं जातेरिव सादृश्यस्यापि शाब्दधीविषयत्वप्रसङ्गेन गोशब्दाद्गोसदृश इति धीः स्यादित्यत आह ॥ **इयांस्त्विवति** ॥**विशेषणत्वादिति** ॥ विशेषणतया विषयत्वादित्यर्थः। मन्मते त्वित्यनन्तरं शक्तिग्रह इत्यनुषङ्गः ॥ **प्रत्यासत्तिमात्रत्वादिति** ॥ विशेषणतया विषयत्वाभावादिति मात्रपदार्थः॥

ननु कथमज्ञातस्य प्रत्यासत्तित्वं, अनुमानशब्दस्थळे व्याप्तिशक्त्योर्ज्ञातयोरेवानुमेय-वाक्यार्थयोरुपस्थितप्रत्यासत्तित्वदर्शनादित्यतो ज्ञातकरणे तथात्वेऽप्यज्ञातकरणप्रत्यक्षेऽज्ञातस्यैव तद्युक्तमित्याह ॥ **गुण एव चेति** ॥ अननुप्रवेशश्च गुण एवेत्यन्वयः।

नन्वलौकिकसन्निकर्षे ज्ञातस्यैव प्रत्यासत्तित्वमिति नियम इति चेन्न। हेत्वभावात्। प्रत्यभिज्ञायां सुरभिचन्दनमित्याद्युपनीतभानादौ ज्ञानस्याज्ञातस्यैव विशेषणीभूततत्ताद्यंशे प्रत्यासत्तित्वोपगमाच्च। रजतत्वाद्यारोपांशे दोषस्याज्ञातस्यैव प्रत्यासत्तित्वाच्चेति भावः॥

गोपदाद्गोसदृश इति धीः स्यादिति दोषाभावेपि गोत्वविशिष्टगोधीर्न स्यादित्याशङ्क्य निराह ॥ **न चैवमिति** ॥ जातेरप्रत्यासत्तित्व इत्यर्थः ॥ **मुण्डितेति** ॥ गोत्वादिजातिम्बिनाकृतेत्यर्थः ॥ **अन्यत्रेति** ॥ संयोगादिलौकिकसन्निकर्षस्थळे व्याप्तिशक्तिज्ञानयोगजधर्मरूपप्रत्यासत्तिस्थळे चेत्यर्थः।

॥ **प्रत्यासत्तेरिति** ॥ सामान्यलक्षणप्रत्यासत्तेरित्यर्थः। गोत्वरूपसामान्यप्रत्यासत्त्योपस्थितानां गोव्यक्तीनां गोत्वेनैवोपस्थितेस्त्वयाऽङ्गीकारादिति भावः। सादृश्यं हि पदार्थान्तरमपि गोत्व-घटत्वादिप्रयुक्तमित्युपगमात्स्वप्रयोजकेत्युक्तम् ॥ **फलेति** ॥ सादृश्यनिरूपकतयोपस्थितानामपि गोत्वेनैवोपस्थितिरूपफलबलेनेत्यर्थः।

## तर्कताण्डवम्

**यद्वा तवेव ममापि पुरोवर्तिगोवर्तिगोत्वं ज्ञातमेव प्रत्यासत्तिः। किं तु तव तदेकमिति स्वविशिष्टव्यक्त्युप-**

**स्थापकम्। मम तु नानेति स्वनिष्ठसादृश्यप्रतियोगिगोत्वा-न्तरविशिष्टोपस्थापकमिति भेदः॥**

**एतदेवाभिप्रेत्योक्तं सुधायाम् – ''तैस्तैर्व्यावृत्तैर्द्रव्यगुण-कर्मसामान्यैर्निमित्तैः'' इति।**

**अनेन प्रवृत्तिनिमित्तज्ञानं द्रव्यगुणादीनामननुगमेऽपि दण्डिशुक्लादिशब्दानामिव गोत्वादिजातेरननुगमेऽपि गवा-दिशब्दानां व्युत्पत्तिरस्तु॥**

**न च तत्रापि दण्डत्वादिकमनुगतमिति वाच्यम्। तथाऽपि निमित्तदण्डादेरननुगमात्। न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवतीति सूचितम्॥**

## न्यायदीपः

अन्यत्राक्लृप्तस्वभावान्तरकल्पने गौरवं मन्वान आह ॥ **यद्वेति** ॥ तर्हि किं सादृश्येनेत्यत आह ॥ **किं त्विति** ॥ **स्वनिष्ठेति** ॥ पुरोवर्तिगोत्वनिष्ठेत्यर्थः ॥ **सुधायामिति** ॥ तेते व्यावृत्ताकाराः तैस्तैर्द्रव्यगुण कर्मसामान्यैर्निमित्तैः तत्तच्छब्दवाच्या इति सुधायामित्यर्थः ॥

अत्रायमर्थोऽभिमतः। पुरोवर्तिनिष्ठदण्डादिरूपद्रव्यगुणकर्मसामान्यनिष्ठसादृश्यप्रतियोगितयोपस्थितैर्द्रव्यगुणकर्मसामान्यैर्निमित्तैर्युक्ताः दण्ड्यन्तरगुण्यन्तरादिपदार्थाः दण्डी गुणी शुक्ल इत्यादिशब्दवाच्यतया ग्राह्या इति ॥

नन्वस्मिन् पक्षे – सुधावाक्ये सामान्यैर्निमित्तैरित्येव वाच्यम् तावताऽपि मुण्डितगोव्यक्तिधी-र्गोपदात्स्यादिति प्रस्तुतदोषस्यापरिहारात् द्रव्यगुणकर्मेत्युक्तिर्व्यर्थेत्यत आह ॥ **अनेनेति** ॥ द्रव्यत्वादिपदोपादानेनेत्यर्थः। इति सूचितमित्यन्वयः। ॥ **प्रवृत्तीति** ॥ दण्ढी शुक्लः पटश्चलति गौरिति दण्डिशुक्लचल इत्यादिशब्दप्रवृत्तिनिमित्तानामित्यर्थः।

॥ **तत्रापीति** ॥ दण्ड्यादिशब्दशक्तिग्रहस्थळेऽपीत्यर्थः। निमित्तस्य दण्ड्यादिशब्द-निमित्तस्येत्यर्थः। दण्डत्वादेरनुगमेन दण्डादेरनुगतिर्नेत्येतद्व्यनक्ति ॥ **न हीति** ॥

## तर्कताण्डवम्

नन्वेवं सादृश्यस्यैकत्वेऽपि तस्य शक्तिग्रहे विषयत्वेनाननुप्रवेशादनुप्रविष्टानां च गोत्वादीनां व्यक्तिवदनेकत्वेनैकस्य शक्तिग्रहविषयतानियामकस्याभावादनियमः स्यादिति चेन्न। शक्तिग्रहस्य विषयानियमो हि न तावदश्वादेरपि शक्यत्वम्। अनेकैरपि शक्तिग्रहे प्रकारभूतैरन्योन्यं सदृशैर्गोत्वैस्तन्निवारणात्। न ह्यनेकनियतमनियतं भवति॥

नापि समूहादिशब्देष्विव गवामेव समुदायत्वेन शक्यत्वम्। प्रत्येकमानयनादिव्यवहारदर्शनेन तत्तन्निष्ठगोत्वावच्छेदेन प्रत्येकं शक्तिग्रहात्॥

नापि गोष्वेव केषांचित्त्यागेन शक्यत्वम्। शक्तिग्रहकाले उपस्थितसर्वमध्ये केषांचित्त्यागे हेत्वभावात्।

नापि गोष्वेव केषां चित्त्यागेनानभिमतगवान्तरस्यापि शक्यत्वम्। सर्वगोव्यक्तिषु शक्तिग्रहेऽनभिमतव्यक्तेरेव अभावात्। तत्सत्त्वे तेनैव नियमात्॥

अत एवानुव्याख्याने–

"सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते"।

इत्यनेन प्रकरणादेरसत्त्वे साधारण्यमुक्त्वा–

"तथाऽपि प्राप्तितस्त्वेकवचनाच्च विशेषतः।
विशेषावगतिश्च स्याच्छक्तिः सादृश्यगा यतः"॥

इत्यनेन तत्सत्त्वे नियम उक्तः। अत्र च योग्यत्ववाचिना प्राप्तित इत्यनेन गामानयेत्यादावानयनाद्य योग्यानामतीतानागत–

**विप्रकृष्टानाम्, एकवचनादित्यनेन सन्निहितानामेव बह्वीनां, शबलत्वादिविशेषणवाचिना विशेषत इत्यनेनाशबलानां व्यवच्छेद उक्तः ॥ एतदप्युक्तं सुधायामनुगतफलसाधकत्वा-नुभवादिति। अनुगतफलं सर्वत्र शक्तिग्रहः।**

## न्यायदीपः

शक्तिग्रहस्य सादृश्यनिमित्तकत्वे–

"तथाऽपि प्राप्तितस्त्वेकवचनाच्च विशेषतः।
अभीष्टावगतिश्च स्यात्"।

इत्यनुव्याख्यानसुधयोरुक्तबाधकतत्परिहारौ विवृण्वानः शक्तिग्रहाव्यवस्था स्यादिति शङ्कते ॥ **नन्विति** ॥ **एकत्वेपीति** ॥ सर्वप्रतियोगिकपुरोवर्तिनिष्ठसादृश्यस्यैकत्वेपीत्यर्थः। परमते संयोगसमवायादेरिव प्रतियोगिभेदेऽपि सादृश्यानेकत्वाभावादिति भावः ॥ **अननुप्रवेशादिति** ॥ मन्मते सादृश्यं प्रत्यासत्तिमात्रत्वान्न तत्रानुप्रविशतीति पूर्वमुक्तत्वात्। सुधायां च "न हि सादृश्यं शब्दशक्तिविषयतया प्रवृत्तिनिमित्ततया वाऽभ्युपगम्यते" इत्युक्तेरिति भावः।

सम्भावितपक्षचतुष्टयमपि क्रमान्निराह ॥ **न तावदित्यादिना** ॥ एकस्यानियामकत्वे कथं शक्यत्वं नियतं स्यादित्यत आह ॥ **न हीति** ॥ **समूहादीति** ॥ समूहचमूसेनावनमित्यादि-शब्देष्विवेत्यर्थः ॥ **अत एवेति** ॥ इष्टत्वादिहेतोरेवेत्यर्थः। स्वोक्तपक्षत्रयापाकरणं मूलारूढतया दर्शयति ॥ **अत्र चेति** ॥ न तावदित्यादिनोक्तनिराकरणं तु–

"व्युत्पत्तिरपि हि सादृश्येनैव गम्यते"।

इति पूर्वार्धेनैव पूर्वकृतव्युत्पादनरीत्या स्पष्टं प्रतीयत इति भावः ॥ **एतदपीति** ॥ नापि शक्तिग्रहो न सम्भवतीति द्वितीय इत्यादिनोक्तद्वितीयपक्षापाकरणमपीत्यर्थः। तद्व्यनक्ति ॥ **अनुगतमिति** ॥

## तर्कताण्डवम्

**तस्मास्त्वरूपसत्सादृश्योपस्थापितपरस्परसदृशनाना-गोत्वावच्छिन्नव्यक्तिषु प्रत्येकं शक्त्यादिग्रहान्न कोपि दोषः।**

**तदुक्तमनुव्याख्याने–**

**"इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते"।**

**इति। सादृश्येन स्वरूपसता।**

**पद्धतौ च "व्यक्तय एव वाच्याः, समयप्रतिपत्तौ तु सादृश्यमुपधानम्" इति।**

**अत्रैवकारेण व्यावृत्तजात्यादेः प्रवृत्तिनिमित्तता न निषिध्यते। किं त्वनुगतजातेः शक्यतैव। अन्यथोक्तसुधादिविरोधात्। गोत्वादेः प्रकारत्वेनाप्रतीतौ शाब्दप्रतीतेर्निर्विकल्पकत्वापताच्च।**

**अत्रोपधानमित्युक्त्या – सादृश्यं न गोव्यक्तिवद्वाच्यम्। नापि गोत्ववत्प्रवृत्तिनिमित्तम्। किं तूक्तप्रकारेणाज्ञातमेव प्रत्यासत्तित्वेन गोत्वविशिष्टव्यक्त्युपस्थापकमिति सूचितम्॥**

## न्यायदीपः

यद्वेत्यादिनोक्तपक्षमुपसंहरति ॥ **तस्मादिति** ॥ स्वरूपसत्सादृश्यं पुरोवर्तिगोत्वनिष्ठं सादृश्यं तदुपस्थितानि यानि परस्पर सादृश्यानि गोत्वानि तदवच्छिन्नगोव्यक्तिष्वित्यर्थः। प्राचीनपक्षस्याप्युपसंहारपक्षे तु पुरोवर्तिव्यक्तिनिष्ठसादृश्योपस्थापिताः परस्परसदृश्यः या नानाव्यक्तयः परस्पसदृशनानागोत्वैरवच्छिन्नास्तास्वित्यर्थः। यद्वा स्वरूपसत्सादृश्योपस्थापिताः परस्परसदृशनानागोत्त्वैरवच्छिन्नास्तास्वित्यर्थः।

॥ **तदुक्तमिति** ॥ वैशेषिकाधिकरणे उक्तमित्यर्थः। अपिपदं कार्यकारणभावव्याप्त्यवधारणसमुच्छयार्थम्। सुधायामस्फुटत्वादाह ॥ **सादृश्येन स्वरूपसतेति** ॥

ननु पदशक्तिवादे सुधासम्मत्या जात्यादेरपि निमित्ततया शक्यत्वोक्तिः पद्धतिवाक्यविरुद्धेत्यत आह ॥ **अत्रैवकारणेति** ॥ **उक्तसुधेति** ॥ तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्मसामान्यैर्निमित्तैरित्युक्तसुधेत्यर्थः।

विपक्षे बाधकं चाह ॥ **गोत्वेति** ॥ अन्यथेत्यनुकर्षः जात्यादेः प्रवृत्तिनिमित्ततानिषेध इत्यर्थः । न हि सादृश्यं शब्दशक्तिविषयतया प्रवृत्तिनिमित्ततया वाऽभ्युपगम्यत इतिसुधानसुरोधेनार्थमाह ॥ **अत्रोपधानमित्युक्त्येति** ॥ **उक्तेति** ॥ इत्यांस्तु विशेष इत्यादिनोक्तप्रकारेणेत्यर्थः ।

## तर्कताण्डवम्

यद्वा यथा प्राभाकरमते धेनुशब्दस्य ज्ञातेन गोत्वेनोपहिते धानकर्मणि शक्तिग्रहो यथा च न्यायमत एकविंशतिप्रभेदभिन्नानां दुःखानां मध्ये चरमस्य मुख्यदुःखस्य जन्यत्वादितरेषां च शरीरादीनां गौणदुःखानां जनकत्वादुभयनिरूप्यतया ज्ञातं जन्यजनकभावसम्बन्धमुपधानीकृत्य शरीरत्वाद्यनेकप्रकारावच्छिन्नेष्वनेकेषु शरीरादिषु दुःखशब्दस्य शक्तिग्रहो, यथा च वक्तृनिष्ठां देवदत्तादिविषयां ज्ञातामेकां बुद्धिमुपधानीकृत्य वक्तृनिष्ठबुद्धिविषयेषु देवदत्तत्वाद्यनेकप्रकारावच्छिन्नेष्वनेकेषु देवदत्तादिषु सर्वनाम्नः तच्छब्दस्य शक्तिग्रहः; तथोपदेशव्यवहारादिपूर्वकंशक्तिग्रहविषयव्यक्तिनिष्ठं ज्ञातमुभयसम्बद्धमेकं सादृश्यमुपधानीकृत्यानेकगोत्वालिङ्गितास्वनेकगोव्यक्तिषु गोशब्दस्य शक्तिग्रहोस्तु ॥

उक्तं हि बाधनालक्षणं दुःखमिति न्यायसूत्रतत्त्वबोधे वर्धमानेन दुःखसबन्धनिरूपकत्वं दुःखत्वमिति ।

नच सर्वानाम्नि वक्तृगतबुद्धेरिवातीतादिज्ञानात् प्राक् तत्प्रतियोगिकसादृश्यज्ञानं न सम्भवतीति वाच्यम् । भूयोव्यवहारादिदर्शनदशायां प्रतियोगिभूतवर्तमानपिण्डान्तरस्य ज्ञातत्वेन तत्सम्भवात् । तस्यैव चातीतादिप्रतियोगिकत्वात् । अतीतादिप्रतियोगिकत्वेन ज्ञानस्य चानपेक्षितत्वात् ॥

## न्यायदीपः

सादृश्यं तु व्यावृत्तमपि तत्तच्छब्दवाच्यत्वबोधे लिङ्गतयोपयुज्यत इत्यादिसुधोक्त्यनुरोधेन पक्षान्तरं तथेत्यादिना वक्तुं दृष्टान्तत्रयमाह ॥ **यद्वा यथेति** ॥ **धानकर्मणीति** ॥ धेट् पान इति धातोर्धानं पानं तत्प्रति कर्मकारकभूत इत्यर्थः। वत्सेन गोः पीयमानत्वाद्धेटः कर्मणि ल्युट्प्रत्ययविधानादिति भावः। तर्हि महिष्यादावपि धेनुशब्दप्रयोगापत्तिरित्याशङ्क्य गोत्वस्य प्रयोगोपाधित्वोपगमादिति भावेनोक्तम् ॥ **गोत्वेनोपहिते इति** ॥ तस्याज्ञातत्वेतिप्रसङ्गतादवस्थ्याज्ज्ञातेनेत्युक्तम् ॥ **एकविंशतीति** ॥ शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुखं, चेत्येकविंशति-प्रभेदेत्यर्थः ॥ **उभयेति** ॥ जन्यजनकोभयेत्यर्थः

॥ **वक्त्रिति** ॥ चैत्रादिरूपवक्तृनिष्ठां देवदत्तयज्ञदत्तविष्णुमित्रादिविषयाम् ॥ **तच्छब्दस्येति** ॥ ते गता आगता इत्यादिव्यवहारार्थं हि तच्छब्दस्य शक्तिग्रहः, स च सर्वनामसञ्ज्ञकशब्दत्वाद् बुद्धिस्थवाचकः, बुद्धिश्च ज्ञातैव सत्युपयुज्यत इति भावः। दृष्टान्तानुक्त्वा दार्ष्टान्तिकमाह ॥ **तथेति** ॥ अयं गौरित्युपदेशः, गामानयेत्यादिवृद्धव्यवहारः उपमानकोशादिरादिपदार्थः ॥ **उभयेति** ॥ पुरोवर्तितादितररूपोभयेत्यर्थः। धर्मित्वेन पुरोवर्तिना। प्रतियोगित्वेन तदितरैः सम्बद्धत्त्वादिति भावः। प्रतियोगिनामनेकत्वेऽपि तन्निरूपितपुरोवर्तिनिष्ठस्यैकत्वादिति भावः। उपधानीकृत्य तटस्थेन निमित्तीकृत्य।

व्यक्तय एवेति पद्धत्यविरोधायोक्तम् ॥ **अनेकेति** ॥ एकत्वनिरासार्थत्वोक्तेरेवकारस्येति भावः। ''यथा च न्यायमत'' इत्यत्र सम्मतिमाह ॥ **उक्तं हीति** ॥ तत्त्वबोधे ग्रन्थविशेषे ॥ **दुःख-सम्बन्धेति** ॥ जन्यत्वेन वा जनकत्वेन वा यथाकथञ्चिद्दुःखसम्बन्धनिरूपकत्वमित्यर्थः। तच्च दुःखे तज्जनके चास्तीति भावः।

वक्त्रित्युक्तदृष्टान्तवैषम्यमाशङ्क्य निराह ॥ **न चेति** ॥ बुद्धेर्यथा ज्ञानं सम्भवति न तथा सादृस्यज्ञानं सम्भवतीत्यर्थः। अतीतादेरज्ञानेऽपि पुरोवर्त्येकपिण्डे चक्षुःसन्निकृष्टे पिण्डान्तर-प्रतियोगिकसादृश्यज्ञाने सति सर्व प्रतियोगिकसादृश्यं ज्ञातमेव, तस्यैव सर्वप्रतियोगिकत्वादिति भावेनाह ॥ **भूय इति** ॥ आदिपदेन भूय उपदेशो ग्राह्यः ॥

## तर्कताण्डवम्

**यद्वाऽऽदौ स्वरूपसत्सादृश्यमुक्तरीत्याऽतीतादिकमुप-**

स्थाप्य पश्चात्साग्रीसत्त्वेनातीतादिप्रतियोगिकत्वेनापि ज्ञातमुपलक्षणं भविष्यति।।

एतदुप्युक्तं–

"इति व्युत्पत्तिरपि हि सादृश्येनैवगम्यते" इति।।

सादृश्येन ज्ञातेन। पद्धतौ च सादृश्यमुपधानमित्युक्तम्। अत्रोपधानमित्युक्त्या सादृश्यं सर्वनाम्नि तत्पदे वक्तृगत-बुद्धिरिव ज्ञातमप्युपलक्षणत्वान्न शक्तिग्रहविषय इति सूचितम्। अत्र च सादृश्यं स्वरूपसदेवोपस्थापकमितिमते तदुपस्थापितैः परस्परं सदृशैरनेकैर्गोत्वैः शक्तिग्रहनियमः, पुरोवर्तिपिण्डगतं ज्ञातं गोत्वमुपस्थापकमिति मते तदुप-स्थापितैः तत्सदृशैरनेकैर्गोत्वैस्तन्नियमः, ज्ञातं सादृश्यमेवोप-स्थापकमिति मते साक्षात्सम्बन्धवता तेनैकेनैव सादृश्येनोप-स्थापितैर्गोत्वैस्तन्नियम इति भेदः। एवं च तवेव ममापिमते धूमजातीयस्य वह्निजातीयरहितेऽवृत्तिर्धूमस्यवह्निव्याप्तिः, घटजातीयस्योत्पत्तौ दण्डजातीयस्य नियमो दण्डस्य घट-कारणत्वं, लक्षणजातीयस्य लक्ष्यजातीयेऽवृत्तिरव्याप्तिः, अलक्ष्यजातीये वृत्तिरतिव्याप्तिरित्यादिव्यवस्था युक्ता।।

## न्यायदीपः

ननु तत्प्रतियोगिकत्वेनाज्ञाने सत्येतत्सादृश्यप्रतियोगिनः सर्वे गोपदवाच्या इति ज्ञानं कथमित्यत आह।। **यद्वेति** ।। **उक्तेति** ।। आद्यपक्षोक्तरीत्येर्थः। सुधायामस्फुटत्वादाह।। **एतदपीति** ।। यद्वा यथेत्यादिनोक्तपक्षात्पक्षान्तरमपीत्यर्थः। बुद्धिस्थपरामर्शित्वोपपादनायाह ।। **सर्वनाम्नीति** ।। सर्वादीनि सर्वनामानीत्यनेन सर्वनामसञ्ज्ञके तदितिपदे वक्तृगतबुद्धिस्थस्य विषयत्वेऽपि न बुद्धिर्विषयो यथा तथा सादृश्यमपि न शक्तिविषयतया गृह्यत इत्यर्थः।।

प्रागुक्तपक्षद्वयं निष्कृष्य दर्शयति ।। **अत्र चेति** ।। तस्यैव विवरणम् ।। **इति मत इति** ।। **मत**

**इति च** ।। यद्वा शक्तिग्रहविषय इत्यर्थः ।। **उपस्थापकमिति** ।। स्वप्रतियोगिनामतीतादिसर्वपदार्थानामिति योज्यम् ।।

एवमनुगत जातेरभावेऽपि सर्वत्र शक्तिग्रहं सादृश्येनैवोपपाद्येदानीमेवं सर्वधूमाग्निसङ्ग्राहकयोरित्यादिना पूर्वमाक्षिप्तं व्याप्तिग्रहादिकं च समाधत्ते ।। **एवं चेति** ।। सादृश्येनैव सर्वोपस्थितिसम्भवे सतीत्यर्थः । जातीयत्वं च परमते सति तन्निष्ठजातिमत्त्वम् ।

## तर्कताण्डवम्

इयांस्तु भेदः । तव साजात्यमेकजात्याश्रयत्वं मम तु साजात्यमेकजातिसदृशजात्याश्रयत्वं वा, एकस्या एव व्यक्तेर्व्यक्त्यन्तरनिष्ठसादृश्यप्रतियोगित्वरूपो व्यक्त्यन्तरसम्बन्धो वा, धर्मित्वेन प्रतियोगित्वेन वा निरूपकतयैकसादृश्यसम्बन्धो वेति । केचित्तु सादृश्यजन्यैकधीविषयत्वं साजात्यमित्याहुः । चतुर्णामपि पक्षाणामनुव्याख्यानोक्तं सादृश्यमेव जीवातुः ।

एवं तवेव ममापि द्रव्यत्वस्य सर्वपृथिवीजातीयसम्बन्धित्वे सति तदधिकाबादिसम्बन्धित्वरूपं सामान्यत्वं, पृथिवीत्वस्य तु द्रव्यजातीयसम्बन्धित्वे सति किञ्चिद्द्रव्यजातीयाबाद्यसम्बन्धित्वरूपं विशेषत्वं च युक्तमिति, न सामान्यविशेषन्यायभङ्गोऽपि ।

किं तु द्रव्यत्वस्य सर्वपृथिव्यबादिना सम्बन्धस्तव समवायः मम तूक्तरीत्या पृथिव्यादिप्रतियोगिकसादृश्यं प्रति प्रयोजकत्वम्, एवं पृथिवीत्वस्य किञ्चिद्द्रव्यासम्बन्धस्तवाबाद्यसमवायो ममं त्वबादिप्रतियोगिकसादृश्या प्रयोजकत्वमिति भेदः । उक्तश्च समवायपक्षेऽतिप्रसङ्गः । घटादिशब्द एकार्थोऽक्षादिशब्दस्तु नानार्थ इति व्यवस्था तूपस्था-

**पितानां प्रवृत्तिनिमित्तानां सादृश्यवैसादृश्याभ्यां वा उपस्थापकानां सादृश्यानां जातीनां वा सादृश्यवैसादृश्याभ्यां वा युक्ता।**

## न्यायदीपः

सिद्धान्ते तु तदभावात्कथं तवेव ममापीत्युक्तिरित्यत आह ।। **इयांस्तु भेद इति** ।। **एकस्या एवेति** ।। एकगोपिण्डनिष्ठगोत्वरूपैकधर्मस्यैवानेकगोपिण्डान्तरनिष्ठानि यान्येतद्गोपिण्डनिरूपितसादृश्यानि तत्प्रयोजकत्वरूपः गोपिण्डसम्बन्धः साजात्यम्। एवं प्रत्येकं गोपिण्डेष्वस्तीति सर्वेषामन्योन्यसाजात्यमित्यर्थः ।। **धर्मित्वेनेति** ।। अन्योन्यसदृशत्वमेवान्योन्यजातीयत्वमित्यर्थः। नचैवं गवयस्यापि गोजातीयत्वप्रसङ्गः शङ्क्यः। अन्तरङ्ग सादृश्यस्य विवक्षितत्वादिति भावः ।। **सादृश्यजन्यैकधीति** ।। तच्च गोपिण्डादिमात्र एवास्तीति भावः। एकधीविषयत्वाज्ञानेऽपि साजात्यज्ञानात्प्रागुक्तमेव साजात्यं युक्तमित्यत्र पक्षेऽरुचिबीजं ध्येयम् ।। **पक्षाणामिति** ।। साजात्यनिर्वचनपक्षाणामित्यर्थः ।।

यद्वा धर्मिप्रतियोगितया पुरोवर्त्यतीतादिसकलगोव्यक्तिसम्बद्धं पुरोवर्तिनिष्ठं सादृश्यं स्वरूपसदेव स्वप्रयोजकनानागोत्वविशिष्टसर्वगोव्यक्त्युपस्थापकं सत्सर्वत्र शक्तिग्राहकमिति; पुरोवर्तिनिष्ठं ज्ञातं गोत्वमेव प्रत्यासत्तीभूय धर्मिप्रतियोगितया स्वस्वेतरनानागोत्वसम्बन्धेन सादृश्येन हेतुनानेकगोत्वावच्छिन्नसर्वगोव्यक्त्युपस्थापकं सत्सर्वत्र शक्तिग्राहकमिति; तथा धर्मिप्रतियोगितया सर्वगोव्यक्तिसम्बन्धं सादृश्यं ज्ञातमेव सर्वगोव्यक्त्युपस्थापकं सत्स्वयमुपलक्षणतया नानागोत्वावच्छिन्नसर्वगोव्यक्तीरुपस्थाप्य पश्चादतीतादिप्रतियोगिकत्वेन ज्ञातं सत्स्वयमूपलक्षणीभूय नानागोत्वावच्छिन्नं सर्वगोव्यक्तिषु शक्तिग्राहकमिति च; प्रागुक्तचतुर्णामपि पक्षणामित्यर्थः ।।

।। **जीवातुरिति** ।। जीवनौषधमित्यर्थः। ''जीवातुर्जीवनौषधम्'' इत्यभिधानात्। प्रागादिपदोपात्तसामान्यविशेषव्यवस्थां च समाधत्ते ।। **एवमिति** ।। **न्यायभङ्गोऽपीति** ।। एतेन ''न हिंस्यात्स्वर्वाभूतानि, अग्निषोमीयं पशुमालभेत'' इत्यादौ उत्सर्गापवादन्यायभङ्गोऽपि नेत्यपि समाहितं बोध्यम्।

कथं तर्ह्यनुगतजातिपक्षाद्भेद इति पृच्छति ।। **किं त्विति** ।। समाधत्ते ।। **द्रव्यत्वस्येति** ।। **उक्तेति** ।। धर्मित्वेन प्रतियोगित्वेनेत्यादिनोक्तरीत्येर्थः ।। **सर्वेति** ।। सर्वपृथिवीप्रतियोगिक-

सादृश्यमबादावबादिप्रतियोगिकसादृश्यं पृथिव्यामित्येवंरूपेण सादृश्यप्रयोजकत्वं द्रव्यत्वादेः सर्वपृथिव्यबादिसम्बन्धित्वमित्यर्थः। पृथिव्यबादेरन्योन्यसादृश्यस्य स्वस्वनिष्ठद्रव्यत्वप्रयुक्तत्वादिति भावः।

युक्ता चास्मदुक्तरीतिरेवेति भावेनाह ॥ **उक्तश्चेति** ॥ ''किं च समवायाभेदवादिनस्तवापि मत'' इत्यादिना पूर्वस्मिन्नेव वादे उक्त इत्यर्थः। एकानेकार्थत्वव्यवस्थां च समाधत्ते ॥ **घटादीति** ॥ **उपस्थापितानामिति** ॥ शब्देनेति शेषः। घटादिशब्देनोपस्थापितानां घटत्वानामनेकत्वेऽपि सर्वेषां सदृशत्वाद्धटादिशब्दस्यैकार्थत्वम्; अक्षादिशब्दोपस्थापितानां तु विदेवनाक्षत्वविभीतकाक्षत्वरथ-चक्राक्षत्वादीनां विसदृशत्वादनेकार्थकत्वमित्यर्थः। सादृश्यं वा गोत्वादिकं वा तीरादिपदार्थोप-स्थापकमितिपूर्वोक्तमतद्वयानुरोधेनाह ॥ **सादृश्यानां जातीनां वेति** ॥

## तर्कताण्डवम्

**न चानवस्था। क्वचिद्धर्मिण एव धर्मत्ववत्सम्बन्धिन एव सम्बन्धत्ववद्भिन्नस्यैव भेदत्ववच्च सदृशस्यैव सादृश्यत्वोप-पत्तेः।**

**न च सामान्यान्येवेति न्यायेन जातिरेव सादृश्यम्। सादृश्यस्य सप्रतियोगिकत्वादुत्कर्षापकर्षवत्वाज्जात्यादौ वर्तनाच्च। जातेस्तु। तदभावात्॥**

**तस्मादनुगतजात्यभावेऽपि सादृश्येनैव शक्ति-व्याप्त्यादिग्रहणं युक्तम्॥**

## न्यायदीपः

नन्विदमयुक्तम्। सादृश्यानामपि सादृश्यान्तरोपगमे सति सादृश्यानां तन्निष्ठसादृश्यस्य च सादृश्यान्तरमुपेयं उभयनिष्ठसादृश्यस्यचाधिकरणभूताभ्यां सादृश्यान्तरमुपेयमित्यनवस्थापत्तेः इत्याशङ्क्य निराह ॥ **नचेति** ॥

॥ **क्वचिदिति** ॥ प्रमेयत्वाभिधेयत्वादौ प्रमेयत्वादेः केवलान्वयित्वेन स्वनिष्ठप्रमेयत्वादिकं

प्रति धर्मिण एव घटादिधर्मत्ववन्मृद्घटयोः समवाय इत्यत्र सम्बन्धित्वेन प्रतीतस्यापि समवायस्य मृद्घटाभ्यां स्वस्य च विशेषणविशेष्यभावेन जायमानविशिष्टप्रत्ययं प्रति नियामकसम्बन्धस्य अन्यस्याभावेन तत्रापि समवायस्यैव सम्बन्धत्ववद्घटनिष्ठपटभेदस्य घटभेदस्य च घटेन भेदे सत्यनवस्थापत्त्या स्वस्य स्वेनैव तद्भिन्नस्य घटनिष्ठभेदत्ववत्सादृश्यानां स्वेनैवान्योन्यसादृश्योपपत्तेरित्यर्थः। प्रमेयत्वादावपि प्रमेयत्वान्तरं समवाये समवायान्तरं भेदे भेदान्तरमिति तत्राप्यनवस्था स्यादेवेति भावः। नन्वथापि जातीनां सादृश्यवैसादृश्याभ्यामित्ययुक्तमिति भावेन शङ्कते ॥ **न चेति** ॥

सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
भिन्नप्रधानसामान्यव्यक्तिसादृश्यमुच्यते ॥

इत्युक्तेरिति भावः। न च सामान्यं प्रतियोगिनिरूप्यं तन्निरूप्यं च सादृश्यमिति स्फुटमनयोर्भेद इति सुधोक्तमाह ॥ **सप्रतियोगिकत्वादिति** ॥ तदुपलक्षणं मत्वाऽऽह ॥ **उत्कर्षेति** ॥ अयमनेनात्यन्तसदृशः अयं च किं चित्सदृश इति प्रतीतेरिति भावः ॥ **जात्यादाविति** ॥ जातिविशेषसमवायाभावेष्वपि सादृश्यस्य सत्त्वान्न जातिरेव सादृश्यमित्यर्थः। अस्ति च गोत्वघटत्वादिर्जातित्वनित्यत्वादिना सदृश इत्यादि व्यवहार इति भावः ॥ **तदिति** ॥ सप्रतियोगिकत्वोत्कर्षादिमत्त्वजात्यादिवर्तमानानामभावादित्यर्थः।

## तर्कताण्डवम्

**सुधायां त्वयं गौरित्युपदेशो व्याप्तिग्राहकः, तस्य चायं चैतत्सदृशाश्च सर्वे गोशब्दवाच्या इत्येवं परत्वादवगतव्याप्तिश्च पिण्डान्तरं दृष्ट्वाऽनुमिमीते अयं गोशब्दवाच्यः तत्सदृशत्वादिति।**

**न च दृष्टान्ताभावः, पुरोवर्तिगोपिण्डे स्वप्रतियोगिकसादृश्याभावादिति शङ्क्यम। आप्तवाक्येन व्याप्त्यवगमे दृष्टान्तानपेक्षणात्। तथा च पृथिव्याः पृथिवीशब्दवाच्यत्वे गन्धवत्त्वमिव गोर्गोशब्दवाच्यत्वेऽनुव्याख्यानोक्तं सादृश्यं लिङ्गमिति पक्षान्तरमुक्तम्।**

**अत एव पद्धतौ – "वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं**

**कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादिति चेन्न। सहकारिसामर्थ्येन कारणानां शक्त्यन्तराविर्भावस्य बहुळमुपलम्भात्'' इत्यनेनास्मदुक्तं पक्षमुक्त्वा किं च प्रतीतस्य धूमस्याग्निना सम्बन्धे स्वाभाविकतया निश्चिते यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्येवमित्येवं व्याप्तिग्रहो भवतीत्यनेन सुधोक्तं पक्षान्तरमुक्तम्।**

## न्यायदीपः

स्वोक्तव्युत्पत्तिग्रहोपायचतुष्टये सुधाविरोधमाशङ्क्य तत्स्पष्टं निष्कृष्यानुवदन् पक्षान्तरत्वेन समाधिमाह ॥ **सुधायां त्विति** ॥ इति व्युत्पत्तिरित्यादिश्लोकव्याख्यावसरे सुधायामित्यर्थः।

तर्हि स्वोक्तपक्षे किं ज्ञापकमित्यत आह ॥ **अत एवेति** ॥ **अस्मदुक्तमिति** ॥ सादृश्यं चक्षुः सहकारितया स्वनिरूपकसर्वोपस्थापकं सर्वक्रोडीकारकं चेत्युक्तपक्षमित्यर्थः। पक्षान्तरमुक्तमित्यनेन पद्धतिवाक्ययोः परस्परं सुधावाक्येन च विरोधः परिहृतो ज्ञेयः।

## तर्कताण्डवम्

**अत्र च वर्तमानसन्निकृष्टमात्रग्राहीति सहकारिसामर्थ्येनेति चोक्तत्वात्, भूयोदर्शनादिहेतुर्धूमत्वादिना विशिष्टव्यक्तिग्राहकश्चक्षुरादिरेवाभिप्रेतः। न तु साक्षी।**

**उक्तं च–**

**''अतीतवर्तमानत्वग्राहिणी सा च दृश्यते''।**

**इत्यनुव्याख्याने चाक्षुषादिप्रत्यभिज्ञाया अपि सहकारिसामर्थ्येनातीतादिविषयत्वं। ग्रन्थान्तरे व्याप्तिग्रहे साक्ष्युक्तिश्च सामान्येन साक्षिज्ञानस्यापि सत्त्वात्। सुधायां पद्धत्युक्तप्रथमपक्षानुक्तिश्च पद्धतावेवोक्तत्वात्।**

**न च सुधा शक्तिग्रहमात्रविषया। पद्धतिस्तु व्याप्तिग्रहमात्रविषयेति शङ्क्यम्। पद्धत्युक्तस्य प्रकारद्वयस्य न्यायसाम्येन शक्तिग्रहेऽपि सम्भवात्। सुधायामपि ''एतेन कार्यकारणभावावधारणादिकमपि समाहितम्'' इत्यनेन वाक्येन शक्तिग्रहे उक्तस्य प्रकारस्य व्याप्त्यादिग्रहेऽतिदेशाच्च।**

**अत एव–**

**''आगमोपि हि सामान्यदृष्टे प्रत्यक्षतः पुनः।**
**विशेषं गमयेदेव कथं शक्तिग्रहोऽन्यथा॥**
**अतीतानागतार्थेषु''**

**इत्यनुव्याख्यानव्याख्यावसरे सन्न्यायरत्नावळ्या मतीतानागतपदार्थेषु वाचकत्वशक्तिर्गृहीतेत्याद्युक्तम्।**

## न्यायदीपः

ननु – न भवदुक्तपक्षः पद्धतिवाक्यानुगुणः। तत्र वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षमित्युक्तप्रत्यक्षपदस्य साक्षिप्रत्यक्षपरत्वात्।

अतः सर्वपदार्थाश्च सामान्यात्साक्षिगोचराः।
सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा॥

इति भक्तिपादीयानुव्याख्यानश्लोकव्याख्यानसुधायामतीतानागतवर्तमानं सर्वमपि लिङ्गमनन साध्येन व्याप्तमितिज्ञानापेक्षं खल्वनुमानम्। न चैतज्ज्ञानं साक्षिणा विना सम्भवतीत्यादिना व्याप्तिग्रहे साक्षिण एवोपायत्वोक्तेः। भवद्भिश्च चाक्षुषप्रत्यक्षस्योपायत्वोक्तेरित्यतः पद्धतिवाक्यार्थं तावदाह ॥ **अत्रेति** ॥ **उक्तं चेति** ॥ ''अतः सर्वपदार्थाश्चे'' इत्येतस्मादुपरितनश्लोकव्याख्यावसरे – ''अतीतर्वतमानत्वविशिष्टार्थविषया सा प्रत्यभिज्ञेत्यर्थः। दृश्यते साक्षिणा सोयमिति प्रत्यभिज्ञाकारानुभूयते। चक्षुरादिनैव जायत इति भाव इति'' ग्रन्थेनोक्तमित्यर्थः।

साक्ष्युक्तेर्गतिमाह ॥ **ग्रन्थान्तरेति** ॥ सुधायामेव ''अतः सर्वपदार्थाश्च'' इत्यादि पूर्वश्लोकव्याख्यानप्रदेश इत्यर्थः ॥ **अत एवेति** ॥ पद्धत्युक्तप्रकारद्वयस्य शक्तिग्रहे सम्भवादेवेत्यर्थः।

आगमोपीत्यादिश्लोकः अतीतवर्तमानत्वग्राहिणीति श्लोकात्किञ्चिद्व्यवहितपूर्वतनग्रन्थस्थः। सन्न्यायरत्नावळी नामानुव्यख्यानस्य चिरन्तनटीका।

यद्यपि तत्रातीतानगतपदार्थेषु सामान्याकारेण साक्षिप्रतीतेषु पदानां वाचकत्वशक्तिर्गृहीतेत्येव पाठात् साक्ष्येवातीताद्युपस्थितिरिति भाति। तथाऽपि सामान्येन साक्षिज्ञानस्यापि सत्त्वात् साक्षीत्युक्तिः। तावता सहकारिसामर्थ्येन चाक्षुषोपस्थितेर्न निरासः। अत एव तत्रापि सामान्याकारेणे-त्युक्तिरिति भावेन सामान्याकारेण साक्षिप्रतीतेष्वित्यंशप्रहाणेनावशिष्टवाक्योदाहरणमित्यदोषः॥

## तर्कताण्डवम्

**यत्तु–सुधायामतीतानागतार्थेष्वित्यनुव्याख्यानस्याना-गतादिविषयलृडादिशब्दविषयत्वेन व्याख्यानं, तत्पद्धत्युक्त-द्वितीयपक्षाश्रयणेन गवादिशब्देष्वन्यथोपपत्तिशङ्कायामपि न लृडादिशब्देष्विति दर्शयितुम्॥**

## अनुगतजात्यभावेऽपि शक्तिव्याप्त्यादिग्रहणसमर्थनम्॥ २९॥

## न्यायदीपः

ननु – सुधायामतीते लुङन्तस्यानागते लृडन्तस्य शक्तिग्रहोक्तिपरत्वेनैवातीतेतिश्लोको व्याख्यातः, न सर्वशब्दशक्तिग्रहोक्तिपरत्वेन। अतः कथं तत्सम्मतिरुच्यत इत्यत आह॥ **यत्त्विति**॥ द्वितीयपक्षे सादृश्यनिरूपकत्वेन सर्वोपस्थितेरभावात्साक्षिणैवातीताद्युपस्थितेर्वक्तव्यत्वाल्लुङ्-लृडादिशब्दव्युत्पत्त्यर्थमतीतादिविषयोपस्थापकतया साक्षी स्वीकार्य इत्यभिप्रायेणेत्यर्थः। आद्यपक्षे तु सन्न्यायरत्नावळ्युक्तदिशा भवत्येवोक्तार्थे सम्मतिरिति भावः। किमर्थमेवं तत्र सुधायां व्याख्यातमित्यत आह॥ **गवादीति**॥ गोत्वादिसामान्यप्रत्यासत्त्यादिनाप्यतीताद्युपस्थितिसम्भवेन नावश्यमनेक गोपिण्डे गोपदशक्तिग्रहोपयोगितयातीतादिगोपिण्डोपास्थितये साक्षीस्वीकार्य इत्यन्यथोपपत्तिशङ्कायामपि लङ्लृडादिशब्दव्युत्पत्तावतीताद्युपस्थितेरावश्यकत्वेनावश्यं साक्षी स्वीकार्य इति दर्शायितुमित्यर्थः।

इत्यनुगतजात्यभावेऽपि शक्तिव्याप्त्यादिग्रहसमर्थनम्॥ २९॥

## अथ स्वर्णघटत्वादिप्रतिबन्दी

### तर्कताण्डवम्

**किं च त्वन्मतेऽपि – सुवर्णघटादौ तेजस्त्वादिना सङ्करापत्त्या घटत्वादिजातिः पृथिवीत्वादिव्याप्या नानैव। तारत्वादिजातिरपि कत्वादिजात्या चैत्रजत्वजात्या सङ्करापत्त्या गत्वादिव्याप्या नानैव। उद्भूतत्वजातिरपि नीलत्वादिना सङ्करापत्त्या शुक्लत्वादिव्याप्या नानैव।**

**एवञ्च यथा तत्र घटत्वादीनां नानात्वेऽपि घटादिशब्दव्युत्पत्तिः, घटस्य कपालं प्रतिव्याप्यता, जलाहरणादिकारणता, घटाकारानुगतप्रत्ययश्च; तथा गोत्वानां नानात्वेऽपि व्युत्पत्त्यादिकं किं न स्यात्॥**

### न्यायदीपः

परसम्मत्याऽप्यननुगतधर्मेण शक्तिग्रहमुपपादयितुमुपोद्धातमाह ॥ **किं च त्वन्मत इति** ॥ नानैवेत्येतैरन्वयः ॥ **सङ्करेति** ॥ परस्परपरिहारेण वर्तमानयोरेकत्र समावेशः सङ्करः। इह च तेजस्त्वपरिहारेण मृद्घटे सतो घटत्वस्य घटत्वपरिहारेणालोकादौ सतस्तेजस्त्वस्य स्वर्णघटे समावेशात् स्वर्णस्य च परमते तेजस्त्वादतः साङ्कर्यदोषनिरासाय नानैवोपेया। तथा च तेजस्त्वादिव्याप्यस्य घटत्वस्य तेजस्त्वादिपरिहारेणान्यत्रावर्तमानत्वान्न साङ्कर्यम्। स्वर्णघटादौ तेजस्त्वादिपरिहारेणान्यत्रावर्तमानत्वान्न साङ्कर्यम्। स्वर्णघटादौ घटत्वादिजातिर्नेति मतेनाह ॥ **तारत्वेति** ॥ तारत्वकत्वयोस्तारगकारे मन्दककारे च सतोस्तारककारे समावेशात्साङ्कर्यम् ॥ **चैत्रजत्वेति** ॥ चैत्रजन्यतावच्छेदकजात्येत्यर्थः। तारत्वचैत्रजन्यतावच्छेदकजात्योः मैत्रीयतारककारे चैत्रकृतकटादौ च सतोश्चैत्रजन्यतारककारे समावेशात्साङ्कर्यं स्यात्तन्निरासाय नानैव वाच्या। एवमुद्भूतत्वनीलत्वयोः शुक्लरूपानुद्भूतनीलरूपयोः सतोरुद्भूतनीलरूपे घटादिनिष्ठे समावेशेन साङ्कर्यनिरासाय नानैव वाच्येत्यर्थः।

अस्तु किं तत इत्यत आह ॥ **एवं चेति** ॥ नानात्वे सतीत्यर्थः ॥ **घटादिशब्दव्युत्पत्तिरिति** ॥

मृद्घटादौ स्वर्णघटादौ चेत्यर्थः ॥ **व्याप्यतेति** ॥ यो घटः स कपालाश्रित इति व्याप्यतेत्यर्थः । मृद्घटादौ स्वर्णघटादौ चेति चतुर्ष्वपि सम्बध्यते। आदिपदेन तारादिशब्दव्युत्पत्तिग्रहः ॥

## तर्कताण्डवम्

**न च घटत्वं संस्थानरूपावयवसंयोगवृत्तीति न सङ्कर इति वाच्यम्। अन्यतरकर्मादिप्रयोज्यजात्या सङ्करापातात्। स्थूलो घटश्चलतीति घटत्वस्य परिमाणकर्मादिसामानाधिकरण्यप्रतीतेश्च॥**

**यदि च तारत्वादीनां सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेनानुगमस्तर्हीहापि गोत्वानामनुगतसादृश्यसम्बन्धित्वेनानुगमोस्तु॥**

**अपि च त्वन्मते यथा ज्ञेयत्वाभिधेयत्वमूर्तत्वकार्यत्वस्वरूपत्वजातित्वादीनामननुगमेपि ज्ञेयाभिधेयादिशब्दव्युत्पत्तिस्तत्तदुचितव्याप्त्यादिश्च, तथाऽत्रापि किं न स्यात्।**

**न च ज्ञेयत्वादीन्यप्यनुगतानि। जातित्वापत्तेः। नचेष्टापत्तिः। सामान्यादावपि वृत्तेः॥**

## न्यायदीपः

ननु – घटत्वं पृथिव्यात्मकेषु घटेष्वेकमेव। स्वर्णघटेष्वपि सर्वत्रैकमेव। गोत्वादि तु त्वन्मते बहु। एवं च घटत्वबहुत्वाभावान्न दोष इति चेन्न। अननुगतत्वे समानेऽस्य वैषम्यस्याप्रयोजकत्वात्। तारत्वादीनां बहुत्वेन तारादिशब्दव्युत्पत्त्याद्यभावापातस्यापरिहाराच्च। एकदेशिमतेन शङ्कते ॥ **न च घटत्वमिति** ॥ **न सङ्कर इति** ॥ तेजस्त्वादिनैकत्राधिकरणे समावेशाभावादिति भावः ॥ **अन्यतरेति** ॥ संयोगो हि न्यायमतेऽन्यतरकर्मजोभयकर्मजसंयोगजभेदेन त्रिविध इति कारणत्वत्रयजन्यतावच्छेदकजातयोऽपि संयोगे तृणारणिमणिन्यायेन तिस्रोऽङ्गीकार्याः। तथा चान्यतरकर्मप्रयोज्या जातिर्घटत्वप्रहाणेन श्येनस्थाणुसंयोगेस्ति। घटत्वमपि तत्प्रहाणेन कपालद्वय-

कर्मजन्यसंयोगेस्ति। उभयमप्यन्यतरकपालकर्मजन्यकपालान्तरसंयोगेस्तीति साङ्कर्यम्। एवमुभयकर्मप्रयोज्यजात्यादिनाऽपि साङ्कर्यं ध्येयम्। द्रव्यनिष्ठत्वावगाहिप्रत्यक्षबाधं चाह ।। **स्थूल इति** ।। यदपि तारत्वं नानेति तारादिशब्दव्युत्पत्त्यादिर्न स्यादित्यादिपदप्रयोगेनाभिमतं तत्रानुगतिमाशङ्क्याह ।। **यदि चेति** ।। **सजातीयेति** ।। व्याख्यातमेतच्छब्दनित्यत्ववादे ।। **अनुगतेति** ।। प्रागुक्तदिशानुगतं धर्मिप्रतियोगितया सर्वत्र विद्यमानं सादृश्यसम्बन्धित्वमित्यर्थः ।।

ननु सादृश्यान्यपि नानासम्बन्धित्वान्यपि तथैव, शब्दानुगममात्रस्यातिप्रसञ्जकत्वादिति भावेनाह ।। **अपि चेति** ।। मूर्तत्वमियत्तावच्छिन्नपरिमाणवत्त्वम्। कार्यत्वम् कृतिविषयत्वम्।। **तत्तदुचितेति** ।। यज्ज्ञेयं तत्सत्, तत्प्रमेयमित्यादि तत्तदुचितेत्यर्थः ।। **अत्रापीति** ।। गोत्वानामननुगमेऽपि गवादिशब्दव्युत्पत्त्यादीत्यर्थः।

## तर्कताण्डवम्

**ननु च – ज्ञेयत्वादीनि ज्ञानत्वाभिधात्वपरिमाणत्वकृतित्वादिजातिरूपाण्येव, औपाधिकधर्माणामुपाध्यनतिरेकात्, तानि च परम्परासम्बन्धेन घटादावनुगतानीति चेत्। तर्हि इहापि सादृश्यद्वारकपरम्परासम्बन्धेनैकमात्रवृत्तिगोत्वं वा नानाव्यक्तिसम्बन्धि सादृश्यं वा तच्छब्दे वक्तृनिष्ठबुद्धिरिव गोमात्रानुगतमस्तु।।**

## न्यायदीपः

केवलान्वयिग्रन्थे मण्याद्युक्तदिशा शङ्कते ।। **नन्विति** ।। **औपाधिकेति** ।। ज्ञेयत्वादीनां ज्ञानाद्यनतिरेकाज्ज्ञानत्वादिरेव ज्ञेयत्वादीति भावः ।। **परम्परेति** ।। स्वसमवायिविषयत्वरूपसम्बन्धेनेत्यर्थः ।। **एकमात्रवृत्तिगोत्वमिति** ।। पुरोवर्तियत्किञ्चिद्गोपिण्डनिष्ठं गोत्वं स्वप्रतियोगिकसादृश्याधारभूतगोत्वाश्रयत्वरूपपरम्परासम्बन्धेन सर्वगोसम्बन्धितयानुगतमिति गोशब्दव्युत्पत्त्यादिरस्तु। सादृश्यं वा स्वसम्बन्ध्यनन्तगोव्यक्तिषु स्वसम्बन्धित्वसम्बन्धेनानुगतमितिव्युत्पत्त्याद्युपपत्तिः। वक्तृनिष्ठबुद्धिर्वक्तृबुद्धिविषयानेकार्थेषु स्वसम्बन्धित्वेन सर्वानुगता सती सर्वनामसञ्ज्ञकतत्पदस्य व्युत्पत्तौ निमित्तं भवति। सर्वनाम्नां बुद्धिस्थवाचकत्वप्रसिद्धेः। तथा अत्रापीत्यर्थः।

## तर्कताण्डवम्

किं चात्यन्तव्यावृत्तैकस्वभावेष्वन्त्यविशेषेषु जातिरूपस्यौपाधिकधर्मरूपस्य वानुगतधर्मस्य स्वीकारे व्यावृत्तैकस्वभावात्मकस्वरूपहानिः स्यात्। न हि साक्षात्संबन्धेन धर्मेणानुगमे व्यावृत्तैकस्वभावहानिर्न तु परम्परासम्बन्धेन अनुगम इति सम्भवति। तस्मात्तत्रानुगतेन सादृश्येनैव व्युत्पत्त्यादिकं वाच्यमित्यत्रापि तथैवास्तु॥

किं च त्वत्पक्षे जातिवदाकृतेरपि प्रवृत्तिनिमित्तत्वादाकृतिरप्यनुगतैवास्तु॥

तस्मात् सुवर्णघटत्वादिवज्ज्ञेयत्वाद्यौपाधिकधर्मवदन्त्यविशेषवदाकृतिवच्चाननुगतजातेरपि प्रवृत्तिनिमित्तत्वं युक्तम्॥

स्वर्णघटत्वादिप्रतिबन्दी॥ ३०॥

## न्यायदीपः

तार्किकाभिमतनित्यद्रव्यगतविशेषप्रतिबन्द्याप्यननुगतधर्मपक्षे व्युत्पत्त्याद्युपपादयितुमाह ॥ **किं चात्यन्तेति** ॥ व्यावर्तकान्तराभावेऽपि व्यावृत्तेत्यर्थः।

नन्वौपाधिकधर्मरूपस्योपाध्यनतिरेकादित्युक्त्या परम्परासम्बन्धेनौपाधिकधर्मघटकोपाधिनिष्ठजातिविशेषेण विशेषाणामनुगमे स्वरूपहानिर्नास्त्येव अनुगतौपाधिकधर्मस्वीकारे स्वरूपहानिः स्यादित्ययुक्तमित्यत आह ॥ **नहीति** ॥ नियामकाभावादिति भावः। मास्तु तत्रानुगतो धर्मः किं तत इत्यत आह ॥ **तस्मादिति** ॥ अनुगतधर्मसत्त्वे रूपहानिप्रसङ्गादित्यर्थः ॥ **आकृतेरपीति** ॥ अवयवसंस्थानविशेषस्येत्यर्थः। व्यक्त्याकृतिजातयः पदार्थ इति गौतमसूत्रान्मण्याद्युक्तपदशक्तिवादेस्य व्यक्तत्वाच्चेति भावः। पूर्वोक्तप्रतिबन्दीचतुष्टयं सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥

स्वर्णघटत्वादिप्रतिबन्दी ॥ ३० ॥

## अथ अनुगतजातौ बाधकम्।

### तर्कताण्डवम्

**किञ्च स्थूलमुत्पन्नं, स्थूलं नष्टं, नीलमुत्पन्नं नीलं नष्टमिति-वद्धट उत्पन्नो घटोनष्ट इत्यनुभवात्प्रत्यक्षादेव जात्युत्पत्ति-विनाशौ ।।**

**न च विशिष्टोत्पत्त्यादिविषयेयं धीर्विशेष्यव्यक्तिमात्रो-त्पत्त्यादिनाऽपि युक्तेति वाच्यम्। वैपरीत्यस्यापि सुवचत्वात्। स्थूलमुत्पन्नमित्यादिबुद्धेरपि तथात्वापाताच्च।**

### न्यायदीपः

नन्वस्त्वेवं स्वर्णघटाद्युक्तस्थळचतुष्टयेऽनुगतधर्माभावेनानन्यगत्याऽननुगतधर्मैरेव शक्त्यादि-ग्रहोऽन्यत्र गवादावनुगतगोत्वदिसम्भवे तेनैव शक्त्यादिग्रहोऽस्तु। तत्रानन्यगतिकत्वाभावादित्यतः तत्रापि त्वदभिमतनित्यैकानुगतधर्मो नास्त्येव। प्रमाणबाधात्, साधकमानाभावाच्चेति भावेन—

कुतो भस्मत्वमाप्तस्य नरत्वं पुनरिष्यते।
एकत्वे नास्ति मानं च . . . ।।

इत्यादिवैशेषिकनयानुव्याख्याने सुधावाक्यानि हृदि कृत्वा जातिविशिष्टवस्तूत्पत्ति-नाशागोचरप्रत्यक्षेण समवाय्युत्पत्तिनाशादियुक्त्या जातेरुत्पत्तिनाशबोधकागमेन जातिमात्रो-त्पत्त्यादिग्राहिप्रत्यक्षेण श्रुत्या च जातेर्नित्यत्वादिकमपाकुर्वन्नादौ तावद्विशिष्टप्रत्यक्षेण जाते-रनित्यत्वमाह ।। **किं चेत्यादिना** ।। परिमाणस्य नीलरूपस्य चोत्पत्तिविनाशप्रत्ययाकाराभिनयोऽयं स्थूलमित्यादि ।। **इत्यनुभवादिति** ।। अस्य च घटपटत्वादिजातिव्यक्त्युभयविषयकत्वात्प्रत्यक्षावेव जात्युत्पत्तिविनाशावित्युक्तम्।।

ननु—जातिविशिष्टव्यक्तिविषयकोऽयमनुभवो न घटघटत्वोभयविषयकः। घटघटत्वे उत्पन्ने इत्युभयोत्पत्तिनाशाविषयीकरणात्। तथा चानन्यथासिद्धोस्त्विवति शङ्कते ।। **न चेति** ।। किमन्यतरमात्रविषयत्वेनोपपत्तौ उभयविषयकत्वे कल्पनागौरवादेवं कल्प्यते, अथ दण्डी नास्तीत्यादाविव विशेषणे बाधात्। आद्य आह ।। **वैपरीत्यस्यापीति** ।। जातिमात्रोत्पत्त्यादिने-

त्यस्यापीत्यर्थः। लाघवस्यैवमपि सम्भवात्। प्रत्युत एतदेव युक्तम्। विशेष्यं नाभिगच्छेत् क्षीणशक्तिर्विशेषणे इति न्यायादिति भावेनोक्तम् ॥ **सुवचत्वादिति** ॥ ननु प्राधान्याद्विशेष्यविषियत्वमेवोत्पत्त्यादिबुद्धेर्युक्तम्। न तु गुणभूतधर्मपरत्वमित्यत आह ॥ **स्थूलमिति** ॥ **तथात्वेति** ॥ विशेष्योत्पत्तिपरत्वेत्यर्थः।

## तर्कताण्डवम्

**किं च यथा द्रव्ये सत्येव पाकेन नीलरक्तरूपयोर्नाशोत्पादौ तथा द्रव्ये सत्येवौषधादिना ताम्रत्वरजतत्वयोरपि तौ दृश्येते। न च पुरुषे नष्टेऽपि दण्डवद्व्यक्तौ नष्टायामपि तत्रैव प्रदेशे जातिरनुभूयते। येनोत्पत्त्यादिधीर्विशेष्योत्पत्त्यादिमात्रविषया स्यात्। व्यक्त्यन्तरेऽनुभवस्तु परिमाणादावप्यस्ति। व्यञ्जकव्यक्तेरभावात्तत्र जातेरननुभवकल्पनं तु परिमाणादावपि समम्। न चाद्यापि जातेर्नित्यत्वं सिद्धम्। येन परिमाणादितो वैषम्यं स्यात्। तदेवेदं गोत्वमिति प्रत्यभिज्ञाया अभावात्। अयं गौरयमपि च गौरिति धीस्त्वयं स्थलूोऽयमपि च स्थूल इति धीवत्सादृश्यविषया॥**

## न्यायदीपः

ननु सत्येव द्रव्ये नीलादिगुणस्य निवृत्तिदर्शनान्न तत्र तथात्वापातो युक्त इत्यत आह ॥ **किं चेति** ॥ विशेष्योत्पत्तिपरत्वेत्यर्थः।

ननु सत्येव द्रव्ये नीलादिगुणस्य निवृत्तिदर्शनान्न तत्र तथात्वापातो युक्त इत्यत आह ॥ **किं **चेति** ॥ पीलुपाकप्रक्रियाया अप्रमाणकत्वाद्वक्ष्यमाणप्रत्यभिज्ञाप्रमाणविरुद्धत्वात्, सुधायां जातिनिरासप्रस्ताव एव दूषितत्वाच्च, पिठरपाकप्रक्रियैवोपेयेति भावेनोक्तम् ॥ **द्रव्येसत्येवेति** ॥ द्वितीयेपि किं व्यक्तिनाशस्थळीयजात्यनुभवो वा बाधकउत व्यक्त्यन्तरे तदनुभवो वा। आद्यं निराह ॥ **न चेति** ॥ द्वितीयं निराह ॥ **व्यक्त्यन्तर इति** ॥ ननु – व्यक्तिनाशप्रदेशे जातेः सत्त्वेऽपि व्यञ्जकाभावादननुभवोऽस्त्वित्यत आह ॥ **व्यञ्जकेति** ॥

ननु – परिमाणादौ नित्यत्वासिद्ध्याऽनुपलम्भस्य व्यञ्जकाभावप्रयुक्तत्वकल्पनं निर्बीजम्। जातौ तु नैवमित्यत आह ॥ **न चाद्यापीति** ॥ ननु – प्रत्यभिज्ञया अनुगतमत्या वा जातेर्नित्यत्वं सिद्धमित्यतः प्रत्यभिज्ञानस्य स्वरूपतः प्रमाणत्वेन च सन्दिग्धत्वादित्यादिसुधोक्तं व्यञ्जयन्नाह ॥ **तदेवेदमिति** ॥

## तर्कताण्डवम्

**किं च तत्समवेतस्य तुदत्पत्तेः पूर्वं तन्नाशानन्तरं चासत्त्व-नियमात्कथं घटत्वादेरनादित्वं नित्यत्वं च ॥**

**अपि च जातेर्द्वित्वादिवद्व्यासज्यवृत्तित्वे तद्वदेव यावत्-स्वाश्रयप्रतीतिं विनाऽप्रतीतिः स्यात्। अग्निमात्रोद्देशेन द्रव्य-त्यागेऽग्नीषोमीयशास्त्रार्थ इवैकगोव्यक्तिदाने गां दद्यादि-त्यादिशास्त्रार्थोऽननुष्ठितश्च स्यात्। देवतात्ववद्गोत्वस्यापि व्यासज्यवृत्तित्वात्। प्रत्येकं परिसमाप्तत्वे च प्रतिव्यक्ति- वृत्तितातिरेकेण प्रत्येकपरिसमाप्तेरभावादस्मन्मतापत्तिः।**

## न्यायदीपः

नन्वनादिजातेः कथं न नित्यत्वम्। जातिर्नित्य अनादिभावत्वाद्गगनवदित्यनुमानविरोधादित्यत आह ॥ **किं चेति** ॥ यद्वा जातेरनित्यत्वे प्रत्यक्षमुक्त्वा अधुना विमतं विनाशवत् विनाशवदाश्रयसमवेतत्वाद्रूपादिवदित्यादिसुधोक्तयुक्तीराह ॥ **किञ्चेत्यादिना अस्मन्मतापत्तिरित्यन्तेन ग्रन्थेन** ॥ **नियमादिति** ॥ अवयविगुणकर्मसुतथादर्शनादिति भावः ॥

नन्वनुगतत्वमेव जातेरनित्यत्वे बाधकमतो नष्टो घट इत्यादिबुद्धेर्व्यक्तिविषयत्वमेव युक्तमित्यतः "योऽनेकाश्रितो धर्मो नासावेकैकप्रतीतौ प्रतीयते यथा द्वित्वादिः। प्रतीयते च नरत्वादिकमेकैकप्रतीतावतो नानुगतमि"त्यादिसुधोक्तिं व्यञ्जयन्ननुगतत्वमपि निराह ॥ **अपि चेति** ॥ जातिः प्रतिव्यक्त्यपरिसमाप्य वर्तते अथ परिसमाप्य। आद्य आह ॥ **जातेरित्यादि** ॥ अप्रतीतिः स्यादिति पदच्छेदः। प्रतीतिर्न स्यादित्यर्थः ॥ **अग्निमात्रेति** ॥ पौर्णमास्यां हि आग्नेयोपांशु-यागाग्नीषोमीयाख्यकर्मत्रयमनुष्ठीयते। तत्र यदाग्नेयोऽष्टाकपालोऽमावास्यां च पौर्णमास्यां चाच्युतो

भवतीतिवाक्योक्तस्याष्टसु कपालेषु संस्कृतपुरोडाशरूपद्रव्यस्य हविष इति यावत् इदं न ममेत्यग्निमात्रोद्देशेन त्यागरूपे आग्नेये यागे अनुष्ठितेऽपि ''अग्निषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदि''ति वाक्योक्ताग्निषोमीययागरूपः शास्त्रार्थो यथा नानुष्ठितः तथात्वे आग्नेयेन कृतार्थत्वादग्नीषोमीयानुष्ठानाभावप्रसङ्गादिति भावः।

ननु – समर्थः पदविधिरिति परिभाषया समर्थादेव पदात्तद्धितप्रत्ययानां विधानादग्नेरसहायस्य देवतात्व एवाग्नेर्ढगिति तद्धितविधानेन तत्राग्निमात्रोद्देशेन द्रव्यत्यागेऽनुष्ठितेऽप्यग्नीषोमीयो नानुष्ठित इत्युक्तम्। तत्राग्नेः सोमस्य च द्वयोरितरेतरयोगेनोभयनिष्ठैकदेवतात्वे विवक्षित एव ''द्यावापृथिवी-शुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ'' इति तद्धितप्रत्ययविधानेन देवतात्वस्य व्यासज्यवृत्तित्वात्। अन्यथा प्रत्येकं तद्धितोत्पत्तिप्रसङ्गादित्यत आह ॥ **देवतात्ववदिति** ॥ आद्यपक्षे सुधावाक्यं विवृत्य द्वितीयपक्षं स्वयं निराह ॥ **प्रत्येकेति** ॥

## तर्कताण्डवम्

**अपिच - महापातकादिना ब्राह्मणत्वादिजातिनाशेन शूद्रत्वादिजात्युत्पत्तिर्विश्वामित्रिशङ्क्वादीनां वरशापादिना क्षत्रियत्वादिजातिनाशेन ब्राह्मणत्वादिजात्युत्पत्तिश्चागम-सिद्धा। स्पर्शवेध्यादि सम्बन्धेनायसोप्ययस्त्वादिनाशेन काञ्चनत्वादिजात्युत्पत्तिश्च प्रत्यक्षसिद्धेति कथं जातेर्नित्यत्व-नियमः।**

## न्यायदीपः

''तथा जातिविशेषयोः'' इत्यादिवाक्यव्याख्यावसरे ''ब्राह्मणत्वपिण्डयोर्भेदाभेदौ महापातकेन जातेरपायादि''ति तत्त्वविवेकटीकोक्तरीत्या, आगमेन च जातेर्नित्यत्वं निराह ॥ **अपि च महापातकादिनेति** ॥

''मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयी''।

इत्याद्यागमसिद्धा शूद्रत्वादिजात्युत्पत्तिः। विश्वामित्रब्राह्मणत्वजात्युत्पत्तिस्तु–

''गाधेरभून्महातेजाः समिद्ध इव पावकः।

तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्'' ॥

इत्याद्यागमसिद्धा। त्रिशङ्कुनामक्षत्रियस्य चण्डालत्वजात्युत्पत्तिः–

''तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः।
प्राप्तश्चण्डालतां शापाद्गुरोः . . . ॥

इत्यादिनवमस्कन्धसप्तमाध्यायस्थागमसिद्धा। कल्माषपादस्य ब्रह्मरक्षस्त्वजात्युत्पत्तिः

''आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमतः क्वचित्।
वसिष्ठशापाद् रक्षोऽभूद्''

इत्यादगमसिद्धेत्यर्थः। स्पर्शवेधी नामौषधिविशेषः।

## तर्कताण्डवम्

**किञ्च–**

**''भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपि ''**

**इत्यादिश्रुतिसिद्धः प्रतिव्यक्ति धर्मभेदः। न चासति बाधके आगमस्य गौणार्थत्वम् अयः पिण्डमेव स्वर्णं जातमिति प्रत्यभिज्ञाभ्रान्तित्वं च युक्तम्।**

**किं च धर्मधर्मिणोरभेदस्यान्यत्र समर्थितत्वात्कथं व्यक्त्यभिन्नाया जातेरनुगतिः।**

## न्यायदीपः

वैशेषिकनयानुव्याख्यानोक्तश्रुतिमाह ॥ **भिन्नाश्चेति** ॥ न च भिन्नधर्मा इत्यस्य स्वस्माद्भिन्नधर्मवन्त इत्यर्थ इति शङ्क्यम्। ''स्वैः स्वैर्धर्मैरभिन्नाश्च'' इति श्रुतिविशेषविरोधादिति भावः।

ननु मासेन शूद्र इत्यादिरागमः क्षीरविक्रयनिन्दापरो वर्णत्रयकर्महानप्रतिपादनार्थो वाऽस्त्वित्यत आह ॥ **न चेति** ॥ उपलक्षणमेतत्। कर्मनिन्दापरत्वे तस्मात् ''ब्राह्मणं नावगुरेदि-

त्यवगोरणादिनिषेधशेषभूतानां "योवगुरेत्तं शतेन यातयादि"ति शतयातनादिवाक्यानामपि कर्मनिन्दापरत्वेन फलपरत्वाभावप्रसङ्गेन "शंयौ च सर्वपरिदानादि"ति तृतीयाध्यायचतुर्थपादीयावगोरणाधिकरणविरोधापत्तिः। वर्णत्रयकर्महानिप्रतिपादनार्थत्वे च वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादावपि ब्राह्मणशब्दस्य क्षत्रियवैश्यकर्मरहितपरत्वस्य वक्तुं शक्यत्वेन शूद्रस्याप्यग्निविद्यासम्भवन वैदिककर्माधिकारापत्त्या षष्ठाद्यपादस्थापशूद्राधिकरणविरोधापत्तिश्चेत्यपि ध्येयम्।

यदपि – गाधेरभूदित्याद्यागमोऽपि विश्वामित्रस्य ब्राह्मणकर्मयोग्यत्वपर एवेति। तदपि न। असति बाधके मुख्यार्थत्यागायोगात्। जातिनित्यत्वस्याद्याप्यसिद्धेश्चेति भावः॥

ननु यदुक्तं स्पर्शवेधीत्यादि तन्न। तादृशप्रत्यक्षस्यैवासिद्धेः। सिद्धौ वा भ्रान्तित्वमस्त्वित्यत आह ॥ **अयः पिण्डमिति** ॥ न चासति बाधक इत्यनुषञ्जनीयम्। पीलुपाकप्रक्रिया त्वप्रामाणिकी प्रमाणबाधिता चेति भावः। एतेन द्रव्ये सत्येवेत्यादि प्रागुक्तं च समर्थितं ध्येयम् ॥ **अन्यत्रेति** ॥ वैशेषिकनयानुव्याख्यानादौ तत्त्वविवेकादिग्रन्थे चेति भावः॥

## तर्कताण्डवम्

**ऐतेन लाघवाज्जातिरेकैवेति निरस्तम्। उक्तं चानुव्याख्याने–**

**"नरत्वादिकमप्येवं तत्तद्धर्मतयेयते"**

**इति। तस्माद्रूपादिवज्जातिर्नानैव सामान्यं तु समाननां भावः सामान्यमिति व्युत्पत्त्या सादृश्यमेव। तच्चोक्तरीत्याऽनुगतम्। तस्माज्जातिविशिष्टव्यक्तिनाशादेर्घटो नष्ट इत्यादिप्रत्यक्षेण जातिनाशादेस्समवायिनाशप्रत्येकपरिसमाप्त्यादियुक्त्या व्यक्तौ सत्यामेव ताम्रत्वायस्त्वादिनाशादेः प्रत्यक्षेण ब्राह्मणत्वादिजातिनाशादेरागमेन प्रतिव्यक्तिधर्मभेदस्य चोक्तश्रुत्या सिद्धत्वान्न जातेरनुगमः। तदेवं जात्यभावेऽप्यन्विते शक्तिग्रहो युक्तः॥**

**एवं लिङादिरप्यान्वितेष्टसाधनत्वरूपविधौ शक्त इति**

**इष्टसाधनत्वज्ञानमेव प्रवर्तकम्॥**

**इति श्रीब्रह्मण्यतीर्थपूज्यपादाराधकेन व्यासयतिना विरचिते तर्कताण्डवे अनुगतजातौ बाधकम् ॥ ३१ ॥**

## न्यायदीपः

एवं जातेर्नित्यत्वमनुगतत्वं च निरस्यैकत्वमपि निराह ॥ **एतेनेति** ॥ नित्यत्वानुगतत्व-खण्डनेनेत्यर्थः ॥ **उक्तं चेति** ॥ जातेरननुगतत्वं वैशेषिकाधिकरणे उक्तमित्यर्थः। ईयते प्रतीयते इत्यर्थः।

नन्वेवं सामान्यविशेषादिव्यवहारस्य का गतिरित्यत आह ॥ **सामान्यं त्विति** ॥ समानानां सदृशानामित्यर्थः ॥ **उक्तरीत्येति** ॥ शक्तिव्याप्त्यादिग्रहसमर्थनवादोक्तरीत्येत्यर्थः ॥ **घटोनष्ट इत्यादिप्रत्यक्षेणेति** ॥ विशिष्टनाशविषयप्रत्यक्षेणेत्यर्थः। किं च यथा द्रव्येसत्येवेत्यादिनोक्तस्य स्पर्शवेध्यादीत्यादिनोक्तस्य चैकार्थतया सकृदुभयसङ्ग्रहरूपत्वादागमसिद्धेत्यतः पश्चादुक्तस्यापि पूर्वसङ्ग्रहानुवादः। किं च यथा द्रव्ये सत्येवेत्यादिनोक्तस्यैवोदाहरणान्तरेण पुनर्व्यक्तीकरणमात्रं, तदपि प्रत्यभिज्ञारूपप्रत्यक्षप्रदर्शनेन तस्याभ्रान्तित्वोक्त्यर्थं पीलुपाकप्रक्रियानिराकरणार्थं चातो न पुनरुक्तिदोषः इत्याहुः।

ननु त्वन्मते सर्वगोव्यक्तिसङ्ग्राहकस्येत्यादिनोक्तवादत्रयार्थमुपसंहरति ॥ **तदेवमिति** ॥ उत्तरवादोपक्षेपार्थमाह ॥ **एवमिति** ॥ "ज्ञात्वैव हीष्टसाधनतां प्रवर्तत" इत्याचार्योक्तेराह ॥ **इष्ट-साधनत्वज्ञानमेव प्रवर्तकमिति** ॥

ननु – विधिज्ञानं प्रवर्तकं विधिश्च लिङर्थः "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट्चे" इत्यादिपाणिनिस्मरणात्। कथमेवमित्यत उक्तम् ॥ **इष्टसाधनत्वरूपविधाविति** ॥ न्यायमताद्वैलक्षण्यज्ञापनायोक्तम्॥ **अन्वितेति** ॥ यागादियोग्येतरान्वितेत्यर्थः।

इति श्रीराघवेन्द्रयतिविरचिते तर्कताण्डवव्याख्याने न्यायदीपे अनुगतजातौ बाधकम्॥ ३१ ॥

---

# द्वैतवेदान्तप्रतिष्ठानेन प्रकाशिताः ग्रन्थाः

## Publications of Dvaita Vedanta Foundation

| | | Price (Rs.) |
|---|---|---|
| **संस्कृत ग्रन्थाः** | | |
| 1. | न्यायामृतम् Vol. I, II, III | 750/- |
| 2. | ऋग्भाष्यम् Vol.I | 270/- |
| | ऋग्भाष्यम् Vol.II | 300/- |
| 3. | ब्रम्हसूत्रभाष्यम् | |
| | with eight commentaries Vol. I, II, | 270/-each |
| | Vol. III to VII, | 200 each |
| 4. | श्रीमद्भागवतम् with यादवार्य and सत्यधर्म commentaries. | |
| | Vol. I, II, III | 200/- each |
| | Vol. IV, Vol. V | 300/- each |
| | Vol. VI, VII | 200/- each |
| 5. | तात्पर्यचन्द्रिका Vol. I to III | 300/- each |
| 6. | सुमध्व विजयः Vol. I & II | 200/- each |
| 7. | विष्णुतत्वविनिर्णयः with English translation | 40/- |
| 8. | सत्तत्त्वरत्नमाला | 65/- |
| 9. | सर्वमूलग्रन्थाः-गीताभाष्यम्, गीतातात्पर्यम् | 70/- |
| 10. | पूर्णप्रज्ञदर्शनम् | 15/- |
| 11. | मध्वसिद्धान्तसारः | 24/- |
| 12. | जयतीर्थविजयः | 40/- |
| 13. | तत्वप्रकाशिका (ब्रह्मसूत्रभाष्यटीका) | |
| | with English translation | 25/- |
| 14. | तत्वप्रकाशिका (ब्रह्मसूत्रभाष्यटीका) | |
| | with Kannada translation | 20/- |
| 15. | मिथ्यात्वानुमानखण्डनम् | 40/- |

| | | |
|---|---|---|
| 16. | प्रमाणवचनसङ्ग्रहः Vol. I, II & III each volume | 80/- |
| | ---"--- Vol. IV | 100/- |
| 17. | वादावली | 100/- |
| 18. | उपाधिखण्डनम् | 80/- |
| 19. | अध्यात्मरसरञ्जनी | 40/- |
| 20. | पुराणेषुनिसर्गपरिसरवर्णनम् | 300/- |
| 21. | भागवत तात्पर्य निर्णय Vol. I & Vol. II | 300/- each |
| 22. | न्यायसुधा Vol. I & Vol. II | 400/- each |
| 23. | न्यायविवरणम् | 100/- |
| 24. | श्लोकतात्पर्य चन्द्रिका | 40/- |
| 25. | प्रमाणपद्धतिः | 200/- |

**English**

| | | |
|---|---|---|
| 1. | Madhva's Philosophy of Vishnu Faith | 75/- |
| 2. | Brihadaranyakopanisad | 70/- |
| 3. | Aupaniṣadam Darśanam | 20/- |
| 4. | Commentaries on Bhagavadgita | 100/- |
| 5. | Principal Upaniṣads Vol.I & II | 220/- |
| 6. | Environment in Puranas | 300/- |

**ಕನ್ನಡ**

| | | |
|---|---|---|
| ೧. | ದ್ವೈತ ವಾಙ್ಮಯ ಮತ್ತು ಇತಿಹಾಸ ಸಂಪುಟ-೧ | 60/- |
| ೨. | ದ್ವೈತ ವಾಙ್ಮಯ ಮತ್ತು ಇತಿಹಾಸ ಸಂಪುಟ-೨ | 75/- |
| ೩. | ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ಜೀವನ ಚರಿತ್ರೆ ಮತ್ತು ಉಪದೇಶಗಳು | 80/- |
| ೪. | ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ದ್ವೈತದರ್ಶನ | 40/- |
| ೫. | ದ್ವೈತ ವಾಙ್ಮಯ ಕೊಡುಗೆ | 20/- |
| ೬. | ದೇವರ್ಷಿ ನಾರದರು | 40/- |

# Tarkatāṇḍavam of Śri Vyāsatirtha

Epistemology is an important aspect of Philosophy. Every school of Philosophy develops its own epistemology. In Indian Philosophy the Nyāya school is exclusively devoted to the development of epistemology. It is designated as प्रमाणशास्त्र. However, the other schools differ from it on some important epistemological issues. These differences are noted in the Manuals on epistemology of respective schools. Tarkatāṇḍava of Vyāsatīrtha gives a consolidated and comparitive exposition of all major issues of epistemology. Tatvachintāmaṇi of Gangeśa is taken as a representative text of Nyāya, Prakaraṇapañcikā of Śālikanātha is taken as a representative text of Prābhākara mimāmsā. The views of these two schools are particularly reviewed.

The theory of knowledge, the theory of the impersonal nature of Veda, the theory of the meaning of the word and sentence, the import of the injunction, are discussed in detail and a comparative and critical presentation of the Nyāya, Mīmāmsa and Vedānta views is made.

Vyāsatīrtha has developed a new style of presenting philosophical and epistemological issues in his Nyāyāmṛta and Tarkatāṇḍava. It is hailed as

न्यायामृतेनार्जिता कीर्तिः ताण्डवेन विभूषिता

His critical review of Tatvachintāmaṇi of Gangeśa needs serious attention of Nyāya Research Scholars and clarification on many crucial points. Pakṣadhara Miśra a contemporary Navyanyāya scholar who met Śrī Śrī Vyāsatīrtha records his appreciation.

यदधीतं तदधीतं यदनधीतं तदप्यधीतम् ।
पक्षधरविपक्षो नात्रेक्षि विना नवीनव्यासेन ॥